**क्रियाक्रमद्योतिकाव्याख्यायां प्रभायाम्** १७९ तमे पृष्ठे दृश्यमानं 'पठेन्मन्त्रोत्तमं' इत्यादि 'पदात्मकम्' इत्यन्तमेकमर्धं पवित्रविधौ स्थातव्यम्। अतश्चर्यापादे दशमपटले ६५ तमश्लोकानन्तरं पवित्रविधिसंबन्धिनः श्लोकाः केचन मतङ्गागमे स्युरिति संभावनाया अस्त्यवकाशः। एवमत्रैव २९७ तमे पृष्ठे दृश्यमानं 'ततः स्कन्धान्त' इत्यादि 'लक्ष्मसु' इत्यन्तमेकमर्धं पाशसूत्रविषयत्वेन दृश्यते। अत इदमर्धं मतङ्ग० क्रिया० सप्तमपटले पाशच्छेदकर्मविधायकश्लोकात्पूर्वं भवितव्यमिति भाति।

**मृगेन्द्रवृत्तिदीपिकायाम्** ३४९ तमे पृष्ठे दृश्यमानं 'अधिकारी' इत्यादि 'स्यादुपचारतः' इत्यन्तमेकमर्धं, तथा **शतरत्नसंग्रहे** २३ तमे पृष्ठे दृश्यमानं 'तथा शिवैकरूपं' इत्यादि 'रूपवत्' इत्यन्तमेकमर्धं च मतङ्ग० विद्या० ४.५५ तमश्लोकानन्तरं योजनीयमिति भाति।

**वर्णाश्रमचन्द्रिकायां** ३१ तमे पृष्ठे दृश्यमानः 'वारुणं' इत्यादि 'नैमित्तिकमुदाहृतम्' इत्यन्तोऽयं श्लोको मतङ्ग० क्रिया० २.२७ तमश्लोकानन्तरं योजनीय इति भाति।

**शिवागमशेखरे** द्वितीये भागे १५३, २४६ पृष्ठयोर्दृश्यमानाः पञ्च श्लोका न कुत्रापि प्रकरणे योजयितुं शक्यन्त इति पूर्वमेव सूचितम्।

मतङ्गे तत्र तत्रापेक्ष्यमाणाः परं मातृकास्वनुपलब्धा ये श्लोकास्तेषां विषयेऽधुना विचारः क्रियते। मतङ्गे क्रियापादे पञ्चमपटले १६ तमश्लोकवृत्तौ 'मच्छक्त्याधिष्ठिताः शिष्या अनुग्राह्यास्त्वया सदा' इत्येकमर्धं प्रोद्धृतम्। एतच्च दशमपटलेऽभिषेकप्रकरणे स्थातव्यमिति भाति। तच्चात्र न दृश्यते। तथा त्रयोदशपटले त्रिंशत्तमे श्लोके 'कृत्वाग्निकार्यं विद्येशैदिक्ष्वष्टास्वथ मूर्तिपैः' इत्येतद्ग्रन्थेन कुम्भस्थापनपूजादिप्रतिपादकग्रन्थो भवितव्य इति भाति। तादृशो ग्रन्थो नोपलभ्यते। एवं चतुर्दशपटले सप्तदशतमश्लोके 'खड्गं च कारयेत्पाशं जतुलोहमयं शुभम्' इत्यस्यानन्तरमङ्कुशायुधप्रतिपादको ग्रन्थो भवितव्य इति भाति। स ग्रन्थो नोपलभ्यते। तथा पञ्चदशे पटले ४१ तमश्लोके 'पीठेशा लक्षजापेन जप्त्वा चासु महाबलाः' इत्यत्र जप्तव्यमन्त्रनिर्देशप्रतिपादकग्रन्थो लुप्त इति भाति। सोऽपि ग्रन्थो नोपलभ्यते। उपरिनिर्दिष्टस्थलेषु लुप्ता ग्रन्था उपलब्धमातृकासु, अन्यत्रोदाहृतेषु वा नैतावत्पर्यन्तमुपलभ्यन्ते।

विद्यापादे २६ तमपटले ६३ तमश्लोकवृत्तौ श्रीमता भट्टरामकण्ठेन 'यद्वक्ष्यति दीक्षाप्रकरणे —

विद्यापादार्थकुशलः क्रियापादगतक्रमः।
योगपादकृताभ्यासश्चर्यापादानुवर्तकः॥
गुरुर्दीक्षां प्रकुर्वीत'

इत्यनूद्यते। श्लोकोऽयं क्रियापादे पञ्चमपटले तृतीयश्लोकस्य पूर्वार्धानन्तरं दृश्यते। परं 'गुरुर्दीक्षां प्रकुर्वीत' इत्यादिकः श्लोकार्धो न दृश्यते। संपादनकार्यावसरे वृत्तिगौरवादस्माभिस्तुरीयश्लोकस्य पूर्वार्धानन्तरं 'गुरुर्दीक्षां प्रकुर्वीत' इत्यादिश्लोकः स्यादिति सूचना दत्ता। परमधुना विमर्शनावसरे तुरीयश्लोकस्य पूर्वार्धोत्तरार्धयोरनुस्यूतता दृश्यते। दीक्षाकर्तुराचार्यस्य लक्षणप्रतिपादकाः ३–९ श्लोकाः। तत्र मध्ये 'गुरुर्दीक्षां प्रकुर्वीत' इत्यादिकस्यार्धस्यात्यन्तमावश्यकता न दृश्यते। तत्रत्यश्लोकवृत्तावपि तादृशार्धस्य वृत्तिः, सूचना वा न दृश्यते। अतः 'गुरुर्दीक्षां प्रकुर्वीत' इति वृत्तिकारेण शेषपूरणाय निर्दिष्टा स्यादिति संभावनाया अस्त्यवकाशः।

## अत्र वृत्तावुदाहृता ग्रन्था ग्रन्थकर्तारश्च

**अन्यत्र** — एतच्छीर्षकेणोदाहृतमर्धत्रयं मृगेन्द्रे विद्यापादे १.१ दीपिकायां 'श्रीमद्भार्गवे' इति निर्दिश्योदाहृतम्। मतङ्गपारमेश्वरविद्यापादे वृत्तौ १७ तमे पृष्ठे 'कवचभार्गवे' इति, तथा सार्ध-

त्रिशतिकालोत्तरवृत्तौ ६४, ७६ पृष्ठयोः 'श्रीमद्भार्गवे' इति च ग्रन्थनाम निर्दिष्टमस्ति। एतन्नामको ग्रन्थो नाद्यावधि मुद्रितः। लिखितमातृकासूचीष्वपि नैतन्नाम दृश्यते।

**अन्यत्रापि** — एतच्छीर्षकादुदाहरणादपि ग्रन्थनाम निर्देष्टुं न शक्यते।

**कालामुखाः** — एत एव 'सोमसिद्धान्तिनः' इति सर्वसिद्धान्तविवेकाख्यग्रन्थोदाहरणाज्ज्ञायते। सिद्धान्तोऽयमधुना ग्रन्थेषूदाहरणादेवोहनीयः।

**किरणवृत्तिः** — अष्टाविंशतिशैवागमेष्वेकतमस्य किरणाख्यस्य भट्टरामकण्ठविरचिता वृत्तिः। अस्या वृत्तेर्मातृका अस्मद्ग्रन्थालयेऽस्ति।

**छान्दोग्यसूत्रम्** — ग्रन्थोऽयं नोपलभ्यते। एतद्विषये छन्दोगानां ग्रन्थेषूपलभ्यमानानि वचनानि ४३ तमे पृष्ठे २१ टिप्पण्यां दत्तानि।

**नैयायिकवैशेषिकाः** — गौतमकृतन्यायसूत्रे, तथा काणादकृतवैशेषिकसूत्रे च प्रतिपादितसिद्धान्तावलम्बिनः। एते सर्वे पाशुपतमतावलम्बिन इति प्रथा।

**पातञ्जलाः** — एतच्छीर्षकेणात्र ग्रन्थे पतञ्जलिकृतयोगसूत्रादुदाहरणं दत्तमस्तीति तत्रैव टिप्पण्यां निर्दिष्टम्।

**पाशुपताः** — पाशुपतसूत्रं कौण्डिन्यभाष्योपेतमनन्तशयनसंस्कृतग्रन्थमालायां १४३तमपुष्परूपेण प्रकाशितम्। तथा हरदत्ताचार्यकृता गणकारिका भासर्वज्ञकृतव्याख्यया सह गायकवाडसंस्कृतग्रन्थावल्यां १५तमपुष्पतया प्रकाशिता। पाशुपतसिद्धान्तावलम्बिनौ न्यायसूत्रकारो गौतमो वैशेषिकसूत्रकारः काणादश्च। कौण्डिन्यभाष्योपेतं पाशुपतसूत्रं लकुलीशपाशुपतसिद्धान्तं प्रतिपादयति। एतद्भिन्नः पाशुपतसिद्धान्त आसीदिति ब्रह्मसूत्रशाङ्करभाष्ये, तथा तद्व्याख्यानेषु च तत्र तत्रोदाहरणादवसीयते। परं तादृशसिद्धान्तप्रतिपादको मूलग्रन्थो नाधुनोपलभ्यते।

**पौष्करीयपददीक्षासंग्रहकारिका** — ग्रन्थोऽयमभियुक्तैर्मुनिपादै रचित इति भट्टरामकण्ठेन निर्दिश्यते। परं ग्रन्थोऽयमधुना नोपलभ्यते।

**बैजवापः** — गृह्यसूत्रकारोऽयमिति कुमारिलभट्टकृततन्त्रवार्तिकम्, अपरार्ककृतयाज्ञवल्क्यस्मृतिभाष्यम्, कल्पतरुः, हारलता, स्मृतिचन्द्रिका इत्यादिग्रन्थेषूदाहरणाज्ज्ञायते। ग्रन्थस्तु नोपलभ्यते।

**मनुः** — प्रसिद्धः स्मृतिकर्ता। एतद्विषये विचाराय श्रीमता 'काणे' महाशयेन विरचितं धर्मशास्त्रचरित्राख्यं ग्रन्थं पश्यत (भागः १ पृ० ३०६-३४१)

**श्रुतिः** — अत्र ग्रन्थे उदाहृतो भागः ऋग्वेदादुद्धृत इति तत्रैव टिप्पण्यां निर्दिष्टम्।

**सौगताः** — अत्र ग्रन्थे उदाहृतो भागः सौगतसिद्धान्ते कुत्र ग्रन्थे उदाहृत इति न ज्ञायते।

**स्वतन्त्रपद्धतिः** — अयं ग्रन्थो नोपलभ्यते।

अत्र ग्रन्थे उदाहृतानामन्येषां ग्रन्थानां विषये विचारो मतङ्गपारमेश्वरे विद्यापादस्योपोद्घाते (xliii—xlv पृष्ठेषु) तथा सार्धत्रिशतिकालोत्तरस्योपोद्घाते (lxi—lxiv पृष्ठेषु) च कृत इति तत्रैव द्रष्टव्यम्।

श्रीमता भट्टरामकण्ठेनोदाहृताः कवचभार्गवम्, बृहद्दाधीचम्, यज्ञसूत्रम् इत्यादिग्रन्थाः, तथोदाहृतानां बहूनां श्लोकानामाकरभूताश्च ग्रन्था अद्य नोपलभ्यन्ते। भारतीयग्रन्थपरम्परायां बहवो ग्रन्थाः कारणैरनेकैर्लुप्ता बभूवुरित्ययं विषयोऽत्यन्तं शोचनीयः। मतङ्गपारमेश्वरव्याख्याने विद्यापादे क्रियापादे च पौष्करागमाच्चतुर्विंशतिवारम्, स्वायम्भुवागमाच्चतुर्विंशतिवारम्, तथा रौरवागमाद्द्वादशवारं श्लोका उदाहृताः। सार्धत्रिशतिकालोत्तरवृत्तावपि पौष्करात्स्वायंभुवाच्च बहवः श्लोका उदाहृताः। तत्र स्वायंभुवागमस्य रौरवागमस्य च शैवाचार्यपरम्परायामग्रणीभूतेन सद्योज्योतिना वृत्तिः कृतेति, तच्छिष्यपरम्परायामागतेन भट्टरामकण्ठेन तयोरागमयोः श्लोकाः प्रमाणतया बहुश उदाहृता इत्येतत्सहजमेव। उदाहृताश्च ते श्लोकास्तेष्वागमेषूपलभ्यन्ते। पौष्करागमादुदाहृताः

श्लोकाः परं मुद्रितपौष्करे नोपलभ्यन्ते। पौष्करागमस्य विद्यापादमात्रं श्रीमदुमापतिशिवाचार्य-व्याख्यया सह मुद्रितमस्ति। यद्यप्युदाहृतश्लोकेषु केचन अमुद्रितेषु क्रिया-योग-चर्यापादेषु स्युः। परमन्ये केचन ये विद्यापादसंबन्धिन इति प्रकरणवशान्निश्चेतुं शक्यन्ते ते कुतो मुद्रिते विद्यापादे नोपलभ्यन्ते इत्यस्मिन्विषये समुचितमुत्तरं दातुं न प्रभवामः। पारमेश्वरस्योपागमेष्वन्यतमस्य पौष्करागमस्य मतङ्गपारमेश्वरवद् महान् प्रचारः काश्मीरदेशे आसीदिति 'पौष्करीयपददीक्षासंग्रह-कारिका' इत्याख्यपद्धतेः प्रमाणतयोदाहरणादभ्यूह्यते। भट्टरामकण्ठकाले गुरुशिष्यपरम्परा-यातस्य पौष्करागमस्य उमापतिशिवाचार्यकाले उपदिष्टस्य पौष्करागमस्य च मध्ये किमन्यः कश्चन संग्रहः संपादित इत्यत्र प्रमाणं गवेषणीयम्।

## एतदागमीयाः केचन विशेषाः

**व्योमव्यापिपदमन्त्रः**

आगमान्तरेभ्यो मतङ्गपारमेश्वरेऽस्ति कश्चन विशेषः, यदत्र प्राधान्यतया व्योमव्यापिमन्त्रो नित्यार्चनादिक्रियासूपयुज्यते। विद्यापाद एव 'एकाशीतिपदा देवी या सा शक्तिः शिवात्मिका' (७.३१ पू०) 'अस्यामेव स्थिता मन्त्रा विद्याश्च विविधा मुने' (७.३३ उ०) इति श्लोकार्धाभ्यां व्योमव्यापिपदमन्त्रस्य भगवतः शक्तिरूपत्वं प्रतिपाद्य सर्वमन्त्रयोनित्वमपि विशिष्याभिधीयते। क्रिया-पादे पुनः (१.५८–११७ श्लोकेषु) मन्त्रोद्धारप्रकरणे क्रियासूपयोज्यानां मन्त्राणां परिगणना व्यो-मव्यापिपदमन्त्रपदैरेव विहिता। क्रियापादे २५–२६ पृष्ठयोः पट्टिकैका दत्ता, यत्र तादृशमन्त्र-विभागः सुस्पष्टं दर्शितः। न केवलं मन्त्राणां स्वरूपम्, अपि त्वक्षरगणनापि कृतास्ति।

एतादृशव्योमव्यापिपदमन्त्रस्य प्रयोगः क्रियासु, तत्रापि प्राधान्यतया पदाध्वदीक्षाविषयेऽन्यत्रा-गमेषु तदनुसारिषु पद्धतिषु च दृश्यते। एतादृशो यः प्रधानमन्त्रः पदानुपूर्वीस्वरूपनिरूपणाक्षर-संख्यानिर्णयपूर्वकं गुरुशिष्यपरम्परयानादिकालादागतोऽपि सर्वेषु ग्रन्थेषु नैकरूपतया प्रयुज्यते। प्रयोग-विषयेऽस्ति तत्र तत्र व्यत्यासः, प्रधानतः पदविषयेऽप्यस्ति विवाद इत्ययं विषयो विमर्शनीयो भवति।

उत्तरकामिके त्रयोविंशतितमे पटले (३२–३५ श्लोकेषु) निर्वाणदीक्षायाम् —

'व्याप्यव्यापकभावं च कुर्यात्तत्र विचक्षणः।
मन्त्राः पदानि वर्णाश्च तत्त्वानि भुवनानि च॥
व्याप्यानि व्यापकाः कर्ममलमायेयबन्धनाः।
व्याप्या मलादयश्चापि व्यापकास्तु कलाः स्मृताः॥
तासां च संग्रहे तस्मात्सर्वे स्युः स्वीकृतास्त्विह।
स्थापिताभिश्च शुद्धाभिरिहोपस्थापिता अपि॥
शुद्धा भवन्ति सर्वे स्युस्तस्मात्तच्छुद्धिरिष्यते।'

इति वचनान्मन्त्र-पद-वर्ण-तत्त्व-भुवनानि पञ्च निवृत्त्यादिपञ्चकलास्वन्तर्भावं कृत्वा पञ्चकला-शुद्धिः प्रतिपादिता। एतन्मार्गमवलम्ब्य ज्ञानरत्नावली-सोमशम्भुपद्धति–अघोरशिवाचार्यपद्धति–ईशानशिवगुरुदेवपद्धति–सिद्धान्तशेखर–सिद्धान्तसारावली–दीक्षादर्शादिपद्धतिषु क्रियादीपिकायां च पञ्चकलाशुद्धिविषये व्योमव्यापिपदमन्त्रस्य पदानि यथाक्रमं संयोजितानि। शिवागमशेखरे शिवलिङ्गप्रतिष्ठाविधौ पदाध्वन्यासे व्योमव्यापिमन्त्रपदन्यासः प्रोक्तः। परं व्योमव्यापिपदमन्त्रस्य पदानां विभागविषयेऽस्ति कश्चन व्यत्यासः चतुर्नवतिपदक्रमः, एकाशीतिपदक्रमश्चेति। तत्र

सोमशम्भुपद्धतौ[1] अघोरशिवाचार्यपद्धतौ[2] क्रियादीपिकायां[3] ज्ञानरत्नावल्यां[4] च चतुर्नवतिपदक्रमो विहितः। उत्तरकामिके[5] ईशानशिवगुरुदेवपद्धतौ[6] सिद्धान्तशेखरे[7] शिवागमशेखरे[8] च एकाशीतिपदक्रमो दृश्यते। सिद्धान्तसारावलीव्याख्याने[9] क्रमद्वयमपि निर्दिश्यते। परं सर्वेष्वेषु ग्रन्थेषु निर्वाण-दीक्षाविधौ षडध्वदीक्षाप्रसङ्गे पञ्चकलाशुद्धौ व्योमव्यापिपदमन्त्रा नियोजिताः। तत्र पञ्चकलाविषये व्योमव्यापिपदमन्त्रविभजनक्रमो यथा —

| | ९४ पदक्रमः | ८१ पदक्रमः |
|---|---|---|
| शान्त्यतीतकलायां | १ | १ |
| शान्तिकलायां | १२ | ११ |
| विद्याकलायां | २१ | २० |
| प्रतिष्ठाकलायां | ३२ | २१ |
| निवृत्तिकलायां | २८ | २८ |
| आहत्य | ९४ पदानि | ८१ पदानि |

सिद्धान्तशेखरे परमेकाशीतिपदक्रमे विद्याकलाशुद्धौ २१ पदानि, प्रतिष्ठाकलाशुद्धौ २० पदानि विहितानीति विशेषः।

एवं क्रमद्वयेन विभजनं यद्यप्यङ्गीक्रियते तथापि ग्रन्थेषु पदविभागे पदानामानुपूर्वीविषये वर्णसंख्यादिषु चास्ति तत्र तत्र व्यत्यासः। उदाहरणार्थं विद्याकलाशुद्धिविषये प्रयुक्तानां पदाना-मानुपूर्व्याः पट्टिकैकात्र दीयते यस्या विमर्शनेन तादृशो व्यत्यासः स्पष्टो भवेत्।

| [10]ज्ञानरत्नावल्यां विद्याकलायां चतुर्नवति-पदक्रमेणैकविंशतिपदानि | *उत्तरकामिके विद्याकलायां विलोमत एकाशीति-पदक्रमेण विंशतिपदानि | शिवागमशेखरे विद्याकला-यामनुलोमत एकाशीति-पदक्रमेण विंशतिपदानि |
|---|---|---|
| १ ओम् | १ व्यापिन् व्यापिन् | १ ध्यानाहाराय |
| २ नमः | २ व्योमिन् व्योमिन् | २ ओं नमः शिवाय |
| ३ शिवाय | ३ अचेतनाचेतन | ३ सर्वप्रभवे |
| ४ सर्वप्रभवे | ४ परमेश्वरपराय | ४ शिवाय |
| ५ शिवाय | ५ ज्योतीरूपाय | ५ ईशानमूर्धाय |
| ६ ईशानमूर्धाय | ६ सर्वयोगाधिकृताय | ६ तत्पुरुषवक्त्राय |
| ७ तत्पुरुषवक्त्राय | ७ अनिधनाय | ७ अघोरहृदयाय |
| ८ अघोरहृदयाय | ८ गोप्त्रे | ८ वामदेवगुह्याय |
| ९ वामदेवगुह्याय | ९ गुह्यातिगुह्याय | ९ सद्योजातमूर्तये |

[1] भागः ३. पृ० २३१–३३८.
[2] पृ० ३०९–३४७.
[3] पृ० १६८–१७८.
[4] प्रभायां पृ० २८४.
[5] २३.८४–१७९.
[6] भागः ३. पृ० ६७–६९.
[7] पृ० १६०–१६४.
[8] भागः २. पृ० ३०८–३१२.
[9] ४८ तमश्लोकव्याख्याने
[10] अत्र विषये अघोरशिवार्यपद्धतौ, सोमशम्भुपद्धतौ चायमेव पदक्रमः

| | | |
|---|---|---|
| १० सद्योजातमूर्तये | १० ओं नमो नमः | १० ओं नमो नमः |
| ११ ओम् | ११ सद्योजातमूर्तये | ११ गुह्यातिगुह्याय |
| १२ नमः | १२ वामदेवगुह्याय | १२ गोप्त्रे |
| १३ नमः | १३ अघोरहृदयाय | १३ अनिधनाय |
| १४ गुह्यातिगुह्याय | १४ तत्पुरुषवक्त्राय | १४ सर्वयोगाधिकृताय |
| १५ गोप्त्रे | १५ ईशानमूर्धाय | १५ सर्वविद्याधिपाय |
| १६ अनिधनाय | १६ शिवाय | १६ ज्योतीरूपाय |
| १७ सर्वयोगाधिकृताय | १७ सर्वप्रभवे | १७ परमेश्वरपराय |
| १८ ज्योतीरूपाय | १८ शिवाय | १८ अचेतनाचेतन |
| १९ परमेश्वरपराय | १९ ओं नमः | १९ व्योमिन् व्योमिन् |
| २० अचेतनाचेतन | २० ध्यानाहाराय | २० व्यापिन् व्यापिन् |
| २१ व्योमिन् व्योमिन् | | |

तत्र ज्ञानरत्नावल्यां तदनुसारिषु ग्रन्थेषु चतुर्नवतिपदक्रमेण, उत्तरकामिके एकाशीतिपदक्रमेण विलोमतः, शिवागमशेखरेऽनुलोमतः, तत्रापि उत्तरकामिके षष्ठं पदं 'सर्वयोगाधिकृताय' इति, शिवागमशेखरे चतुर्दशपञ्चदशपदे 'सर्वयोगाधिकृताय' 'सर्वविद्याधिपाय' इति, तथा उत्तरकामिके १८, १९ तमे पदे 'शिवाय' 'ओं नमः' इति, शिवागमशेखरे द्वितीयं पदम् 'ओं नमः शिवाय' इत्यादिक्रमव्यत्यासो दृश्यते।

एवमेव मन्त्रेऽस्मिन् प्रक्षिप्तपदविचारः, अघोरशिवाचार्यपद्धतिव्याख्यायां प्रभायां कृत इति तादृशविचारस्य विमर्शोऽधुना क्रियते —

"अत्र क्वचिद् ग्रन्थे 'सर्वयोगाधिकृताय' इति पदानन्तरं 'सर्वविद्याधिपाय' इति पदं प्रक्षिप्तम्। ननु 'सर्वविद्याधिपायेति पदं सप्ताक्षरं भवेत्' इति तस्य शिवागमेषु पठितत्वात् कथं तथोक्तमिति चेत्। सत्यम्। तत्पदप्रयोगः पुनरेकाशीतिपदक्रमात् पदाध्वसंशुद्धिविषयः। न चात्र, चतुर्नवतिपदक्रमस्यात्र विवक्षितत्वात्। तत्पदप्रक्षेपे एकविंशतिसंख्याभङ्गप्रसङ्गः संभवेत्। चतुर्नवतिपदविन्यासे 'सर्वविद्याधिपाय' इति पदं विहाय एकविंशतिसंख्याविभागो यथा तथोक्तं श्रीमज्ज्ञानरत्नावल्यां पददीक्षाक्रमे —

'ओमित्येकाक्षरे विद्याद् व्यूहो वामादिकः स च।
विग्रहव्यूहसंज्ञः स्यादघोरादिर्नमःपदे ॥
राज्ञीव्यूहोऽम्बिकादिः स्याच्छिवायपदके स्थितः ।
अङ्गव्यूहः स्थितः सर्वप्रभवाख्यपदे तथा ॥
ततः शिवपदे रुद्रव्यूहसंस्थो हलादिकः ।
ईशानः पुरुषोऽघोरो वामदेवो ह्यजस्तथा ।
प्रणवश्च नमश्चेति नमश्चेति पदाष्टके ।
गुह्यातिगुह्याय चेति गोप्त्रे चेति पदद्वये ॥
ततस्त्वनिधनायेति पदे पञ्चान्तकः स्थितः ।
सर्वयोगाधिकृताय पदे शूरो व्यवस्थितः ॥
ज्योतिरुद्रपदं तत्र ज्योतिरूपपदे स्थितः ।
परमेश्वराय चेति पदे पिङ्गेक्षणः स्थितः ॥
अचेतनद्वये तत्र रुद्रसंवर्तकः स्थितः ।
व्योमिन्व्योमिन्पदे देवरोधरुद्रः स्थितस्ततः ॥इति॥"

(क्रियाक्रमद्योतिकाव्याख्या प्रभा पृ० २८४-२८५)

पूर्वप्रदर्शितप्रभाव्याख्यानग्रन्थेन व्योमव्यापिपदमन्त्रे 'सर्वविद्याधिपाय' इति पदं प्रक्षिप्तमिति सूच्यते। तत्पदं विना व्योमव्यापिपदमन्त्रे चतुर्नवतिपदक्रमेण विद्याकलाशुद्धिविषये एकविंशतिपदसाधनप्रकारो ज्ञानरत्नावलीग्रन्थतः साध्यते। एवमेव पूर्वोक्तविषये एकविंशतिपदानि सोमशम्भुपद्धतौ (भागः ३ पृ० ३११) दृश्यते। उभयत्रापि 'सर्वविद्याधिपाय' इति पदं नास्ति। 'सर्वयोगाधिकृताय' इति पदमस्तीति स्पष्टम्। अनेन चतुर्नवतिपदक्रमविषये 'सर्वविद्याधिपाय' इति पदं नेति स्पष्टमवगम्यते। 'सर्वयोगाधिकृताय' इति पदमस्तीति च स्पष्टम्। एतद्विषये सोमशम्भुपद्धतौ तृतीयभागे ३१०–३११ पृष्ठयोः टिप्पणीषु तथाष्टमे चित्रानुबन्धे च विचारचर्चा दत्तास्ति। उत्तरकामिके निर्वाणदीक्षाविधौ (२३.१५९ उ०–१६४ पू० श्लोकेषु) व्योमव्यापिपदमन्त्रे एकाशीतिपदक्रममाश्रित्य विद्याकलाशुद्धिविषये विलोमतो विंशतिपदानि प्रोक्तानि। अत्र 'सर्वविद्याधिपाय' इति पदं न दृश्यते। 'सर्वयोगाधिकृताय' इति च पदमस्ति।

शिवागमशेखरे द्वितीयभागे ३०९–३१० पृष्ठयोः विद्याकलायां पदाध्वन्यासे व्योमव्यापिपदमन्त्रे एकाशीतिपदक्रममाश्रित्य विंशतिपदानि प्रदर्शितानि। अत्र टिप्पण्यां प्रमाणाय विना ग्रन्थनामनिर्देशं श्लोकाः प्रदर्शिताः। अत्र 'सर्वयोगाधिकृताय', 'सर्वविद्याधिपाय' इति पदद्वयमप्यस्ति।

व्योमव्यापिस्तवव्याख्यायां लघुटीकायाम् (टि० ११२.२७०–३४८ पृष्ठेषु) पूर्वपद्मे, आग्नेयपद्मे च पूजनीयतया प्रतिपादितेष्वष्टादशसु पदेषु 'सर्वयोगाधिकृताय' इति पदं नास्ति। 'सर्वविद्याधिपाय' इति पदं विद्यते। अत्रापि व्योमव्यापिपदमन्त्रविषये एकाशीतिपदक्रम एव विहितः।

मतङ्गपारमेश्वरे क्रियापादे नवमपटले पूर्वपद्माग्नेयपद्मयोः पूजनीयतया प्रतिपादितानामष्टादशपदानां क्रमोऽपि व्योमव्यापिस्तवव्याख्यायां प्रदर्शितक्रमतुल्यः। एवं च व्योमव्यापिस्तवटीकायां, मतङ्गपारमेश्वरे च 'सर्वयोगाधिकृताय' इति पदं नैवास्ति। 'सर्वविद्याधिपाय' इति पदं विद्यत इति स्पष्टमवगम्यते। मतङ्गपारमेश्वरे प्रथमे पटले मन्त्रोद्धारेऽपि पूर्वप्रदर्शितक्रम एव पदविषये विद्यते। एवं च प्रभाव्याख्याने 'सर्वविद्याधिपाय' इति प्रक्षिप्तमित्युक्तस्योदाहरणतयोत्तरकामिके प्रदर्शितक्रमो दृश्यते। तत्र विद्याकलाशुद्धिविषये विंशतिपदानि प्रोक्तानि। अतः प्रभाव्याख्याने प्रोक्तस्य एकविंशतिपदसंख्याभङ्गरूपो दोषो नैव भवति। परमत्राधिगन्तव्यो विषयः 'सर्वयोगाधिकृताय' इति पदं मतङ्गागमे, व्योमव्यापिस्तवव्याख्यायां च नास्तीत्येतावानेव। रौरवे विद्यापादे मन्त्रार्थवर्णने दशमपटलेऽपि 'सर्वयोगाधिकृताय' इति पदस्यार्थविवरणं नास्तीत्ययमपि विषयोऽत्र विमर्शनीयः।

### व्योमव्यापिपदमन्त्रविषये केचनान्ये विशेषाः

मतङ्गपारमेश्वरे क्रियापादे नवमे पटले नवतत्त्वपीठदीक्षायां नवनाभमण्डले नवसु पद्मेषु व्योमव्यापिमन्त्रपदन्यासप्रकारो न्यरूपि। तथैव व्योमव्यापिस्तवलघुटीकायामपि (टि० ११२ पृ० २७०–३४८) नवसु पद्मेषु व्योमव्यापिमन्त्रपदान्येव कल्पनीयत्वेन प्रतिपाद्यन्ते। तत्र रौरवप्रोक्तप्रकारेण व्योमव्यापिमन्त्रेऽष्टषष्ट्यधिकशतत्रयवर्णघटितैकाशीतिपदान्यत्र कल्प्यन्त इत्युक्तम्। मतङ्गपारमेश्वरेऽपि अष्टषष्ट्यधिकशतत्रयवर्णघटितैकाशीतिपदान्येव प्रतिपाद्यन्ते। उभयत्रापि पदविन्यासे व्यत्यासो दृश्यते। भेदोऽयं यथावत्प्रतिपाद्यते।

**मध्यपद्मे** प्रणवादारभ्य 'ध्रुवाय' इति पदपर्यन्तं नव पदान्युभयत्रापि विना भेदं प्रतिपादितानि।

**प्राक्पद्मे** 'शाश्वताय' इत्यारभ्य 'तत्पुरुषवक्त्राय' इत्यन्तं नव पदान्युभयत्रापि प्रतिपादितानि। किं त्वष्टमं पदं मतङ्गपारमेश्वरे 'ईशानमूर्धाय' इति दृश्यते। व्योमव्यापिस्तवलघुटीकायाम् 'ईशानमूर्ध्ने' इति पञ्चाक्षरत्वेन निर्दिष्टम्।

**आग्नेयपद्मे** 'अघोरहृदयाय' इत्यारभ्य 'ज्योतीरूपाय' इत्यन्तं नव पदानि यद्यप्युभयत्रापि समानतया प्रोक्तानि। तथापि मतङ्गपारमेश्वरे चतुर्थं पदं 'ओं नमो नमः' इति दृश्यते। लघुटीकायाम् 'ओं नमः' इत्येव भवति।

**याम्यपद्मे** मतङ्गपारमेश्वरे 'अचेतन अचेतन' इत्यत्र लघुटीकायाम् 'अचेतनाचेतन' इति सप्ताक्षरत्वेन दृश्यते। मतङ्गे 'व्योमिन् व्योमिन्' इत्यत्र लघुटीकायां 'व्योम व्योम' इति, मतङ्गे 'अरूपिन् अरूपिन्' इत्यत्र लघुटीकायाम् 'अरूप्यरूपि' इति पञ्चाक्षरत्वेन दृश्यते।

**नैर्ऋतपद्मे** नवपदान्यप्युभयत्र समानानि।

**वारुणपद्मे** मतङ्गे नवपदेषु 'अनिधन निधन' इति प्रथमद्वितीयपदे। लघुटीकायाम् 'अनिधनानिधन' इति समस्तं प्रथमं पदम्। एवमत्र मतङ्गे नवपदसंख्याने 'अनिधन' इत्यारभ्य 'सद्भावेश्वर' इत्यन्तं नव पदानि, लघुटीकायाम् 'अनिधनानिधन' इत्यारभ्य 'महातेजः' इत्यन्तं नव पदानि।

**वायव्यपद्मे** मतङ्गे 'महातेजः' इत्यारभ्य 'सर्वसांनिध्यकर' इत्यन्तं नव पदानि, लघुटीकायां 'योगाधिप' इत्यारभ्य 'ब्रह्मविष्णुरुद्रपर' इत्यन्तं नव पदानि। तथा मतङ्गे 'योगाधिपते' इत्यस्य स्थाने लघुटीकायां 'योगाधिप' इति पाठश्च दृश्यते।

**कौबेरपद्मे** मतङ्गे 'ब्रह्मविष्णुरुद्रपर' इत्यारभ्य 'ज्ञान ज्ञान' इत्यन्तानि नव पदानि; लघुटीकायाम् 'अनर्चितानर्चित' इत्यारभ्य 'शब्द शब्द' इत्यन्तं नव पदानि। तथा मतङ्गे 'अनर्चित अनर्चित असंस्तुत असंस्तुत' इति व्यस्तपाठः; लघुटीकायाम् 'अनर्चितानर्चित' 'असंस्तुतासंस्तुत' इति समस्तपाठः।

**ईशानपद्मे** मतङ्गे 'शब्दशब्द' इत्यारभ्य 'ओम्' इत्यन्तं नव पदानि; लघुटीकायां 'सूक्ष्म सूक्ष्म' इत्यारभ्य 'ओम्' इत्यन्तं नव पदानि। मतङ्गे 'शिव' इत्येकपदस्थाने लघुटीकायां 'शिव शिव' इति पदद्वयम्, तथा मतङ्गे 'शर्व' इत्येकमधिकं पदम्। मतङ्गे 'ओं शिवाय' इत्यस्य स्थाने लघुटीकायां 'शिवाय' इत्योंकाररहितं पदमेकम् 'ओम्' इत्येकं प्रत्येकं पदम्, मतङ्गे 'ओं नमो नमः' इत्यस्य स्थाने लघुटीकायां 'नमो नमो नमः' इति ओंकारं विना नमःशब्दत्रयम् इत्यादिव्यत्यासः पट्टिकादर्शने सुविशदो भवेत्।

**मध्यपद्मे**

| मतङ्गपारमेश्वरे | | व्योमव्यापिस्तवे | |
|---|---|---|---|
| १ ओम् | १ | १ ओम् | १ |
| २ व्योमव्यापिने | ५ | २ व्योमव्यापिने | ५ |
| ३ व्योमरूपाय | ५ | ३ व्योमरूपाय | ५ |
| ४ सर्वव्यापिने | ५ | ४ सर्वव्यापिने | ५ |
| ५ शिवाय | ३ | ५ शिवाय | ३ |
| ६ अनन्ताय | ४ | ६ अनन्ताय | ४ |
| ७ अनाथाय | ४ | ७ अनाथाय | ४ |
| ८ अनाश्रिताय | ५ | ८ अनाश्रिताय | ५ |
| ९ ध्रुवाय | ३ | ९ ध्रुवाय | ३ |
| | ३५ | | ३५ |

| मतङ्गपारमेश्वरे | | व्योमव्यापिस्तवे | |
|---|---|---|---|
| | | **प्राक्पद्मे** | |
| १० शाश्वताय | ४ | १० शाश्वताय | ४ |
| ११ योगपीठसंस्थिताय | ८ | ११ योगपीठसंस्थिताय | ८ |
| १२ नित्यं योगिने | ५ | १२ नित्यं योगिने | ५ |
| १३ ध्यानाहाराय | ५ | १३ ध्यानाहाराय | ५ |
| १४ ओं नमः शिवाय | ६ | १४ ओं नमः शिवाय | ६ |
| १५ सर्वप्रभवे | ५ | १५ सर्वप्रभवे | ५ |
| १६ शिवाय | ३ | १६ शिवाय | ३ |
| १७ ईशानमूर्धाय | ६ | १७ ईशानमूर्ध्ने | ५ |
| १८ तत्पुरुषवक्त्राय | ७ | १८ तत्पुरुषवक्त्राय | ७ |
| | ४९ | | ४८ |
| | | **आग्नेयपद्मे** | |
| १९ अघोरहृदयाय | ७ | १९ अघोरहृदयाय | ७ |
| २० वामदेवगुह्याय | ७ | २० वामदेवगुह्याय | ७ |
| २१ सद्योजातमूर्तये | ७ | २१ सद्योजातमूर्तये | ७ |
| २२ ओं नमो नमः | ५ | २२ ओं नमः | ३ |
| २३ गुह्यातिगुह्याय | ६ | २३ गुह्यातिगुह्याय | ६ |
| २४ गोप्त्रे | २ | २४ गोप्त्रे | २ |
| २५ निधनाय | ४ | २५ निधनाय | ४ |
| २६ सर्वविद्याधिपाय | ७ | २६ सर्वविद्याधिपाय | ७ |
| २७ ज्योतीरूपाय | ५ | २७ ज्योतीरूपाय | ५ |
| | ५० | | ४८ |
| | | **याम्यपद्मे** | |
| २८ परमेश्वरपराय | ८ | २८ परमेश्वरपराय | ८ |
| २९ अचेतन अचेतन | ८ | २९ अचेतनाचेतन | ७ |
| ३० व्योमिन् व्योमिन् | ४ | ३० व्योम व्योम | ४ |
| ३१ व्यापिन् व्यापिन् | ४ | ३१ व्यापिन् व्यापिन् | ४ |
| ३२ अरूपिन् अरूपिन् | ६ | ३२ अरूप्यरूपि | ५ |

| मतङ्गपारमेश्वरे | | व्योमव्यापिस्तवे | |
|---|---|---|---|
| ३३ प्रथम प्रथम | ६ | ३३ प्रथम प्रथम | ६ |
| ३४ तेजस्तेज: | ४ | ३४ तेजस्तेज: | ४ |
| ३५ ज्योतिर्ज्योति: | ४ | ३५ ज्योतिर्ज्योति: | ४ |
| ३६ अरूप | ३ | ३६ अरूप | ३ |
| | ४७ | | ४५ |

**नैर्ऋतपद्मे**

| | | | |
|---|---|---|---|
| ३७ अनग्ने | ३ | ३७ अनग्ने | ३ |
| ३८ अधूम | ३ | ३८ अधूम | ३ |
| ३९ अभस्म | ३ | ३९ अभस्म | ३ |
| ४० अनादे | ३ | ४० अनादे | ३ |
| ४१ ना ना ना | ३ | ४१ ना ना ना | ३ |
| ४२ धू धू धू | ३ | ४२ धू धू धू | ३ |
| ४३ ओं भू: | २ | ४३ ओं भू: | २ |
| ४४ ओं भुव: | ३ | ४४ ओं भुव: | ३ |
| ४५ ओं स्व: | २ | ४५ ओं स्व: | २ |
| | २५ | | २५ |

**वारुणपद्मे**

| | | | |
|---|---|---|---|
| ४६ अनिधन | ४ | ४६ अनिधनानिधन | ७ |
| ४७ निधन | ३ | ४७ निधनोद्भव | ५ |
| ४८ निधनोद्भव | ५ | ४८ शिव | २ |
| ४९ शिव | २ | ४९ सर्व | २ |
| ५० सर्व | २ | ५० परमात्मन् | ४ |
| ५१ परमात्मन् | ४ | ५१ महेश्वर | ४ |
| ५२ महेश्वर | ४ | ५२ महादेव | ४ |
| ५३ महादेव | ४ | ५३ सद्भावेश्वर | ५ |
| ५४ सद्भावेश्वर | ५ | ५४ महातेज: | ४ |
| | ३३ | | ३७ |

| मतङ्गपारमेश्वरे | | व्योमव्यापिस्तवे | |
|---|---|---|---|

### वायव्यपद्मे

| | | | |
|---|---|---|---|
| ५५ महातेजः | ४ | ५५ योगाधिप | ४ |
| ५६ योगाधिपते | ५ | ५६ मुञ्च मुञ्च | ४ |
| ५७ मुञ्च मुञ्च | ४ | ५७ प्रथम प्रथम | ६ |
| ५८ प्रथम प्रथम | ६ | ५८ शर्व शर्व | ४ |
| ५९ शर्व शर्व | ४ | ५९ भव भव | ४ |
| ६० भव भव | ४ | ६० भवोद्भव | ४ |
| ६१ भवोद्भव | ४ | ६१ सर्वभूतसुखप्रद | ८ |
| ६२ सर्वभूतसुखप्रद | ८ | ६२ सर्वसांनिध्यकर | ७ |
| ६३ सर्वसांनिध्यकर | ७ | ६३ ब्रह्मविष्णुरुद्रपर | ८ |
| | ४६ | | ४९ |

### कौबेरपद्मे

| | | | |
|---|---|---|---|
| ६४ ब्रह्मविष्णुरुद्रपर | ८ | ६४ अनर्चितानर्चित | ७ |
| ६५ अनर्चित अनर्चित | ८ | ६५ असंस्तुतासंस्तुत | ७ |
| ६६ असंस्तुत असंस्तुत | ८ | ६६ पूर्वस्थित पूर्वस्थित | ८ |
| ६७ पूर्वस्थित पूर्वस्थित | ८ | ६७ साक्षिन् साक्षिन् | ४ |
| ६८ साक्षिन् साक्षिन् | ४ | ६८ तुरु तुरु | ४ |
| ६९ तुरु तुरु | ४ | ६९ पतङ्ग पतङ्ग | ६ |
| ७० पतङ्ग पतङ्ग | ६ | ७० पिङ्ग पिङ्ग | ४ |
| ७१ पिङ्ग पिङ्ग | ४ | ७१ ज्ञान ज्ञान | ४ |
| ७२ ज्ञान ज्ञान | ४ | ७२ शब्द शब्द | ४ |
| | ५४ | | ४८ |

### ईशानपद्मे

| | | | |
|---|---|---|---|
| ७३ शब्द शब्द | ४ | ७३ सूक्ष्म सूक्ष्म | ४ |
| ७४ सूक्ष्म सूक्ष्म | ४ | ७४ शिव शिव | ४ |
| ७५ शिव | २ | ७५ सर्वद | ३ |

| मतङ्गपारमेश्वरे | | व्योमव्यापिस्तवे | |
|---|---|---|---|
| ७६ शर्व | २ | ७६ ओं नमो नमो नमः | ७ |
| ७७ सर्वद | ३ | ७७ शिवाय | ३ |
| ७८ ओं नमो नमः | ५ | ७८ ओं | १ |
| ७९ ओं शिवाय | ४ | ७९ नमो नमो नमः | ६ |
| ८० नमो नमः | ४ | ८० नमः नमः | ४ |
| ८१ ओम् | १ | ८१ ओम् | १ |
| | २९ | | ३३ |
| | आहत्य ३६८ | | ३६८ |

एवं च प्रधानभूते व्योमव्यापिपदमन्त्रविषये रौरवाद्यागमेषु पदवर्णादिनिर्वचनपूर्वकं व्याख्यातेऽपि कालक्रमेणैतादृशः पदानामानुपूर्वीविषये व्यत्यासः समजनीत्ययं विषयोऽवधानार्हः ।

## अन्ये केचन विशेषाः

मतङ्गपारमेश्वरे क्रियापादे प्रथमपटले ६० उ०–६४ पू० श्लोकेषु शिवाङ्गमन्त्राणां हृदयशिरः-शिखाकवचास्त्राणां पञ्चानामेव स्वरूपं प्रतिपादितम् । नेत्रमन्त्रस्य स्वरूपवर्णनं नोपलभ्यते । चण्डेशषडङ्गमन्त्रोद्धारविषये परं नेत्रमन्त्रस्वरूपं प्रतिपाद्यते —

'नेत्रमष्टाक्षरं प्रोक्तं परमेश्वरपूर्वकम् ।
पराय चण्डनाथस्य षडङ्गानि शुभानि तु ॥'
(मतङ्ग० क्रिया० १.८०) इति ।

मतङ्गपारमेश्वरे क्रियापादे तृतीयपटले ८–१२ पू० श्लोकेषु करन्यासविषये पञ्चब्रह्ममन्त्राणां केवलं न्यासो विधीयते । अत्र वृत्तावपि 'करन्यासं ब्रह्मभिरुक्तक्रमेण कुर्यात्' इत्युक्तम् । अन्येष्वागमेषु पञ्चब्रह्मणामङ्गानामुभयेषामपि न्यासो विधीयते । केषुचिदागमेषु नेत्रमन्त्रस्य पृथक्तया विनियोगश्च दृश्यते । सोऽयं विषयो यथावत्प्रतिपाद्यते ।

पूर्वकामिके चतुर्थपटलेऽर्चनविधौ ४०–५१ पू० श्लोकेषु करन्यासो विहितः । तत्र —

'अङ्गुष्ठादिकनिष्ठान्तमीशात्सद्यावसानकम् ।',
'नेत्रं हस्ततले न्यस्य पश्चादङ्गानि विन्यसेत् ।' इति ।

अत्र ब्रह्माङ्गमन्त्राणां न्यासो नेत्रमन्त्रस्य पृथग्विनियोगश्च दृश्यते ।

पूर्वकारणे ३० तमे पटले नित्यार्चनविधौ १२२–१३२ श्लोकेषु करन्यासविधिः प्रतिपाद्यते । तत्र—

'ईशादिसद्यमन्त्रान्तं सृष्टिन्यासमुदाहृतम् ।',
'तर्जन्यन्तं तु मध्यादिक्रमादङ्गानि विन्यसेत्,
न्यसेद्धस्ततले नेत्रे' इति ।

अत्रापि ब्रह्माङ्गमन्त्राणां न्यासो नेत्रमन्त्रस्य पृथग्विनियोगश्च प्रतिपादितः ।

अजितागमे क्रियापादे विंशे पटले ७३उ०–८०पू० श्लोकेषु करन्यासः प्रतिपाद्यते । अत्र —

'विन्यसेत्पञ्चमं पश्चात्पुरुषादिचतुष्टयम् ।',

'हृदादि पञ्चकं न्यस्य तलयोर्नेत्रमेव च।' इति।

अत्रापि ब्रह्माङ्गमन्त्राणां न्यासो नेत्रमन्त्रस्य पृथग्विनियोगश्च निरूप्यते।

दीप्तागमे २३ तमे पटले १२–१९ पू० श्लोकेषु करन्यासो विधीयते। अत्र —

'ईशानादि च सद्यान्तं सृष्टिन्यासमिदं परम्।
मध्यादि देशिन्यन्तं हि शिवाङ्गं विन्यसेत्क्रमात्।
नेत्रं हस्ततले न्यस्य'

इति दृश्यते। अत्रापि ब्रह्माङ्गमन्त्राणां न्यासो नेत्रमन्त्रस्य पृथक्तया विनियोगश्च दृश्यते।

सार्धत्रिशतिकालोत्तरे प्रथमपटले १७, १८ श्लोकयोः करन्यासः प्रतिपादितः। अत्र —

'ब्रह्माणि विन्यसेत्तत्र तथैवाङ्गानि यत्नतः।'

इति वर्तते। अत्र पञ्चब्रह्मणामङ्गानां चोभयेषां विनियोगो दृश्यते। अत्र नेत्रमन्त्रस्य विनियोगो वृत्तौ सूचितः।

चिन्त्यागमे (टि० १४) अष्टमपटले ४५–५० श्लोकेषु करन्यासः प्रतिपादितः। तत्र—

'अङ्गुष्ठादिकनिष्ठान्तमीशानात्सद्यमन्त्रकम्।
मध्यमादि कनिष्ठान्तं हृदयादिशिखान्तकम्॥
तलिकामध्ययोर्वर्म नेत्रे चानामिके न्यसेत्।'

इति दृश्यते। अत्रापि ब्रह्माङ्गमन्त्राणां न्यासो नेत्रमन्त्रस्य पृथग्विनियोगश्च दृश्यते।

सुप्रभेदागमे क्रियापादेऽष्टमे पटले १९ उ०–२४ पू० श्लोकेषु करन्यासो वर्ण्यते। तत्र —

'पञ्चब्रह्मशिवाङ्गं च कराङ्गुलिषु विन्यसेत्'

इति दृश्यते। अत्र पञ्चब्रह्मणामङ्गानां च न्यासो विहितोऽस्ति। नेत्रमन्त्रस्य पृथग्विनियोगो न दृश्यते।

मृगेन्द्रे क्रियापादे तृतीयपटले २, ३ श्लोकयोः करन्यासो वर्ण्यते। तत्र —

'ईशानादिकान्न्यसेत्'
अङ्गुष्ठादिषु तत्त्वं च परितोऽङ्गान्यपक्रमात्॥"

इति वर्तते। अतोऽत्र ब्रह्माङ्गानामुभयेषां न्यासो विहितः। नेत्रमन्त्रस्य पृथग्विनियोगो न दृश्यते।

किरणागमे क्रियापादे द्वितीये पटले पूजाविधौ ६तमे श्लोके करन्यासो विहितः। तत्र —

'अस्त्रशुद्धौ करौ कृत्वा ब्रह्माङ्गानि क्रमान्न्यसेत्।'

इति वर्तते। अतोऽत्रापि ब्रह्माङ्गमन्त्राणां न्यासः सिद्धः। नेत्रमन्त्रस्य पृथग्विनियोगोऽत्र न दृश्यते।

मतङ्गपारमेश्वरे क्रियापादे तृतीये पटलेऽर्चनविधौ १२ उ०–१५ श्लोकैरङ्गन्यासविधिः प्रतिपाद्यते। तत्र हृदयशिरःशिखाकवचास्त्राणां पञ्चानामेव न्यास उक्तः। नेत्रमन्त्रस्य न्यासो न वर्ण्यते। अन्येष्वागमेषु नेत्रन्यासो विहितः। सोऽयं विषयो यथावदत्र प्रतिपाद्यते।

पूर्वकामिके —

'एतानि हृदयादीनि षडङ्गानि स्वमन्त्रतः।
हृच्छिरश्चूलिकागात्रनेत्रहस्तेषु विन्यसेत्॥ (४. ३६६)

पूर्वकारणे — 'लोचने तु न्यसेन्नेत्रम्' (३०.१३६ पू०),

सुप्रभेदे — 'नेत्रं नेत्रेषु योजयेत्।' (क्रिया० ८.५७ पू०),

अजिते — 'नेत्रं नेत्रद्वयोश्चापि विन्यसेद्' (क्रिया. २०.१०० उ०),

चिन्त्ये — 'नेत्रं तु नेत्रयोर्न्यस्य' (८.५४ पू०),

सार्धत्रिशतिकालोत्तरे — 'नेत्रं दत्त्वा तदावाह्यो देवदेवः' (२.११ पू०) इति।

एवं च पूर्वकामिके, पूर्वकारणे, सुप्रभेदे, अजिते, चिन्त्ये, सार्धत्रिशतिकालोत्तरे चाङ्गन्यासे नेत्रमन्त्रस्य विनियोगो वर्तते। किरणे, दीप्ते चाङ्गन्यासविषयको ग्रन्थो न दृश्यते। तत्रोभयोरपि

करन्यासानन्तरमष्टत्रिंशत्कलान्यासो दृश्यते। मृगेन्द्रे (क्रिया. ३.१०) नेत्रमन्त्रस्य विनियोगो न दृश्यते ॥

मतङ्गपारमेश्वरे क्रियापादे तृतीये पटलेऽर्चनप्रकरणे ८३–९१ श्लोकेषु गर्भावरणपूजायां ब्रह्माङ्ग-मन्त्राणां स्थानं, ध्यानाय रूपवर्णनं च दृश्यते। तत्रापि नेत्रमन्त्रस्य वर्णनं न दृश्यते। अन्येष्वागमेषु गर्भावरणपूजायां नेत्रमन्त्रस्य स्थाननिर्देशो रूपवर्णनादिकं च दृश्यते। सोऽयं विषयो यथावत्प्रति-पाद्यते।

पूर्वकामिके गर्भावरणे —

'हृच्छिरश्चूलिकावर्मनेत्रमस्त्रं यथाक्रमम्।' (४.४५२ पू०),

'ज्योतीरूपप्रकाशं च नेत्रं मध्यगतं स्मरेत्।' (४.४५४ पू०),

'ईशानं नेत्रमैशान्यामथवा साधको यजेत्।' (४.४५७ पू०)

इति नेत्रमन्त्रस्य स्थानं रूपवर्णनं च दृश्यते।

पूर्वकारणे गर्भावरणे — 'ईशाने नयनं भवेत्' (३०.२८८ पू०) इति नेत्रमन्त्रस्य स्थानं निर्दिष्टम्। ततस्तस्य वर्णरूपादिकमपि वर्ण्यते।

अजिते गर्भावरणपूजायां नेत्रमन्त्रस्य 'नेत्रमीशानगोचरे।' (२०.१९७ उ०) इति स्थाननिर्देशो दृश्यते।

दीप्तागमे 'नेत्रमीशानके न्यस्त्वा' (२३.६० उ०) इति नेत्रमन्त्रस्य स्थानं निर्दिश्यते।

चिन्त्ये — 'नेत्रं तु खड्गिनी शक्तिः श्यामलौ वामगोचरे।' (८.३५६ पू०) इति सशक्तिकस्य नेत्रमन्त्रस्य गर्भावरणे स्थानं प्रतिपाद्यते।

सार्धत्रिशतिकालोत्तरे गर्भावरणे — 'पवित्राणि पुरा न्यस्य शिवाङ्गानि न्यसेत्ततः।' (७.७ पू०) इति। तदीयवृत्तौ नेत्रमन्त्रन्यासः कर्तव्य इत्युक्तम्।

किरणे गर्भावरणविषयको ग्रन्थो न दृश्यते।

मृगेन्द्रे (क्रिया० ३.२०–२१) गर्भावरणविषये नेत्रस्य प्रस्तावो न दृश्यते। एवं सु-प्रभेदागमेऽपि (क्रिया० ८.१३७–१४०) गर्भावरणे ब्रह्ममन्त्राणामेव न्यासः प्रोक्तो न त्वङ्गानामिति तत्रापि नेत्रस्य प्रस्तावो न दृश्यते।

एवं मतङ्गपारमेश्वरे करन्यासे, अङ्गन्यासे, गर्भावरणे च नेत्रमन्त्रस्य प्रस्तावाभावो निरूपितः। आगमान्तरेषु नेत्रमन्त्रस्य पूर्वनिर्दिष्टविषयेषु स्थितिप्रकारश्च प्रदर्शितः।

किं च मतङ्गपारमेश्वरे क्रियापादे ११.२५–३१ श्लोकेषु मन्त्रसिद्धिदव्रतनिरूपणे तथा प्रतिमा-लक्षणपटले २–६ श्लोकेषु ब्रह्माङ्गमन्त्राणां प्रतिमाकरणविषये प्रकृतिद्रव्यविशेषप्रतिपादनस्थलेऽपि नेत्रमन्त्रस्य प्रस्तावो न दृश्यते।

क्रियाक्रमद्योतिकाव्याख्यायां प्रभायां २९०तमे पृष्ठे नेत्रमन्त्रस्याङ्गमन्त्रेष्वविवक्षितत्वमित्ययं विषयः सप्रमाणं प्रतिपादितः। सोऽयं विषयः प्रकृतविषये विमर्शनाय यथावल्लिख्यते —

'ननु शान्त्यतीतादिकलासु क्वचिदपि किं वा नेत्रमन्त्रस्यान्तर्भावो न विहितः, हृदयादिवत्तस्य चाङ्गमन्त्रत्वात्। नैवं, नेत्रमन्त्रस्याङ्गमन्त्रेष्वविवक्षितत्वात्। तथा श्रीमद्द्विशतिकालोत्तरे —

'प्रथमं हृदयं विद्याद् द्वितीयं तु शिरः स्मृतम्।

तृतीयं तु शिखा देवी चतुर्थं कवचं भवेत्॥

पञ्चमं तु शिवं विद्यात् षष्ठमस्त्रं विनिर्गतम्।

षडङ्गमेतत्कथितं शिवेन परमात्मना॥' इति।

किं च नेत्रस्य मन्त्राध्वन्यन्तर्भावानुपलब्धेः। तथा श्रीमद्वारुणपद्धत्यां षडध्ववर्णनप्रकरणे नेत्र-मन्त्रं विना मन्त्राध्वा व्याहृतः —

'सद्यो वामस्तथाघोरः पुरुषेशानहृच्छिरः।

शिखा वर्मास्त्रमूलं च मन्त्राध्वा समुदीरितः ॥' इति।

तथा श्रीमत्सिद्धार्थसमुच्चये — 'मन्त्राध्वा तु क्वचिन्नेत्रहीनाङ्गब्रह्मशिवमन्त्रात्मा, क्वचिन्नवव्यूह-मन्त्ररूपः' इति ॥

## दीक्षा

मतङ्गपारमेश्वरे क्रियापादः प्राधान्येन दीक्षाविधिनिरूपणायेति 'अथातः संप्रवक्ष्यामि दीक्षा-विधिमनुत्तमम्' इत्यारम्भश्लोकादेव विशदीभवति। प्रथमपटले दीक्षाङ्गानां विवरणं दीयते। द्वितीय-तृतीय-तुरीयपटलेषु प्रतिपादितानि स्नान-अर्चन-अग्निकार्यादीनि यद्यपि नित्यकर्माणि, तथापि दीक्षा-यामपि तेषामङ्गत्वात्प्रसङ्गान्मध्ये तानि प्रतिपाद्यन्ते। पञ्चमे दीक्षाधिवासविधिः, षष्ठे स्वप्ना-ध्यायः, सप्तमाष्टमनवमेषु दीक्षाविधयः प्रतिपादिताः ।

मतङ्गपारमेश्वरे प्रतिपादितानां दीक्षाविधीनामागमान्तरेषु पद्धतिषु वा प्रतिपाद्यमानानां दीक्षा-विधीनां च परिशीलनाय प्रथमतोऽन्यत्र विहितानां दीक्षाविधीनां संग्रहो दीयते ।

१. **उत्तरकामिके** विंशतितमे पटले समयदीक्षा त्रयोविंशतितमे पटले निर्वाणदीक्षा च विहिता। सा च निर्वाणदीक्षा पञ्चकलासु षडध्वव्याप्तिमाश्रित्य व्योमव्यापिपदमन्त्रे एकाशीतिपदक्रममाश्रित्य साधिता।

२. **पूर्वकारणागमे** १४५ तमे शिवदीक्षाविधिपटले आचार्यो मूर्तिपैः सह नवसु कुण्डेषु विशेष-द्रव्यैर्होमं कृत्वा, शिष्याय शिवकुम्भाम्भसा अभिषेकं कृत्वा, तत्त्वन्यासं कृत्वा, पञ्चगव्यं दत्त्वा, शिवहस्तं तन्मूर्ध्नि दत्त्वा तस्य दक्षिणे कर्णे प्रणवपूर्वकं शिवपञ्चाक्षरमन्त्रोपदेशं कुर्यादिति विधीयते। दीक्षायाः शिवदीक्षा इत्येव नाम।

३. **किरणागमे** क्रियापादे दशमे पटले समयदीक्षा, पञ्चब्रह्मषडङ्गप्रासादमन्त्रैः षट्त्रिंश-त्तत्त्वदीक्षा, हृदयमन्त्रप्रासादमन्त्राभ्यां नवतत्त्वदीक्षा, ईशसदाशिवशिवमन्त्रैः त्रितत्त्वदीक्षा, केवलप्रासादमन्त्रेण एकतत्त्वदीक्षा च विधीयते।

४. **सुप्रभेदागमे** चर्यापादे तुरीयपटले षडध्वदीक्षा तत्त्वदीक्षा च विहिता । तत्र करन्यास-अष्टत्रिंशत्कलान्यास-पञ्चब्रह्मषडङ्गन्यास-रुद्रमन्त्रन्यास-प्रासादन्यासपूर्वकं षडध्वन्यासः ।

५. **चिन्त्यागमे** शिवदीक्षा क्रियादीक्षा ज्ञानदीक्षा च ३१, ३२, ३३ तमपटलेषु व्याख्यायन्ते।

६. **वीरागमे** नवमे पटले पञ्चब्रह्म-षडङ्ग-प्रासाद-सदाशिवमन्त्रैः षडध्वदीक्षा विहिता।

७ **स्वायम्भुवागमे** विंशतितमे पटले समयसंस्कारः, एकविंशतितमे पटले अधिवासविधिः, त्रयो-विंशतितमे पटले पञ्चब्रह्ममन्त्रेण षडध्वदीक्षा च विहिता।

८. **योगजागमे** दीक्षाविधिपटले (टि. २४, पृ० ३६५–३८६) पञ्चब्रह्म-षडङ्ग-प्रासाद-सदाशिव-शिवमन्त्रैः षडध्वदीक्षा विहिता।

९. **सार्धत्रिशतिकालोत्तरे** अष्टमे पटले समयदीक्षा, निर्वाणदीक्षा, ज्ञानदीक्षा इति दीक्षात्रयं निरूप्यते।

१० **कालोत्तरागमे** षोडशतमे पटले षडध्वदीक्षा पञ्चब्रह्मषडङ्गमन्त्रैर्विहिता। सप्तदशे पटले योगदीक्षा विहिता। तत्र योगदृष्ट्या शिष्यशरीरे पृथिव्यादिपञ्चतत्त्वन्यासः सर्वोऽपि क्रियाकलापः योगमार्गेणैव कार्य इत्युच्यते।

११. **निश्वासकारिकायां** ४४ तमे पटले (टि. १७, पृ० ३७८) षडध्वदीक्षा विहिता।

१२. **विजयोत्तरसंहितायां** (टि. ६५, पृ० १६९–१९०) नवतत्त्वपीठदीक्षा निरूप्यते। मातृ-कायामपूर्णोऽयं पटलः।

१३. **सन्तानसंहितायां** ६८ तमे पटले प्रासाद-पञ्चब्रह्म-षडङ्ग-षडध्वमन्त्रैः षडध्वदीक्षा विधीयते।

१४ **सर्वज्ञानोत्तरे** क्रियापादे नवमे पटले (टि. ३३४) पञ्चब्रह्म-षडङ्ग-शिवगायत्री-क्षुरिकास्त्रमन्त्रैः दीक्षाविधिर्निरूप्यते। दशमे पटले पञ्चतत्त्वदीक्षा विधीयते।

१५. **अजिते** क्रियापादे ७७ तमे पटले चाक्षुषी, स्पर्शदीक्षा, वाचिकी, मानसी, शास्त्री, योग-दीक्षा, हौत्री, ज्ञानवती, क्रियावती, सबीजा, निर्बीजा इति दीक्षाभेदाः प्रतिपाद्यन्ते।

१६. **अचिन्त्यविश्वसादाख्ये** अष्टमे पटले समयदीक्षा, २२ तमे पटले पञ्चकलाशुद्धिपूर्वकं निर्वाण-दीक्षा कर्मनिर्वाणदीक्षा इत्याख्यया विहिता। २३ तमे पटले शिवतत्त्व-विद्यातत्त्व-आत्मतत्त्वमन्त्रैः पाशशोधनशिखाच्छेदनपूर्वकं त्रितत्त्वदीक्षा विधीयते। २५तमे पटले योगदीक्षार्थं शिष्यस्य कर-णीयाः संस्काराः प्रोच्यन्ते। २६ तमे पटले नवाधारेषु नवात्ममन्त्रेण योगदीक्षा कार्येत्युच्यते। ३६ तमे पटले आणव-शाक्त-शाम्भवभेदेन ज्ञानदीक्षा विहिता। ४१ तमे पटले मनोव्यापारमात्रेण करणीया विज्ञानदीक्षा विहिता।

१७. **मृगेन्द्रागमे** क्रियापादे सप्तमाष्टमपटलयोर्दीक्षा विस्तरतः प्रतिपाद्यते।

तत्र दीक्षा प्रथमतो भौतिकी नैष्ठिकी इति द्विविधा। भोगानुभवान्ते मोक्षदा भौतिकी, साक्षा-न्मोक्षप्रापिका नैष्ठिकी। द्विविधैषा दीक्षा प्रत्येकं पुनर्द्विधा; सापेक्षा भौतिकी निरपेक्षा भौतिकी, सापेक्षा नैष्ठिकी निरपेक्षा नैष्ठिकी इति। यस्यां दीक्षायां दीक्षितस्य समयाचाराद्यनुवर्तनमपेक्ष्यते सा सापेक्षा, यत्र तादृशाचारानुवर्तनं नापेक्ष्यते सा निरपेक्षा। बालवृद्धस्त्रीव्याधितादीनां समया-चारानुवर्तनस्य दुष्करत्वात्तेषां निरपेक्षा दीक्षा सैव निर्बीजिका दीक्षेत्युच्यते।

तत्र पुनः सापेक्षा या दीक्षा सा लोकधर्मिणी शिवधर्मिणी इति द्विधा। साधकस्य देहान्ते निरतिशयाणिमादिसिद्धिदा लोकधर्मिणी। शिवधर्मानुष्ठानतत्परः शिवसमसर्वज्ञतादिविभवशाली यथा दीक्षया भवति सा शिवधर्मिणी।

निरपेक्षा दीक्षापि द्विविधा सद्योनिर्वाणदा असद्योनिर्वाणदा इति। प्रकृष्टे मलपरिपाके सति सद्यो मोक्षदायिका दीक्षा सद्योनिर्वाणदा। देहान्ते मोक्षदायिका दीक्षा असद्योनिर्वाणदा।

सोमशम्भुपद्धति-अघोरशिवपद्धति-सिद्धान्तशेखर-सकलागमसारसंग्रह-वारुणपद्धति-क्रियादीपिकादीक्षा-दर्शादिपद्धतिषु सामान्यतः समय-विशेष-निर्वाणाख्यास्तिस्रो दीक्षा व्याख्यायन्ते। तत्र निर्वाण-दीक्षायां निराधारा साधारा इति प्रथमतो द्विधा दीक्षा। साक्षाच्छिवेन विज्ञानप्रलयाकलानां या दीक्षा दीयते सा निराधारा। आचार्यद्वारा शिवेन या दीक्षा दीयते सा साधारा।

तत्र साधारा चतुर्विधा सबीजा निर्बीजा साधिकारा निरधिकारा चेति। तत्र सबीजा समया-चाराद्यनुवर्तनापेक्षा, निर्बीजा तदनपेक्षा। साधिकारा आचार्यस्य साधकस्य च परार्थप्रतिष्ठा-दीक्षादिकार्येष्वधिकारदायिनी। निरधिकारा समयिपुत्रकयोः स्वार्थक्रियाकलापेष्वधिकारदायिनी, न परार्थेषु।

तत्र सबीजा शिवधर्मिणी लोकधर्मिणी इति द्विधा। शिवधर्मिणी भौतिकी नैष्ठिकी इति द्विधा। निर्बीजा सद्योनिर्वाणदा चिरान्निर्वाणदा (असद्योनिर्वाणदा) इति द्विधा।

साधिकारा निरधिकारा च दीक्षा प्रत्येकं क्रियावती ज्ञानवती इति द्विधा। तत्र कुण्डमण्डल-पूर्वकं क्रियाकलापेन क्रियमाणा दीक्षा क्रियावती। तद्विना मानसादिव्यापारेण क्रियमाणा ज्ञान-वती। सिद्धान्तशेखरे पुनर्ज्ञानवती दीक्षाप्यनेकविधा चाक्षुषी, मानसी, स्पार्शिकी, मन्त्रदीक्षा, वाचिकी, यौगिकी इति।

यत्र गुरुः चक्षुरुन्मील्य तत्त्वं ध्यात्वा शिष्यं पाशबन्धविमोक्षाय समीक्षते सा चाक्षुषी दीक्षा।

यत्र गुरुः शिवहस्तं कृत्वा शिष्यशिरसि निदध्यात् सा स्पर्शदीक्षा।

यत्र गुरुः तत्त्वे चित्तं समाधाय मन्त्रानुच्चार्य शिष्यं दीक्षयेत् सा मन्त्रदीक्षा।

यत्र गुरुर्वचसा मन्त्रानुच्चार्य शिष्यायोपदिशति सा वाचिकी दीक्षा।

यत्र गुरुः शैवागमशास्त्रोपदेशं करोति सा शास्त्रदीक्षा।

योगमार्गेण तत्त्वद्योतनपूर्वकं दीयमाना दीक्षा योगदीक्षा।

सिद्धान्तशेखरे (पृ० १४६–१४७) एता दीक्षाः सुष्ठु प्रतिपादिताः।

मतङ्गपारमेश्वरे सप्तमे पटले प्रथमतः समयदीक्षाभिहिता। ततो भुवनदीक्षा प्रतिपाद्यते। अत्र प्रतिभुवनं संयोजनं संजननं भोगभोजनं पाशच्छेदः उद्धार इति पञ्चकर्माणि निरूपितानि। सर्वमेतत्कर्म संक्षेपेणैव न्यरूपि। ततोऽष्टमे पटले षट्त्रिंशत्तत्त्वेषु संयोजनाद्युद्धारान्तकर्माणि कर्तव्यानीत्युक्तम्। योगनिष्ठानां योगाभ्यासमार्गेण सर्वाण्येतानि कर्माण्याचार्येण कर्तव्यानीति प्रतिपाद्यते। नवमे पटले नवनाभमण्डलं प्रकल्प्य तत्र नवसु पदेषु व्योमव्यापिमन्त्रपदानां न्यासप्रकारो वर्णितः। तत्र शिव एव पूज्यो नान्ये विद्येश्वरादय इति चोक्तम्। नवसु पदेषु शिवतत्त्व-सदाशिवतत्त्व-ईशतत्त्व-विद्यातत्त्वानि, ततो माया-काल-नियति-पुरुष-प्रकृतितत्त्वानि च न्यसनीयानीत्युच्यते। नवसु पीठेषु संयोजनाद्युद्धारान्तकर्मणां निर्वर्तनप्रकारो वर्ण्यते। अत्र वृत्तौ शिवेनैवेयं प्रधानकर्मभूता पददीक्षा, तत्त्वदीक्षा तु ब्रह्मशिवैः, भुवनदीक्षा तु अङ्गब्रह्मशिवैरिति त्रिप्रकार एवात्र दीक्षाविधिरित्युच्यते।

एतावता आगमेषु द्विविधा दीक्षा निरूपिता। प्रथमं सामान्यसंस्कारेण शैवसमयी भूत्वा शिवपूजाशिवशास्त्रश्रवणादिष्वधिकारं प्राप्नोति। तदनन्तरं यदीच्छा तदा विशेषभोगमोक्षप्रापिका या दीक्षा तत्रार्हो भवति। इयमेव समयदीक्षेति सामान्यतोऽद्य व्यवहारः। तदनन्तरं क्रियमाणा या दीक्षा तस्या विविधानि नामानि, विविधाः प्रकाराश्च विस्तरतो ग्रन्थेषु निरूप्यन्ते। तथापि तादृशदीक्षाभिरभीप्सितान् भोगान् भुक्त्वान्ते मोक्षं प्राप्नुवन्ति, भोगानुभवं विनापि मोक्षं प्राप्नुवन्ति। इयं मोक्षदा दीक्षा विविधापि यस्मान्मोक्षदा तस्मान्निर्वाणदीक्षेत्यद्य व्यवह्रियत इति संप्रदायार्थः।

## साधकः

मतङ्गपारमेश्वरेऽस्मिन्नुपागमे क्रियापादे दीक्षाविधिनिरूपणानन्तरमाचार्याभिषेकः साधकाभिषेकश्च निरूपितः। तदनन्तरमेकादशपटलादारभ्य पञ्चदशपटलान्तं पञ्चसु पटलेषु साधकसंबन्धिविषयाः प्रतिपाद्यन्ते। चर्यापादेऽपि सप्तमाष्टमनवमपटलेषु साधकचर्याव्रतविषयो निरूप्यन्ते। एकादशे पटले मन्त्रसिद्धेरुपायाः, द्वादशे सिद्धैर्मन्त्रैर्लोकोपकाराय कर्मसंतानविषयश्च प्रतिपाद्यन्ते। त्रयोदशे पटले साधकैः सिद्धिनिमित्तं पूजार्थं परिग्राह्याणां लिङ्गानां लक्षणं स्थापनप्रकारश्च, तथा चतुर्दशे पटले परिग्राह्याणां प्रतिमानां च लक्षणं स्थापनप्रकारादयश्च निरूप्यन्ते। पञ्चदशे पटलेऽसिद्धमन्त्राणां सिद्धीकरणोपायाः, तैः क्रियमाणानि कर्माणि सिद्धिप्राप्त्युपायाश्च प्रोच्यन्ते।

आगमान्तरेषु स्वच्छन्दतन्त्रे (४.४८१–४८३) नेत्रतन्त्रे (५, ३) किरणागमे (चर्या० १९, २० पटलयोः) स्वायम्भुवे (२८ पटले) मृगेन्द्रे (क्रिया० ४ पटले) ईशानशिवगुरुदेवपद्धतौ (भागः ३. १००, १८७–१९१ पृष्ठेषु) सोमशम्भुपद्धतौ (भागः ३. पृ० ५०१–५१३) अघोरशिवाचार्यपद्धतौ (पृ० ३८१–३८२) सिद्धान्तशेखरे (पृ० २५७–२५९) दीक्षादर्शे (टि० ७६. पृ० ३४९–३८५) इत्यादिषु संग्रहेण साधकसंबन्धिविषयप्रतिपादनं दृश्यत इत्युदाहरणार्थमुच्यते। परं मतङ्गपारमेश्वरे क्रियापादे ११–१५ पटलेषु, तथा चर्यापादे ७–९ पटलेषु च विस्तरतः साधकसंबन्धिविषयाः प्रतिपाद्यन्ते। सार्धत्रिशत्यामपि ९–२७ पटलेषु निर्दिष्टा विषयाः साधकसंबन्धिन एव। मतङ्गेऽस्त्यन्यः कश्चन विशेषः। अत्र त्रयोदशचतुर्दशपटलयोः प्रतिपाद्यमानानि लिङ्गलक्षणप्रतिमालक्षणादीनि साधकसंबन्धीन्येव। आगमान्तरेषु सर्वत्र परार्थपूजार्थमेव लिङ्गलक्षणप्रतिमालक्षणा-

दिकं निरूप्यते। मतङ्गे साधकस्य त्वात्मार्थपूजार्थं समुचितानां लिङ्गानां प्रतिमानां च लक्षणं निरूप्यत इत्ययं विशेषः। यद्यप्यत्रागमे तथा सार्धत्रिशतौ च षट्कर्मोपयोगिमन्त्रसाधनप्रकारो निरूपितः, स न स्वार्थप्रयोगाय, अपि तु परोपकारायेतीयं शैवागमप्रक्रिया मनसि विधेया।

यद्यप्ययं साधकशब्दो मन्त्रसिद्धिसाधनाद्यर्थं विशेषतो लिङ्गप्रतिमादिकमवलम्ब्य नैष्ठिकवद् यतिवच्च यो वर्तते, तादृशस्य तपस्विनो विषये आगमेषु प्रयुक्तः। साधकस्तपस्वी गुरुणापि पूज्य इत्यागमप्रक्रिया।

आचार्याभिषेकं प्राप्तस्य साधकाभिषेकं प्राप्तस्य च व्रतचर्याज्ञानादीनां समानत्वाद् आचार्यकृत्येषु साधकस्यापि सामर्थ्ययोग्यतादिकमस्तीति कृत्वा कालक्रमेण गुरोरनुमत्या साधकोऽपि परार्थकृत्यादिकं कर्तुं नियोगार्होऽभवत्। एतदेव उत्तरकामिके २४.७०–७५ श्लोकेषु प्रोच्यते। आचार्यस्य सहायकः साधक इति कृत्वा, अद्यत्वे साधका व्यवह्रियन्ते। वस्तुतोऽद्यत्वे ये केचन शैवव्रतिनो यतिनो वा शास्त्रीयसाधका इति साधकपरम्पराद्याप्यस्तीत्यधिगन्तव्योऽयं विषयः। तथैव प्रथमपटलान्ते दीक्षाङ्गलक्षणनिरूपणावसरे 'दीक्ष्याश्च साधकास्तन्त्रे ये शिवार्पितचेतसः' इति मूले, वृत्तौ च साधकशब्दो दीक्षार्हे शिष्ये उपयुक्त इत्ययं विषयोऽवधानार्हः।

## योगाङ्गानि

'यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि' इति पातञ्जलयोगसूत्रम् (२.२९)

'यमनियमासनं च प्राणायामं ततः परम्।
प्रत्याहारं च ध्यानं च धारणा च समाधिकम्॥
अष्टाङ्गमिति विज्ञेयं योगिनां योगसाधनम्।'

इति सुप्रभेदे योगपादे तृतीये पटले ५४, ५५ श्लोकयोः पातञ्जलयोगसूत्रानुसारेणैवाष्टावङ्गानि प्रोक्तानि। परं ध्यानात्परं धारणा प्रोक्ता।

'प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणम्।
आसनं च समाधिश्च योगाङ्गानि षडेव तु॥'

इति किरणागमे योगपादे तृतीयश्लोके षडेवाङ्गानि प्रोक्तानि। परं लक्षणकथनावसरे प्रत्याहारात्पूर्वमासनलक्षणमुक्तम्।

'प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते॥'

इति रौरवागमे विद्यापादे सप्तमे पटले पञ्चमे श्लोके षडेवाङ्गानि प्रोक्तानि। परमत्राग्नेयी सौम्या ऐशानी अमृता इति धारणाचतुष्टयस्य लक्षणं मन्त्राश्च निर्दिष्टाः। योगान्तर-अङ्गान्तर-विषयविवेचना न दृश्यते।

'प्राणायामः प्रत्याहारो धारणा ध्यानवीक्षणे।
जपः समाधिरित्यङ्गान्यङ्गी योगोऽष्टमः स्वयम्॥'

इति मृगेन्द्रे योगपादे तृतीयश्लोके सप्ताङ्गान्युक्तानि। वीक्षणं तर्कः ऊहः इति पर्यायनामानि।

'प्रत्याहारस्तथा ध्यानं प्राणायामश्च धारणा।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते॥'

इति मतङ्गे योगपादे (१.६).

एवं च पातञ्जलयोगसूत्रे सुप्रभेदे च अष्टाङ्गानि यद्यपि समानानि, तथापि योगसूत्रे धारणाया

उपरि ध्यानमित्यङ्गं, सुप्रभेदे ध्यानादुपरि धारणा इत्यङ्गमिति तु विशेषः।

किरणे, रौरवे, मतङ्गे च षडेव अङ्गानि। परं रौरवे मतङ्गे चोक्तस्य तर्क इत्याख्यस्याङ्गस्य स्थाने किरणे आसनमित्यङ्गमस्ति। किरणे अङ्गनिर्देशकश्लोके अङ्गानां क्रमो न विवक्षित इत्युपरि लक्षणनिर्देशक्रमाज्ज्ञायते। तत्र आसनस्य लक्षणं प्रथमं निरूप्य तदनन्तरं प्रत्याहारस्य प्राणायामस्य धारणायाः समाधेश्च लक्षणानि निरूपितानि। ध्यानाख्याङ्गस्य लक्षणं नास्ति।

मृगेन्द्रे समाधेः पूर्वं 'जपः' इत्यङ्गमेकमधिकं निर्दिश्य सप्ताङ्गानि निरूपितानि। परमङ्गानां लक्षणनिर्देशक्रमे प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधीनां क्रमशो लक्षणमुक्त्वा तदनन्तरं जपस्य मानसस्योपांशुरूपस्य ध्येयसंमुखीकरणाय क्रियमाणस्य लक्षणं तदनन्तरं वीक्षणापरनामकस्य ऊहस्य तर्कस्य वा लक्षणं निर्दिश्यते।

मृगेन्द्रे प्राणादिवायोः संयमनात् (प्राणायामाभ्यासाद्) इन्द्रियदोषाः शाम्यन्ति। प्राणायामाभ्यासादनन्तरम् इन्द्रियाणामिन्द्रियार्थेभ्यः प्रत्याहारः कार्यः। प्रत्याहारेण चित्तस्येन्द्रियार्थसंयोगात् प्रत्याहृतत्वात्स्वेच्छाप्रकल्पिते पदे मतिरभ्येति। तादृशसंकल्पाख्यश्चेतसो व्यापारः, तस्यैव धारणा कार्या। यथोक्तक्रमात्पृथिव्यादिशिवान्ततत्त्वं प्रतिपद्यते धारणादिना स्वात्मीकरोति। तत्र तर्केण हेयान् पदार्थान् संत्यज्य शिवतत्त्वमभ्यसेत्। धारणारुद्धस्य चित्तस्य त्रिणेत्रपञ्चवक्त्राद्याकारविषया चिन्ता ध्यानम्। तद्ध्यानं ध्येयैकनिर्भासत्वं यदाभ्येति तदा समाधिः।

अत्र योगाङ्गानां परिगणने क्रमनिरूपणे च पातञ्जलयोगशास्त्रमतङ्गशास्त्रयोरस्ति भेदः। तत्र शास्त्ररीत्या समन्वयः साध्यते।

यम-नियम-आसनानां प्राणायामेऽङ्गभूतत्वात्तेषां योगाङ्गत्वेन न परिगणनं मतङ्गे इति भाति।

तत्र प्राणायामप्रत्याहारौ बहिरङ्गसाधनभूतौ। धारणा-ध्यान-समाधयोऽन्तरङ्गसाधनभूताः। तत्र योगसूत्रमते प्राणायामाभ्यासं कृत्वा, विषयेभ्य इन्द्रियाणां प्रत्याहारं साधयित्वा, ततो धारणा साध्या। चित्तस्य ज्ञानमात्रेण नाभ्यादिदेशेषु संबन्धो धारणा। तादृशदेशे ध्येयालम्बनस्य प्रत्ययस्य सदृशः प्रवाहो ध्यानम्। यदा ध्यातुर्ध्येयस्वभावावेशस्तदा समाधिः इति योगशास्त्रप्रक्रिया। एवमत्र धारणाध्यानसमाधीनां कार्यकारणभावः प्रतिपाद्यते।

मतङ्गपारमेश्वरे तु प्रत्याहारस्य प्रथमतो निर्देशः। 'विषयेषु प्रवृत्तस्य मनसः प्रत्याहृत्य निरोधः' इति तस्य लक्षणमुक्तम्। ततो ध्यानम्। 'ध्यानं नाम लक्ष्यं प्रत्यचला प्रीतिः। बलवता निवारितोऽपि लक्ष्यान्मनसो यथा निवृत्तिर्न भवति तथा लक्ष्यैकचित्तता ध्यानम्' इति ध्यानलक्षणमुक्तम्।

एवं 'लक्ष्ये चैतन्येन सहाभेदेन स्थितस्य प्राणवायोर्गतेर्निरोधः प्राणायामः' इति ध्यानानन्तरं प्राणायामस्य लक्षणमुक्तम्। आसनमत्र प्राणायामाभ्यासे गात्रस्य निष्कम्पतासाधने च सहायकमिति तस्य प्राणायामाङ्गत्वं प्रतिपाद्यते।

एवं ध्यानानन्तरं प्राणायामाभ्यासपूर्वकं प्राणवायोर्गतिनिरोधं कृत्वा नाभ्यादिषु चित्तस्य धारणा कर्तव्या। तत्र हेयोपादेयचिन्तनरूपेण तर्केण पृथिव्यादिशिवान्ततत्त्वेषु पूर्वपूर्वतत्त्वं त्यक्त्वा, उत्तरोत्तरतत्त्वेन सहैक्यं कृत्वा, अन्ततः शिवतत्त्वमभ्येति। तत्र शिवे लीनचित्तता समाधिरित्युच्यते।

एवं प्रत्याहारेण विषयेभ्यः प्रत्याहृतस्य मनसो लक्ष्ये स्थिरीकरणम्। अन्यैः प्रतिहतेऽपि बलवता निवारितोऽपि लक्ष्ये एवात्यन्तप्रीत्यावस्थानं ध्यानम्। तादृशध्यानानन्तरं प्राणायामाभ्यासेन प्राणवायोर्गतिनिरोधं कृत्वा आधारादिदेशेषु चित्तस्य धारणा। एवं धारणानन्तरं हेयोपादेयविवेचनरूपेण तर्केण पृथिव्यादितत्त्वानां जयं कृत्वा, अन्ते शिवतत्त्वे चित्तस्य लयेनावस्थितिः समाधिरिति योगाङ्गानां क्रमनिरूपणे मतङ्गाशय इति भाति।

एवमेव योगपादे प्रतिपादितेष्वासनादिविषयेष्वप्यस्त्यागमान्तरेभ्यो व्यत्यासः।

**मतङ्गपारमेश्वरे** (योग० २.१२–१४ श्लोकेषु) पर्यङ्कम्, कमलम्, भद्रम्, स्वस्तिकम् इति चत्वार्यासनानि दृश्यन्ते।

**सुप्रभेदे** (योग० ३.५७ उ०, ५८ पू०श्लोके) 'गोमुखं, स्वस्तिकं, पद्मम्, अर्धचन्द्रकं, वीरं, योगासनम्', इति षडासनानि प्रोच्यन्ते।

**किरणे** (योग० १.४ उ०, ५श्लोकयोः) 'स्वस्तिकं, पद्मम्, अर्धचन्द्रं, वीरं योगपट्टं, प्रसारितं, पर्यङ्कं, यथासंस्थम्,' इत्यष्टासनानि प्रोक्तानि।

**मतङ्गपारमेश्वरे** (योग०२. ३७, ३८ श्लोकयोः) 'आग्नेयी, वारुणी, ईशानी, अमृता' इति चतस्रो धारणाः प्रोक्ताः।

**रौरवे** (विद्या० ७.६–१० श्लोकेषु,) तथा **स्वायम्भुवे** (३६.३–१७ श्लोकेषु) च 'आग्नेयी, सौम्या, ऐशानी, अमृता' इति चतस्रो धारणाः प्रतिपादिताः।

**किरणे** (योग० १.१८–२५ श्लोकेषु) 'आग्नेयी, सौम्या, अमृता, परा' इति चतस्रो धारणाः प्रोक्ताः।

**मृगेन्द्रे** (योग० ३५उ०–४३ श्लोकेषु) पृथिव्यादिव्योमान्तपञ्चतत्त्वाश्रितत्वेन पञ्चविधा धारणाः प्रतिपादिताः।

**मतङ्गपारमेश्वरे** (योग० २.२२ उ०–२९ श्लोकेषु) विशिष्य करणलक्षणं नामनिर्देशपुरःसरं प्रोक्तम्।

**मतङ्गपारमेश्वरे** योगपादे तत्त्वसाधन-शिवतत्त्वोपलब्धि-कर्मयोगाख्येषु चतुर्थपञ्चमषष्ठपटलेषु प्रतिपाद्यमाना विषया उपलब्धेषु योगपादयुक्तेषु किरण-सुप्रभेद-मृगेन्द्र-सर्वज्ञानोत्तर-स्वायम्भुवेषु न दृश्यन्ते। तत्त्वसाधनप्रकरणे प्रतिपाद्यमानस्तत्त्वजयप्रकारो मृगेन्द्रे परं सूचितः।

**मतङ्गपारमेश्वरे** चर्यापादे चतुर्थपटले व्याख्यानविषये प्रतिपाद्यमानास्त्रयोदशविधशिष्यलक्षण-पञ्चविधचोद्यमार्गाः, तथाष्टमनवमपटलयोः प्रतिपाद्यमाने प्रवासन-रुद्रव्रते चोपलभ्यमानेषु चर्यापादसहितेषु किरण-सुप्रभेद–मृगेन्द्र–सर्वज्ञानोत्तरेषु नोपलभ्यन्ते।

एवं मतङ्गपारमेश्वरे योगपादचर्यापादयोरन्येष्वागमेष्वनुपलभ्यमाना विषया बहवः सन्तीत्ययं भेदो विशिष्यावगन्तव्यो भवति।

## कर्मयोगः

अत्र योगपादे षष्ठपटले कर्मयोग इति शीर्षको दत्तोऽस्ति। 'कर्मयोगः' इत्ययं शब्दो ज्ञानयोगः, भक्तियोगः, कर्मयोग इति प्रसिद्धविभागेषु भगवद्गीतादिषु नित्यानुष्ठानादिविहितकर्माचरणपूर्वकं भगवत्सेवैवेत्यर्थे प्रसिद्धः।

परमत्र मतङ्गे योगाभ्यासिनां साधकानां योगमहिम्ना प्राणादिजयपूर्वकं मन्त्रसिद्धिमहिम्ना विविधभोगानुभव एव कर्मयोग इत्युच्यते। तस्य पुण्यकर्मपरिपाकवशान्मलयुक्तत्वात्तादृशभोगानुभवः, तदनुभवानन्तरं क्षीणे कर्मणि तस्य मोक्ष इत्यत्र सिद्धान्तः।

## व्याख्याप्रक्रिया

क्रियापादे पञ्चमे पटले ९३ तमे श्लोके 'ततः शिष्यान् प्रवेशयेत्। यथोपसन्नं क्रमशः प्रागेव सुपरीक्षितान्' इत्यत्र मूले स्वरसतः 'प्रागेव सुपरीक्षितान् शिष्यान् यथोपसन्नं क्रमशः प्रवेशयेत्' इति यः शिष्यः प्रथमं गुरुमुपसन्नः, स प्रथमं प्रवेशनीयः, अनन्तरं द्वितीय इति क्रमशः, न तु समुदायेन

तान् प्रवेशयेदिति साधु प्रतिपाद्यते। परमत्र व्याख्यानकाले भट्टरामकण्ठः 'ये ये उपसन्नाः, तान् ब्राह्मणादिक्रमेण प्रवेशयेत्' इति व्याख्याय 'यथोपसन्नं' इत्यस्य 'यथोपसन्नान्' इति बहुवचनान्तपाठान्तरखण्डनव्याजेन स्वरसतो यो मूलार्थः, तं खण्डयति।

अत्र 'निरपेक्षो विधिर्यस्मात् तस्माद्भक्तिर्गरीयसी' (९४ पू) इति श्लोकार्धानुरोधेन शैवदीक्षा न जात्यपेक्षा, अपि तु शिष्यभक्तिनिमित्तशक्तिपाताघ्रातव्यक्तिविषयेति पुनरपि स्पष्टतयोच्यते। 'नात्र पिण्डस्य संस्कारो न जातेर्न च कर्मणः' (९४ उ०) इत्यनेन दीक्षाया आत्मसंस्कारकत्वान्नात्र जननप्रयुक्तब्राह्मणादिजातिप्रयुक्तवैशिष्टयमित्यादि स्पष्टमुच्यते। एवमेव ईशानशिवगुरुदेवपद्धतौ उत्तरार्धे षोडशपटले (पृ० १४७) —

'शूद्रस्यापि शूद्रत्वपशुभावव्यावर्तनाच्छिवत्वलक्षणद्वितीयजन्म जात्युद्धारेण भवतीत्यतो दीक्षितः शूद्रो न भवति, किं तु शिवसंस्कारजातस्य शिवत्वसंभवात् पूर्वजन्मव्यपगमाच्च वेदमन्त्रव्यतिरिक्तशैवमन्त्रतन्त्रश्रवणपूजासु योग्यता भवति।

ननु शिवसंस्कारजात्युद्धाराच्छूद्रस्य द्विजत्वमस्ति चेत् किमिति वेदमन्त्रानधिकारित्वमिति चोद्ये ब्राह्मण्यां ब्राह्मणाज्जातस्यापि वैदिकमन्त्रैरुपनयनेन संस्कृतस्य वैदिकद्विजस्यैव वेदेऽधिकारः, कारणानुगुणकार्यत्वात्, तद्वच्छैवमन्त्रसंस्कृतस्य तदनुगुणद्विजत्वसिद्धौ तन्मन्त्रपूजादावेवाधिकार इत्युपपन्नम्' इति दृश्यते।

इदमत्र तत्त्वम्। शिवभक्तस्य शैवसंस्कारदीक्षया द्विजत्वं सर्वशैवक्रियासु चाधिकारः। शैवशास्त्रश्रवणपाठनयोरधिकारश्च। नात्र वैदिकसंस्कारप्रयुक्तजात्यादिनोत्कर्षापकर्षत्वम्। तत्र वैदिकक्रियास्वधिकारः, तादृशवैदिकमन्त्राधिकारिता च वैदिकसंस्कारसंस्कृतस्यैव न शैवदीक्षामात्रसंस्कृतस्य। उभयसंस्कारसंस्कृतस्योभयत्राधिकारः। आगमेषु परं तत्र तत्र शैवाचार्यस्य शैववैदिककार्येषूभयत्राधिकारिता यद्यप्युद्घोष्यते, स अर्थवादरूपतया नेयः।

एवं वस्तुस्थितौ किमर्थं श्रीमान् भट्टरामकण्ठः 'ये ये उपसन्नाः, तान् ब्राह्मणादिजातिक्रमेण प्रवेशयेत्' इति व्याख्यानं करोतीत्ययं विषयस्तत्कालावस्थितवैदिकमतप्राबल्यवासनाभूयिष्ठमनसा निर्धारित इति वक्तव्यं भवति। 'जातिनिर्णयपूर्वकालयप्रवेशविधिः' इत्याख्येऽपि ग्रन्थेऽनेनैतादृशवैदिकमतप्राबल्यवासनया तत्कालावस्थितदेशाचारादिनिरीक्षणेन च ग्रन्थो लिखितः, न केवलं शैवशास्त्रतत्त्वानुसारेणेति वक्तव्यं भवति।

एवमेव क्रियापादे पञ्चमे पटले १०२-१०३ श्लोकयोः —

'शिष्याश्चोपोषिताः स्नाताः शुचयो विनयान्विताः।
शिरःसु शिवहस्तेन शिरसा शिववारिणा॥
प्रोक्षयित्वा शिवास्त्रेण ताडयेद्भस्मना शनैः।
प्रवेश्योपरि दर्भाणां निवेश्यालम्भनं कुशैः॥

इत्यत्र मूले स्वरसतः शिष्याः उपोषिताः स्नाताः शुचयः विनयान्विताः, शिववारिणा (अर्घ्यजलेन) शिरसा (शिरोमन्त्रेण) शिरःसु शिवहस्तेन प्रोक्षयित्वा शिवास्त्रेण भस्मना शनैः ताडयित्वा प्रवेश्य दर्भाणामुपरि निवेश्य कुशैः आलम्भनं (कर्तव्यम्) इत्युच्यते।

अत्र अर्घ्यपात्रजलेन शिरोमन्त्रेण शिवहस्तेन गुरुः शिष्यशिरसि प्रोक्षयेदिति मूलानुमतोऽर्थ इति भाति।

अथापि भट्टरामकण्ठः स्वव्याख्याने 'प्रागुक्ता ये शिष्याः, तान् शिवशिरसा अर्घपात्रपानीयेन च प्रोक्षयित्वा, शिवास्त्रेण भस्मना शनैः न यथैतच्छरीरबाधा भवेदेवमाताड्य, दर्भाणामुपरि उदङ्मुखानुपवेश्य, स्वयं च प्राङ्मुखमुपविश्य, शिवहस्तं कृत्वा तेन शिरःसु विषग्रस्तापामार्जनवत् पाश-

स्तोमार्थं दर्भैः नाभेरूर्ध्वं त्रिधा, तदधश्च तथैव आलम्भनं कृत्वा . . . .' इति शिवहस्तस्य आलम्भनक्रियायामन्वयं करोति न प्रोक्षणे। पूर्वं

'अनेनालब्धमात्रास्तु पशवः पाशगोचरात्।
निष्क्रान्ताः शिवतां यान्ति स्वच्छन्दा विगतज्वराः।
भवन्ति मन्त्रसामर्थ्यात्तन्त्रेऽस्मिन्मुनिसत्तम।' (५.१९ उ०–२०)

इत्यत्र शिवहस्तेन आलम्भनाख्यं कर्म करणीयमित्युक्तत्वात् तादृशालम्भनाख्यक्रियायामेव तस्योपयोगो नान्यत्रेत्याशयेनात्र वृत्तिकारः शिवहस्तेनार्घ्योदकप्रोक्षणं कार्यमिति मूलस्य स्वरसार्थमुल्लङ्घ्योत्तरत्रालम्भनकार्ये शिवहस्तस्य विनियोगं निरूपयतीति भाति। अन्यासु पद्धतिषु शिवहस्तस्य प्रोक्षणादिकार्येऽन्वयो न प्रतिपादित इत्यन्यमतविरोधं परिहर्तुं तथा सामरस्यं कामयमानेनैतादृशी व्याख्या तत्र तत्र क्रियत इति वक्तव्यं भवति। अतः सर्वत्र मूलानुसार्येव व्याख्यानमिति न वक्तुं शक्यते। क्वचिच्छास्त्रान्तरानुरोधेन क्वचित्स्वकालीनपद्धत्यनुसारेण च शास्त्रसमन्वयं कामयमानेनानेन व्याख्यानं कृतमिति भाति।

## क्रियापादपटलार्थसंग्रहः

क्रियापादे पञ्चदशपटलाः सन्ति। तत्र **प्रथमे पटले** दीक्षाविधिः साङ्गं प्रतिपाद्यत इति प्रतिज्ञाय दीक्षाङ्गानां मुद्रादीनां षण्णां लक्षणविनियोगाः प्रतिपाद्यन्ते। अत्र पादादौ वृत्तिकृता, परमेश्वरनमस्कृतिपूर्वकं तर्ककविदाऽन्येन व्याख्यात्रा विद्यापादमात्रं सविचारं विचार्य, क्रियादिपादत्रयमव्याख्यातम्। विद्यापादस्थवाक्यानां क्रियादिपादत्रयवाक्यानां च परस्परं सापेक्षत्वाद् वाक्यार्थानुगुण्येन मया क्रियादिपादत्रयं व्याख्यायत इति स्वयं वृत्तिकरणे हेतुप्रदर्शनम्। विद्यापादे पतिशक्तित्रिपर्वपशुभोगपदार्थाः पञ्च निरूपिताः। अवशिष्टेन पादत्रयेणोपायपदार्थो वर्ण्यत इति पटलारम्भे वक्तव्येषु पञ्चविधसंबन्धेषु पदार्थसंबन्धो वर्णितः। ततोऽवशिष्टस्य सौत्रादिसंबन्धस्य प्रतिपादनम्। मोक्षं प्रति ज्ञानादेरुपायान्तरत्वेऽपि दीक्षैव प्रधानोपायः, अन्येषामेतदधीनत्वमेव। अतो दीक्षैव षडङ्गयुक्तावभृथस्नानपर्यन्ता प्रतिपाद्यत इति प्रतिपाद्यविषयसूचनम्। येषां ज्ञानादीनां मोक्षसाधकत्वे सामर्थ्यं नास्तीति निश्चयस्तेषामेव सुखोपायत्वेन दीक्षा प्रोच्यत इति कथनम्। अत्र 'अत्यन्तमज्ञानां बालादीनामेव दीक्षाख्यं विधानम्' इति व्याख्यानस्य खण्डनम्। प्रसङ्गाद्बालशब्देन ज्ञानशक्तियुक्त एव बोध्यते, नात्यन्ताज्ञ इति **किरणवृत्तौ** प्रदर्शितमिति सूचनम्।

मुद्रादीनि षडङ्गानि प्रथमं वर्ण्यन्ते। पश्चादङ्गिनी दीक्षा, तेषामनुष्ठानक्रमश्च प्रोच्यत इति क्रमनिरूपणम्। एतानि चाङ्गानि क्रमेण निःसंदिग्धतया वक्ष्यन्ते, प्रार्थनाभ्युपगमवाक्येऽसंदिग्धार्थस्य शास्त्रस्य वक्तव्यतया प्रतिज्ञातत्वादिति वृत्तिकृता सूच्यते। एतानि चाङ्गानि गुरुणावश्यं वेदितव्यानि, अङ्गवैकल्याद्गुरोः प्रत्यवायश्रुतेरिति वृत्तौ सप्रमाणं निरूपणम्। अत्राङ्गवर्णनविषयेऽतिव्याप्त्यव्याप्तिदोषपरिहारवर्णनं च। षण्णामङ्गानां मध्ये प्रथमं शक्ति-बीज-प्रशान्त-आवाहन-संहाराख्यानां पञ्चानां मुद्राणां लक्षणकथनं, तद्विनियोज्यकार्यप्रदर्शनं च। एवं मुद्रात्मकदीक्षाङ्गस्य वर्णनम्।

ततः शङ्कुस्थापनपुरःसरं चतुरश्रयागमण्डपनिर्माणविधिः। तत्र कल्पनीयस्य द्वितीयस्य मण्डलात्मकस्य दीक्षाङ्गस्य प्रतिपादनम्। प्रथमं महामण्डलविधानप्रकारनिरूपणम्। अष्टादशहस्तत्वेन सिद्धे महामण्डले मध्ये परमेश्वरपूजार्थं द्विहस्तप्रमाणं कमलं, बहिश्चतुरश्रसितरक्तकृष्णरेखात्रयं कृत्वा, ततो मध्याम्बुजप्रमाणानि कमलान्यष्टौ दिक्ष्वष्टासु विद्येश्वराणां कल्पयेत्। तानि च मध्यकमलसंसक्ता-

न्येव भवेयुः। ततो गर्भमानसमं रेखात्रययुक्तं चतुरश्रं तेभ्यो बहिः कार्यम्। तस्माच्चतुरश्र-कात्परं हस्तद्वयं त्यक्त्वा लोकपालावरणं स्वस्तिकैः कुर्यात्। शिष्टेन भागान्तरेण वीथ्यन्तरमेव कृत्वा, बहिर्मण्डलद्वाराणि चत्वारि पद्मसमानि कार्याणि। द्वाराणि स्वस्तिकलग्नानि न कार्याणि। एवं च द्वारैः सहितमेतन्मण्डलं द्वाविंशतिहस्तमेव भवति। तस्मिंश्च मण्डले मण्डलयागोक्तक्रमेण परमेश्वरं विद्येशादिसहितं संपूज्य, तत्त्वदीक्षा भुवनदीक्षा वा कर्तव्या। एवं महामण्डलकल्पन-प्रकारनिरूपणम्।

ततो नवनाभमण्डललेखनप्रकारवर्णनम्। नवनाभमण्डलमष्टाङ्गुलाधिकैर्नवभिर्हस्तैः कार्यम्। एवं कृते सप्तभागपरिकल्पनया प्रतिभागं द्वात्रिंशदङ्गुलानि सिध्यन्ति। अत्र मध्यपद्मादनन्तरं वीथिः कार्या। ततो भागान्तरेणावरणे अष्टौ पद्मानि कल्पयितव्यानि। अवशिष्टे तु भागे-ऽष्टासु वीथिमुखेष्वष्टौ द्वाराण्यन्तरेव कार्याणि। अस्मिन्नवनाभमण्डले नवतत्त्वपीठदीक्षापदविन्यास-क्रमेण नवमपटले प्रोक्तप्रकारेण एकाशीतिपदानि प्रकल्प्य भगवान्परमेश्वर एव पूज्यः, नान्यो विद्येशादिः। एवं नवनाभमण्डलप्रकारो निरूपितः।

अनन्तरं चण्डेशमण्डलवर्णनम्। एतच्च पञ्चहस्तप्रमाणं वृत्तं पद्मं भवेत्। अत्र चण्डेशः पूज्यः। एवं मण्डलात्मकदीक्षाङ्गवर्णनं ज्ञेयम्।

ततस्तृतीयस्य मन्त्रात्मकस्य दीक्षाङ्गस्य प्रतिपादनम्। एकाशीतिपदोपेतो व्योमव्यापिमन्त्र एव सर्वमन्त्राणां कारणं भवति। अस्मिन्मन्त्रेऽष्टषष्टयधिकशतत्रयं वर्णाः सन्ति। तैरेकाशीतिपदानि साध्यन्ते। तत्र प्रथमतः पञ्चभिः पदैः पञ्चशिवाङ्गमन्त्रा विहिताः। सर्वात्मा, सुशिवः, ज्वा-लिनी, पिङ्गलं शिवास्त्रमिति क्रमेण हृदय-शिरः-शिखा-कवचास्त्राणां पञ्चानां मन्त्राणां नाम निर्दिश्यते। ततः पदाष्टकैरष्टविद्येशमन्त्राः प्रोच्यन्ते। तत एकं गायत्र्यास्तथापरमेकं पदं सावित्र्या वाचकमिति वर्णितम्। अनन्तरमेकं पदं विद्येशोपचारमन्त्रस्ततः पञ्च पदानि पञ्च-ब्रह्मणां मन्त्रास्तत एकं पदं चण्डेशवाचकं, ततः षट् पदानि चण्डेशषडङ्गवाचकानि, पश्चादेकं पदं चण्डेशासनमन्त्र इति प्रोक्तम्। चण्डेशासनमन्त्रः 'अचेतन अचेतन' इत्यकृतसंधिकोऽष्टार्णो वेद्यः। अन्यथा वर्णसंख्याविरोधः स्यादिति वृत्तौ सूच्यते। ततः षट्पदैरनन्तासनमन्त्रा विधीयन्ते। ततो द्वात्रिंशत्पदानि केसरमन्त्रत्वेन निरूपितानि। अनन्तरमेकं कमलस्य वाचकं, पश्चादष्टौ पदानि लोकपालानां वाचकानीति प्रोक्तम्। ततः पदचतुष्टयं विद्याङ्गपञ्चकमन्त्रत्वेन वेद्यं, तत्र शिरः-शिखयोरेकमेव पदमावृत्त्या विज्ञेयम्। अत एव पदसंख्यादोषो न भवतीति वृत्तौ प्रतिपाद्यते। ततोऽन्तिमम् 'ओम्' इति पदं वज्राद्यायुधमन्त्रत्वेनावगन्तव्यमिति पदमन्त्रविभागो न्यरूपि। अत्र प्रतिपदं वर्णसंख्या च प्रतिपादिता। एवमष्टषष्टयधिकशतत्रयवर्णैरेकाशीतिपदसिद्धिप्रकारः, तानि च पदानि केषां मन्त्रा भवन्तीति च स्पष्टं प्रत्यपादि। क्रियोपयोगाय मुख्यानामेव मन्त्राणा-मुद्धारक्रमः संक्षेपेण वर्णित इति सूच्यते। मन्त्राः सर्वेऽपि सर्वार्थसाधका अमोघशक्तयः शिवकायो-द्भवाः, आगमं प्रमाणं बुद्ध्वा मुक्तये सिद्धये च कारणमिति मन्तव्यम्। कुबुद्धिभिस्ते मन्त्रा न मीमांस्या इति मन्त्रप्रभाववर्णनम्। एवं मन्त्रात्मकदीक्षाङ्गप्रतिपादनम्।

अथ क्षेत्रात्मकदीक्षाङ्गप्रतिपादनम्। हिमालयादिगिरिप्रवराः, हिमालयसमीपस्था भूमयः ताश्च वृत्त्यनुसारेण भूतेश्वरादीनि स्वयंभूक्षेत्राणि, गङ्गायमुनासरस्वतीनर्मदाख्यानां चतसृणां नदीनां प्रदेशाः, अन्यासां सरितां संगमस्थानं, मनोरममुद्यानं, पद्मभूयिष्ठं सरश्चात्र क्षेत्रत्वेन परिगणितानि। अत्रो-क्तानां दीक्षाक्षेत्राणां पूर्वं पूर्वमुत्कृष्टमिति हिमवतः सर्वोत्कृष्टतेति वृत्तौ सूच्यते। पूर्वोक्तेषु क्षेत्रेषु विधिवद्भूमिपरीक्षां कृत्वा गुरुमृदां स्निग्धदेशस्थां शङ्खविद्रुमादिशुभलक्षणैर्युक्तां केशादिभिरशुभ-लक्षणैर्हीनां च भूमिं परिगृह्य, तत्र यागमण्डपं निर्माय तस्मिन्यागः कार्य इत्युक्तम्। एवं क्षेत्रात्मकदीक्षाङ्गवर्णनं प्रादर्शि।

ततो द्रव्यात्मकदीक्षाङ्गप्रतिपादनम्। तत्र वह्निकार्यविषये गव्यस्याज्यस्याभावे तिलैर्यवैर्वा समिद्भिर्वा होमः कार्य इति कथनम्। अकुत्सितानि पत्रपुष्पाणि, प्राण्यङ्गवर्जिता धूपाः, सुकृताश्चन्दनादयो गन्धाः, कुङ्कुमागरुप्रमुखानि सुगन्धीनि द्रव्याणि, शोभनानि वासांसि, उज्ज्वलानि चामराणि च यागार्थमाहर्तव्यानीत्युक्तम्। समित्कुशलक्षणप्रतिपादनम्। तत्र गव्याज्याभावे होमसाधकत्वेनोक्तानां समिधामेव प्रादेशप्रमाणत्वं न त्वग्निसमिन्धनार्थानां, तासामष्टादशाङ्गुलत्वेनाधिवासप्रकरणे विहितत्वादिति सूचनम्। एवं द्रव्यात्मकस्य दीक्षाङ्गस्य प्रतिपादनम्।

ततः षष्ठस्य दीक्षाङ्गभूतस्य साधकस्य गुणानां प्रतिपादनम्। दीक्ष्याः साधका गुर्वनुरक्ता गुरुणा सुपरीक्षिताः शुश्रूषाभिरताः शक्तिपातविशिष्टाः श्रद्धाविनयादिसंपन्ना एव अनुग्राह्याः। पूर्वोक्तगुणाभावे दीक्ष्यदीक्षकयोरुभयोरपि दीक्षायां नाधिकार इति प्रतिपादनम्। एवमत्र दीक्षाङ्गषट्को वर्णित इत्युक्तार्थोपसंहारः। स्नानमार्गं शृणुष्वेति वक्ष्यमाणोपक्रमः। इत्थं **प्रथमपटलार्थसंग्रहः** ॥

**द्वितीये पटले** स्नानविधिः प्रतिपाद्यते। दीक्षाक्रमप्राप्तं स्नानं प्रवक्ष्यामीति प्रतिज्ञाकरणम्। दीक्षाशब्दार्थविवरणम्। ततो वृत्तौ दीक्षाप्रकरणे पठितत्वात्स्नानस्य मुद्रामण्डलादिवद्दीक्षाङ्गत्वे प्राप्ते प्रकरणाद्वाक्यं बलीय इति स्नानस्य नित्यादिसर्वकर्माङ्गत्वसमर्थनम्। स्नानस्य दीक्षाप्रकरणे पठितस्य निष्प्रयोजनत्वशङ्कानिरासः।

ततः स्नानाधिकरणानां नदीनदप्रवाहादीनां निर्देशः। परिसंख्याविधित्वादस्य स्नानाधिकरणनिर्देशवाक्यस्य स्नानाधिकरणत्वेन सामान्यतः प्राप्तानामरघट्टादीनां निवृत्तौ तात्पर्यमिति प्रतिपादनम्।

ततो वारुणस्नानविधेः समन्त्रकं प्रतिपादनम्। वारुणस्नाने विधिस्नानात्प्राक् कर्तव्यस्य मलस्नानस्य निरूपणम्। ततो विघ्ननिवारणपुरःसरं शिवतीर्थप्रकल्पनम्। तत्र विधिस्नानकरणप्रकारस्य समन्त्रकं निरूपणम्। ततः संध्यावन्दनदेवर्षिपितृतर्पणकरणप्रकारप्रतिपादनम्। शिवतीर्थोपसंहरणप्रकारनिरूपणम्। तत्र वृत्तौ 'ब्रह्मभिर्वन्दयेत्संध्याम्' इत्यनया समाख्यया प्रतिसंध्यमस्य संध्यावन्दनस्य विनियोग इति सूचनम्। शिवतीर्थोपसंहरणान्तं स्नानकर्मेति प्रतिपाद्यते। ततः स्नानाधिकरणनिर्देशवाक्ये 'गृहे वा स्नायाद्' इत्युक्तस्य गृहाधिकरणस्नानप्रकारस्य वर्णनम्। वारुणस्नाने प्रोक्तवन्मृदा मलस्नानं कृत्वा ततो वस्त्रपूतेन तोयेन पूरितैर्मन्त्रपूतैः शुभैः कलशैः पीठस्थितो यथान्यायं स्नायादिति गृहाधिकरणस्नानप्रकारो निरूप्यते।

अथ द्वितीयस्य भस्मस्नानस्योपक्रमः। सकृद्यथाशक्ति कृतजलस्नानस्यैव भस्मस्नानेऽधिकारः। तत्र वृत्तौ नित्यं हि कर्मावश्यकर्तव्यतया श्रुतत्वाद्यथाशक्त्यङ्गवैकल्येनाप्यनुष्ठेयम्। काम्यं त्ववश्यानुष्ठेयत्वेनाश्रुतत्वात् सर्वाङ्गपरिपूर्णतयानुष्ठेयमिति सूच्यते। प्रतिसंध्यं जलस्नानं रुजो हेतुत्वान्नेष्टम्। तत्र वृत्तौ भस्मस्नानमात्रं त्रिसंध्यं कार्यमिति निश्वासागमवचनस्य प्रमाणतया प्रदर्शनम्। येषां मन्त्रकोशे सप्रणवनमस्कारात्मको विशेषो नास्ति, ते प्रणवनमस्कारयुक्ताः कर्तव्या इति विधिना स्नानमन्त्राः प्रणवनमस्कारयुक्ताः कार्याः, स्नानस्य सामान्यत्वाद्। तत्र वृत्तौ प्रसङ्गान्मन्त्रविषये प्रणवनमस्कारयोजनप्रकारस्य यथावद्विविच्य कथनम्। जन्तुवर्जितेन शुष्कारण्यगोमयेन भस्म कार्यमिति समन्त्रकं भस्मसाधनप्रकारवर्णनम्। तत्र वृत्तौ चर्यापादे भस्मस्नानस्यार्धरात्रेऽवश्यकर्तव्यत्वेन विधिरस्तीति तत्रत्यश्लोकप्रदर्शनपूर्वकं सूचनम्। भस्मस्नाने अङ्गेषु लेशतो भस्मना मर्दयेदिति विधिर्गृहस्थाभिप्रायेण, तथा भस्मना सम्यगुद्धूलनविधिर्यतिविषयः। ततः समन्त्रकमुपस्पर्शनविधिः। स्नानविधिवदुपस्पर्शनविधिरपि नित्यादिसर्वकर्माङ्गमिति प्रतिपादनम्। एवं स्नानद्वयम् प्रोक्तम्।

ततो जलस्नानपूर्वकं भस्मस्नानं कर्तुं येषां शक्त्यभावस्तेषां विषये कर्तव्यस्य तृतीयस्य मन्त्रस्नानस्य विधिप्रदर्शनम्। सद्योजातादिब्रह्ममन्त्राभिमन्त्रितजलबिन्दुभिः शिरःसेचनं कार्यं, ततः

स्नातो भवति, इति मन्त्रस्नानकरणप्रकारः। तत्र वृत्तौ प्रसङ्गाद्ये शिरोरोगभयादपर्वसु अशिरस्कस्नानं कुर्वन्ति, तेऽपि ब्रह्मपञ्चकेन शिरः स्नापयित्वा स्नाता भवन्ति। अयमाचारः सकलदेशप्रसिद्धोऽविरुद्ध इति सूच्यते। मन्त्रस्नानादनन्तरमाचमनभस्मस्नानदेवर्षिपितृतर्पणादिकं सर्वं कार्यमिति 'शेषं स्यात्पूर्ववद्' इत्यस्य वाक्यस्य तात्पर्यकथनम्। एवं तृतीयस्य मन्त्रस्नानस्य वर्णनम्।

ततो दैवान्मानुष्याद्वोपरोधान्मन्त्रस्नानकरणेऽपि यदासामर्थ्यं तदा कर्तव्यस्य चतुर्थस्य मानसस्नानस्य विधिप्रदर्शनम्।

स्नानविषयेऽनुकल्पप्रसङ्गेन दैवान्मानुष्याद्वा प्रतिबन्धात् कुशपुष्पाम्भसामभावे मानसी पूजा कार्येति पूजाविषयेऽप्यनुकल्पविधानप्रतिपादनम्।

ततोऽधिकारिभेदेन नित्यादिसर्वकर्माङ्गत्वेन स्नानं चतुर्विधं प्रतिपादितमित्युक्तार्थोपसंहारः। एवं स्नानवन्नित्यादिसर्वकर्माङ्गत्वेन शिवार्चनं कथ्यत इति वक्ष्यमाणोपक्रमः। एवं **द्वितीयपटलार्थसंग्रहः**॥

**तृतीये पटले**ऽर्चनविधिरुच्यते। अत्र वृत्तौ प्रथमं पटलारम्भे वक्तव्यस्य पञ्चविधसंबन्धस्य प्रतिपादनम्। अर्चनमिदं नित्यादिसर्वकर्माङ्गत्वेन दीक्षितपुरुषार्थतया चर्यापादे वक्तव्यमपि स्नानवद् दीक्षायां कथ्यते। 'सामान्यं यजनं ह्येतत्' इत्युपसंहारे वक्ष्यमाणत्वान्नेदं दीक्षायामेवाङ्गमिति प्रतिपाद्यते।

यथाविभवविस्तरमथवा सुमनोरमं पूजास्थानं कृत्वा, तत्र यथाविधि स्नातः प्रथमशब्देन निरीक्षणं कुर्वन्, सप्रणवं 'सर्वद' इति विद्याङ्गहृदयमन्त्रं ध्यायन् द्वारपूजां निर्वर्त्य शनैः पूजागृहं प्रविशेदिति पूजास्थानप्रवेशप्रकारप्रतिपादनम्।

ततो देहशुद्धिपुरःसरमन्तर्यागविधानप्रकारः। तत्र योगपादे वक्ष्यमाणेष्वासनेषु पर्यङ्कादिषु मध्येऽभ्यस्तमासनं बद्ध्वा, उपविश्य, पञ्चब्रह्ममन्त्रैरुक्तक्रमेण करन्यासः कार्यः। एकाशीतिपदोपेतव्योमव्यापिमन्त्रमुच्चार्य शिवन्यासपूर्वकमुक्तक्रमेण सर्वात्मादिशिवाङ्गन्यासः कार्यः। एवं करन्यासशिवतदङ्गन्यासप्रकारः। अनन्तरं संहारमुद्रया शर्वशर्वपदमुच्चार्य सूक्ष्मशरीरं शुद्ध्यर्थं शिवचन्द्रमसि न्यसेत्। ततो योगपादे वक्ष्यमाणाभिराग्नेयादिभिश्चतसृभिर्धारणाभिर्दहनाप्लावनसूक्ष्मदेहानयनाप्यायनानि कार्याणि। एवं देहशुद्धिप्रकारनिरूपणम्।

ततः प्रणवमुच्चार्य तेन शुद्धेन्दुशरीरेण सूक्ष्मदेहेन हृत्कमलमध्ये देवदेवस्य धर्मादिचरणैर्युक्तमनन्तासनं कल्पयेत्। तत्तन्मन्त्रेण कर्णिकाकेसरान्वितं पद्मं प्रकल्पयेत्। ततो मूर्तिकल्पनं कार्यम्। तत्र प्रणवेन विभोर्न्यासः कार्यः। तत ईशानादिपञ्चब्रह्ममन्त्रैरष्टत्रिंशत्कलान्यासः कर्तव्यः। ईशानादिपदानामेकत्वेन श्रुतेः स्वकलाभेदं विना सकृदुच्चारणेन क्रमेण शिरोवदनादीनां कल्पनं कार्यमित्युच्यते। तत्र वृत्तौ 'शिरश्चैव विभोर्नित्यं सद्योजातेन' इत्यत्र प्रागीशानकल्पितानां पञ्चानामपि शिरसामाधारभूतं शिरः सद्योजातेन कल्पयेदित्यर्थवर्णनेन विरोधपरिहारः क्रियते। एवं मूर्तिकल्पनप्रकारनिरूपणम्। तत आवाहनाद्युपचारविधिनिरूपणम्। तत्र सद्योजातेन मन्त्रेण सकले निष्कलस्यावाहनम्, वामदेवेन स्थापनं, बहुरूपेण संनिधानं, 'पूर्वस्थित' इति द्विरभ्यस्तपदेन निरोधनं ततो हृदयाद्यङ्गानां यथास्थानं न्यासः कार्य इति कथनम्। तत्र वृत्तौ आवाहनं चात्र भगवतः सर्वगतस्य शरीरे इवात्मनो विशिष्टं संनिधानम्। प्रतिष्ठिते तु लिङ्गादौ विशिष्टतरमेव। तदेव चार्थसाधकं, न सामान्यसंनिधानमित्यावाहनमधिकृत्य विवरणम्। वक्त्रमन्त्रेणार्घ्यादिकं देयम्। ईशमन्त्रेण गन्धपुष्पाद्यर्चनं कार्यम्। चन्दनादीनि स्नानकर्म वस्त्रालंकारस्रग्धूपं, भक्ष्यभोज्यान्नं सर्वं गायत्र्या कल्पयेदित्युक्तिः। एवमन्तर्यागकरणप्रकारो निरूपितः।

बाह्यार्चनोपक्रमस्तत्र सकलीकरणविधिप्रदर्शनम्। एवमन्तर्यागं कृत्वा बहिः शरीरमेतदष्टत्रिंशत्कलाभेदेन ब्रह्मभिः शिवेन शिवाङ्गैश्च सकलीकुर्यात्। न तु करन्यासवत्कलाभेदं विनैवेति। सकलीकरणे विद्याङ्गानां प्रयोगो नेति दर्शितं विद्यापादे शुद्धविद्याप्रकरणे। एवं सकलीकरणविधिप्रति-

पादनं वृत्तौ। ततो विघ्नप्रोत्सारणदशदिग्बन्धकर्मणोः समन्त्रकं प्रतिपादनम्। पश्चादर्घ्यसंपादनविधिः। अष्टाङ्गार्घ्यस्य प्रतिपादनम्। अनन्तरमासनकल्पनमूर्तिकल्पनप्रकारः। अनन्तं मायात्मके स्वे पीठेऽनेकदलात्मनि पद्मरूपे न्यसेत्। ततस्तत्रैवाग्नेयादिकोणेषु तत्सामर्थ्यविशेषात्मकान्धर्मादीन् सिंहरूपान्विन्यस्य अनन्तेशं तत्सहितं पूजयित्वा, तेषामुपरि विद्यापद्मं स्वमन्त्रेण केसराणि, कर्णिकायां बीजानि च विन्यसेत्। तत्र वृत्तौ बीजानां स्वमन्त्रस्य मन्त्रोद्धारेऽश्रुतत्वात्कर्णिकयैव सह विन्यासश्चशब्दसामर्थ्यात्सिद्ध इति निरूपणम्। सर्वात्मपदं सहबीजेन प्रणवेन मनसोच्चार्य पद्ममध्ये मूर्तिं विन्यसेत्। तामेव मूर्तिं ब्रह्मभिरष्टत्रिंशत्कलाभेदेन प्राग्वत्सकलीकुर्यात्। एवं कृते सकलो भवेत्। स ईश्वरो ज्ञेय इति आसनकल्पनमूर्तिकल्पनप्रकारयोः प्रतिपादनम्। अत्र मानसे यागे प्रणवेनैव मूर्तिविन्यासः, बाह्यार्चने 'ओं [हां] सर्वात्मने नमः' इति मन्त्रेणेति भेदो ज्ञेय इति सूचितम्।

ततः सकलध्याननिरूपणम्। अत्र वृत्तौ पञ्चास्यमित्यत्र ननु चतस्र एव तत्पुरुषकलाः सर्वत्र पठ्यन्ते। ताभिश्च मुखकल्पना। तत्र पञ्चममास्यं केन मन्त्रेण कल्पनीयमित्याशङ्क्य 'यस्मिन्यस्मिन्न मन्त्रोऽस्ति तस्मिंस्तस्मिन्सदा भवेत्। गायत्री' इति विधिं प्रदर्श्य गायत्र्या कल्पनीयमिति समाहितम्।

ततः सकले निष्कलस्यावाहनप्रकारोऽन्तर्याग इव न करणीयः। किं तु गुरुवक्त्रोपदेशेन कर्तव्य इत्युक्त्वा गुरुवक्त्रोपदेशकरणप्रकारस्य प्रतिपादनम्। एवमावाहनप्रकारं निरूप्य तदनन्तरं कर्तव्यानामुपचारान्तराणां समन्त्रकं प्रतिपादनम्। 'तत्र स्नानं तोयादिभिः' इति प्रोक्तत्वादत्र लिङ्गार्चनमेव मुख्यमिति प्रतीयते इति वृत्तिकारः सूचयति। धूपपुष्पविषये द्रव्यनियमविधिः। द्रव्यविषये प्रोक्तो विधिः सिद्ध्यर्थं सर्वार्थपूर्णत्वेनानुष्ठेयः। मुक्त्यै यथाशक्ति कर्तुं युज्यते। भक्तिरेवात्र कारणमित्यधिकारविधिप्रतिपादनम्। 'यस्मिन्यस्मिन्न मन्त्रः' इति अनुद्दिष्टमन्त्रकेषु कर्मसु मन्त्रविधिः; सामान्यप्रकरणस्थत्वात्सर्वसाधारण इति सूचनम्।

एवं न्यासादिपूजापर्यन्तमर्चनं कृत्वा, गर्भावरणार्थं यथास्वं भोगस्थानेषु ब्रह्माणि शिवाङ्गानि च विन्यसेत्। ततश्चतुर्भुजादिरूपेण तान्ध्यात्वा संपूजयेत्। नित्यकर्मण्यावरणान्तरन्यासो नेति वृत्तौ प्रतिपाद्यते। इति गर्भावरणपूजा ॥

ततो नैवेद्यवस्तूनां पायसाद्यन्नानां लड्डुकादिभक्ष्याणां दधिक्षीरकन्दमूलफलादीनां प्रदर्शनम्।

ततः पूजानन्तरं प्रदर्शनीयानां मुद्राणां यथावत्प्रदर्शनम्।

शिवादिक्रमेण नैवेद्यं मुद्राश्च तत्प्ररोचनाय दत्त्वा, शिवैकादशिकामभिजप्य, असंस्तुतपदेन अन्येन स्तोत्रेण च स्तुत्वा, अग्नावपि मन्त्राणां तर्पणं निर्वर्त्य विसर्जनं कुर्यादिति। एवं नित्यार्चनप्रकारनिरूपणम्। तत्र वृत्तौ 'किमर्थमेतन्नित्यादिकर्मानुष्ठानं निष्प्रयोजनमेवाचोदितत्वाज्जैमिनीयैरिति केचिदाक्षिपन्ति। तन्न युक्तम्। जैमिनीयैरपौरुषेयत्वेन शास्त्रस्य प्रामाण्याभ्युपगमात्तेषां कदाचित्तन्निष्प्रयोजनत्वकथनं युक्तं स्यात्। पारमेश्वरे तन्त्रेऽस्मिन् सर्वं सर्वज्ञेन भगवता प्रयुक्तत्वेन प्रमाणमित्यभ्युपगमात् कथं निष्प्रयोजनं भवेत्। कथं सर्वज्ञो भगवान् निष्प्रयोजनं कर्मोपदिशेत्। अत एतच्छङ्काया नात्र प्रसक्तिः। आरब्धकार्यकर्मोपरोधेनासद्योनिर्वाणदीक्षया यदक्षपितं पापं मलात्मकं, यच्च कलादिक्षित्यन्तं सूक्ष्मशरीरात्मकं जगत् तच्च प्रत्यहं भक्त्या परमेश्वराराधनादपचयक्रमेण निवर्त्यं भवति। यथा आरब्धकार्यस्य भोगोपरोधो न जायते, नापि शरीरान्ते तस्य पापस्य जगतश्चावस्थितिर्भवति तथा निवर्त्यते। अतो नित्यार्चनं पापापहमभ्युदयावहं च भवति' इति निष्प्रयोजनशङ्कानिवारणम्। पापापहं पुष्टिवर्धनं नित्यार्चनं सामान्यमुक्तमित्युक्तार्थोपसंहारः। वह्नेर्विधानं शृण्विति वक्ष्यमाणोपक्रमः। एवं **तृतीयपटलार्थसंग्रहः** ॥

**चतुर्थे पटले**ऽग्निकार्यं प्रोच्यते। तत्रादौ वृत्तौ पदार्थादिपञ्चविधसंबन्धप्रदर्शनम्। अग्निकार्यमपि स्नानार्चनवत् सामान्यम्। न तु दीक्षाङ्गभूतमेव। यतो वक्ष्यते 'प्रशस्तः सर्वकार्येषु'

इति तत्र प्रमाणप्रदर्शनम्। ततोऽग्नेर्जननं स्वसाधनपूर्वकमिति तत्सामर्थ्याक्षिप्तानि साधनानि प्रथमं निरूप्यन्ते। तत्रारणीस्थापनप्रकारो वर्ण्यते। वनं गत्वा, तन्मध्ये पञ्चब्रह्ममन्त्रानघोरमन्त्रं च ओंकारेण सह जपन्नरणीनिर्माणायाशुष्कतादिशुभलक्षणयुक्तं शमीवृक्षमथवाश्वत्थवृक्षमभ्यर्च्य, शिवास्त्रेण छेदनं कृत्वा, काष्ठं संगृह्य, तेन यथोक्तलक्षणप्रमाणामरणीं सावित्रीमन्त्रेण प्रसाध्य, तां कुसुम्भरक्तेन पटेनाच्छादितां रक्तसूत्रवेष्टितां च कृत्वा भूतले सावित्रीमन्त्रेण स्थापयेत्। एवमरणीस्थापनप्रकारः। अत्र 'सिक्तालक्तकसंवीताम्' इत्यस्य पदस्य रक्तपटाच्छादनेन संपन्नपुंसवनसंस्कारा भवतीति वृत्तिः। ततोऽरण्यां घटनीयानां मन्थानादीनां प्रकृतिद्रव्यप्रमाणघटनाप्रकारा निरूप्यन्ते। मन्थानोपरि कुशसंचयः स्थाप्यः। विन्यासकाले मन्थानस्याध ऊर्ध्वं चारण्यापीडयोर्न्यासः कार्यः। अधोभागे तयोः प्राक्शिरस्कत्वमूर्ध्वभागेऽधःशिरस्कत्वमिति विशेषः।

अथारण्यां मथनप्रकारवर्णनम्। मथनेऽरणेः शिरोग्रीवादिभागान्वर्जयित्वा श्रोण्यां मन्थयेत्। एवं प्रमथ्य ज्योतिर्ज्योतिःपदेन जातवेदसं गृहीत्वा, पतङ्गपदसंयुतं तं कुण्डे निक्षिपेत्। मन्त्रैरेव सिद्धत्वादरण्या उद्धृतस्याग्नेर्गर्भाधानादिसंस्कारा न कर्तव्या इति वृत्तौ कथनम्। तत्र पौष्करागमवचनस्य च प्रमाणतया प्रदर्शनम्। एवमरणीतोऽग्निग्रहणप्रकारो न्यरूपि। पूर्वोक्तस्याग्नेरभावे सूर्यकान्तजोऽग्निर्ग्राह्यः। अत्र वृत्तौ पौष्करागमवचनं प्रदर्श्य, अग्निहोत्रगृहानीताग्निः, महानसादानीतः पचनाग्निरथवा वैश्यगृहादानीतोऽग्निर्ग्राह्य इति वह्न्यन्तरनिर्देशः। सूर्यकान्तजादिवह्न्यन्तरस्य गर्भाधानादिसंस्काराः कर्तव्याः। ते संस्कृता एव हवनयोग्या भवेयुरित्युक्त्वा तत्रापि पौष्करागमवचनस्य प्रमाणतया प्रदर्शनम्। ततः कुण्डसंस्कारविधिः प्रोच्यते। तत्र समन्त्रकं ताडनार्चनप्रोक्षणोल्लेखनप्रोद्धारपूरणकुट्टनचतुष्पथन्यासाख्या अष्ट संस्काराः प्रतिपादिताः। ततो भूःपदेन गर्भधात्रीं विन्यस्य ध्यात्वा पूजयेत् इति वृत्तिकारः। ततस्तद्गर्भे वह्नेर्गर्भाधानपुंसवनसीमन्तोन्नयनसंस्कारास्त्रयो विधेयाः। ततो विनिर्गतस्य वह्नेर्जातकर्म नामकर्मेति द्वौ संस्कारौ कर्तव्यौ। एते पञ्च संस्काराः पञ्चब्रह्ममन्त्रैर्विद्याङ्गपञ्चकैश्च निर्वर्त्याः। तत्र वृत्तौ ब्रह्ममन्त्रा आहुतिपञ्चकदानेनोपाकुर्वन्ति। विद्याङ्गान्यर्चनेनेति मन्त्रविनियोगविधिः। संस्कारपञ्चकस्यान्ते शिवेन पूर्णाहुतिः कर्तव्येति श्रुतेर्गर्भाधानादौ स्रुवाहुतय एव विहिता इति वृत्तौ सूच्यते। तथात्राज्यसंस्कारस्यानभिधानात्कथमसंस्कृतेनाज्येन होमः कार्य इत्याशङ्क्य पुष्पादिवत् प्रोक्षणादिभिः सामान्येन संस्कृतत्वात्संस्कृतमेव भवत्याज्यम्। विशेषसंस्कारसंस्कृतमाज्यं प्रधानहोमार्थमित्याशङ्कापरिहारः कृतः। ततोऽग्नेर्वक्त्रसंपादनं, वक्त्रोद्घाटनमिति संस्कारद्वयं होमेन संपादनीयम्। अत्र वृत्तौ जातकर्मणः पूर्वं सीमन्तहोमाङ्गत्वेनायं होमः कर्तव्यः। अतोऽर्थादनयोः कर्मणोः सीमन्तकर्मण्येवान्तर्भावादपकर्ष इत्यग्नेर्गर्भाधानादयः पञ्चैव संस्कारा इति सूच्यते। एवं सूर्यकान्तजाद्यग्नेर्ग्रहणप्रकारनिरूपणम्। तत आहिताग्निना प्रत्यहमेवंविधस्याग्निजननस्याशक्यानुष्ठेयत्वादुद्धृतोऽयमग्निः सर्वकालं होमकुण्डापेक्षया कुण्डान्तरे धार्यः। ततश्च तस्मात्कुण्डात् प्रोद्धृत्य प्रत्यहं हवनं कुण्डान्तरे, अन्यत्र चुल्ल्यादौ चरुपाकादि च कर्तव्यम्। हवनकुण्डस्थस्याग्नेर्विसर्जनश्रुतितो धारणासंभव इत्याहिताग्निविषये वह्निरक्षणप्रकारः।

ततोऽग्नौ होमविधानप्रकारनिरूपणम्। तत्र आज्यसंस्कारविषये 'अधिश्रयणम्, उद्योतनम्, आलोकनं, प्लवनं, संप्लवनं, नीराजनं, प्रोक्षणम्' इति सप्त संस्काराः कर्तव्यत्वेन प्रतिपादिताः। ततोऽर्चनप्रकरणोक्तक्रमेण गर्भावरणेन सह परमेश्वरस्य पूजा कर्तव्या। ततो मन्त्रतर्पणविधिनिरूपणमग्नेर्विसर्जनप्रकारश्च निरूपितौ।

ततः कीदृशे वह्नौ होतव्यं कीदृशे न होतव्यमिति प्रतिपाद्यते। घृताभावे तत्प्रतिनिधित्वेन होम्यानां तिलादिद्रव्याणां निर्देशः क्रियते। नित्यकर्मणि काम्यकर्मणि च होतव्यद्रव्याणां परिमाणकथनम्। अत्र 'शुक्तिमात्रां पायसस्य' इत्यादि चरुविषयं, वैश्वदेवविषयं च' इति वृत्तौ सूच्यते।

'बृहतीतुल्याः' इत्यस्य 'बृहतीफलतुल्याः' इत्यर्थकरणं वृत्तौ। ततः काम्यकर्मणि, उच्चाटनमारणविद्वेषोन्मादकर्मसु, तथा शान्तिपुष्टिवश्याकर्षणेषु कर्मसु, आयुःप्रदकर्मणि चोपयोक्तव्यानां द्रव्याणां निरूपणम्। स्रुक्स्रुवयोर्लक्षणकथनम्। ततोऽग्नेर्वर्णगन्धशब्दाकृतिभिर्विकारैः कर्मणां सिद्धयसिद्धिनिमित्तज्ञानप्रकारवर्णनम्। सिद्धयानुगुण्येन दिक्षु कुण्डभेदकल्पनप्रकारः। वृत्तकुण्डलक्षणकथनम्। मन्त्राद्यानुगुण्येन कुण्डकल्पनं, होमानुगुण्येन कुण्डप्रमाणनिरूपणं च। अग्नेर्विधानं प्रोक्तमित्युक्तार्थोपसंहारः। अधिवासनाख्यं दीक्षाक्रममवधारयेति वक्ष्यमाणोपक्रमः। एवं **चतुर्थपटलार्थसंग्रहः** ॥

**पञ्चमे पटले**ऽधिवासप्रकारो निरूप्यते। तत्र प्रथमं 'चतुष्पादार्थकुशलस्तत्प्रोक्तार्थानुष्ठानतत्पर आचार्यो यथाविभवं वस्त्रालंकारभूषितः क्षेत्रपरीक्षापूर्वकं प्रकल्पितं यागगृहं प्रविश्योत्तराभिमुखमुपविशेत्। 'पिङ्ग पिङ्ग' इति मन्त्रमनुस्मरन्निरीक्षणं कुर्यात्। ततस्तत्रार्चनप्रकरणोक्तवत् करन्यासाद्यर्घ्यसंपादनान्तं सर्वं कर्म कृत्वा, पञ्चगव्यं कुर्यात्' इति क्रियाक्रमो न्यरूपि। येन त्वत्र एतच्छास्त्रक्रमं विहाय स्वतन्त्रपद्धतिक्रम उल्लिखितः, स उपेक्षणीय एव। यत्रेतिकर्तव्यता न श्रूयते, तत्रैवाकाङ्क्षाबलात् संहितान्तरापेक्षोचिता, न सर्वत्रेति रामकण्ठेन व्याख्यान्तरखण्डनम्।

ततः समन्त्रकं पञ्चगव्यकरणविधिः प्रतिपाद्यते।

ततो दीक्षाकाले परं कर्तव्यस्य शिवतनुकल्पनप्रकारस्य निरूपणम्। अत्र व्योमव्यापिमन्त्रमथवा संहितामन्त्रं वोच्चार्यात्मानं शिवेन सह एककारकीभूत्वा शिववद्भावयेदिति शिवभावनाप्रकारो निरूप्यते। प्रसङ्गादेतादृशशिवतनुकल्पनं दीक्षाकाल एव भवेत्। न तु दीक्षातः प्रागधिवासयागे, मण्डलयागे वेति वृत्तौ सूच्यते। किं चात एव कारणाद् 'दीक्षाया न यागत्वम्। अपि तु आचार्याभिव्यक्तशिवकर्तृकं मन्त्राधिकरणमाज्याहुत्याद्यभिव्यक्तं शक्तिपाताघ्रातपुरुषविषयं बन्धनिवृत्त्यादिफलदं संस्कारकर्मैव दीक्षा' इति दीक्षास्वरूपवर्णनं दृश्यते।

ततः शिवहस्तकरणप्रकारः समन्त्रकं विधीयते। अत्र वृत्तौ शिवहस्तस्याक्षेपसमाधानाभ्यां दीक्षाङ्गत्वसमर्थनम्। परतोऽनुष्ठेययोः शिवतनुकल्पनशिवहस्तप्रकारयोरत्राभिधानेऽभ्युदय एव प्रयोजनमिति च वृत्तौ कथ्यते।

अथ पञ्चगव्यकरणानन्तरं यागगृहे मण्डपे कर्तव्यो वर्धनीसहितशिवकलशस्थापनप्रकारः सेतिकर्तव्यताकं प्रतिपाद्यते।

ततः कलशनिवेशनकाले द्रष्टव्यानि दिव्यानि भौमानि च शुभाशुभानि निमित्तानि प्रोच्यन्ते। कलशनिवेशनकाले दृष्टानामशुभनिमित्तानां शान्त्यर्थं कर्तव्यो घृतहोमो विधीयते।

ततो यागमण्डपमध्ये स्थण्डिल एव भगवतः सामान्यप्रकरणोक्तवद्गर्भावरणान्तमर्चनं कुर्यादित्युच्यते। ततो द्वितीयावरणे विद्येश्वराणां, तृतीयावरणे लोकपालानां, चतुर्थावरणे लोकपालास्त्राणां च विधेयः पूजाप्रकारो निरूप्यते। ततो यथाविभवमर्चनप्रकरणोक्तक्रमेण नैवेद्यं मुद्राप्रदर्शनं च कार्यमित्युच्यते। तत्र विद्येशानां लोकापालानामस्त्रवर्गस्य च प्रदर्शनीया मुद्रा उच्यन्ते।

ततोऽग्निकार्यक्रमो वर्ण्यते। तत्र यागमण्डपविघ्नोत्सारणादि कृत्वा यद्याचार्योऽनाहिताग्निः स कुण्डसंस्कारान्वह्नेः कर्तव्यान्पञ्चसंस्कारांश्च कुर्यात्। यद्याहिताग्निराचार्यः स कुण्डस्यैवोल्लेखनादिसंस्कारान्कुर्यात्। अत एव सामान्यप्रकरणे कुण्डान्तर एवाहिताग्निना वह्निः परिरक्ष्य इत्युक्तमिति वृत्तौ सूच्यते। ततः स्रुक्स्रुवयोः संस्कारविधिर्वर्ण्यते। ततः स्थण्डिलपूजनवदग्नावपि मन्त्रगणं निवेश्य घृतेनैव तर्पयेदिति वह्निकार्यकरणप्रकारो न्यरूपि।

ततो द्रव्याधिवासप्रकारो वर्ण्यते। तत्र वृत्तौ द्रव्याणां पूर्वेद्युरेव संस्कारपूर्वकमाहरणमधिवास इत्यधिवासशब्दार्थ उच्यते।

अनन्तरं चरुपाकविधिः समन्त्रकं विधीयते। तत्र सिद्धस्याभिघारितस्य चरोर्भागत्रयं कृत्वा भागमेकं परिवारयुक्ताय देवाय निवेदयेत्। एकं भागमग्नौ जुहुयात्। शिष्टं भागं शिष्याणा-

मात्मनश्च भोजनव्रतसंपत्तये यागगृह एव पिधाय स्थापयेदिति सूच्यते।

ततः शिष्याणां यागगृहप्रवेशनप्रकारो वर्ण्यते। तत्र मूले उपोषितान् स्नातानाचान्तान् सितवस्त्रसंवीतान् शिष्यान् यथा ते उपसन्नाः तथा, तादृशक्रमेण यागगृहं प्रवेशयेदित्युच्यते। वृत्तौ च उपसन्नत्वं चात्र शक्तिपाताव्यभिचारि भक्त्यात्मकमधिकारनिमित्तमित्युपसन्नशब्दार्थविवरणं क्रियते। तत्र वृत्तिकारः व्याख्यानान्तरखण्डनव्याजेन संहितान्तरवचनसामरस्यसंपादनाय च ये ये उपसन्नाः तान् ब्राह्मणादिक्रमेण प्रवेशयेदिति निर्दिशति।

ततो यागगृहे शिष्यस्वापविधिः प्रतिपाद्यते। तत्र वृत्तौ प्रथमं प्रवेशितान् शिष्यान् शिवाङ्गशिरोमन्त्रेणार्घ्यपात्रपानीयेन च प्रोक्षयित्वा, शिवास्त्रेण भस्मना शनैर्न यथैतच्छरीरबाधा भवेदेवमाताड्य, दर्भाणामुपर्युदङ्मुखानुपवेश्य, स्वयं च प्राङ्मुखमुपविश्य, शिवहस्तं कृत्वा, तेन शिरःसु विषग्रस्तापामार्जनवत् पाशक्षोभार्थं दर्भैर्नाभेरूर्ध्वं त्रिधा, तदधश्च तथैवालम्भनं कृत्वा, करन्यासदेहन्यासयुक्तान्कृत्वा, अर्घ्यादिभिरभ्यर्च्य, स्थण्डिलादिस्थस्य भगवतः प्रणिपातपूर्वं पूजां कारयित्वा, अग्निसमीपेऽधःशिरस्कानवस्थाप्य, शिवैकादशिकया संपातहोमं तत्र निर्वर्त्य, सर्वावरणन्यस्तानां मन्त्राणां प्रत्येकमाज्याहुतीस्तिस्रो हुत्वान्ते पूर्णाहुतिं दद्यात् इति प्रतिपाद्यते। अत्र मूले 'शिरःसु शिवहस्तेन शिरसा शिववारिणा प्रोक्षयित्वा' इत्यत्र स्वरसतो यद्यपि शिववारिप्रोक्षणं शिवहस्तेनेति वक्तव्यं भवति, तथापि ५. १९–२० श्लोकानुरोधेन शिवहस्तस्य आलम्भनक्रियायामेव वृत्तिकारेणान्वयः क्रियते इति भाति। एवं शिवमन्त्राधिवासनं कुर्यात्। ततः स्थण्डिलादेव परमेश्वरं विसर्जयेत्, न वह्नितः। तेन तस्याधिवासार्थं पुनस्तर्पणं कृत्वा, मण्डपान्तरेऽर्थतः शिष्याणां पञ्चगव्यं पानाय दत्त्वा, चरुशेषं विभज्य भक्षणाय दद्यात्। स्वयमपि भक्षयेत्। ततश्चाचम्य शिष्याणामुदङ्मुखानां दन्तकाष्ठमृज्वादिलक्षणयुक्तं मुखशुद्धये समर्प्य, तत्कालाशुभदिक्पातसूचितदोषशान्तिं प्रथमपदेन गव्याज्याहुतिशतद्वयप्रयोगेण कुर्यात्। ततः समाप्तविधिर्गुरुः शिष्यैः सह यागगृह एव भूमौ दर्भादिप्रस्तरे स्वप्यात्। एवं शिष्यस्वापविधौ क्रियाक्रमो विहितः। आचार्यस्तु न स्वप्यादेव। किं तु समाधौ युक्त एव रात्रिं क्षिपेदित्युच्यते। तत्र वृत्तौ समाधिकाले कर्तव्यो दीक्षानुरोधेन ध्यानविशेषप्रकारस्त्रिधा प्रदर्शितः। ततश्च स आचार्यो यथाशक्ति समाधावास्थितः सन्ननन्तरं शरीरस्थित्यर्थं स्वप्यादित्युच्यते।

मध्ये होमप्रसङ्गेन होमकाले, न्यासार्चनादिकर्मसु च मन्त्रैः सह नमस्कारादिजातिषट्कयोजनप्रकारो निरूप्यते। एवं मन्त्रोद्धारे पूर्वमनुद्धृतमन्त्रविषयेऽपि नमस्कारादिमन्त्रयोजनप्रकारो विधीयते।

ततः प्रातरुत्थायावश्यकं कृत्वा, आचम्य, स्नानप्रकरणोक्तक्रमेण संध्यावन्दनं निर्वर्त्य यथाशक्ति शिवैकादशिकां जपेत्। ततः सितवस्त्रादिविशेषयुक्ताः स्वाग्रतो निविष्टाः शिष्याः स्वप्नान् प्रष्टव्या इति गुरुकर्तव्यक्रियाक्रमो वर्ण्यते।

अधिवासनाख्यं गुरोर्विधानं वर्णितमित्युक्तार्थोपसंहारः। स्वप्नाधिकारो वक्ष्यत इति वक्ष्यमाणोपक्रमः। एवं **पञ्चमपटलार्थसंग्रहः**।

**षष्ठे पटले** स्वप्नप्रकरणे प्रथमं प्रासङ्गिकविषये पटलादौ वक्तव्यः पञ्चविधः संबन्धो न प्रतिपादनीय इत्युच्यते वृत्तौ। ततोऽत्र नराणां स्वप्ना एव विचार्यन्ते; न तु पशुमृगादेर्भूतसर्गस्य स्वप्नाः। निद्राप्रवृत्तेः पशुमृगादेरपि स्वप्ना भवन्त्येव। कैश्चिदसौ स्वप्नो वातादिधातुक्षोभनिमित्त एवेष्यते। सांख्यादिभिस्तु जाग्रत्पदवद्विशिष्टभोगप्रदकर्मनिमित्त एवेत्युच्यते। उभयथापि स्वप्नस्य भाविशुभाशुभसूचकत्वं न सिध्यति। अतो विद्यापादेऽनुक्तत्वादत्र स्वप्ना विशेषतो विचारणीया एवेति स्वप्नविचारे हेतुः प्रदर्श्यते वृत्तौ।

अनन्तरं जाग्रदवस्थासिद्धिक्रमेणैव स्वप्नानां वक्तव्यत्वाज्जाग्रदवस्थाक्रमो विद्यापादोक्तवदनूद्यते।

अन्तःकरणबहिष्करणाभ्यां विषयवेदनं जाग्रदवस्थेति जाग्रदवस्थास्वरूपं निर्दिष्टम्। केवलयान्तःकरणवृत्त्यैव विषयवेदनं स्वप्न इति स्वप्नस्वरूपमुक्तम्।

ततो ये वातादिक्षोभमात्रं स्वप्नः, न भोगकारणम् इति वदन्ति, तेषां मतस्य स्वप्नप्रबुद्धेषु केषुचिद्धर्षविषादाद्यनुभवरूपभोगसिद्धेर्विरुद्धकार्योपलम्भात् स्वप्नस्याभोगात्मकवातादिक्षोभहेतुत्वनिषेध इत्यादिना वृत्तौ खण्डनप्रतिपादनम्।

जाग्रदवस्थायां स्थूलं बाह्यमेव भोग्यं भवति। स्वप्नाख्ये तु सूक्ष्मं बुद्ध्याकारात्मकमेव भोग्यम्। मनोराज्याद्यवस्थापि स्वप्नतुल्यैवेत्युच्यते वृत्तौ।

ततः 'सुषुप्ताख्यं तु पदमवेदनात्मकत्वादकर्मफलम्' इति वदतां नैयायिकवैशेषिकाणां मतमनूद्य यस्माज्झटित्येव प्रतिबोधितः पुरुषः सुखमहमस्वाप्सं दुःखं वा इत्यादिना स्मरणविषयीकृतेन दुःखेन सुखेन वा युज्यते। तमोवृत्त्यनुभवात्मकं जाड्यं वात्मनि स्मरति। तस्माज्जाग्रदनुभवसिद्धस्मरणसामर्थ्यात् स्वप्नपद इव सुषुप्ताख्येऽपि सुखानुभवसिद्धिरित्यादियुक्तिभिर्वृत्तौ खण्डनप्रतिपादनम्।

ततो वातपित्तकफरूपत्रिविधधातुनिमित्तकस्वप्नानां प्रदर्शनम्। ततः कर्मनिमित्तकानां स्वप्नानां निरूपणम्।

ततः शुभाशुभपरीक्षणे ध्यानात्सङ्गादभ्यासाद्वा दृश्यमानानां स्वप्नानां न ग्राह्यत्वम्। किं तु स्वस्थचित्तस्य नियमे संस्थितस्यैव स्वप्ननिदर्शनं शुभाशुभपरीक्षणे ग्राह्यमित्युच्यते।

ततो मतङ्गमुनिप्रश्नसमाधानवर्णनद्वारा निमित्तानां स्वप्नानां च शुभाशुभसूचकत्वसमर्थनम्। अहसि प्राङ्निमित्तं ग्राह्यम्। रात्रौ त्वपश्चिमः स्वप्नो ग्राह्य इत्युक्तम्।

ततः प्रासादारोहणादिशुभसूचकस्वप्नानां तथा खरोष्ट्राद्यारोहणाद्यशुभसूचकस्वप्नानां च प्रतिपादनम्। शुभेषु स्वप्नेषु प्रयतो भवेत्। अशुभेषु स्वप्नेषु विषये प्रायश्चित्तार्थमघोरमन्त्रेण घृतसहस्राहुतिदानं कार्यमित्युच्यते। एवं स्वप्नाधिकार उक्त इत्युक्तार्थोपसंहारः। दीक्षाक्रमो वक्ष्यत इति वक्ष्यमाणोपक्रमः। एवं **षष्ठपटलार्थसंग्रहः**॥

**सप्तमे पटले** प्रथमं समयदीक्षाविधिः संक्षेपेण प्रोच्यते। तत्र दीक्षाङ्गषट्कप्रतिपादकप्रथमपटलोक्तवद्यागगृहे कार्पासेनाथवा शाणेन सूत्रेण सुवर्तितेन मण्डलं प्रकल्प्य, तन्मध्ये भगवन्तं परमेश्वरं गर्भावरणविद्येशावरणलोकपालावरणलोकपालास्त्रावरणाख्यैश्चतुर्भिरावरणैः सहितं पूजयेदित्युक्तम्। अत्र विद्येशा मण्डले कमलासनाः, लोकपालाः स्वस्तिकस्थाः, अस्त्रनायका मण्डलतो बहिश्च पूज्या इत्यभिधीयते। ततो द्वारेषु पूर्वतः स्कन्दनन्दीशौ, दक्षिणे काललोहितौ, पश्चिमे भृङ्गीशगणेशौ, उत्तरे चण्डेश्वरविशाखौ च पूज्या इति द्वारपालार्चनप्रतिपादनम्। ततः पूर्ववत् सकलं पूजाकर्म निर्वर्त्य, वह्निकार्यं कृत्वाधिवासप्रकरणोक्तवच्छिष्यमाहूय, दर्भेषु विनिवेश्य, करन्यासादिकं सर्वं कृत्वा, शिष्येण मण्डलस्थस्य भगवतः पूजां कारयेदित्युच्यते।

अनन्तरं सुसितादिलक्षणयुक्तेन वस्त्रेण शिष्यस्य नेत्राच्छादनं कृत्वा, तदञ्जलौ पुष्पं दत्त्वा, तं शनैर्नीत्वा, प्रत्यग्द्वारं प्रवेशयेत्। तत्र तेन लेशतः पुष्पप्रक्षेपणं कार्यम्। पुष्पपातवशात्तस्य नामकरणं विधेयमित्युक्तम्। ततो होमकरणविधिः प्रदर्श्यते। एवं समयदीक्षाविधिः संक्षेपतः प्रोच्यते। समयदीक्षां प्राप्तो वक्ष्यमाणभुवनदीक्षादिष्वधिकारी भवेत्। शास्त्रश्रवणे तदध्ययने पूजायां हवने च योग्यो भवेदित्युच्यते।

ततो भुवनदीक्षायां प्रतिभुवनं कर्तव्यानां संयोजन-संजनन-भोगभोजन-पाशच्छेदोद्धाराख्यानां पञ्चानां दीक्षाकर्मणां सेतिकर्तव्यताकं प्रतिपादनम्। प्रसङ्गतस्तत्त्वदीक्षाविषयेऽपि पूर्वनिर्दिष्टकर्मणां निर्वर्तनप्रकारो वृत्तौ तत्र तत्र सूच्यते। अत्र दीक्षायां भुवनादेः संहारक्रम एव करणीयः। शर्वशर्वपदोच्चारात्संहारमुद्रया गृहीतं सद्योजातेन मन्त्रेण योजयेदिति संयोजनकर्मप्रतिपादनम्। प्रति-

भुवनं भुवनेशमन्त्रस्य 'कालाग्निरुद्राय स्वाहा' इतिवत् सामर्थ्यादूहः कार्यः। भुवनेश्वरैरेव जननाहुतिः कर्तव्येत्यादिविशेषाः संजननकर्मविषये प्रदर्शिताः। जननादनन्तरं भोगभोजनकर्मनिर्वर्तनाय षडङ्गैर्ब्रह्मभिश्च क्रियमाणा एकादशाहुतय एव दीक्षाशब्दवाच्याः। अतश्चैतेषां मन्त्राणां 'दीक्षामन्त्रमथोत्तमम्' (५.५० उ०) इति दीक्षासाधकत्वमुक्तमधिवासप्रकरणे' इति सूच्यते। अधिवासप्रकरणे 'भोगभोजनमेव वक्ष्यमाणैकादशाहुत्यात्मकं दीक्षा। यानि संयोजनादीनि, तानि तु तदङ्गभूतान्येवेत्युक्तं भवति' इति वृत्तौ प्रदर्शितम्। ततः पाशानां प्रतिस्थानं विच्छेदनात्मकं कर्म धकारत्रयेण कार्यमित्युक्त्वास्मिन्विषये कर्तव्यानां विशेषान्तराणां प्रतिपादनम्। ततः प्रतिस्थानं व्योमव्यापिपदोपलक्षितेन शिवेन पूर्णाहुतिं दत्त्वा 'मुञ्च मुञ्च' पदेनोद्धारं कुर्यादित्युद्धारकर्मनिर्वर्तनप्रकारो निरूप्यते। एवं संयोजनादिनोद्धारान्तेन क्रमेण कालाग्निभुवनमिव नरकादिः पातालान्तः सर्वोऽध्वा भूलोकपर्यन्तं शोध्यः। ततो भूलोकविषयेऽध्वशोधनप्रकारो निरूप्यते। तत्र भूलोकसंयोजनादनन्तरं ब्रह्मभिराहुतिपञ्चकेन स्थावर-सरीसृप-पक्षि-मृग-पशुलक्षणाः पञ्च जातयः सद्योजातादिभिः क्रमेण शोध्या इत्युच्यते। एवं शिवास्त्रमन्त्रेण मनुष्यजातेरेवान्तरभेदेन शुद्धिनिमित्तं म्लेच्छचण्डालादिसंकीर्णजातिशोधनप्रकारः, ततः कवच-शिखा-शिरोमन्त्रैः शूद्रवैश्यक्षत्रजातिशोधनप्रकारश्च प्रतिपाद्यते। ततो ब्राह्मणजातिविषये शुद्ध्यर्थं श्रुतिस्मृतिसिद्धा गर्भाधानादयोऽष्टाचत्वारिंशत्संस्काराः शैवैर्मन्त्रैर्होमविधानेन संपादनीया इत्युक्त्वा तान्संस्कारान्नामतो निर्दिश्य तत्र तत्र कर्तव्यो होमविधिः समन्त्रकं प्रतिपाद्यते। भूलोकात्परतो विद्यापादोक्तो भुवर्लोकादिः सर्वोऽध्वा कालाग्निभुवनाद्युक्तविधिना शोध्यः। ततो मायायां भुवनाभावात्तत्र कर्तव्यस्य शोधनप्रकारस्य वर्णनम्। ततः शुद्धाध्वनि कर्तव्यस्य विधेः प्रतिपादनम्। सदाशिवभुवने बुभुक्षोर्मुमुक्षोः साधकस्य विषये कर्तव्यस्य विधेः प्रदर्शनम्। ततः शिवे दीक्षयात्मानं सर्वज्ञत्वसर्वकर्तृत्वलक्षणेन योजयेदिति संयोजनप्रकारो न्यरूपि। तत्र सर्वज्ञत्वसर्वकर्तृत्वाभिव्यक्तिलक्षणजन्मपूर्वं दीक्षां कुर्यादिति दीक्षाक्रमो वर्णितः।

ततस्तान्कृतदीक्षान्मण्डलस्थस्य भगवतो निवेद्य प्राक्प्रकरणोक्तनयेन विसर्जनं कृत्वा, कलशस्थापनं निर्वर्त्य, निर्माल्यापनयनपूर्वं नवमपटलोक्तप्रकारेण चण्डेश्वरयागं निर्वर्तयेदिति दीक्षाविधिरिति भुवनदीक्षा प्रतिपादिता।

ततो वृत्तौ ये दीक्षायां स्वातन्त्र्येणैव स्थानविशेषव्याप्तिमनालोच्य पाशानां विमोहाद्विच्छेदं कुर्वन्ति, ये च सदाशिवभुवन एव ज्ञत्वकर्तृत्वयोरभिव्यक्तिं कथयन्ति, ते उभयेऽप्यनुपपन्ना एवेति निरूप्यते।

ततो दीक्षाग्निना दग्धमलस्य पुंस आत्मीयं ज्ञानक्रियात्मकं बलं व्यक्तिमेति। नान्येन ज्ञानादिना पुंसो मलो निवृत्तिमेतीति विद्यापादप्रतिपादितोपपत्तिसहितस्य व्याख्यातार्थस्योपसंहारः। भुवनदीक्षातोऽन्यस्तत्त्वदीक्षात्मक उपायः कथ्यत इति वक्ष्यमाणोपक्रमः। एवं **सप्तमपटलार्थसंग्रहः**।

**अष्टमे पटले** प्रथमं व्याख्येयत्वेनोपक्रान्तस्योपायान्तरस्य तत्त्वदीक्षाभिधानस्य प्रतिपादनं क्रियते। एतच्च विधानं भुवनदीक्षापेक्षया संक्षिप्तं भवति। अत्र पटले सर्वेषां सामान्यतस्तत्त्वदीक्षाविधानं, दरिद्रविषये भुवनदीक्षातत्त्वदीक्षयोरुभयोर्विधानं, भावितात्मनां शिष्याणां विषये योगनिष्ठैर्गुरुभिः क्रियमाणयोस्तत्त्वभुवनदीक्षयोरुभयोर्विधानमिति विधानत्रितयं प्रोच्यत इति प्रतिज्ञा क्रियते। ततस्तत्त्वदीक्षाप्रतिपादनप्रकारो वर्ण्यते। अत्र तत्त्वानां विद्यापादोक्तस्य सृष्टिक्रमस्य बाधेन संहारक्रमो विधीयते। पृथिवीतत्त्वादिलयतत्त्वान्तं दीक्षायां तत्त्वानि नियोक्तव्यानि। प्रतितत्त्वं ब्रह्मभिर्मन्त्रैः पञ्चविंशत्याहुतिप्रयोगैरियं दीक्षा निर्वर्तनीया। लयतत्त्वे तु ब्रह्ममन्त्राणां प्रगमाभावाच्छिवाहुतिरेकैव कर्तव्या। यत्त्वत्र व्याख्यानं पञ्चैव तत्त्वानि शोध्यानीति। तदयुक्तमेव तथा श्रुत्यभावात्। न पञ्चभिः शुद्धैः सर्वाणि शुद्धानि भवन्तीत्यादिविशेषा निरूपिताः। एव-

मत्र प्रतिज्ञातेषु प्रथमं विधानं प्रतिपादितम्। दरिद्राणां विषये एतत्तत्त्वविषयं भुवनविषयं वा
विधानं घृताभावात् समिद्भिः कर्तव्यम्। न त्वाढ्यानां, तेषामाज्येनैव कर्तव्यमित्युक्तं भवतीति
प्रतिज्ञातेषु द्वितीयविधानप्रतिपादनम्।

ततो भावितात्मनां योगनिष्ठानां एतत्तत्त्वभुवनदीक्षाद्वयमपि देशिकोत्तमेन मनसैव कर्तव्यमित्यु-
क्त्वा स मनसा कर्तव्यप्रकारो निरूपितः। तत्र देशिकोत्तमेनाधिवासमण्डलन्यासादिकं मनसैव
कर्तव्यम्। प्रागुक्तबाह्याग्नाविव स्वदेहाग्नावध्वोपस्थापनादि कृत्वा शिष्यात्मानं योगपादवक्ष्य-
माणविधिना पदात्पदं समुद्धरेत्। तेन स शिष्यात्मा शिवपदे शिवतत्त्वसदृशो भवेदित्यादिविशेषाः
प्रतिपाद्यन्ते। एवं प्रतिज्ञातेषु तृतीयविधानप्रतिपादनम्।

ततः पूर्वसिद्धपशुत्वनिवृत्त्या शिवसमानस्य धर्मस्याभिव्यक्तिर्मुक्तिः इति सिद्धान्ते मुक्ति-
लक्षणप्रतिपादनम्। अत्र वृत्तौ असदुत्पत्तेः सत्कार्यसिद्धिविचारेण निरस्तत्वाद् 'असत एव शिव-
समत्वस्योत्पत्तिः' इति वदतां कालामुखानां मतमयुक्तमिति कथ्यते। एवं सतोऽपि विनाशस्य
सत्कार्यसिद्धिविचारेण निरस्तत्वात् पूर्वं किंचिज्ज्ञत्वेन सिद्धस्य स्वगुणस्य नाशो नोपपद्यत इति पर-
मेश्वरगुणसंक्रान्तिर्मुक्तिरिति वदतां पाशुपतानां मतमप्ययुक्तमित्युच्यते।

ततः सकलानां प्रलयकेवलिनां विज्ञानकेवलिनां त्रयाणामपि बन्धनिवृत्त्या शिवसमानताभिव्यक्तिः
कथं संजायत इति निरूप्यते। ततो मुमुक्षोर्भोजनशिवपूजादिविषये स्थित्यर्थं योऽभिलाषो विद्यते,
स शुद्धरागो न बन्धहेतुरित्युच्यते। बन्धभूतैस्तत्त्वैर्वियोगः शिवयोगे निमित्तं भवतीत्युक्तार्थोप-
संहारः। मुख्यो नवनाभमण्डलात्मकाध्वरपूर्वः क्रियायोगो वक्तव्यतया प्राप्त इति वक्ष्यमाणोपक्रमः।
एवम् **अष्टमपटलार्थसंग्रहः**॥

**नवमे पटले** नवतत्त्वपीठदीक्षाप्रकारो निरूप्यते। तत्र प्रथमं भगवतः परिग्रहशक्तेः शुद्ध-
विद्यायाः स्वरूपप्रतिपादनम्। तत्र शुद्धविद्या शिवभट्टारकाद्विनिःसृता शक्तिः। अत्र वृत्तौ सा
च मायोर्ध्वं शुद्धेऽध्वनि मन्त्रमन्त्रेश्वराणामधिकारबलमाहात्म्यप्रकाशिका। अत्र बलं सर्वज्ञत्वेऽपि
क्रियाशक्तेरन्योन्यमुत्कर्षापकर्षलक्षणम्, माहात्म्यम् अङ्गपरिवारादिभोग इति बलमाहात्म्यशब्द-
विवरणं दृश्यते। सदाशिवभट्टारकस्य क्रीडनार्थमधिष्ठेयत्वेनोक्ता मूर्तिर्भवति शुद्धविद्या। तस्या
भुवनेषु भानुमत्याद्याः शुद्धा विद्याः क्रीडन्ति, इत्यादयो विशेषाः शुद्धविद्याविषये प्रोच्यन्ते।
एतस्याः शुद्धविद्यालक्षणायाः शक्तेः सकाशादेकाशीतिपदोपेतो व्योमव्यापिमन्त्रः प्रादुर्भूतः। त-
न्मन्त्रस्थानि पदानि पशुपरित्राणसामर्थ्ययुक्तानि परमेश्वराभिधायकत्वेन चातिदीप्तिमन्ति विलसन्ति।
तेषां च संख्या मन्त्रोद्धारेऽत्रागमे एकाशीतिरिति प्रोक्ता। स्वायंभुवे तु तदवान्तरभेदेन चतुर्नवति-
संख्यानीत्युक्ता।

ततो नवनाभमण्डले नवपदपीठक्रमेण व्योमव्यापिमन्त्रेणैव भगवान्पूजनीय इत्युक्त्वा व्योम-
व्यापिपदैर्नवपीठकल्पनप्रकारस्तत्र शिवतत्त्वादिप्रकृत्यन्तानां नवतत्त्वानां कल्पनाप्रकारश्च यथावन्नि-
रूपितः। अत्र वृत्तौ नवतत्त्वविधानविषये पौष्करागमवचनं प्रमाणतयोद्धृतं भवति। पीठकल्पन-
विषये पौष्करीयपददीक्षासंग्रहकारिकाः प्रमाणतया प्रदर्शिताः। एतद्विषये टिप्पण्यामेका पट्टिका
प्रकटीकृता।

ततो नवतत्त्वपीठदीक्षाख्ये क्रियायोगे सृष्टिक्रमेणाध्वरक्रमस्तथा संहारक्रमेणाग्नौ प्रकृतितत्त्व-
पीठाद्युपस्थापनपूर्वं कर्तव्यो दीक्षाक्रमश्च निरूप्यते। अत्र पौष्करे तु सृष्टिक्रमेणापीयं नवतत्त्व-
पीठदीक्षा विहितेति वृत्तौ सूच्यते।

ततः प्रसङ्गाज्ज्ञानमेवाज्ञानप्रतिपक्षत्वान्मोक्षकारणं युक्तं, न तु दीक्षाख्यं कर्मेति मतङ्गमुनि-
प्रश्नः। तत्र वृत्तावयं प्रश्नो विद्यापादे शुद्धविद्याप्रकरणे निराकृत एवेत्याशङ्क्य, ज्ञानस्यात्र कथं-
चिदुपयोगोऽस्ति वा न वेति प्रश्नतात्पर्यमिति प्रदर्श्य सिद्धान्तोऽपि ज्ञानस्यात्रोपयोगप्रदर्शनतात्पर्येण

प्रतिपाद्यते। अत्र बौद्धं व्यज्यमानं ज्ञानं प्राकृतस्याज्ञानस्य साक्षान्निवर्तकं भवति। तादृशं ज्ञानं प्राकृतादज्ञानान्निष्कृष्य पुरुषं गुरुं प्रति दीक्षार्थं चोदयति। दीक्षयैव मललक्षणमज्ञानं निवर्त्यत इति समाधानप्रकारो दृश्यते।

स्थावरादीनां शक्तिपातानिश्चयान्मनुष्याचार्यकर्तृका दीक्षा नोपपद्यते। शक्तिपातविशिष्टपुरुषादीनामेव दीक्षा कार्येत्यत्र वृत्तौ सूच्यते। ततो भोक्तुर्मलपरिपाकं, कर्मणो विरोधं वान्तरं प्राप्य शक्तिपातो भवतीति प्रोक्तम्। अतो भगवतो निरपेक्षता कथं संगच्छत इति मतङ्गमुनिप्रश्नः। अत्र संस्कार्यगतयोग्यतालक्षणनिमित्तापेक्षा भगवतः स्वातन्त्र्यं विहन्तुं न क्षमेतेति समाधानवर्णनम्।

ततो दीक्षालक्षणशक्तियागावसाने यागोऽन्योऽस्ति वा न वा। किमर्थं चण्डेशस्य मन्त्रा मन्त्रोद्धारे पठिता इति मतङ्गमुनिना प्रश्नकरणम्। तत्र न केवलं चण्डेशस्य मन्त्रा एवोक्ताः। किं तु तस्य पूर्णेन्दुनिभं मण्डलमपि परिभाषितमित्युक्त्वा, चण्डेशयागविधानप्रतिपादनम्। तत्र ५० उ०—५५ श्लोकेषु चण्डेशस्तोत्रमेकं वर्ण्यते। अत्र वृत्तौ दीक्षावसाने चण्डेशयागस्य कर्तव्यत्वेन विधानाच्चण्डेष्टिपर्यन्ता दीक्षेति कथनमयुक्तमिति मतान्तरखण्डनं दृश्यते। अत्रागमे नवतत्त्वविषया पददीक्षा, षट्त्रिंशत्तत्त्वदीक्षा, भुवनदीक्षेति दीक्षात्रयं प्रोक्तमित्युक्तार्थोपसंहारः। येन गुरुपदं संपद्यते, स आचार्याभिषेकविधिर्वक्ष्यत इति वक्ष्यमाणोपक्रमः। अत्र वृत्तौ 'पटलान्ते केषुचित्पुस्तकेषु "यस्मान्मोक्षाय धात्रा" इत्युपक्रम्यमाणमर्धमेकं दृश्यते। अर्धमात्रेण व्यवहाराभावात् पूर्वश्लोकेनैव गतार्थत्वाच्च तदयुक्तम्' इत्युच्यते। एवं **नवमपटलार्थसंग्रहः**॥

**दशमे पटले** आचार्याभिषेकविधिः, साधकाभिषेकविधिश्च प्रतिपाद्यते। तत्र प्रथमं यस्याचार्यकहेतुत्वेन प्रोक्ता गुणा दृश्यन्ते, तस्यैवाचार्याभिषेकः कार्यः, न तु दीक्षितमात्रस्येति वृत्तिः। तेषां गुणानां प्रदर्शनम्। तत्र दयाद्यात्मगुणविशिष्टत्वं, चतुष्पादार्थकुशलत्वं, नित्यादिकर्मानुष्ठाननिष्ठत्वं, शरीरेण कर्मणा वानिन्दितत्वं, विद्याव्रतानुष्ठातृत्वमित्येते गुणाः प्रदर्शिताः। चीर्णविद्याव्रतं नरम्' इत्युक्तत्वात् स्त्रीनपुंसकयोरत्र व्युदास इति वृत्तावुक्तम्।

अनन्तरं प्रसङ्गाद्विद्याव्रतविधिः प्रोच्यते। अत्र व्रतसमाप्त्यै नवनाभमण्डले भगवतो यजनं कार्यमिति निर्दिश्यते। संवत्सरकालमनुष्ठितविद्याव्रतस्यैवाभिषेकः कार्य इत्युच्यते। एतद्विद्याव्रतमेव साधकेन सिद्धावप्यनुष्ठेयं पूजाव्रतमित्यभिधीयते।

अष्टाविंशत्यानन्दादियोगेषु मध्ये सिद्धाख्ये एकोनविंशतितमे योगे शुक्लपक्षे रिक्तदोषहीनायां सुतिथौ आचार्याभिषेकः कार्य इत्यभिषेककालविधिनिरूपणम्। अत्रानन्दादियोगप्रदर्शनपट्टिका टिप्पण्यां प्रदर्शिता।

ततो यागभूमौ महामण्डलं प्रकल्प्य तत्र यथालाभं संपादितानष्टकुम्भान्सुलक्षणान्सुदृढान् श्वेतवस्त्राद्यलंकृतान्सर्वौषधियुक्तानधिवासयेदिति यागभूमौ कुम्भाधिवासप्रकारनिरूपणम्। अष्टकुम्भाभावे कलशमेकं शङ्खं वा कुर्यादिति सूच्यते।

ततोऽभिषेकविधिः प्रतिपाद्यते। अत्रैवमनुष्ठानक्रमो निरूप्यते— 'शिष्यं शङ्खवादित्रनिःस्वनैर्विविधैर्माङ्गल्यैः स्नातं चन्दनादिभिर्विलेपितं प्रावृतश्वेतवस्त्रं सारदारुमये पीठे निवेश्य, दूर्वादिमङ्गलैरसकृन्निर्मर्च्य, सुसिते वाससी परिधाप्य सर्वमन्त्रैः शिखाभेदेनाभिमन्त्र्य, यागभूमेर्बहिरुत्तरस्यां दिशि द्विहस्तोच्छ्रितसुश्वेतकमलमध्यस्थपीठे ध्वजतोरणपताकाद्युपशोभितेऽष्टाभिर्विद्येश्वरजप्तैः कलशैः क्रमेण पूर्वाभिमुखमुत्तराभिमुखो गुरुर्व्योमव्यापिमन्त्रमुच्चारयन्नभिषेचयेत्। ततः प्रावृतानार्द्रशुक्लवासोऽन्तरं भूषणैर्भूषयेत्' इति।

ततोऽभिषेकानन्तरकरणीयविधिः प्रतिपाद्यते। तत्र कृतपूर्वशिवतनुरप्यसौ गुरुः पुनरपि शुद्ध्यर्थं शिवतनुं कृत्वा मण्डलस्थं भगवन्तं प्रणम्य, प्रभुत्वचिह्नं पीठोष्णीषच्छत्रपादुकं तस्य समर्पयेत्। पुस्तकात्मकं शिवज्ञानं च दद्यात्। ततस्तं परमेश्वरपादयोर्विनिपात्य, 'गुरुत्वे अयं मया तवाज्ञया

नियुक्तः' इति परमेश्वरं विज्ञाप्य, सोऽपि शिष्य एवं वक्तव्यः 'पुत्रक योऽयं मत्तः सकाशात्प्राप्त' अधिकारः, स त्वयि स्थित इति कृत्वा शिवाज्ञया शास्त्रविहितेन क्रमेण पाल्यः न लोभादिना' इति। ततोऽग्नौ मन्त्रांस्तर्पयेत्। एवमाचार्यस्याभिषेकविधिर्ज्ञेयः।

साधकस्याभिषेकविधिरेवमेव कार्यः। किं तु तत्राभिषेके व्योमव्यापिमन्त्रस्य बाधेन स्वमन्त्रोऽभिहितः। साधकस्य प्रभुचिह्नं छत्रमुष्णीषं न समर्पयेदिति साधकाभिषेकविधिः प्रतिपादितः। आचार्यसाधकानामभिषेक उक्त इत्युक्तार्थोपसंहारः। सिद्धिविधानं व्यावर्ण्यत इति वक्ष्यमाणोपक्रमः। एवं **दशमपटलार्थसंग्रहः**॥

**एकादशे पटले** मन्त्रसिद्धेरुपाया वर्ण्यन्ते। तत्र प्रथमं साधकाभिषेकानन्तरं मन्त्रसिद्धौ प्राप्ताधिकारः शास्त्रविदामुत्तमः साधकः शिव-मन्त्र-गुरुविषयेण भक्तित्रयेणाविष्टो येनोपायेन मन्त्रसिद्धिं प्राप्नोति, स उपायोऽधुना वर्ण्यत इति पटलप्रतिपाद्यविषयसूचनम्।

साधकः शुचिर्गुरोर्गृहीतमन्त्रः ससहायो वनं प्रविश्य, शुभादिविशेषणविशिष्टं स्थानमासाद्य, तत्र गृहं प्रकल्प्य, विद्याङ्गमन्त्रैः पञ्चरङ्गिकसूत्रवेष्टितैः खादिरैः कीलकैरष्टभिस्तत्र रक्षां विधाय, तस्माद्बहिः संक्रमणस्थानं परिगृह्य, पाशुपतास्त्रमन्त्रमुच्चरन् हस्तप्रमाणं परिखात्वेन भूमिं निखनेदिति वने रक्षाविधानेन गृहकल्पनप्रकारः प्रदर्श्यते।

तस्मिन्गृहे वसन्फलमूलाशनः सदा भस्मधारी भस्मशय्यारूढः प्रातर्मध्यंदिने सायमर्धरात्रे च पूजायामग्निकार्ये च सक्तः षाण्मासिकं संहितामन्त्रमेकचित्तो जपेत्। तस्य साधकस्योत्तमसिद्धिर्भवेदिति संहितामन्त्रसिद्धिप्रकारः प्रत्यपादि।

अष्टोत्तरशतैः रुद्राक्षैर्निर्मितयाक्षमालया षाण्मासिकं साध्यमन्त्रजपकरणे दिव्यसिद्धिर्भवेत्। एवं पुत्रजीवाक्ष-पद्माक्ष-स्फटिक-शङ्खाक्षनिर्मिताभिरक्षमालाभिः साध्यमन्त्रजपकरणे क्रमेण मर्त्यसिद्धि-ब्रह्मपदसिद्धि-सर्वकाम्यार्थसिद्धि-वाग्वादजयसिद्धयो भवेयुरिति कथ्यते। अक्षमालायाः संपुटस्थापने जपार्थं ग्रहणे च मन्त्रप्रदर्शनम्। एवमक्षमालाभिः साध्यमन्त्रजपकरणेन साध्यानां विविधसिद्धीनां निरूपणम्।

जपकाले प्रयोक्तव्यस्य दर्भासनस्य लक्षणकथनम्। योगपादोक्तेषु पर्यङ्कादिषु चतुर्ष्वेकमासनं बद्ध्वा दर्भासने उपविश्य, तत्रोक्तं करणं च शनैः कृत्वा, हृद्व्योमकमले 'यश्च मन्त्रः सोऽहम्' इति सोऽहंभावनया मन्त्रं जपेदिति मन्त्रध्यानविशेषप्रतिपादनम्। सिद्ध्यर्थं मन्त्रजपकाले जायमानानां विघ्नानां निवारणाय साधकैरनुष्ठेयानां कर्मविशेषाणां समन्त्रकं निरूपणम्। वनाद्विनिष्क्रम्य मन्त्रसिद्ध्यै विधेयस्य पूजाहोमादेः प्रतिपादनम्। ततः पञ्चब्रह्ममन्त्राणां हृदयाद्यस्त्रान्तपञ्चशिवाङ्गमन्त्राणां सिद्धिप्रदव्रतान्तरवर्णनम्। ततः शक्तिशिवाङ्गविद्याङ्गमन्त्रसिद्धिप्रदव्रतान्तरवर्णनम्। स्थानात्स्थानं पर्यटतः साधकस्य मन्त्रै रक्षाकर्मनिरूपणम्। ततः संदिग्धव्रतविधिप्रदर्शनम्। अत्र शुभलक्षणयुक्तां स्त्रियमाहूय, तस्या हृदि साध्यमन्त्रमुच्चार्य साधकेन व्रताचरणं कर्तव्यमित्युच्यते। अन्ते च यदि तस्याः क्रीडने रुचिस्तया सह सुचिरं कालमप्रक्षीणबलः क्रीडेत। यदि तस्याः क्रीडने न रुचिस्तदा सा मोक्तव्येति च कथ्यते। अथवा लौकिकीं सिद्धिमभिकाङ्क्षमाणः साधकः पूर्ववत्सर्वं व्रतमसिधारोत्थितं कुर्यादित्युक्तम्। एवं रागानुविद्धानां नानाभोगविचेष्टनाय सिद्धिमार्गः प्रोक्त इत्युक्तार्थोपसंहारः। उच्चाटनादिकर्माणि वक्ष्यन्त इति वक्ष्यमाणोपक्रमः। एवम् **एकादशपटलार्थसंग्रहः**

**द्वादशे पटले** कर्मसंतानविधावुच्चाटनादीनि कर्माणि प्रतिपाद्यन्ते। तत्रादौ स्वमन्त्रलक्षणं प्रोक्तम्। ततो दक्षिणदिङ्नाथस्यार्चनं कृत्वा तस्मै बल्यर्थमयुतसंख्यया घृतपरिप्लुतबस्तमांसाहुतिदानं कर्तव्यम्। तुरुसंपुटमध्येन साध्यमन्त्रेण शत्रूच्चाटनं कुर्यादित्युच्चाटनविधिः। ततो मारण-विद्वेष-स्तम्भनानां, शान्तिपुष्ट्योः, आकर्षणवश्ययोः, प्रीतिरक्षयोः, उत्कीलन-विघ्ननिवृत्त्योश्च मन्त्राः। ततो मन्त्रविषये दीपन-ताडन-निर्मलीकरणानां विधिः। अनन्तरमग्निसंधाननिर्बीजकरणयोः, ज्वर-

ग्रहादिशासने, दुष्टसत्त्वनिग्रहेऽमृतीकरणे च विनियोक्तव्यमन्त्राः। पश्चादरूपादिपञ्चपदसाध्यानां फलविशेषाः। अत्र सौभाग्यमविषादता, ज्ञानोत्कर्षः, दुर्गन्धद्रव्याणां स्पर्शेन सुगन्धताप्राप्तिरित्यादयो जायन्त इत्युच्यते। प्राप्तकालस्य मृत्योर्वियोजनम्, क्षणाच्छत्रूणां यमसदनप्रेषणं च मुख्यफलतया निर्दिष्टम्। कर्माण्युक्तानीत्युक्तार्थोपसंहारः। संस्थापनं शृण्विति वक्ष्यमाणोपक्रमः। एवं **द्वादशपटलार्थसंग्रहः** ॥

**त्रयोदशे पटले** लिङ्गस्थापनप्रकारो वर्ण्यते। तत्र प्रथमं मन्त्रसिद्धिमभीप्सुना साधकेनादौ लिङ्गस्थापनं कर्तव्यम्। तस्मिन्संनिहितः परमेश्वरस्तस्यानिन्दितां सिद्धिं दद्यात्। मन्त्राश्चामोघशक्तियुक्ताः सन्तः साधकस्य वरप्रदा भवेयुरिति लिङ्गस्थापनफलकथनम्।

शुभस्वप्ने सुशकुने च दृष्टे शोभनयोगयुते दिने शिल्पिना सह शिलासंग्रहणाय गन्तव्यम्। नद्यन्तर्गता पर्वतस्था वा स्निग्धा घना निर्व्रणा शिला लिङ्गसंग्रहणाय ग्राह्या। एकवर्णा पर्वतस्था शिला गरीयसी। शिल्पिनं पूजयित्वा तत्सहायेन शनैः शिला संग्राह्या। शिलायाः पृष्ठमुखशिरोभागं ज्ञात्वा लाञ्छयेत्। शिलासमीपे विधिवच्चरुपाकं कृत्वा, भगवन्तं पूजयित्वा, वह्नौ घृताहुतिं विधिवद्धुत्वा, तत्रैव ब्रह्ममन्त्रान्स्मरन् स्वपेत्। एवं शिलासंग्रहणतदधिवासयोर्निरूपणम्।

ततः सर्वसिद्धयै त्रिहस्तप्रमाणं लिङ्गं कार्यम्। तत्र भागत्रयं कृत्वाधोभागे चतुरश्रं, मध्यभागेऽष्टाश्रमग्रभागे वृत्तं च कर्तव्यम्। भागत्रयमतिशोभनतया करणीयम्। छत्राकारं श्रेष्ठं शिरोवर्तनमथवा मयूराण्डकं वा विधेयमिति लिङ्गलक्षणं, तत्र शिरोवर्तनं च प्रतिपादितम्।

निर्मितस्य लिङ्गस्य शाणकोटचा संघर्षणेन तद्गतवर्णरेखाप्रयुक्तदोषविज्ञानप्रकारस्तथा तत्रत्यमण्डलरूपाणां गर्भाख्यदोषाणां विज्ञानप्रकारश्च निरूपितः। मण्डलरूपगर्भदोषाणां बाहुल्याद्विविच्य ते दोषा नात्र प्रतिपादिताः। मस्तकावर्तं लिङ्गं श्रेष्ठम्। पृष्ठावर्तं लिङ्गमनिन्दितम्। मध्यावर्तं कीलकाविद्धं वक्रं सगर्भं च त्याज्यमिति ग्राह्याग्राह्यलिङ्गप्रदर्शनम्।

शाणकोटचा संघर्षणानन्तरं गोवालरज्ज्वा संघर्षणं, वारिणा पञ्चगव्येन च क्षालनं कर्तव्यमिति लिङ्गशुद्धिकरणप्रकारप्रतिपादनम्। दोषशान्त्यै प्रायश्चित्तार्थं बहुरूपेण सर्पिषाहुतिशतं होम्यमित्युक्तम्।

ब्रह्मशिलायाः पिण्डिकायाश्च लक्षणं, वने लिङ्गस्थापनाय प्रासादविधानं, लिङ्गं प्रासादमानीय मण्डपे स्थाप्य लक्षणोद्धारकरणविधिः, लिङ्गशुद्धिपुरःसरं शयनाधिवासविधिः, लिङ्गस्थापनयोग्यकालः, ब्रह्मशिलान्यासप्रकारः, तत्र रत्नधात्वोषधिन्यासविधिः, ब्रह्मशिलोपरि लिङ्गस्थापनविधिः, पिण्डिकायोजनप्रकाराश्च निरूप्यन्ते। साधकेन शिल्पिपूजनं दक्षिणादानं च कर्तव्यमित्युक्तम्। उक्तस्य लिङ्गस्थापनविधेरुपसंहारः। प्रतिमानां रूपाणि वक्ष्यामीति वक्ष्यमाणोपक्रमः। एवं **त्रयोदशपटलार्थसंग्रहः** ॥

**चतुर्दशे पटले** प्रतिमालक्षणं प्रतिपाद्यते। प्रतिमास्थापनप्रकारोऽतीव संक्षिप्ततया दृश्यते। ईशानादिपञ्चब्रह्ममन्त्राणां हृदयाद्यस्त्रान्तानां पञ्चाङ्गमन्त्राणां च प्रतिमाकरणयोग्यप्रकृतिद्रव्याणि निरूप्यन्ते। सर्वे वैतस्तिकप्रमाणाश्चतुर्वक्त्रा अष्टभुजाः सर्वावयवसंपूर्णाश्च लक्षणज्ञेन शिल्पिना कर्तव्या इति कथ्यते। तृतीयेऽर्चनप्रकरणे तु गर्भावरणत्वेन ध्यानार्थं निर्दिष्टा ब्रह्माङ्गमन्त्राश्चतुर्भुजाश्चतुर्वक्त्रास्त्रिणेत्रा इत्यभिहिताः। अनन्तरमघोरविषये, तथास्त्रशिखाकवचेषु च विशेषलक्षणं प्रतिपादितम्।

ततो विद्येश्वराणां लक्षणकथनम्। तत्र त्रिशूलासिकराः शङ्खनिभा व्यालयज्ञोपवीतिनः शशाङ्कमौलयः, मण्डलयागे द्वितीयावरणविषये प्रोक्तलक्षणान्विताश्च भवेयुरिति लक्षणं प्रोक्तम्। तत्र चतुर्भुजाश्चतुर्वक्त्रास्त्रिणेत्रा इति विद्येशानां स्वरूपं ध्यानाय निर्दिष्टम्। प्रतिमाकरणद्रव्यं चात्र नाभिहितम्।

अनन्तरं प्रशस्ततरुणा चतुर्भुजा मण्डलयागोक्तवर्णान्विताश्च दिक्पालाः कर्तव्या इति दिक्पाललक्षणं प्रतिपाद्यते। निर्ऋतेर्यातुधानस्येव भयानकाकृतिः प्रणेया, प्रतिमा च मानुषास्थ्ना लोहेन वा कार्येति तद्विषये विशेषप्रदर्शनम्।

ततो वज्राद्यायुधविषये प्रतिमाकरणद्रव्यनिरूपणम्। तत्राङ्कुशप्रतिमाकरणद्रव्यप्रतिपादकग्रन्थो न दृश्यते। सर्वेऽस्त्रनायकाः स्वास्त्रोर्ध्वशिरसः कार्या इति तेषां लक्षणवर्णनम्।

ततो गायत्र्याः प्रतिमा शुभलक्षणसंपूर्णतया काञ्चनेन कर्तव्येति प्रतिमाकरणद्रव्यप्रदर्शनम्। पश्चाद् गौरीसावित्रीदुर्गाणां लक्षणप्रतिपादनम्। अत्र प्रतिमाकरणद्रव्यं न निर्दिष्टम्।

ततो येषां देवानामत्र मन्त्रो नोक्तस्तेषां व्योमव्यापिपदमन्त्रो ग्राह्य इत्युच्यते।

अनन्तरं विष्णोर्लक्षणवर्णनम्। स चाश्वत्थतरुणा कर्तव्यः। चतुर्बाहुः शङ्खचक्रगदाहस्तः श्रीवत्सलाञ्छित इत्युच्यते। रक्तचन्दनकाष्ठेन निम्बकाष्ठेन वा सूर्यः कार्यः। कार्तिकेयो विद्रुमेण करणीयः। स च षड्वक्त्रो बालः शक्तिहस्तः शिखिवाहनः। ब्रह्मा हेम्ना श्रीपर्णिदारुकाष्ठेन वा कर्तव्यः। स च चतुर्वक्त्रः कमण्डल्वक्षसूत्रधरः। विनायकः पिप्पलवृक्षेण कार्यः। अत्र कुबेरो धनदो न्यग्रोधवृक्षेण कार्य इति निर्दिश्यते।

ततः स्वनामाङ्कितमूर्तिना प्रणवेन च प्रतिमास्थापनविधिः साधनीयः। सर्वविधिषु विद्याङ्गपञ्चकं यथावद्योज्यमिति प्रतिमास्थापनविषये मन्त्रप्रदर्शनम्। पूजा च पुरा प्रोक्तवत्कार्येति प्रतिमास्थापनतत्पूजाकरणप्रकारवर्णनम्।

उत्तममध्यमकन्यससिद्धीनां देवतानिरूपणम्। उत्तममध्यमकन्यससिद्धिप्रदानां सदाशिवादिपदानां प्रतिपादनम्। सिद्धिं प्राप्तस्य साधकस्य लक्षणवर्णनम्। प्रतिमानां विचित्ररचना प्रोक्तेत्युक्तार्थोपसंहारः। समुदायसाध्यं शृण्विति वक्ष्यमाणोपक्रमः। एवं **चतुर्दशपटलार्थसंग्रहः** ॥

**पञ्चदशे पटले** समुदायप्रकरणेऽसिद्धमन्त्राणां सिद्धीकरणोपायाः, शत्रुवाङ्मनसस्तम्भनादिकर्माणि, शान्तिकर्मस्वभिचारकर्मसु च विधेया उपचारविशेषाश्च प्रतिपाद्यन्ते। तत्रोपक्रमे यत्सूक्ष्मं पुंवीर्यात्मन्यवस्थितं तेजः, तदेव सर्वदेवानां मन्त्राणां च प्रभावरूपेण भासत इत्यादिवर्णनेनैश्वरतेजोमहिमा निरूप्यते।

जपो, रक्षा, परिज्ञानं, निश्चयः, सत्त्वं, व्रतानि चेति षण्मार्गा मन्त्रसाधनविषये विलसन्तीति कथनम्। व्रताचरणेन संप्राप्तवीर्यातिशयस्य साधकस्य बलं सोढुमशक्नुवन्साध्यमन्त्रो यदि तस्य वशगो न भवति, तदा तन्मन्त्रसिद्धिसंपादनाय साधकेन विधेयस्य क्षीराभिषेकप्रकारस्य, होमविशेषप्रकारस्य च प्रदर्शनम्। कल्पोक्तविधिनाराधितेऽपि पराङ्मुखस्य साध्यमन्त्रस्य सिद्धीकरणे बहुधोपायवर्णनम्।

ततः शत्रुवाङ्मनसप्रध्वंसन-सोपलवृष्टिनिवारण–भूम्यम्भःप्रपातन-वायुस्तम्भन-जगत्त्रयभस्मीकरणानां प्रयोगविशेषाणां प्रतिपादनम्।

मन्त्रजपेन पीठेश-विघ्नेश-लोकपालपदप्राप्तिनिरूपणम्। अत्र जप्तव्यमन्त्रनिर्देशप्रतिपादको ग्रन्थो लुप्तः।

शान्तिकर्माकर्षणस्तम्भनमारणकर्मसु कर्तव्यानामुपचारविशेषाणां प्रतिपादनम्। ततः सर्वार्थसाधकोपचारप्रदर्शनम्। अत्र यदि मन्त्रनायकः स्वेन रूपेणाविर्भूय भाषेत, तदा तस्मै सादरमर्घ्यप्रदानं विधेयम्। अन्यथा विघ्नः स्यादिति सूच्यते। ततः साधकस्य रक्षाप्रदकर्म प्रतिपाद्यते। दीक्षाप्रकारो मन्त्रसिद्धिप्रकारश्च निरूपित इति क्रियापादोक्तार्थस्योपसंहारः। योगविधानं वर्ण्यत इति वक्ष्यमाणयोगपादार्थोपक्रमः। एवं **पञ्चदशपटलार्थसंग्रहः** ॥

**इति क्रियापादपटलार्थसंग्रहः** ॥

**योगपादपटलार्थसंग्रहः**

योगपादे सप्त पटलाः सन्ति। **प्रथमे पटले** योगोपन्यासप्रकरणे योगस्वरूपं प्रतिपाद्यते।

आत्मनो विषयवासनाभेदाद्विविधो मलो भवति। तत्र मुख्यः सूक्ष्मः सहजो मलः। विषयेषु प्रवृत्तस्य स्थूलोऽनात्मन्यात्माभिमानात्मको भ्रान्त्युत्थोऽतीव दुःखदः। अस्य मलस्यापमार्जनं कृत्वावस्थितिर्योगः। एतादृश्यावस्थित्यात्मनः स्वोचिता व्यक्तिरुपजायते। अमितद्युतेस्तेजसोऽभिव्यक्त्यर्थं भूत्यर्थं च योगाभ्यासो विधेय इत्यादिप्रकारैर्योगस्वरूपप्रतिपादनम्। प्रत्याहारो ध्यानं प्राणायामो धारणा तर्कः समाधिरिति षण्णां योगाङ्गानां नामतो निर्देशः क्रियते। योगस्वरूपमुक्तमित्युक्तार्थोपसंहारः। अङ्गानां लक्षणं वक्ष्यत इति वक्ष्यमाणोपक्रमः। एवं **प्रथमपटलार्थसंग्रहः** ॥

**द्वितीये पटले** योगाङ्गानि षट् प्रतिपाद्यन्ते। तत्र प्रथमं साभिलाषं स्वस्वविषयेषु प्रवृत्तानामिन्द्रियाणां निरोधः प्रत्याहारः। स्वस्थानात्प्रचलितस्य चित्तस्य निरोधेन सम्यक् स्वस्थानसमाश्रयो येन क्रियते स प्रत्याहार इत्यादि प्रत्याहारलक्षणं निरूप्यते।

बलान्निवारितापि लक्ष्येऽचला प्रीतिर्ध्यानमिति सदृष्टान्तं ध्यानलक्षणमुच्यते।

चैतन्येन सहाभेदेन स्थितस्य प्राणवायोर्गतेर्निरोधः प्राणायामः, स च त्रिविध इति प्राणायामसामान्यलक्षणं कथ्यते।

योगिनासनविषये विशेषतोऽभ्यासो विधेयः। तदैव स समाधिं कर्तुं प्रभवेदित्युक्त्वा, पर्यङ्क-कमल-भद्र-स्वस्तिकाख्यानां चतुर्णामासनानां विन्यासप्रकारः प्रतिपाद्यते।

शरीरस्य विशेषतः सुनिष्कम्पतासंपादनं करणमिति तत्स्वरूपमुक्त्वा निष्कम्पतासंपादनप्रकारो निरूप्यते। आदौ योगमार्गोक्तसुनिष्कम्पकरणेन सह संस्थितः सन्प्राणायामाभ्यासं कुर्यादिति सूच्यते। पूरक-कुम्भक-रेचकप्राणायामानां लक्षणप्रतिपादनम्

योगिनः प्रकृष्टोपकारभूताया धारणायाः सामान्यतः स्वरूपप्रदर्शनपूर्वकं कर्मभेदतः सा चतुर्धा भेदमापन्नेत्युक्त्वा, तद्भेदस्य 'आग्नेयी, वारुणी ईशानी अमृता' इति नामतो निर्देशः क्रियते। चतसृणां धारणानामपि कर्तव्यताप्रकाराः, तत्तद्धारणासाध्यफलानि च प्रदर्श्यन्ते। एवं धारणाख्ययोगाङ्गनिरूपणम्।

अनन्तरं हेयोपादेयविचाररूपं तर्काख्यं योगाङ्गं योगिनः प्रधानोपकारकत्वेन परिगण्यते। यतो योगी प्रभोः परमेश्वरस्य स्थानमेवोत्तमं पदं, नान्यदिति निश्चिनोतीति तर्काख्ययोगाङ्गं वर्ण्यते।

ततः सम्यक्साधितचित्तजयेन साधकेन स्पष्टं लक्ष्यवस्तु ध्येयमित्यादिना ध्यानस्यैव प्रकर्षावस्थारूपस्य समाधेः स्वरूपं प्रतिपाद्यते। समाधिस्थस्य स्थितिः कथं स्यादिति रूपकालंकारमूलतः सम्यक्प्रदर्श्यते। समाधिलब्धवीर्यो योगी प्रध्वस्तसमस्तकल्मषो भवेदिति समाधिफलं निरूप्यते। एवं समाध्याख्ययोगाङ्गस्य लक्षणप्रतिपादनम्। योगाङ्गानां षण्णां लक्षणं कथितमित्युक्तार्थोपसंहारः। योगसारो वक्ष्यत इति वक्ष्यमाणोपक्रमः। एवं **द्वितीयपटलार्थसंग्रहः** ॥

**तृतीये पटले** योगसारसमुच्चयः प्रतिपाद्यते। तत्र प्रथमं निःशब्दादिसुविशेषणयुक्तं सर्वदोषविनिर्मुक्तं च स्थानं योगाभ्यासकरणायोचितमिति कथ्यते। ततो योगाभ्यासकाले पर्यङ्कादिषु पूर्वोक्तेष्वेकमासनं स्थिरं बद्ध्वैकाग्रमना नासिकाविवराभ्यां यथावत् प्रच्छादनप्रसारणे कुर्वन्वायोर्निष्क्रमणं प्रवेशं च शनैः शनैः सम्यक् कृत्वा नाडीशुद्धिं प्रसाधयेदिति नाडीशुद्धिप्रकारवर्णनम्।

ततो योगिनो भूम्यनुक्रमाद्यावदभीष्टपदपर्यन्तं यानप्रकारो निरूप्यते। योगाभ्यासबलादत्यन्तदोषभूयिष्ठादस्मात्संसारसागराद्योगी निर्गतो दिवि दीप्ताङ्गतेजोमूर्तिर्विभातीति योगाभ्यासफलं प्रतिपाद्यते। योगविधानं समासतः कथितमित्युक्तार्थोपसंहारः। विशेषतोऽध्वक्रमेण योगविधानं वक्ष्यत इति वक्ष्यमाणोपक्रमः। एवं **तृतीयपटलार्थसंग्रहः** ॥

**चतुर्थे पटले** तत्त्वसाधनप्रकरणे प्रथमं पृथिव्यादीनि शिवान्तानि तत्त्वानि क्रमेण योगिना स्वशरीरे ध्यातव्यानीत्युच्यते। ततो मतङ्गमुनिना पार्थिवाणुसंघेभ्यः पृथक्तया पृथिवीतत्त्वस्वरूपं

किमन्यदस्तीति प्रश्नकरणम्। तत्र भगवता पृथिवीतत्त्वसाधनप्रकारनिरूपणम्। तत्र यत् प्रत्यक्षप्रमाणेनावगन्तुं न शक्यते, तदनुमानेन साध्यमित्युक्त्वा शेषवदनुमानं, पूर्ववदनुमानं सामान्यानुमानमिति त्रिविधानुमानं सलक्षणं सोदाहरणं च प्रदर्श्यते। तत आप्तवचनरूपस्यागमप्रमाणस्य प्रतिपादनम्। तत्राप्तो महेश्वर एव, नान्यो भवितुमर्हतीति युक्तिभिः प्रतिपाद्यते। ततः साधिदेवता पृथिवी योगसिद्धयर्थं स्वदेहे ध्यातव्येति प्रोच्यते। ततो ध्यानेन पार्थिवतत्त्वजयप्रकारवर्णनम्। एवमप्तत्त्वाग्नितत्त्ववायुतत्त्वव्योमतत्त्वजयप्रकारवर्णनम्। तत्तत्तत्त्वजयसाध्यफलानां च प्रदर्शनम्।

अनन्तरमनाधारमाकाशतत्त्वं कथं साध्यत इति मतङ्गमुनिना प्रश्नकरणम्। तत्र भगवता अवकाशेन धर्मेण शब्दरूपगुणेन चाकाशतत्त्वं सिध्यतीति युक्तिभिर्निरूप्यते। ततः पञ्चतन्मात्राणां साधनप्रकारवर्णनम्। ध्यानेन तन्मात्रजयविधानप्रकारनिरूपणम्। तन्मात्रजयाद्योगिनां जायमानानां फलानां प्रदर्शनम्॥

ध्यानेन कर्मेन्द्रियबुद्धीन्द्रियमनोऽहंकारबुद्धितत्त्वानां जयप्रकारस्य तत्तत्तत्त्वजयसाध्यफलानां च निरूपणम्। एवमेव ध्यानेन प्रधानजयप्रकारस्य तत्साध्यफलानां च वर्णनम्।

मतङ्गमुनिना शरीरव्यतिरिक्तविज्ञानसाधनं स्पष्टतया वक्तव्यमिति प्रश्नकरणम्। तत्र भगवता युक्तिभिर्विज्ञानसाधनप्रकारो वर्ण्यते।

तत्त्वध्यानविधिर्विस्तरतः प्रोक्त इत्युक्तार्थोपसंहारः। ततः पुंस्तत्त्वमुच्यत इति वक्ष्यमाणोपक्रमः। एवं **चतुर्थपटलार्थसंग्रहः**।

**पञ्चमे पटले** शिवतत्त्वोपलब्धिप्रकारो निरूप्यते। तत्र प्रथमं पुरुषो रागी भोक्ता, न सांख्यैरुक्तवत्सुशुद्धात्मेत्याक्षेपसमाधानपूर्वकं प्रतिपादनम्। ततो ध्यानविशेषकरणेन पुंस्तत्त्वजयप्रकारवर्णनम्। तज्जयसाध्यफलानां निदर्शनम्।

ततो ध्यानविशेषेण मायाकलाविद्यारागनियतिकालाख्यानां तत्त्वानां जयप्रकारस्तज्जयसाध्यफलानि चातीव संक्षेपतः प्रदर्श्यन्ते।

अनन्तरं योगिनां ध्यानविशेषेण शुद्धाध्वभोगप्राप्तिर्निरूप्यते। तत्र ध्यानविशेषेण सदाशिवतत्त्वशिवतत्त्वप्राप्तिप्रकारः, तत्रत्यविशिष्टभोगप्राप्तिप्रकारश्च वर्ण्यते। अत्र शिवतत्त्वं प्राप्तस्य कदाचन न पुनर्जन्मेहास्तीति प्रकृष्टं फलं निर्दिश्यते।

ततो मतङ्गमुनिना प्रधानपुरुषेश्वरतत्त्वानां स्वरूपं तेषां विभागश्च वक्तव्य इति प्रार्थना। भगवता तेषां यथावत्स्वरूपविभागप्रदर्शनप्रकारो वर्ण्यते।

ततः सप्तप्रकारमोक्षस्थानं, तत्तत्स्थानप्राप्तानां स्वरूपं च वर्ण्यते। तत्र अनन्तभुवनादूर्ध्वं तत्त्वभुवनात्मकानि सदाशिवनिवृत्तिप्रतिष्ठाविद्याशान्तिशान्त्यतीतपरमशिवलक्षणानि क्रमेणातिशयवन्ति सप्तैव मोक्षस्थानानि विलसन्ति। सदाशिवतत्त्वे संस्थिताः परमाणवो मूर्तिकेवलिनः स्मृताः। निवृत्तिस्थाः काम्याः, एतेऽपि मूर्तिकेवलिनो मताः। प्रतिष्ठायां विद्यमानाः सान्निध्याः शक्तिकेवलिनः स्मृताः। विद्यायां संस्थिताः सालोक्या योगकेवलिनो मताः। शान्तिनिलयाः सामीप्या ज्ञानकेवलिनः स्मृताः। शान्तिपृष्ठस्थाः शान्त्यतीताश्रिताश्च सारूपा ज्ञानकेवलिनो भवन्ति। एवमेतेषु षट्सु स्थानेषु संस्थिताः सर्वेऽपि सेश्वराः। सप्तमे परमशिवपदे संस्थिता निरीश्वरा विलसन्ति। एवं सप्तप्रकारमोक्षस्थानसंस्थितानां स्वरूपं प्रतिपादितम्। ध्यानसंपदा तत्त्वमार्गप्रदीपको विधिः प्रतिपादित इत्युक्तार्थोपसंहारः। भूत्यै विचित्रकर्मविधानं वक्ष्यत इति वक्ष्यमाणोपक्रमः। एवं **पञ्चमपटलार्थसंग्रहः**॥

**षष्ठे पटले** कर्मयोगः प्रतिपाद्यते। तत्र प्रथमं नानासिद्धिप्रदानि विचित्रकर्माणि प्रोच्यन्त इति प्रतिज्ञा। ततः प्राणजयविधिप्रकारो वर्ण्यते। प्राणजयाद्योगिनो वातपित्तकफप्रयुक्ता दोषा

नश्यन्ति। रुग्जराक्षुत्पिपासादयो न भवन्ति। वपुषो दीप्तिरनालस्यं प्रज्ञोत्कर्ष इत्येते संभवन्तीति प्राणजयफलप्रतिपादनम्।

ततो योगिनां प्राणजयाद्विचित्रकर्मकरणप्रकारो विस्तरतो वर्ण्यते। तत्र प्राणजयपूर्वकं विविध-ध्यानप्रकारेण जायमानानां फलविशेषाणां निरूपणम्।

ततो भगवान् शिवो मनसो व्यतीत इत्युच्यते। अतः कथं स मनसा ध्यातुं शक्येतेति मतङ्ग-मुनिना प्रश्नकरणम्। तत्र भगवता समाधिवशान्मनसि हीयमाने ध्यातुर्योगिनः सुनिर्मलं विज्ञान-मुदेति। तेन विज्ञानेन शिवपदं योगी विजानाति। ध्यातुस्तादृशज्ञानावाप्तिरेव परा काष्ठा भवति। तदा यथादर्शे दृशा दृश्यं पश्यति तथा स योगी शिवं पश्यतीति समाधानवर्णनम्।

योगविधानमार्गे भूत्यै विचित्रकर्मकरणप्रकारो वर्णित इत्युक्तार्थोपसंहारः। तत उद्घातसाध्यं प्रकृष्टं विधानं वक्ष्यत इति वक्ष्यमाणोपक्रमः। एवं **षष्ठपटलार्थसंग्रहः**॥

**सप्तमे पटले** उद्घातविधिरुच्यते। तत्र प्रथमं स्वभावतश्चलात्मनो निरुद्धस्य वायोरूर्ध्वं यातस्य ब्रह्मरन्ध्राब्जसंप्राप्तिरुद्घात इत्युद्घातविधानप्रकारनिरूपणम्। तत उद्घातशब्दार्थवर्णनम्। उद्-घातो योगिनः सिद्धिप्राप्तिं जनयति। वशंगतेनोद्घातेन योगिन ईप्सितफलावाप्तिरित्यादिप्रका-रेणोद्घातफलविवरणम्।

ततः पुरसंक्रमणप्रकारस्याथवा परकायप्रवेशमार्गस्य प्रतिपादनम्। योगिनः परशरीरयोगक्रमो विस्पष्टतया वक्तव्य इति मतङ्गमुनेः प्रार्थना। तत्र भगवता बहुधोद्घातकरणेन बीजफलपुष्पादिषु स्वचैतन्यं संधायान्येषु बहुषु लक्ष्येषु प्रविश्य, पुनर्दिव्येन चक्षुषा स्वचैतन्याधिष्ठितं स्पन्दमानं बीजाद्यं स्वकीयमिति ज्ञात्वा, तत्र प्रवेशप्रकारनिरूपणम्। एवं मृतमनुष्यशरीराणि पशुपक्ष्यादिशरीराणि वा निर्व्रणानि धारणाभिर्विशोध्य, तानि गन्धादिभिरलंकृत्य तत्र प्रविश्य योगिनः क्रीडनप्रकारवर्णनम्।

ततो रूपरसाद्यर्थविपर्ययादेर्दर्शनादिषु मृत्युभयनिवारणप्रकारनिरूपणम्। आपन्निवर्तनप्रकार-प्रतिपादनम्। संसाराद्विरक्तस्य योगिनोऽस्त्रच्छेदेन स्वदेहत्यागविधिकथनम्। विध्युक्तप्रकारेण देहत्यागं कृतवतो योगिनः शिवपदप्राप्तिरिति कथ्यते।

ततः सदाशिवात्परं शिवतत्त्वमेकमेव, नान्यानि बहूनीति नियमे को वा हेतुरिति मतङ्गमुनेः प्रश्नः। तत्र भगवता, अनन्तत्वाद्विभुत्वात् सूक्ष्मत्वात्कारणत्वाच्च शिवतत्त्वात्परं नान्यदस्तीति समाधानकथनम्।

ततो दातृभिरन्येभ्यो दीयमानं परमं पददानमात्मदानसमं भवति। आत्मदानादपि किंचि-दधिकं दातुं न शक्यते। एतच्च लोके युक्ततया न प्रतीयत इति मतङ्गमुनेः प्रश्नः। तत्र सदाशिवः स्वाधिकारतः स्वतःसिद्धेन स्वप्रभावेण साधकानां विविधाः सिद्धीः प्रददाति। ये तु स्वाधिकाराद्विरक्ता मुमुक्षवो भवन्ति, तेषां परं पदं ददाति। अन्येषामभीप्सितं पदं ददाति। स्वपदादप्यधिकपददानशक्तिरस्य परमेश्वरप्रसादसिद्धाधिकारनिबन्धनमिति भगवता समाधान-वर्णनम्।

योगिनामुद्घातवशादिन्द्रियजयान्मनोजयाच्चाभीष्टपदप्राप्तिः सिध्यतीत्युक्तस्य योगपादार्थस्योप-संहारः। ततश्चर्या प्रोच्यत इति वक्ष्यमाणोपक्रमः। एवं **सप्तमपटलार्थसंग्रहः**॥

**इति योगपादपटलार्थसंग्रहः॥**

## चर्यापादपटलार्थसंग्रहः

चर्यापादे दश पटलाः सन्ति। तत्र **प्रथमे पटले** समयानुक्रमो वर्ण्यते। तत्र प्रथमं नाना-वर्णेषु स्थितानां दीक्षितानामनुष्ठानाय सामान्यतो मया वक्ष्यमाणः परमेशमुखादवतीर्णश्चर्या-

क्रमो भवता समाहितेन श्रोतव्य इति भगवता मतङ्गमुनेर्नियोगः। दीक्षावसाने देशिकेन दीक्षितेभ्यः शिष्येभ्यस्तैरनुष्ठेयानामाचाराणामुपदेशः कार्यः। तैरपि यथावदुपदिष्टा आचाराः पालनीया इति प्रतिज्ञाकरणम्। ततः शिवनिन्दां, शिवशास्त्रनिन्दां, देशिकसाधकशिवभक्तनिन्दां च न कुर्यात्। देवनिवेदितं न मनसापि स्वोपयोगाय कार्यम्। देवादीनां छायालङ्घनं न कर्तव्यम्। वाङ्मनःकायकर्मभिः शिवाराधनसक्तानां तिरस्कारो न विधेयः। शिवालये विण्-मूत्रोच्चारणं नैव कार्यम्। उत्तमफलेप्सुना गुरुदेवाग्निकार्यविषये कुत्सितान्यपि कर्माण्यवश्यं कर्तव्यानि। शिवमनभ्यर्च्य न कदापि भोक्तव्यम्। एवमवश्यं सर्वैरपि सामान्येनानुष्ठेयाना-माचाराणामुपदेशः।

शिवभक्ताः शिववद्भावनीयाः। तान्प्रति लौकिको विचारो न कर्तव्य इत्युच्यते। समयिषु मध्ये यः पूर्वं संस्कृतः, स तेषां ज्येष्ठत्वेन मन्तव्यः। एवं पुत्रकादिष्वपि पूर्वसंस्कृतस्य ज्येष्ठत्व-मवगन्तव्यम्। एवं समयिनः पुत्रको ज्येष्ठः, पुत्रकात्साधको ज्येष्ठः, साधकाद् आचार्यो ज्येष्ठ इति समय्यादिपदक्रमाज्ज्येष्ठत्वमधिगन्तव्यमित्युच्यते।

गुरोरग्रतो ज्येष्ठानामासनं देयम्। तेषां यथाक्रमं शुश्रूषावन्दनादिकं गुरोरचक्षुर्विषये कार्य-मित्युच्यते।

ततः पुत्रकः परमार्थतो दीक्षया शिवतत्त्वे नियुक्तः। साधकस्तु तदभिलषितेऽपरे पदे नियुक्तः। आचार्यस्त्वधिकारपदे नियुक्तः शिवसमानत्वाज्ज्यायान् भवति। तथापि त्रयोऽपि यवीयांसो भवन्ति। अत एतेषु मध्य आचार्यस्य परं पूज्यतमत्वं कथं भवतीति मतङ्गमुनेः प्रश्नः। तत्र लोकानुग्रहकारणाद् गुरुत्वे संस्थितस्योत्कृष्टपदमाहात्म्यात्पूज्यतमत्वं सिद्धमिति भगवता समाधानकथनम्।

आचारानुवर्तिनाचार्येण स्वशिष्या विनये नियोज्याः। गुणिषु भक्तिः कार्या। ज्यायसापि तपस्वी साधकः पूज्य एव इत्याद्युच्यते। उक्तस्य समयानुक्रमस्योपसंहारः। आचारो वक्ष्यत इति वक्ष्यमाणोपक्रमः। एवं **प्रथमपटलार्थसंग्रहः** ॥

**द्वितीये पटले** आचारा वर्ण्यन्ते। तत्र प्रथमं साधकैर्दृष्टादृष्टफलप्राप्त्यै लौकिकोऽप्याचारो-ऽनुष्ठेयः। मुक्तये सिद्धये च स्वाम्नोयोक्तः शैव आचारः प्रयत्नेन पालनीयः। यद्यपि वैशेषिके शैवाचारे लौकिकाचारस्याङ्गत्वं न भवेत्। तथापि सर्वसामान्यो लौकिकाचारोऽपि साधकैः पालनीय एव इत्युच्यते। यस्याचारस्य पालने दोषो नास्ति, त्यागे गुणोऽपि नास्ति स आचारः सामान्य इति सामान्याचारलक्षणं कथ्यते।

सहायं विना बहिर्यानं, रात्रावन्धकारे पर्यटनं, छत्रदण्डपादुकाभिर्विना गमनमेतानि वर्ज्यानीति कथ्यते। तथान्यैः सह भाषणे वर्जनीयानां पारुष्यकापट्यादिदोषाणां प्रतिपादनम्। वस्त्र-शय्यासनादीनि परस्परं संकीर्णानि न कार्याणीति प्रदर्शनम्। एवं वर्जनीयानामाचाराणां निरूपणम्।

सुप्तोत्थितेनावश्यं जलस्नानं कार्यम्। विण्मूत्रोत्सर्जने, भुक्तौ, संध्यासु च भस्मना स्नानं कर्तव्यमिति स्नाननिमित्तप्रतिपादनम्।

ततो योगाभ्यासो जपः शास्त्रं लिङ्गाराधनमाचार्योपासनमित्येताः शिवशासने पञ्च शक्तयः। एतासु पञ्चसु शक्तिष्वाचार्योपासनं मुख्यमिति कथनम्। विण्मूत्रोत्सर्जनकरणविधिप्रदर्शनम्। भेषजवस्त्रशयनछत्रपादत्राणादिदानेन तथा भोजनाम्बुदानेन च वृद्धातुराः शिवभक्ताः पालनीयाः। विशेषतो दीक्षिता रक्षणीया इति शिवभक्तपालनप्रकारः। दीक्षितेन सर्वदा शुचिना भूत्वा परमेश्वरस्मरणं कर्तव्यम्। एवं कर्तव्यानामाचाराणां निरूपणम्।

वस्त्रासनकर्णभूषणदण्डानां लक्षणप्रतिपादनम्। उक्तस्य सामान्याचारस्योपसंहारः। पुत्रकाणां

गुरौ वर्तनप्रकारो वर्ण्यत इति वक्ष्यमाणोपक्रमः। एवं **द्वितीयपटलार्थसंग्रहः** ॥

**तृतीये पटले** पुत्रकस्य गुर्वनुसरणप्रकारो निरूप्यते। पुत्रको गुरोः पूर्वं शयनादुत्थाय यथाविधि निर्वर्तितशौचस्नानादिकः पयोमृद्दन्तकाष्ठैः सह गुरुं प्रतीक्षमाणस्तिष्ठेत्। प्रबुद्धो गुरुर्यदादिशति तत्कर्म प्रहृष्टः कुर्यात्। गुरोः परोक्षेऽपि पुत्रकेण गुर्वादिष्टं कर्म कर्तव्यम्। आत्मनः स्थितये भिक्षाटनादिकं कर्मापि तदनुज्ञात एव कुर्यात्। गुर्वनुज्ञातः शुचौ देशे शुचिः पठेत्। गच्छन्तं गुरुमनुगच्छेत्। यदि स तिष्ठेत्तदा स्वयमपि तिष्ठेत्। गुरौ सुप्ते स्वयमपि सुप्यात्। न क्वचिदपि स्वातन्त्र्यमवलम्बेत। एवं प्रतिदिनमनुष्ठेयाः पुत्रकस्याचारा विहिताः। प्रसङ्गादनध्यायकाला निर्दिष्टाः। ततो गुरुनिन्दा सर्वदा वर्ज्या। गुरुनिन्दाश्रवणमपि न कार्यम्। गुरुनिन्दकोऽवश्यं हन्तव्यः। सर्वप्रयत्नेन शिष्येण गुरोः सुखं प्रकर्तव्यम्। शिववदाचार्यं पूजयेत्। गुरोर्द्रव्यं स्वार्जितद्रव्यमिव पालयेत्। एवमादयः शिष्याचाराः प्रोच्यन्ते। गुर्वनुवर्तनप्रकारो निरूपित इत्युक्तार्थोपसंहारः। समय्यादिचतुर्णामपि कर्तव्याः समयाचारा वक्ष्यन्त इति वक्ष्यमाणोपक्रमः। एवं **तृतीयपटलार्थसंग्रहः**।

**चतुर्थे पटले** समयिपुत्रकसाधकाचार्याणां चतुर्णामपि कर्तव्या आचाराः प्रतिपाद्यन्ते। तत्र प्रथमं समयी गुरोः सर्वात्मनाधीनो दासवत्तिष्ठेत्। समयिन इयं चर्या मोक्षदेति समयिवृत्तिनिरूपणम्।

अत्र तत्त्वविचारान्मुक्तिरिति विद्यापादे, दीक्षात इति क्रियापादे, योगाभ्यासक्रमेणेति योगपादे चाभिहिता। अत्र चर्या मोक्षदेत्युक्तिः कथमुपपद्यत इति मतङ्गमुनेः प्रश्नः। तत्र शक्तिपातवशादव्यभिचारिणी भक्तिः संजायते। भक्त्याविष्टः पुमान् गुरुमाराधयेत्। गुर्वाराधनरूपाश्चर्याद्याः शक्तिपातस्य बाह्यलिङ्गानि भवन्ति। अतश्चर्याद्या मुक्त्यर्थमुपचर्यन्त इति भगवता समाधानप्रतिपादनम्। ततो वाचा, मनसा, कायेन, कर्मणा, हृदयाध्यवसायेन च भगवत्सान्निध्यकरणरूपाः पञ्चविधा भक्तयो निरूपिताः। भक्त्याविष्टस्य प्रणष्टरागस्य पुंसः शिवत्वं व्यक्तिमेतीति भक्तिप्रयोजनकथनम्।

ततः सामान्याचारसंपन्नो गुरुदेवाग्नितत्परः शान्तस्तत्र तत्र स्थितः पुत्रक इति पुत्रकवृत्तिप्रतिपादनम्। तथा साध्यमन्त्रैकचित्तस्तपस्वी स्वानुष्ठाने सततमुद्यतः साधक इति साधकचर्यावर्णनम्। आचार्यो जपध्यानार्चनाग्निकार्याणि युक्तितो नातिविस्तरेण कुर्यात्। शक्तिपातवशादुत्कृष्टचेतसां शिष्याणां दीक्षाव्याख्यानादिकं कुर्यादित्याचार्यवृत्तिप्रतिपादनम्। एवं समयिपुत्रकसाधकाचार्याणां वृत्तयः प्रतिपादिताः।

ततो देशिकेन शिवतन्त्रार्थकथने शिष्यानुक्रमः सम्यग्वक्तव्य इति मतङ्गमुनेः प्रश्नः। तत्र भगवता आड्वालकादित्रयोदशविधानां शिष्याणां लक्षणप्रतिपादनम्। तत्र पारमेश्वरे तन्त्रे प्रवेशं विनासंबन्धवदुक्तिषु प्रविश्य यो विषयान्निश्रयेत्, स आड्वालक इत्युच्यते। यस्य हृदि गृहीतस्यार्थस्य न स्थितिः, स आधारदौर्बल्यान्निराधार इति कथ्यते। य आलस्यात्तन्त्रं श्रोतुं नोत्सहेत, स प्रमादीति प्रोच्यते। यश्चोद्यमानोऽपि तन्त्रश्रवणे प्रयत्नादिविहीनो निद्रावशो भवेत्, स तामस इति व्यपदिश्यते। पारमेश्वरं शास्त्रमाद्यन्तं निपुणमज्ञात्वा किंचिच्छिद्रमनुप्राप्य विपरीतं प्रतिवक्ति, स क्षतदृग् इति भण्यते। आरब्धमार्गाच्च्युतमर्थं यः पृच्छेत्, स व्यापक इतीर्यते। सर्वदा मौनेन गुरूक्तं विजानन् स्वधर्मं पालयन्संशयेनापि यः किंचिदपि न पृच्छति, स पालक इति व्यपदिश्यते। यो गुरोः सकाशात्सम्यक् शास्त्रं सावधानं गृह्णन्नपि न मया किंचिदप्यस्माच्छ्रुतमिति वदति, स गालक इति व्यवह्रियते। यो व्याख्याकाले कृतोद्यमी गुरोः सुसहायं करोति, स धौरेय इति भण्यते। यः सम्यग्विषयमजानन्नपि गुरुणा प्राश्निकेन चोक्तमेवमेव स्यादिति ब्रूयात्, स अनुमत इति कथ्यते। यो गुरूक्तं सर्वमविचार्याग्निवत्स्वीकरोति

स पावक इति व्यपदिश्यते। योऽम्बुवद्येन मार्गेण नीयते, तत्र तत्र प्रहृष्टः प्रयाति स अम्बुरिति प्रोच्यते। यः स्वधिया सम्यग्विचार्य गुरोः सकाशाद्विषयान्गृह्णाति स विचारधीरिति कथ्यते। अयमेव शिष्येषु प्रवर इति च वर्ण्यते। एवं त्रयोदशविधशिष्यलक्षणं प्रोक्तम्।

यः पदोक्तविधिप्रदर्शनेन विषयानवधारयितुं क्षमः, तस्य पदच्छेदसमासादिकं सम्यक्प्रदर्श्य निष्कृष्यार्थो वक्तव्यः। यत्र विरुद्धार्थप्रतिपादकपदद्वयदर्शनेन प्रतिपाद्यवस्तुनो वैषम्यं दृश्यते, तत्र येन मार्गेण वस्तुविरोधः परिहर्तुं शक्यस्तादृशो मार्गोऽवलम्बनीयः। यत्र प्रकृतवाक्यदर्शनात् प्रतिपाद्यविषयस्य निर्णयो न जायते, तत्र समीपस्थवाक्येन, एषणया वार्थप्रतिपादनेन वस्तुनिर्णयः कार्यः। एवं येन येन मार्गेणार्थो निर्णेतुं शक्यते स स मार्गोऽवलम्बनीय इति व्याख्यानविषये प्रक्रियात्रयनिरूपणम्।

ततो मन्दमेधसां शिष्याणां तत्त्वभुवनक्रमः स्वस्वनामनिर्देशपूर्वकं सम्यक् प्रदर्शनीयः। शिष्येण सम्यगयमर्थो यथावधारितो भवेत्तथा विलिख्य पठनीयः। अयं विषयो दीक्षायां विस्तरेण नोपवर्णित इत्युच्यते।

सुमेधसां शिष्याणां विचारोक्त्या शास्त्रव्याख्यानं स्वाम्नायप्रकारेण कर्तव्यम्। हेयोपादेयविषयाः सम्यग्व्याख्यानेन प्रतिपादनीयाः। विरुद्धवाक्यसन्दिग्धवाक्यादिविषये स्वाम्नायानुरोधेनैव निर्णयः कर्तव्यः। क्वचित्स्वाम्नायादृते शास्त्रयुक्त्यार्थनिर्णयः कार्यः। एवं व्याख्या प्रकृष्टवचसा स्वाम्नायमार्गमाश्रित्य विधेयेति कथ्यते।

शिवं, गुरुं, शास्त्रं च पूज्य गुरुणा व्याख्यानप्रारम्भः कार्यः। शिष्यैरपि संक्षेपाद्यथान्यायं पूजा विधेया। परमेशानपूजां विना शास्त्रग्रहणं वृथा भवेत्। एवमुक्त्वा पूजाप्रकारः संक्षेपेण प्रोक्तः। अथ प्रथमतो वाचकेन व्याख्येयं पटलमखिलं वाच्यम्। व्याख्यात्रा गुरुणा श्लोकं समुच्चार्य गुरुशिष्यपरम्परागतशास्त्रावतारक्रमसूचनपुरःसरं 'मयापीदं शास्त्रं शिष्येभ्यो युष्मभ्यं व्याख्येयम्। विनयान्विता यूयं शृणुत' इति शिष्याः श्राव्याः। एवं श्राविताः शिष्या भूतले शिरसा प्रणम्य, 'भवत्प्रसादतो वयं धन्या भवामः। इतःपरमस्माभिरन्वेष्यं किमपि न विद्यते' इति वक्तव्यम्। गुरुणा स्वाम्नायक्रमेण न्यायेन प्रोक्तक्रमेण व्याख्येयम्। शिष्यैरपि संशयव्यक्त्यै पुनः पुनः प्रष्टव्यम्। गुरुणापि यथा शिष्यैः सम्यगनुगम्यते, तथा प्रतिवक्तव्यम्। एवं व्याख्यानक्रमो वर्णितः। अत्र प्रसङ्गात् संसारात्सुविरक्तस्य निःश्रेयसे शिवत्वव्यक्तिं प्रति प्रवृत्तिः संबन्धः, यस्मिन्व्यक्ते परमा बन्धनिवृत्तिः संजायते सा प्रयोजनमिति संबन्धप्रयोजनयोः सूचनम्। एवं व्याख्यानक्रमः प्रादर्शि।

गुरुणा प्राक् सूचितार्थविरोधेन सूत्रार्थव्याख्याने कृते, स्वसिद्धान्तविरोधेनार्थबोधने, प्रक्रान्तवस्तुनोऽवबोधनं विना वस्त्वन्तरावबोधने, पूर्वापरविरोधेन पदस्यार्थकरणे, प्रकृताध्यायविषयं प्रकृतपटलविषयं वा परित्यज्य संबन्धं विना विषयान्तरबोधने चैतेषु पञ्चसु विषयेषु स्पष्टतया विषयावबोधाय शिष्यैः प्रश्नकरणे तेषां दोषो नास्ति। एभ्यः पञ्चप्रकारेभ्योऽन्यत्र प्रश्नकरणे शिष्या बुधैर्निन्दनीया इति पञ्चविधचोद्यमार्गाणां प्रदर्शनम्।

गुरुणा च यथा दोषो न भवेत्तथा प्रतिवक्तव्यम्। सर्वं शैवतन्त्रं यथाविरोधेन नेतुं शक्यते, तथाचार्येण समाधानं वक्तव्यमिति समाधानकरणाय स्वाम्नायादयो बहवो मार्गा निर्दिष्टाः। एवं गुरुणा वक्तव्यसमाधानप्रकारनिरूपणम्।

व्याख्यानसमाप्तौ शिष्यैर्गुरोः पादौ प्रणम्य, यथावदङ्गशुश्रूषा विधेया। ततः स गुरुः शिष्यैः क्षमयितव्य इति व्याख्यासमाप्तौ शिष्यकरणीयस्य प्रतिपादनम्।

पूर्वोक्तप्रकारेण व्याख्याता गुरुः शिष्यान्भवसागरादुत्तारयेत्। यश्च शिष्यो भक्त्या शृणुयात्, स गुरुसंतानक्रमं पालयितुं क्षमो भवतीति व्याख्यानफलनिरूपणम्।

समयिपुत्रकसाधकाचार्याणां चतुर्णामपि समयाचारा विभज्य प्रोक्ता इत्युक्तार्थोपसंहारः। भूयोऽपि सम्यक्प्रविभागेन समयाचारा वर्ण्यन्त इति वक्ष्यमाणोपक्रमः। एवं **चतुर्थपटलार्थसंग्रहः** ॥

**पञ्चमे पटले** त्रितयविधानप्रकरणे कर्मिणां, योगिनां, ज्ञानिनां त्रयाणामाचाराः प्रोच्यन्ते। तत्र प्रथमं पूर्वमुक्ता आचार्यादयः समय्यन्ताश्चत्वारोऽपि स्वाचाराभिरता वासनातः कर्मी योगी ज्ञानी इति त्रिधा भिद्यन्ते। तेषां लक्षणं वक्ष्यामीति प्रतिज्ञा। बाह्ये आभ्यन्तरे च स्नानपूजाग्निकर्मस्वासक्ताः कर्मिणः। लक्ष्याभ्यासजयेऽभिरता योगिनः। प्रध्वस्तकल्मषा निःसंशया ज्ञानमार्गेऽधिकतयासक्ता ज्ञानिन इति सामान्यतो लक्षणमभिधीयते।

ततोऽसितं सितं सितासितमिति कर्म त्रिविधं प्रसिद्धम्। एतच्च लोकतो वेदतः शास्त्रतश्च विहितं भवति। हिंसाचौर्यादिकमसितम्। वापीकूपतटागादिविधानं सितम्। वेदविध्यपेक्षयोक्तं सितासितम्। एतत्त्रिविधमपि कर्म भोक्तुर्भोगोपोद्वलकत्वादसितमेव भवति। अत इदं त्रिविधं कर्म शिवोदितेऽस्मिञ्शास्त्रे नेष्टम्। अत्र शास्त्रे सिद्धचै प्रोक्तं सितं कर्म तु दीक्षितानामुत्कृष्टज्ञानवतां साधकानां प्रकृष्टपदसाधकं भवेत्। तदाचरणात्ते दीक्षिताः साधका भोगान्भुक्त्वा प्रकृष्टपदभाजो भवन्ति। एवं कर्मत्रैविध्यप्रतिपादनम्।

ततो वेदाद्यन्तर्गतं कर्म नित्यैर्वेदमन्त्रैर्निर्वर्त्यते। तैर्निर्वर्त्यमानं कर्म फलदं भवतीति मीमांसकच्छायया मतङ्गमुनेराक्षेपप्रतिपादनम्।

ईश्वराधिष्ठितमन्त्राणामेव कर्मफलप्रदत्वं, न तु निरीश्वराणां शब्दमात्राणाम्। मन्त्रैः प्रतिपाद्यमानानां देवतानामपि मूर्तिमत्वं सिद्धम्। स्वतन्त्रः परमेश्वर एव जगतः कर्ता। ईश्वरचोदनादेवास्वतन्त्रः पशुः सितासिते कर्मणि प्रवर्तत इति भगवता समाधानवर्णनम्।

ततो मन्त्रमयी क्रिया विप्रादित्रैवर्णिकानामेव विहिता। जातितो जघन्यत्वाच्छूद्रस्य मन्त्रसंस्काररहितेति विभागो वैदिके मार्गे दृश्यते। तादृशो विभागोऽत्रास्ति वेति मतङ्गमुन्याक्षेपः।

चतुर्णामपि वर्णानामियं पारमेश्वरी दीक्षा मन्त्रसंस्कारतः सामान्यैव। किं तु शय्यासनपानादिषु शूद्राणां पृथक्स्थितिरेवेति भगवता समाधानवर्णनम्।

ततः शूद्रजातेर्मन्त्रदर्भघृतादिभिः ब्राह्मणेन कर्मनिर्वर्तनं कुत्सितमिति मतङ्गमुनेराक्षेपः। जातिभेदव्यवस्था लोकतः सिद्धा। चतुर्णामपि वर्णानां दीक्षा कर्तव्येति नियोगोऽस्ति। ईश्वरनियोगनिर्वर्तनमाचार्यस्य विप्रस्य नैव दोषाय भवेत्। विभोराज्ञा प्रयत्नतः पालनीया सर्वैरपि। संसारवैतृष्ण्यादिलिङ्गतः शक्तिपातविशिष्टा इति ये सुपरीक्षिताः, तेषामेव शिष्टानां शिवात्मकैर्मन्त्रैः शिवमूर्तिनाचार्येण संस्कारः क्रियते। अतः शिष्टानां शूद्राणामाचार्येण दीक्षाकरणमकुत्सितमिति भगवता समाधानवर्णनम्।

ततः कर्मी भक्तियुक्तो देवार्चनाग्निकार्येषु चतुष्कालेषु कृतोद्यमो भवेत्। देवाग्निगुरुकार्येषु कुत्सितकर्मापि कर्मिणा निर्वर्तनीयम्। कर्मिणां कर्माचरणं मुक्त्यै, न बन्धाय। गुरुणापि स्वाधिकारो यावदन्यत्र समर्प्यते तावत्कालं शिष्याणां दीक्षाव्याख्यानादि कर्म निर्वर्तनीयमित्यादिप्रकारैः कर्मिचर्या प्रतिपाद्यते।

योगी स्वल्पाम्बुभोजनो वाग्यतः संयमी सर्वजन्तुषु दयावान् मित्रारिविषये समदर्शी जितद्वन्द्वो भवेदित्यादिप्रकारैर्योगिचर्या वर्ण्यते।

ज्ञानी मायात्मकाद्बन्धाद्विश्लिष्टः शुद्धाध्वनि लीलयैव विचरन्मुक्तात्मा स्वोचिते पदे संस्थितो भवेदित्यादिप्रकारैर्ज्ञानिचर्या प्रोच्यते।

तत आक्षेपसमाधानाभ्यां शुद्धाध्वनि भोगभुजां रुद्राणूनां परिस्थितिर्निरूप्यते। मायात्मिका सृष्टिः स्थूला, शुद्धाणुनिलया सृष्टिः सूक्ष्मेति सृष्टिद्वयस्वरूपवर्णनम्।

त्रयाणां कर्मियोगिज्ञानिनामाचारविधानं वर्णितमित्युक्तार्थोपसंहारः। शौचविधिर्वक्ष्यत इति वक्ष्यमाणोपक्रमः। एवं **पञ्चमपटलार्थसंग्रहः** ॥

**षष्ठे पटले** शौचविधिः प्रतिपाद्यते। तत्र प्रथमं बाह्यावयवानां शुद्धिः मृदा तोयैश्च कर्तव्येति सामान्यतः शुद्धिप्रकारो वर्णितः। ततो मनसः, इन्द्रियाणाम्, अहंकारस्य, बुद्धेश्च क्रमेण सत्येन, यमादिभिः, शमेन, सङ्गत्यागेन च शुद्धिरित्यभिधीयते। ततः प्राणायामबलात् पञ्चप्राणादिवायूनां, ध्यानाद् गुणात्मनः प्रधानस्य च शुद्धिरित्युच्यते। आत्मनस्तु तत्त्वविवेकाच्छुद्धिर्भवेदित्युच्यते।

ततो मतङ्गमुनेः प्रार्थनया बाह्यावयवशुद्धिप्रकारो यथावद्विस्तरेण वर्ण्यते। तत्र मृत्तोयानां लक्षणं सम्यक्प्रतिपाद्यते। ततः करचरणादिबाह्यावयवेषु शिरसि च श्वमार्जारखरादीनामस्पृश्यानां मृगाणां लेहनादौ शुद्ध्यर्थं कर्तव्यः स्नानजपप्रकारो निरूप्यते। अनन्तरं सवर्णैरदीक्षितैर्बाह्य-वर्णैश्च स्पर्शे शुद्ध्यर्थं कर्तव्यः स्नानप्रकारोऽभिधीयते। ततो रेतोत्सर्गविषये शुद्ध्यर्थं विधेयः स्नानजपप्रकारो वर्ण्यते। एवं निर्माल्यसंकरे निर्माल्यभक्षणे च शुद्ध्यै कर्तव्यस्य जपप्रकार-स्याभिधानं दृश्यते।

ततो मृद्दारुलोहपात्रविषयेऽस्पृश्यस्पर्शशङ्कायां विधेयः शुद्धिप्रकारः प्रतिपाद्यते। ततो वस्त्र-विषये ताम्रपात्रकांस्यपात्रविषये, धातुवर्गविषये च शुद्धिप्रकारो निरूप्यते। तथाश्मजातानां, वैणवानां जलजानां शङ्खादीनां पात्राणां फलपात्राणां च शुद्धिप्रकारः प्रतिपादितः। तत ऋतु-मत्स्त्रीविजातिभिः स्पर्शे मृत्पात्राणि त्याज्यानीत्युक्तम्। अनन्तरं समयप्रमादे, अभक्ष्यभक्षणे, अगम्यागमने च शुद्ध्यै कर्तव्यजपप्रकारप्रतिपादनम्।

ततः स्थित्यर्थमुचितं वस्तु न्यायत उपार्जितधनाद्ग्राह्यम्। न लोभेनाधिकतया ग्राह्यम्। वस्त्रशय्यासनादीनामन्यायतो ग्रहणे प्रायश्चित्तकरणप्रकारो निरूप्यते। देवाग्निगुरुकार्येषु गृहीतस्य न्यायतस्तत्र निवेदनाच्छुद्धिरित्यभिधीयते। ग्लानेभ्यो यतिभ्यः औषधं तु सर्वेभ्यो ग्राह्यम्। तत्र न दोषोऽस्तीति प्रतिपाद्यते। ततः खरोष्ट्रकाकमार्जारश्वशृगालादिभिः स्पृष्टलीढाघ्रातानां वस्तूनां ग्रहणविषये वस्तुबलाबलं ज्ञात्वा कर्तव्यः शुद्धिप्रकारो वर्ण्यते। अनन्तरं घृतलवणगुड-मधूनामिक्षुरसफलदधिक्षीरपक्वान्नानां विषये कर्तव्यः शुद्धिप्रकार उच्यते। ततो वाङ्मनःकाय-कर्मभिः परेभ्यः प्रमादतो ज्ञात्वा वा दुःखोत्पादने शुद्ध्यर्थं विधेयो जपप्रकारो वर्ण्यते। तथा गुरोरपवादकरणेऽपि विधेयः शुद्धिप्रकारो निरूपितः। साधकत्रितयविषयेऽविशेषात्समुचितं विधानमुक्तमित्युक्तार्थोपसंहारः। तेषां वर्तनार्थं भिक्षाटनं वक्ष्यत इति वक्ष्यमाणोपक्रमः। एवं **षष्ठपटलार्थसंग्रहः** ॥

**सप्तमे पटले** यतिनां भिक्षाटनविधिरुच्यते। तत्र प्रथमं भिक्षाटनाय गमनकाले विधेयः क्रिया-क्रमो निरूप्यते। ततो भिक्षाटने त्याज्यानि वैद्यनापितादिगृहाणि निर्दिश्यन्ते। ततो देवाग्न्य-तिथिपूजादिकं पात्रशुद्धिश्च यस्मिन् गृहे दृश्यते, तस्मिन् गृहे भिक्षा ग्राह्येत्यादिना ग्राह्य-गृहनिरूपणम्। तैलाभ्यक्तया, गर्भिण्या, कुत्सितया च नार्या दत्ता भिक्षा नादेयेत्यादिना वर्ज्य-भिक्षा प्रोच्यते। अन्नग्रहणसमये स्मर्तव्यमन्त्रप्रदर्शनम्। भिक्षाटनसमये वाग्यतः पर्यटेत्। अतीतं गृहं प्रत्याहूतोऽपि न निवर्तेत। न च दत्तं परित्याज्यमित्यादिनियमो विधीयते। ततो भिक्षाटनानन्तरं गृहं गत्वा तत्र कर्तव्यो विधिः प्रदर्श्यते। तत्र गृहीतभिक्षाया लिङ्गाचार्या-नलात्मसु बल्यर्थेऽतिथिषु च विनियोगः कार्य इत्युच्यते। ततो भोजनपात्रविषये ग्राह्याणां वर्ज्यानां च निरूपणम्। अनन्तरं समन्त्रकं भोजनविधिः प्रतिपाद्यते। भक्तियुक्तेषु सवर्णदीक्षितगृहेषु गृहिणां भोजनं न कुत्सितमित्युच्यते। गर्भाधानादिचूडान्तेषु संस्कारेषु न भोक्तव्यम्। यज्ञेषु भोक्तव्यमित्युच्यते। प्रमादतोऽभक्तगृहभोजने, तथा मृतकसूतके भोजने, दानादानविधावनधिकारि-गृहेषु भोजने च शुद्ध्यर्थं कर्तव्यो जपप्रकारो निरूप्यते। साधकानां भुवि वर्तनाय भिक्षाटनं प्रोक्तमित्युक्तार्थोपसंहारः। देशाटनं वक्ष्यत इति वक्ष्यमाणोपक्रमः। एवं **सप्तमपटलार्थसंग्रहः** ॥

**अष्टमे पटले** साधकस्य प्रवासनं प्रतिपाद्यते। तत्र प्रथमं साधको देवाग्निगुरुकार्याय, स्व-

कार्याय, तथान्येषां वृद्धानां कार्याय वा ससहायः प्रवासनं कुर्यादित्युच्यते। सहायस्यासंभवे कमण्डलु साधकेनावश्यं संधार्यम्। तच्च स्वात्मशुद्धये भवतीत्युक्त्वा मृदा दारुणा च कमण्डलु-करणप्रकारो वर्ण्यते। तत्र कुलालेन निर्मितं वा कमण्डलु ग्राह्यमित्युक्तम्। ततः कमण्डलुशुद्धि-प्रकारः समन्त्रकं प्रतिपाद्यते। तत्र कमण्डलु साधकेनात्मनोऽङ्गसमं संधार्यम्। तच्च न परेण स्प्रष्टव्यमित्युच्यते।

महीं पर्यटन्साधको मृद्भस्मदन्तकाष्ठानां संग्रहं नितरां कुर्यात्। महेशाश्रमोऽथवा महेशालयो यद्यस्ति तं दृष्ट्वा तत्र स्नात्वा भगवन्तं संपूज्य तत्रैव संहृष्टो वसेत्। अथवा शिवभक्तानां गृहेषु वा वसनीयमित्युक्तम्। शिवभक्तगृहेषु वासकाले यदि तत्र कश्चिज्ज्यायान्गुरुः शैवाचार्यो वसेत्, तस्य गुरोः पूजां कुर्यादित्युक्त्वा तत्पूजाविधानं यथाविधि प्रतिपाद्यते। तत्र मध्ये कर्तव्यं शिव-स्तोत्रमेकं निरूप्यते। गुरुपूजाविधाने योगपीठं विधिवत्प्रकल्प्य, तत्र तं गुरुं संस्थाप्य शिवव-त्संपूज्य, यथाविभवं सर्वं निवेद्याभिवादयेत्। । गुरुपूजाविधानविषये आगन्तुकः प्रवासनस्थाने स्थितं गुरुं संपूजयेत्। अथवा तत्स्थानगुरुणागन्तुकः संपूज्यः। अथवा स्वगुरोर्वा पूजनं कार्य-मिति त्रिधा विकल्पः। गुरोर्विधानं कमण्डलुविधानेन सह प्रोक्तमित्युक्तार्थोपसंहारः। रुद्र-व्रतं कथयामीति वक्ष्यमाणोपक्रमः। एवम् **अष्टमपटलार्थसंग्रहः**॥

**नवमे पटले** रुद्रव्रतविधिः प्रोच्यते। तत्र प्रथमं रुद्रव्रतमाचरतः साधकस्य चराचरा लोका वशमायान्ति। शाश्वती मुक्तिश्च भवेदिति सामान्यतो रुद्रव्रतफलसूचनम्। अनन्तरं चर्या-पादविधानतस्तपश्चरतः साधकस्य रागद्वेषपराङ्मुखस्येश्वरेच्छाप्रचोदिता बुद्धिः प्रवर्तते रुद्रव्रता-चरणे। तया रुद्राराधनतत्परो भवतीति प्रोच्यते।

ततो रुद्रव्रते प्रथमं विधानं सेतिकर्तव्यताकं प्रतिपाद्यते। तत्र रात्रावेकलिङ्गं श्मशानं, वृक्ष-मूलं वा समाश्रित्य समाधिस्थ एतद्व्रतमाचरेदित्युच्यते। समाधिकरणप्रकारस्तत्र कर्तव्यध्यान-विशेषश्च वर्ण्यते।

एवं व्रतमाचरतः साधकस्य वर्षेण देहबाधकसुखदुःखादिद्वन्द्वजयः, वर्षद्वयेन त्रिकालज्ञानावाप्तिः, त्रिभिर्वर्षैः सिद्धानां दर्शनम्, चतुर्भिर्वर्षैर्देवानां दर्शनम्, पञ्चभिर्वर्षैं रुद्राणां दर्शनम्, षड्भिर्वर्षैं रुद्रतुल्यपराक्रमो भूत्वा तैः सह क्रीडनमिति व्रताचरणफलं वर्षानुगुण्येन प्रदर्श्यते।

एवं पदात्पदं भोक्तुर्भगवान् सदाशिव आत्मीयमैश्वरं पदं निरीश्वरं शाश्वतं परं पदं वा ददातीति व्रतस्यास्य फलं प्रतिपाद्यते।

ततोऽत्रैव व्रते द्वितीयं विधानं प्रोच्यते। तत्र साधकश्चर्यासु विश्रान्तः संसारादतीव विरक्तो भूत्वा, जगत्सर्वं बहिष्कृत्य, लोकेन च बहिष्कृतोऽरण्यं, श्मशानं वा गत्वा, जितप्राणः प्राणान् संयम्य सुखेनैव देहं त्यजेदित्युच्यते।

ततः प्रसङ्गान्मतङ्गमुनिना देहिनां देहसंयोगो देहवियोगश्च कथं जायते, कुतो वागत्य कुत्र वा प्रयाति देहीति प्रश्नकरणम्। तत्र भगवता धर्माधर्मनिदर्शनादस्यात्मनो गतिरुपचारेण प्रोच्यते। यातुर्गमनं स्थातुः स्थानं च वासनाबलादेव प्रतिष्ठितम्। स्थावरजङ्गमात्मकं जगदिदं परमेश्वर-बलायत्तमिति समाधानं वर्ण्यते। संसारादुत्तर्तुं योगिनश्चर्यारूपा तारणिः प्रोक्तेत्युक्तार्थोपसंहारः। देशिकानां शिष्याणां चाचारक्रमविधिर्वक्ष्यत इति वक्ष्यमाणोपक्रमः। एवं **नवमपटलार्थसंग्रहः**॥

**दशमे पटले** समुदायविधौ प्रथमं 'प्रातरुत्थाय प्राज्ञो बहिर्निर्गत्य, पूर्वोक्तक्रमेण शौचविधिं कृत्वा, स्नात्वा शिवं संपूजयेत्' इति क्रमेण सर्वैरपि कर्तव्य आचारक्रमो निरूप्यते। ततोऽजीर्णे स्नानपूजादिकं न कार्यमित्युक्त्वा, पूजालोपे समुत्पन्ने तल्लोपकालानुसारेण विधेयः प्रायश्चित्त-विधिक्रमो वर्ण्यते। तत्र दोषदेशवयःकालशक्तीनां बलाबलं ज्ञात्वा प्रायश्चित्तविध्यनुष्ठानं कार्यमित्युक्तम्।

ततः पूजाद्रव्याणि पत्रपुष्पाणि वर्ज्यावर्ज्यनिर्देशपूर्वकं प्रतिपाद्यन्ते। ततः पूजां निर्वर्त्य विधिवदग्निकार्यं कर्तव्यम्। अग्निकार्ये देशिकसाधकपुत्रका अधिकारिणः। अत्र समयी परतन्त्रः, ज्ञानी स्वेच्छाप्रवर्तकः, योगी बाह्याध्वरान्नित्यमेवोपरत इति वचनेनाग्निकार्यविषये त्वेतेषु निर्बन्धता नास्तीति सूचितम्।

ततो देशिकसमयिनोः कलहे जाते कृतप्रायश्चित्तं देशिकं समयी क्षन्तुमर्हतीत्युक्तम्। अथ-वागत्य स्वगुरवे न्यायतो निवेदयेदित्युक्त्वा शिवभक्तानां न्याया बहवो वर्ण्यन्ते। तत्र 'शिवोदिते मार्गे प्रवृत्तानां महात्मनां संवसतां परस्परं प्रीतिः सर्वत्र शस्यते। प्रविचार्यस्य वस्तुनो विचारप्रसङ्गे वृद्धैः सह बालानामपि विचारो नैव दोषः। सद्वस्तुविचारणे प्रक्रान्ते शिष्या-चार्यविवादो धीमतापरेण शिष्येणात्मबोधाय विनयेनाकर्ण्यः। गुरोरग्रतो भ्रातृभिः सह विचारो न कार्यः' इत्येवं बहवो न्यायाः प्रतिपादिताः। अन्ते चैवं स्वं स्वं वृत्तं न्यायतो निर्वर्त्यमानाना-मायुरारोग्यसंपद्यशोवृद्धिश्च संजायत इति फलं च विधीयते।

ततो दीक्षितैर्लिङ्गस्य दक्षिणस्यां दिशि निवसनीयम्। तदभावे शुचौ देशेऽम्भसो नातिदूरे-ऽकुत्सितं शस्तं स्वगृहं प्रकल्प्य तत्र निवसेत्। गृहं वित्तानुरूपत एकशालादिचतुःशालपर्यन्तं कल्पनीयमित्युक्तम्। गृहविषये हिरण्यनाभं सुक्षेत्रमिति गृहविशेषद्वयं नामतो निर्दिश्यते। गृहे महानस-यागमण्डप-धान्यस्थान-सलिलभाण्डस्थानानां स्थापनयोग्या दिशो विधीयन्ते। तथैव चतुष्पदावासस्थान-हिरण्यवस्त्ररत्नस्थान-उलूखलादिवस्तुस्थानानां स्थापनयोग्या दिशश्च प्रोक्ताः।

ततः शयनविधिः प्रतिपाद्यते। तत्र शयनगृहस्थितिवर्णनम्, तत्र प्रवेशविधिः, शय्याविधिश्च संक्षेपतः प्रोच्यते। ततोऽर्धरात्रे कर्तव्यः पूजाविधिः प्रतिपाद्यते। तत्र भस्मस्नानं कर्तव्यत्वेन विहितम्। भानावस्तं गते तोयं न ग्राह्यमिति विधिश्च दृश्यते। निशाक्षये पूर्ववद्यथोक्तं सर्वं कर्म क्रमेण कर्तव्यमिति शैवानां प्रतिदिनं कर्तव्य आचारः संक्षेपतो न्यरूपि।

ततो मतङ्गमुनिप्रार्थनया यतिनामन्त्येष्टिविधिः प्रतिपाद्यते। तत्र विपन्नस्य यतिनो भूमौ स्थापनप्रकारः संक्षेपेण प्रोक्तः। वाहकशुद्धिरष्टोत्तरशताघोरमन्त्रजपतः प्रोक्ता। भिक्षा-पात्रादिकं सर्वं पर्यग्निकरणाच्छुध्यतीत्यभिहिता। प्रसङ्गाद्यतिनां मृतावनध्ययनकालो विहितः। ततो विपन्नगुरोर्द्रव्याणां विनियोगक्रमो निरूप्यते। तत्र गुरोर्वशमापन्नं पुस्तकादिकं यथावत्त-च्छिष्योऽन्येभ्यो दातुमर्हति। गुरोर्धनादिकं महद्द्रव्यं देवदेवाय दद्यात्। तेन भगवतः प्रासादा-दिकं कुर्यात्। अन्यत्क्षुद्रमग्नौ क्षिपेत्। भाजनादिकं निस्वाय दद्यादित्यादिक्रमेण द्रव्यविनियोग-क्रमः प्रतिपाद्यते। यदि सन्तानपालको ज्येष्ठः शिष्यो गुरुवियोगदुःखाच्छान्तो भवेत्, तदान्यैः सर्वैरपि शिष्यैस्तदाज्ञया स्थातव्यमित्युच्यते।

ततः शास्त्रोपसंहारक्रमो वर्ण्यते। तत्र मतङ्गमुनिना परमेष्ठिना परमेश्वरेण भाषितं शास्त्रा-मृतमिदं भवता मह्यमुपदिष्टम्। मयाप्यधुना कथं वर्तितव्यमिति प्रार्थ्यते। तत्र भगवता भावितात्मनां शिष्याणां शास्त्रमिदं व्याख्येयमिति समाहितम्। ततो मतङ्गमुनिप्रार्थनया भगवता शिष्याणां शास्त्राध्ययनस्य शाश्वतशैवपदावाप्तिः फलमित्यभिधीयते। एवं शास्त्रोपसंहारक्रमः प्रादर्शि। एवं **दशमपटलार्थसंग्रहः** ॥

**इति चर्यापादपटलार्थसंग्रहः** ॥

## अनुबन्धाः

यथापूर्वं विद्यापादे तथैवात्राप्यन्ते मूलश्लोकार्धानुक्रमणिका, मतङ्गवृत्तावुदाहृतश्लोकार्धादीनामनु-क्रमणिका, मतङ्गवृत्तावुदाहृतग्रन्थग्रन्थकर्तृसूची, अन्यत्र ग्रन्थेषु उदाहृतानां मतङ्गश्लोकानां सूची,

ग्रन्थान्तरेषु मतङ्गादुद्धृताः परं मुद्रितमतङ्गेऽनुपलब्धा ये श्लोकास्तेषां सूची, उपयुक्तग्रन्थसूचिः, अत्र ग्रन्थे लक्षणनिरूपणपूर्वकं निर्दिष्टनां १–५ शक्ति-बीज-प्रशान्तआवाहन-संहाराख्यपञ्चमुद्राणां (पृ० ५–७), ६. महामण्डलस्य (पृ० ९–१२) ७. नवनाभमण्डलस्य (पृ० १३, १४), ८. चण्डेशमण्डलस्य (पृ० १५), ९. अरणेः (पृ० ६८, ६९), १०–१३ योगपादे (पृ० २५३–२५५) निर्दिष्टानां चतुर्णां पर्यङ्क-कमल-भद्र-स्वस्तिकाख्यानामासनानां च चित्राणि, अन्ते विस्तृता विषयानुक्रमणिका चानुबन्धतया दत्तानि।

तत्र चान्यत्र ग्रन्थेषूदहृतानां मतङ्गश्लोकानां सूच्यां क्रियादीपिकायां मतङ्गे इत्युदाहृताः श्लोकाः प्रमादान्न निर्दिष्टाः, ते त्वत्र निर्दिश्यन्ते।

क्रियादीपिकायां नवमे पृष्ठे 'तदुक्तं मतङ्गे — 'एवं सकृद्यथाशक्ति' इत्यादि 'इष्टमाग्नेयमाचरेत्' इत्यन्तौ द्वौ श्लोकौ मतङ्गे क्रियापादे द्वितीयपटले १६, १७ श्लोकौ भवतः।

तथा तस्मिन्नेव पृष्ठे 'यावत्सोन्मीलिनी शक्तिः' इत्यारभ्य 'तयोर्योगस्तु दुर्लभः' इत्यन्ताः पञ्च श्लोकाः मतङ्गे विद्यापादे तुरीयपटले ४४–४८ श्लोका भवन्ति।

## कृतज्ञतानिवेदनम्

एतद्ग्रन्थसंपादनाय मातृका दत्त्वोपकृतवतां काश्मीरराजकीयग्रन्थालयस्य, मद्रपुरीराजकीयतालपत्रकोशागारस्य, अनन्तशयनतालपत्रकोशागारस्य, नेपालदेशस्थराष्ट्रीयाभिलेखालयस्य, तञ्जापुरीस्थसरस्वतीमहालयग्रन्थालयस्य चाध्यक्षवर्याणां, तथा कीवलूरग्रहारवासि शिवश्री अक्षयशिवाचार्यपुत्रबालसुब्रह्मण्यशिवाचार्याणां, तथैतत्पुस्तकसंपादनकार्ये सर्वात्मना सर्वास्ववस्थासूपकृतवतां श्रीरामानुजय्यङ्गार्, श्रीसंबन्धशिवाचार्यमहाशयानां, मण्डल-मुद्रादिचित्रविधानकार्येषूपकृतवतां श्रीसुब्रह्मण्यशास्त्रिणां, उपोद्घातस्य फ्रांसीयभाषायामनुवादकरणेनोपकृतवतां श्री ब्रूनोदजान्स्महाशयानां तथा नातिचिरेण ग्रन्थं सुष्ठु मुद्रितवतां श्रीअरविन्दमुद्रणालयाधिकारिणां च हार्दिकीं कृतज्ञतां निवेदयामः ॥

शैवागमेषु मूर्धन्यो मतङ्गः पारमेश्वरः।
चतुष्पादालंकृतोऽयं पाठान्तरपरिष्कृतः ॥
श्रीभट्टरामकण्ठस्य वृत्त्या संवर्धितः पुनः।
प्रकाशितोऽयमधुना विश्वेशप्रीतिहेतवे ॥

# एतद्ग्रन्थसंपादनोपयुक्तमातृकासूची

ऊ अस्मद्ग्रन्थालये विद्यमाना हस्तलिखितमातृका। अङ्कः टि० ६७८। काश्मीरराजकीयग्रन्थालयाल्लब्धायाः ८५२ अङ्कयुक्तायाः शारदालिपिरूपायाश्छायात्मिकप्रतिकृतेः प्रतिलिपिरूपा। अस्यां मातृकायां क्रियापादे आदित आरभ्य एकादशपटले १३ श्लोकान्तभागस्य वृत्तिः २० श्लोकान्तं मूलश्लोकाश्चोपलभ्यन्ते।

ॠ काश्मीरराजकीयग्रन्थालयाल्लब्धा छायात्मिका प्रतिकृतिः। अङ्कः ८४०। शारदालिपिमयी। पटलादिविवेकः 'ऊ' मातृकावत्।

ओ अस्मद्ग्रन्थालयस्थपत्रात्मकहस्तलिखितमातृका अङ्कः टि० १८६। मद्रपुरीराजकीयप्राच्यतालपत्रकोशागारे विद्यमानाया आर्. १६७९४ अङ्किताया मातृकायाः प्रतिलिपिः। अस्यां मातृकायां मूलश्लोकाः केवलं विद्यन्ते। तत्रापि चर्यापादे ८, ९, १० पटलाः न सन्ति। सप्तमपटलावसाने 'चर्यापादं समाप्तम्' इत्यपि दृश्यते।

क अस्मद्ग्रन्थालये विद्यमाना हस्तलिखितमातृका अङ्कः टि० २१। अस्यां मातृकायां क्रियापादः, योगपादे द्वितीयपटले नवमश्लोकस्य पूर्वार्धपर्यन्तो भागश्च विद्यते।

ख अस्मद्ग्रन्थालये विद्यमाना हस्तलिखितमातृका। अङ्कः टि० ६७९। तिरुवनन्तपुरम् प्राच्यविद्यासमितेरुपलब्धायाः ३८३९ अङ्कितायास्तालपत्रमातृकायाः प्रतिलिपिः। अस्यां मातृकायां क्रियापादे पञ्चदशपटले २५ तमश्लोकादारभ्य योगपादे प्रथमपटले तृतीयश्लोकस्य पूर्वार्धपर्यन्तं नास्ति। तथा योगपादे पञ्चमपटले २३ तमश्लोकादारभ्य चर्यापादे षष्ठपटले ३४ तमश्लोकपर्यन्तं च नास्ति।

ग. तिरवनन्तपुरस्थप्राच्यविद्यासमितेरुपलब्धा। अङ्कः एल् ६६३।

घ अस्मद्ग्रन्थालये विद्यमाना तालपत्रात्मिका मातृका। अङ्कः आर्. ई. ३९७६३। अस्यां मातृकायां क्रियापादे योगपादे च पत्राणामभावान्मध्ये मध्ये श्लोका लुप्ताः। योगपादे पञ्चमपटले ६३ श्लोकान्तमेवेयं मातृका उपलभ्यते।

ङ अस्मद्ग्रन्थालये विद्यमाना हस्तलिखितमातृका। अङ्कः टि० ८३९। कीवलूर्-अ-बालसुब्रह्मण्यशिवाचार्यगृहे विद्यमानस्य तालपत्रात्मककोशस्य प्रतिलिपिरूपा। अस्यां मातृकायां योगपादे प्रथमपटलादारभ्य पञ्चमपटले ६४ तमश्लोकस्य प्रथमपादान्तो भागो न दृश्यते।

च. अस्मद्ग्रन्थालये विद्यमाना हस्तलिखितमातृका। अङ्कः टि० ९७०। नेपालदेशस्थराष्ट्रीयाभिलेखालयाल्लब्धायाश्छायाप्रतिकृतेः प्रतिलिपिरूपा। अस्यां मातृकायां चर्यापादे दशमपटले ७० तमश्लोकस्योत्तरार्धे 'विजनं देशम्' इत्येतावत्पर्यन्तमेव विद्यते।

छ. अस्मद्ग्रन्थालये विद्यमाना हस्तलिखितमातृका अङ्कः टि० ९७५। तञ्जावूर् सरस्वतीमहालयग्रन्थागारे विद्यमानायाः १२०२३ अङ्कयुक्तायास्तालपत्रात्मिकायांस्तेलुगुलिपिरूपाया मातृकायाः प्रतिलिपिः। अस्यां मातृकायां चर्यापादे मध्ये मध्ये पत्राणां विपर्यासो दृश्यते।

ज. अस्मद्ग्रन्थालये विद्यमाना हस्तलिखितमातृका। अङ्कः टि० ९७४। तञ्जावूर् सरस्वतीमहालयग्रन्थागारे विद्यमानायाः १२०२४ अङ्कयुक्तायास्तालपत्रात्मिकाया ग्रन्थाक्षरमय्या मातृकायाः प्रतिलिपिः। अस्यामपि मातृकायां 'छ' कोशवत्पत्राणां विपर्यासो दृश्यते। मातृकायामस्यां चर्यापादे दशमपटले पञ्चदशश्लोकावध्येवोपलभ्यते।

# संकेतसूची

| | |
|---|---|
| उ० | उत्तरार्धम् |
| उत्तर० | उत्तरभागः |
| किरण० | किरणागमः |
| क्रिया० | क्रियापादः |
| चर्या० | चर्यापादः |
| टि० | ट्रेन्स्क्रिप्ट् |
| तृ० | तृतीयमर्धम् |
| द्विशतिका० | द्विशतिकालोत्तरम् |
| पत्र० | पत्रसंख्या |
| पू० | पूर्वार्धम् |
| पृ० | पृष्ठम् |
| मू० | मूलश्लोकः |
| योग० | योगपादः |
| योगसू० | योगसूत्रम् |
| लिङ्गपु० | लिङ्गमहापुराणम् |
| वायुसं० | वायुसंहिता |
| विद्या० | विद्यापादः |
| शिवपु० | शिवमहापुराणम् |
| श्लो० | श्लोकः |
| सांख्यका० | सांख्यकारिका |
| सार्धत्रि० | सार्धत्रिशतिकालोत्तरम् |
| स्वच्छन्द० | स्वच्छन्दतन्त्रम् |

## ENGLISH SUMMARY

In 1977 we had published the *vidyāpāda* of the *Mataṅgapārameśvara* together with the commentary of Rāmakaṇṭha[1]. In this second volume we publish the three other *pāda*-s together with the available portion of the commentary, which is lost after *kriyāpāda* 13.11. However we know from Rāmakaṇṭha himself that he has commentated on the whole of the *Mataṅga* (see below p. 1). In the Introduction to the *vidyāpāda* we had shown that the *Mataṅga* according to its own wording was theoretically containing 3500 verses; as a matter of fact there are 3477 and a half verses in our edition and one must admit the rightness of the statement given by the text itself. Some of the missing verses are probably to be found among the ones quoted in other books with their origin given as "*mataṅge*" but not located in the known manuscripts of the *Mataṅga*. The texts of those quotations are to be found in an appendix (pp. 497 sq) and we have dealt with them in our sanskrit introduction together with lacunae which can be infered from cross-references given either by the text or by its commentary.

II

In the available portion of the *kriyāpāda* commentary, Rāmakaṇṭha refers to some authors and books which are not quoted in his commentary on the *vidyāpāda* or on *Sārdhatriśatikālottara*[2]; we give in our sanskrit introduction some clues about them. If one looks at the whole of the commentary, it is clearly seen that the three agamic texts which are the most frequently quoted are the *Svāyambhuva* and the *Raurava* (both commentated by Sadyojyoti, the great Kashmīri guru) and the *Pauṣkara* which is an *upāgama* of the *Pārameśvara* like the *Mataṅga*; but most of the quotations from the *Pauṣkara* have not been found in the printed part of that book, even when they are clearly borrowed from one *vidyāpāda*; one can perhaps surmise that Rāmakaṇṭha was following a kashmīri recension slightly different from that one commentated in the 14th century by Umāpatiśiva.

1. *Mataṅgapārameśvara-Vidyāpāda, avec le commentaire de Bhaṭṭa Rāmakaṇṭha*, Pondichéry 1977 (Pub. IFI n° 56).

2. *Sārdhatriśatikālottarāgama, avec le commentaire de Bhaṭṭa Rāmakaṇṭha*, Pondichéry 1979 (Pub. IFI n° 61).

III

The *vyomavyāpimantra* is lengthly dealt with in the *Mataṅga* which prescribes its general use for all the regular rites. We have summarized in a chart the details given about its 81 words (see pp. 25-26). But it is noteworthy that *vyomavyāpin* which is one of the main formulas of the śaivism has been transmitted in more than one way and that there are lot of discrepancies between the versions we can find in several texts. In our sanskrit introduction we have dealt in detail on the subject and we have tried to show that the number and the wording of the *pada*-s are changing from one book to another one; for this we have relied on two examples, one dealing with the *vidyākalāśuddhi* of the *padādhvadīkṣā* and the other one with the imposition of *vyomavyāpin* on a diagram.

*Netramantra* is omitted in the *Mataṅga* wherever the text deals with the *śivāṅgamantra*; in our sanskrit introduction we show that such is not the case in many other *āgama-s* and we suggest that this may be due to the difference of opinion of some authors, who as quoted in the *Prabhā* commentary of the *Kriyākramadyotikā* say that *netramantra* is not really a *aṅgamantra*.

The *Mataṅga* deals in detail with the *dīkṣā* in its *kriyāpāda* (see chapters 1-9); it describes the *samayadīkṣā* together with the *bhuvanadīkṣā*, the *tattvadīkṣā* and the *navatattvapīṭhadīkṣā*. In our sanskrit introduction we present a general survey of the different kinds of *dīkṣā* described in the *āgamas*-s and in the *paddhati*-s. To summarize one could say that they are two kinds of *dīkṣā*: the first is the *samayadīkṣā* which makes the disciple enter as a *samayin* the śaiva community; endowed with it he is entitled to perform the *śivapūjā*, to study the *āgama*-s and to apply for the second kind of *dīkṣā*. This second kind of *dīkṣā* is given many different names and many different aspects but it can be named as *nirvāṇadīkṣā* for it gives the liberation at once or after all the *bhoga*-s have been consumed.

The *sādhaka* is most talken about; he must be seen as a devotee who is almost confined in the personal rituals and in looking after *siddhi*-s and the like. He has got an *abhiṣeka* and as he is nearly on the same level than the *ācārya* he is often told as being an assistant of the *ācārya*. But more than that he is even now one ascetic, *śivavratin* or *yatin*.

The *Mataṅga* like the *Raurava* lists six *aṅga*-s only for the Yoga (*pratyāhāra, dhyāna, prāṇāyāma, dhāraṇā, tarka, samādhi*); after a quick survey of the position in the other *āgama*-s and specially in the *Mṛgendra*, we explain how one can understand the order of the *aṅga*-s according to the

*Mataṅga*, different from the one given in the *Yogasūtra*.

The title "*karmayoga*" is given to the 6th chapter of the *yogapāda* but one must not be misled by it because "*karmayoga*" is totally different than the one described in the *Bhagavadgītā*. Here the *karmayoga* is only a kind of yogic processes by which a *sādhaka* can attain the *siddhi-s* of the *mantra-s* to get whichever *bhoga* he is looking for.

## IV

As a commentator Rāmakaṇṭha may sometimes distort the meaning of the *Mataṅga* either to bring it in line with the statement of same kind of texts or to force it in the mould of some prevailing opinions of his time. This is clearly seen in the commentary of *kriyāpāda* 5.93 where Rāmakaṇṭha introduces a caste-wise hierarchy which is not at all implied by the words the text uses to explain how the disciples must enter the *yāgamaṇḍapa*; but we know that Ramakaṇṭha author of the *Jātinirṇayapūrvakālayapraveśa-vidhiḥ* was very much impressed by the orthodox vedic tendancy of his time. Such kind of distortion appears relating to the *śivahasta* too: the *Mataṅga* states clearly that it must be used for the *prokṣaṇa* of holy water on the head of disciple in the preparation of the initiation (*kriyā* 5. 17-19a) but Rāmakaṇṭha in his commentary connects it with the *ālambhana* as the *Mataṅga* position seems to be against the consensus of the *paddhati*-s.

## V

### CONTENTS OF THE TEXT AND OF RĀMAKAṆṬHA'S COMMENTARY

### *KRIYĀPĀDA*.

#### Chapter 1: The accessories of the initiation (*dīkṣāṅga*).

After having shown why the initiation is the only way to obtain the liberation, the text presents the six accessories of the initiation beginning with the *mudrā*-s of which five kinds are described (see figs. 1 to 5). There are three types of *maṇḍala: mahāmaṇḍala* (for the cult of Parameśvara together with his attendant deities, before the *tattva* and *bhuvanadīkṣā*), the *navanābhamaṇḍala* (cult of Parameśvara alone for the *navatattvadīkṣā*)

and the *maṇḍala* of Caṇḍesa; such *maṇḍala*-s are to be drawn in a *yāgamaṇḍapa* which is described (see figs. 6 to 8). The third accessory is the *mantra* and mainly the *vyomavyāpin* in 81 words. The fourth is the "place" (*kṣetra*) fit for the initiation: we are given list of auspicious places in India, together with the rule for the examination of the ground. After that come the *dravya*-s about which we are given particulars like quantities or methods of substitution. The last accessory is the devotee who wants to be initiated: he must have specific qualities, failing which if initiated he himself together with his *guru* would be considered as unfit.

Chapter 2: The baths (*snāna*).

The baths are of four kinds (with water, ashes and *mantra*-s or purely mental); Rāmakaṇṭha explains that the rules given here are to be followed before all the rituals and not only before the initiation. The four baths are described in detail with indication of the *mantra*-s to be used; about the *bhasmasnāna* we are told when it is not to be preceded by a water-bath; the *mantrasnāna* can be done purely by *mantra*-s and the mental bath by following yogic processes.

Chapter 3: The cult (*arcana*).

First Rāmakaṇṭha explains that the rules given here like those given for the baths or for the fire ritual, are of a general value and not to confine themselves to the initiation ritual only. All the process of the *arcana* are to be done with the *pada*-s of *vyomavyāpin* (see above). After describing the entering the prayer-place the text deals first with the internal cult describing the purification of the body, the preparation of the throne and of the symbolic body of Śiva, the invocation of the god... etc; about the *āvāhana* Rāmakaṇṭha notes that it is extraordinary to call somebody who, through his all-pervasiveness, is everywhere and explains why it is necessary. At the beginning of the description of the external cult, Rāmakaṇṭha explains how to make Śiva manifested by placing the 38 *kalā* on his body; all the procedures of the external cult are described with the relevant *mantra*-s; the *gāyatrīmantra* is to be used when no other is available. At the end of the chapter, Rāmakaṇṭha refutes bluntly the position of the Mīmāṃsaka according to which these rites are without object.

Chapter 4: Fire-ritual (*agnikārya*).

The fire can be obtained with *araṇī* (the process is given in full detail) (see fig. 9) or with a gem or it can be taken from some other domestic fire, but the *garbhādhāna* and the like are not to be done when the fire is got from the *araṇī* process as it has been sanctified by the *mantra*-s used. We are given the rules for the oblations, the auspicious and unauspicious characteristics of the fire and the rules relating to the form of *kuṇḍa*-s when one wants to get the particular *siddhi*-s.

Chapter 5: Preparation for the initiation (*adhivāsa*).

The day before the initiation, the *guru* must enter the *yāgamaṇḍapa* to make ready the *pañcagavya* and to perform the cult of Śiva on the diagram, and the fire-ritual. Incidentally we are given a description of the method to make his own body the body of Śiva and his own hand the "hand of Śiva" (*śivahasta*); but according to Rāmakaṇṭha both those rituals are to be performed only on the day of the initiation itself. He explains too that the initiation is not a sacrifice but a sacrement. After performing the fire-ritual, the *guru* makes the disciples enter the *maṇḍapa* according to the order they have approached him to get the initiation (but see above for the tendancious commentary given by Rāmakaṇṭha on that point). After having performed various rites together with the disciples, the *guru* must make them sleep in the *yāgamaṇḍapa*; as for himself he must meditate as long as possible before sleeping.

Chapter 6: About the dreams (*svapna*).

After having theorised about the nature and the origin of the dreams, the text explains how the *guru* must scrutinise the dreams the disciples have had during the night spent in the *yāgamaṇḍapa* and we are given a list of auspicious and unauspicious dreams and the way to atone for the last ones.

Chapter 7: Ordinary initiation and initiation by the worlds.

The short description of the ordinary initiation (*samayadīkṣā*) begins by the cult on the diagram which is followed by the entrance rites and by the full cult of Śiva and his attendants. The *guru* must make the disciple perform the *karanyāsa* and other rites before blinding him with a cloth and making him throw a flower on the diagram and the fall of the flower will

indicate the initiation-name of the disciple. Such an initiation allows people to get other initiations, to study the śaiva texts and to perform Śiva's cult and fire ritual.

In the process of the initiation by the worlds (*bhuvanadīkṣā*) the soul of the disciple is lifted from world to world, from the Kālāgnirudrabhuvana up to the Śiva's abode. For each world, from the lower one upto the Bhūloka, five operations are to be done by the *guru* with the help of *mantra*-s (from *vyomavyāpin*) on the soul of the disciple: he must join the soul with the world (*saṃyojana*), make him to be born in it (*saṃjanana*), to enjoy it (*bhoga bhojana*) and after he must cut the ties (*pāśaccheda*) and lift him from that world to the next one (*uddhāra*); the process is given in detail for the Kālāgnirudrabhuvana. As for the Bhūloka the things are slightly different, for the soul must be purified from the vegetal, animal and human *jāti*; as for the brahmins, 48 vedic sacrements must be performed again with śaiva *mantra*-s. Above the Bhūloka the process is the same for the lower worlds up to the Sadāśiva's abode in which we are told of the two ways to be followed according to the goal, *bhoga* or *mokṣa*. In the Śiva's abode the qualities of omniscience and of omnific quality which were in the soul are unveiled. The text being silent on that subject, Rāmakaṇṭha gives some details about the rites performed at the end of the ceremony; he fights against those who do not cut properly the ties and who state that the omniscience and omnific quality were not in the soul originally.

Chapter 8: The initiation by the *tattva*-s (*tattvadīkṣā*).

The process is the same as the one of the *bhuvanadīkṣā* and the soul is lifted step by step from the *pṛthivītattva* up to the *layatattva*. We are given some details about the use of fire-sticks when one cannot afford to get ghee for the oblations.

The high-minded disciples can get the *tattva* and the *bhuvanadīkṣā* by purely mental yogic processes. At the end of the chapter we are given some hints about the liberation: it amounts to the equality of the soul with Śiva; in the commentary Rāmakaṇṭha refutes theories of Kālāmukha-s and Pāśupata-schools.

Chapter 9: Initiation by the nine *tattva*-s (*navatattvadīkṣā*).

Such initiation is performed by placing the 81 words of *vyomavyāpin* on the *navanābhamaṇḍala*. As *vyomavyāpin* is produced from Śuddhavidyā

[1]इतीशानस्य बोद्धव्यं [2]सप्तार्णं पुरुषस्य तु[3] ।
स्यात्तत्पुरुष[4]वक्त्राय अघोरहृदयाय च ॥७३॥
[5]सप्तार्णं बहुरूपस्य [6]तद्वद्वामस्य कीर्तितम् ।
[7]स्याद्वामदेवगुह्याय [8]सद्यस्याप्यथ [9]कीर्त्यते ॥७४॥
अक्षरैः [10]सप्तभिस्तद्धि स्यात्सद्योजातमूर्तये ।
पञ्चैतानि पदानि स्युश्चतुर्थ्यन्तानि ब्रह्मणाम्[11] ॥७५॥
प्रोक्तानि [12]मन्त्रमुख्येऽस्मिन्नर्चनार्थं[13] मया तव ।

[ चण्डेशमन्त्रः ]

[14]पञ्चार्णमपरं सिद्धं [15]चण्डेशस्य नमो नमः ॥७६॥
प्रणवादि प्रयोक्तव्यं [16]सिद्धयेऽध्वरकर्मणि ।

[ चण्डेशषडङ्गमन्त्राः ]

[17]गुह्याति[18]गुह्याय पदं [19]षडर्णं हृदयं [20]प्रभोः ॥७७॥
[21]गोप्त्रे वर्णद्वयं तस्य [22]शिरः प्रोक्तं [23]सनातनम् ।
[24]चतुर्वर्णं [25]शिखा ज्ञेया [26]निधनाय पदं हि [27]यत् ॥७८॥

---

[1] तदीशानस्य बो० — ऊ, ऋ, च; इतीशानस्य तु बो० — ङ.
[2] सप्तार्णपुरुष० — ङ.
[3] हि — च.
[4] वक्त्रायाघोर० — ओ, क, ख.
[5] सप्तार्णबहु० — घ, छ, ज.
[6] तद्वद्धामस्य — ऊ.
[7] वामदेवाय गुह्याय—ओ, क; 'ङ' मातृकायामिदमर्धं नास्ति ।
[8] सद्योजातपदस्य च — क.
[9] कीर्तिते — घ, छ, ज.
[10] सप्तभिस्तस्य सद्योजाताख्यमूर्तये — क.
[11] ब्रह्मणा — च, छ.
[12] मन्त्रसुखे — छ; मन्त्रसख्ये — ज.
[13] ०स्मिन्नन्दनार्थं — च.
[14] पञ्चार्णकं परं सिद्धं — ओ, क; पञ्चार्णमपरः सिद्धं — ख, घ; पञ्चार्णकं वरं सिद्धं — ङ; पञ्चार्णं परसिद्धि — छ; पञ्चार्णमपरः सिद्धि — ज.
[15] चण्डीशस्य — ऊ, ऋ, ओ, क, ङ, च; चण्डिबीजं नमो — ख, घ, ज; चण्डीबीजं — छ.
[16] सिद्धये स्वरकर्मणि — ख, छ; सिद्धये द्वार० — च; सिद्धयेस्तरकर्मणि — ज.
[17] गुह्यादि० — ओ, क, ङ.
[18] गुह्यावपदं — ङ.
[19] षड्वर्णं — छ, ज.
[20] वि. . — ओ; विधेः — क; विभोः — ख, घ, छ; विभो — ङ, ज.
[21] गोप्त्रैर्वर्ण० — छ.
[22] शिवः प्रोक्तः सनातनः — च.
[23] सनातन — ख, घ, ज.
[24] चतुर्वर्णा शिखा—ऊ; चतुर्वर्णशिखा—ऋ, च.
[25] शिवा — क.
[26] 'छ, ज' मातृकयोरयं पादो लुप्तः । तत्स्थाने श्लोकोऽयमधिकतया दृश्यते — 'संस्थिताय पदं ज्ञेयं योगपीठपुरःसरम् । अष्टार्णं तं विजानीयाद्वाचकं तु पदं हि तत् ॥' इति । १.६७ तमश्लोकोऽत्र लिखित इति भाति ।
[27] तत् — ओ, क, ख, घ, ङ.

[1]सर्वविद्याधिपायेति कवचं सप्तवर्णकम् ।
[2]ज्योतीरूपाय [3]पञ्चार्ण[4]मस्त्रमुक्तं [5]महौजसः ॥७९॥
[6]नेत्रमष्टाक्षरं प्रोक्तं परमेश्वरपूर्वकम् ।
पराय चण्डनाथस्य षडङ्गानि शुभानि तु ॥८०॥
चतुर्थ्यन्तानि सर्वाणि नेत्रान्तानि पदानि तु ।

[ चण्डेशासनमन्त्रः ]

[7]अष्टार्णमासनं [8]तत्स्यात्पदं चाचेतनात्मकम् ॥८१॥
[9]अचेतनाचेतनेति पूजाकाले [10]प्रकथ्यते ।

अचेतन अचेतनेति पदम् अष्टार्णम् इत्यकृतसंहितमेव वर्णसंख्यायां वेदितव्यमित्यर्थः । तत् च अचेतनात्मकम् इति पर्युदासवृत्त्याविशिष्टचेतनप्रतिपादकमित्यर्थः ॥

[ अनन्तासनमन्त्राः ]

[11]व्योमिन् [12]व्योमिन् पदं ज्ञेयं [13]चतुर्वर्णं [14]तथापरम् ॥८२॥
[15]व्यापिन् व्यापिन् द्विरभ्यस्तं [16]चतुरर्णं परं पदम् ।
[17]तच्चारूपिन् द्विरभ्यस्तं षडर्णमपरं [18]तथा ॥८३॥
प्रथमेति[19] द्विरभ्यासाद्बोद्धव्यं[20] शास्त्रवित्तमैः ।

---

[1] सर्वबीजाधिपायेति — च.
[2] ज्योतिरूपाय — ख, ङ.
[3] चाधर्णं — छ; पञ्चार्णं — ज.
[4] ०मन्त्रमुक्तं महौजसा — ऊ; ०मस्त्रमुक्तं महौजसा — ऋ; ०मम्त्रमुक्तमहौजसः — ख, घ; ०मस्त्रं दुरु महौजसः—ङ; भूतमुक्तमहौजसः — छ, ज.
[5] महौजसं — च.
[6] मन्त्रमष्टा० — च.
[7] सप्तार्णमासनं — ओ, क, ख, घ, ङ, छ; सप्तार्णमाहनं — ज.
[8] तस्य यत्पदं चेतनात्मकम् — ऊ, ऋ, ओ, ख, घ, ङ, च, छ, ज; तस्य यत्पदं चेतनं मतम् — क.
[9] चेतना चेतना चेति — ख, घ; चेतना चेतना येति — छ, ज.
[10] प्रकल्प्यते — ऊ, ऋ, ख, घ, च, छ, ज.
[11] व्योम्नि व्योमपदं — च.
[12] व्योमन् पदं — ओ.
[13] चतुर्धर्णं — ज.
[14] तथा पदम् — च; तदा परम् — छ, ज.
[15] योमिन् व्योमिन् — ऊ, ऋ; व्यापिन् व्यापिनं — ओ; व्यापिन् व्यापि द्वि० — ख.
[16] चतुर्णं परमं पदम् — ऊ, ऋ; षडर्णमपरं तथा — ओ, क, ङ, च; षडर्णं परमं पदम् — ख, घ, छ, ज.
[17] तच्चारूप्य द्विरभ्यस्तं — ऋ; तच्चारूपि चिरभ्यस्तं — क; तच्चारूपि द्वि० — ख; इदमर्धं 'च' मातृकायां न दृश्यते।; तच्चरूपिन् — ज.
[18] तदा — छ.
[19] प्रथमे च — ख, घ; प्रथमेव — छ, ज.
[20] द्विरभ्यस्ताद्बोद्धव्यं — ओ; द्विरभ्यासात्प्रोक्तव्यः — ख, घ; 'द्विरभ्यासाद्' इत्यारभ्य '८५' श्लोकस्योत्तरार्धे 'सप्तैतानि' इत्यन्तं 'छ, ज' मातृकयोर्न दृश्यते ।

तेजस्तेज इति प्रोक्तं [1]चतुर्वर्णं पदं [2]विभोः ॥८४॥
[3]ज्योतिर्ज्योतिः[4]पदं तद्वद्विज्ञेयं [5]चतुरक्षरम् ।
सप्तैतानि द्विरभ्यासात्पदान्युक्तानि शासने ॥८५॥
[6]चण्डेशस्यासनं [7]मुक्त्वा [8]षडन्यानि पदानि तु ।
आसने संप्रयोज्यानि देवदेवस्य नित्यशः ॥८६॥
[9]धर्मो ज्ञानं च वैराग्यमैश्वर्यं [10]कर्णिका तथा ।
अनन्तेन सहैतानि षट्पदानि क्रमान्न्यसेत् ॥८७॥

**अनन्तेन सहैतानि** इति [11]पूर्वं हि "अनन्ताय" इति अनन्तस्य [12]विद्येशमध्यपूज्यतया पदमुक्तम् । अत्र त्वासनत्वेन पदान्तरमित्यविरोधः ॥८२–८७॥

[द्वात्रिंशत्केसरमन्त्राः]

[13]त्र्यर्णं पद[14]मरूपाख्यं ततोऽनग्निपदं शुभम् ।
[15]तृतीयं स्यादभू[16]माख्यमभस्माख्यं च यत्पदम् ॥८८॥
[17]पदं [18]चानादि संज्ञेयं [19]नानानेति [20]परं पदम् ।
[21]धूत्रयेण च यत्प्रोक्तं [22]त्र्यक्षराणि शिवस्य तु ॥८९॥
[23]निर्देशे वेदितव्यानि [24]सम्यक्सप्तपदानि तु ।

---

[1] चतुर्णपदं विभो — ख; चतुर्णं पदं विभो—घ.
[2] प्रभोः — च.
[3] ज्योतिर्ज्योति० — ऊ, ॠ, ओ, क, ख, घ; ज्योतिज्योति० — ङ.
[4] ०पदं तद्धि विज्ञेयं — ऊ, ॠ, च; ०पदद्वन्द्वं विज्ञेयं— ख, घ.
[5] चातुरक्षरम् — ॠ.
[6] चण्डीश० — ऊ, ॠ, ओ, क, ङ, च; चण्डेशस्यासने — ख, घ, छ, ज.
[7] त्यक्त्वा — ओ, क, ङ; ह्येके — ख, घ; भ्येके — छ; भ्येक — ज.
[8] षडङ्गानि — ओ, क, ख, घ, ङ, छ, ज.
[9] धर्मज्ञानं च — ओ, ङ, च; धर्मं ज्ञानं च — क, ख, घ, छ, ज.
[10] कर्णिकां — ओ, क, ख, घ, ङ, छ; कन्यकां — ज.
[11] मतङ्ग० क्रिया० १.६४ उ०
[12] विद्येशमधि पूज्यतया — ॠ.
[13] त्रियर्णपदरूपाख्य०—ख; त्र्यर्ण . . . ख्य—घ; त्र्यंसंपद० — च; तूर्णपदरूपाख्य० — छ; त्र्यर्णपदरूपाख्य० — ज.
[14] ०मरूपाख्या — ओ; ०मरूपाख्यात् — क.
[15] त्रितयस्यादभूमाख्य० — ख, घ, छ, ज.
[16] ०माख्यं सभस्माख्यं च तत्पदम् — च.
[17] पञ्चानादिसंज्ञाख्यं — ङ.
[18] त्वनादिसंज्ञाख्यं — ओ, क, ख, घ, छ, ज; चानादिसंज्ञाय — च.
[19] नाना केति — क.
[20] पदं परम् — ओ, क, ङ.
[21] यत्त्रयेण — क.
[22] त्र्ययक्षाणि — क.
[23] निर्दिशे वेदि० — च.
[24] सम्यक् तप्त० — च

[1]ओंभूस्तद्‌द्व्यक्षरं [2]ज्ञेयं त्र्यक्षरं [3]चाप्यथों भुवः ॥९०॥
[4]ओं स्वो वर्गद्वयेनात्र पदमन्यत्प्रकीर्तितम् ।
[5]त्रीण्येतान्यपि निर्देशे पदान्युक्तानि शासने ॥९१॥
[6]अनिधनपदं ज्ञेयं चतुर्वर्णं महामुने ।
निधनाख्यं त्र्यक्षरं स्यात्पदं व्योमशरीरिणः ॥९२॥
[7]पञ्चाक्षरं विजानीयात्पदं [8]यन्निधनोद्‌भवम् ।
द्व्यक्षरं स्याच्छिवपदं [9]द्व्यर्णं [10]सर्वपदं [11]विभोः ॥९३॥
[12]परमात्मपदं ज्ञेयं समासाच्चतुरक्षरम् ।
[13]महेश्वरेति [14]तद्वर्णं महादेवपदं हि [15]यत् ॥९४॥
[16]सद्‌भावेश्वर एवोक्तं [17]पञ्चार्णं मुनिसत्तम ।
महातेज इति प्रोक्तं [18]पदं वर्गचतुष्टयम्[19] ॥९५॥
[20]पदं [21]पञ्चाक्षरं ज्ञेयं योगाधिपति[22]संज्ञकम्[23] ।
[24]आमन्त्रणपदं तद्धि प्रयोगाद्विनियोजयेत् ॥९६॥
[25]अनिधना[26]त्पदाद्यावद्योगाधिपति[27]संज्ञकम् ।
[28]पदानां च भवेत्संख्या दशैकं च न संशयः ॥९७॥

---

[1] ओं भूरि (ति) द्व्यक्षरं — ओ; ओं भूर्द्व्यक्षरं — क; ओं भूद्व्यक्षरं — ङ; ओं भूस्तदाक्षरं — च; ओं भूश्च द्व्यक्षरं — छ.

[2] प्रोक्तं — ओ, क; प्रोक्तत्र्यक्षरं — ङ; मन्त्रं — च; ज्ञया त्र्यक्षरं — छ.

[3] चाप्यथो भुवः — ऊ, ॠ, ओ, क, ख, घ, ङ, छ; चाप्यधो भुवः—च; चाप्यथो भुवम्–ज.

[4] ओं सुवोऽर्णो त्रयेणात्र — ओ; ओं सुवोऽर्णत्रयेणात्र — क; ओं स्वेत्यर्णद्वयेनात्र — ख, घ, छ, ज; ओं सुपोऽर्णत्रयेणात्र — ङ

[5] त्रीण्येतानि विनिर्देशात् — ख; त्रीण्येतान्यपि निर्देशात् — घ, छ, ज.

[6] अनिधनुनपदं — ऊ; अनिधनुपदं — ॠ; अनिधानपदं — ख, घ, छ, ज; अनिर्धन० — च.

[7] पश्चात्परं — क.

[8] संनिधनो० — ख; संनिधनोद्‌भवात् — घ, छ, ज.

[9] द्विर्णं० — छ; द्विर्णं — ज.

[10] शिवपदं — ओ, क, ङ; शर्वपदं — छ.

[11] विभो — ख, छ.

[12] परमात्मा पदं — ओ, क, ख, घ, ङ.

[13] महेश्वरपदं तावद् — च.

[14] तद्वक्तुं — ऊ, ॠ.

[15] तत् — ज.

[16] सद्‌भवेश्वर — छ, ज.

[17] 'ऊ, ॠ' मातृकयोः ९५ तमश्लोकस्य द्वितीयतृतीयपादौ न स्तः ।

[18] पञ्चवर्णं० — च.

[19] ०चतुष्टयात् — छ, ज.

[20] अपदं पञ्चाक्षरं — ओ, घ, ङ; अपपञ्चाक्षरं — क.

[21] पञ्चाक्षरे — छ.

[22] ०संज्ञितम् — ओ, क, ख, घ, ङ, छ, ज.

[23] एतस्मादर्धादनन्तरं ९७ तमश्लोकस्योत्तरार्धं 'छ, ज' कोशयोर्दृश्यते ।

[24] 'क' मातृकायां ९६ उत्तरार्धं ९७ पूर्वार्धं च न स्तः ।; आमन्त्रिणपदं — ओ, ङ.

[25] अनिधाना० — च; अनीधनात् — ज.

[26] ०त्पदं याव० — ओ, ख, घ, ङ, छ, ज.

[27] ०राज्ञतम् — ओ; ०रज्ञतम् — ङ; ०संज्ञितम् — छ, ज.

[28] पदं तावद् भवे० — ओ, क, ख, घ, ङ, ज; पदानां तु भवे० — च.

आमन्त्रणपदानां [1]तु तन्त्रेऽस्मिन्पारमेश्वरे[2] ।
मुञ्च मुञ्च चतुर्वर्णं [3]षडर्णं प्रथमात्मकम् ॥९८॥
[4]शर्वशर्वपदं [5]तन्त्रे बोद्धव्यं चतुरक्षरम् ।
भव[6]युग्मपदं तद्वच्चत्वार्येतानि शासने ॥९९॥
द्विरभ्यस्तपदानि स्युर्बोद्धव्यानि गुरूत्तमैः ।
भवोद्भवपदं सिद्धं वर्णानां तु [7]चतुष्टयात् ॥१००॥
पदमष्टाक्षरं चान्यत् सर्वभूतसुखप्रदम् ।
[8]सर्वसान्निध्य[9]शब्दाद्यं करान्तं [10]पदमत्र तु ॥१०१॥
सप्ताक्षरं विजानीया[11]त्परमष्टाक्षरं [12]पदम् ।
[13]तद्धि रुद्र[14]परान्तं स्याद्ब्रह्मविष्णुपुरःसरम् ॥१०२॥
एतान्यपि [15]हि चत्वारि [16]संबोधनपदानि तु ।
[17]अनर्चितद्विरभ्यस्त[18]मष्टार्णं पदमुच्यते ॥१०३॥
[19]असंस्तुतमपि [20]तथा [21]तथा पूर्वस्थितं पदम् ।
पूर्वस्थितपदं [22]यावदरूपाख्यपदात्क्रमात्[23] ॥१०४॥
[24]द्वात्रिंशद्विनियोज्यानि केसराण्यासने [25]विभोः ।

[ कमलमन्त्रः ]

[26]साक्षिन् साक्षिश्चतुर्वर्णं द्विरुक्त्या पदसंततौ ॥१०५॥
बोद्धव्यं [27]कमलस्यैतद्वाचकं पदमुत्तमम् ।

---

[1] तत्तन्त्रे० — ओ, क, घ, ङ.
[2] पारमेश्वरम् — ज.
[3] षडक्षरप्रथ० — क; षडक्षरं प्रथ० — ङ.
[4] सर्व सर्व० — च.
[5] तत्र — ओ, क, ङ.
[6] ०युग्मं पदं — ख.
[7] चतुष्टयम् — ऊ, ऋ, छ, ज; चतुष्टये — च.
[8] सर्वसाधनशब्दाद्यं — च.
[9] ०शब्दार्थं—ख, घ, छ, ज; ०शाब्दाद्यं — ङ.
[10] परमत्र — ओ, क, ङ.
[11] ०त्पदमष्टाक्षरं — ओ, क, ख, घ, ङ, छ, ज.
[12] परम् — ओ, क, ङ; युतम् — ख, घ, छ, ज.
[13] तद्विरुद्र० — ओ; तद्वद्रुद्र० — क.
[14] ०पदान्तं स्याद् — ऊ, ऋ, ङ; ०पदान्त स्याद् — ओ; वरान्तं स्याद् — ख, घ, छ, ज.
[15] च चत्वारि — च.
[16] समयोधनपानि तु — ख, छ, ज.
[17] अनिश्चितद्वि० — ऊ, ऋ; अनर्चितं द्वि० — क, छ; अ. . च्छतद्वि० — ख.
[18] ०मष्टार्णपद० — ऊ, ऋ; ०मष्टानां पद० — ख, घ, छ, ज.
[19] असंकृतमपि — ओ, ख; असंस्कृतमपि — ङ; इदमर्धं 'च' मातृकायां न दृश्यते ।
[20] तदा — छ.
[21] पूर्वस्तुत तथा पदम् — ओ, ङ; पूर्ववत्तु तथा पदम् — क; पदं पूर्वपदं स्थितम् — ख, घ.
[22] यावदरूपाद्यत्पदाक्रमात् — ओ; यावदरूपाद्यात्पदात् — क, ङ; यावन्निरूपाख्यात्पदात् — ख, घ; यावदरूपाख्यात्पदात् — च.
[23] ०रूपाख्यापदमाक्रमात् — छ; ०रूपाख्यात्पदमाक्रमात् — ज.
[24] द्वात्रिंशतीति योज्यानि — ओ, क, घ, ङ; द्वात्रिंशति नियोज्यानि — ख, छ, ज.
[25] विभो — ख.
[26] साक्षि साक्षि चतुर्वर्णद्वि० — ओ, ज; साक्षि साक्षि चतुर्वर्णं — क, ख, घ, ङ, छ.
[27] कमलस्यैव वाचकं — ख, घ, छ, ज.

[ अष्टदिक्पालमन्त्राः ]

[1]तुरुशब्दपदं [2]ज्ञेयं द्विरुक्त्या चतुरक्षरम् ॥१०६॥
पतङ्गमपि [3]षड्वर्णं पदं स्यात्पूर्ववत्स्थितम् ।
[4]चतुर्वर्णं द्विरुच्चारात्पिङ्गाख्यमुदितं पदम्[5] ॥१०७॥
[6]तद्वज्ज्ञानपदं ज्ञेयं शब्दशब्दपदं तथा ।
सूक्ष्मसूक्ष्मपदस्यापि संख्या शब्दपदात्मिका[7] ॥१०८॥
[8]द्विवर्णं स्याच्छिवपदं तच्च संबोधनात्मकम् ।
[9]तद्वच्छर्वपदं [10]विद्धि बोधनेऽर्णद्वयात्मकम् ॥१०९॥
[11]तुर्वादिशर्व[12]पर्यन्तं [13]पदान्यष्टौ शुभानि तु ।
[14]शक्रादीशानपर्यन्तं [15]दिक्पालानां महात्मनाम् ॥११०॥
[16]वाचकानि मुनिव्याघ्र यज्ञ[17]कर्मण्यनुक्रमात् ।

[ पञ्चविद्याङ्गमन्त्राः ]

[18]त्र्यक्षरं [19]सर्वदपदं [20]सर्वविद्याधिपः स्मृतः ॥१११॥
[21]आमन्त्रणपदं तच्च [22]बोद्धव्यं [23]शास्त्रवित्तमैः ।
पञ्चाक्षरं [24]ब्रह्मशिरः [25]प्रणवादि नमो नमः ॥११२॥

---

[1] कुरु शब्द० — क; तुभ शब्द० — च.
[2] प्रोक्तं — ऊ, ऋ, ख, घ, छ, ज; ज्ञेयाद्वि० — ङ.
[3] षड्वर्णपदं — क, ङ.
[4] चतुर्वर्णद्वि० — ओ, क, घ, ङ; चतुरर्णं द्वि० — ख, छ, ज.
[5] पिङ्गाख्यं पदमुत्तमम् — ऋ; परम् — छ, ज.
[6] तद्विज्ञान० — च.
[7] ०पदात्मिकः — ज.
[8] द्व्यक्षरं — ओ, क, ख, घ, ङ; द्विरक्षरं — च; द्व्यक्षरः — छ, ज.
[9] तद्वच्छक्तिपदं — च; तद्वत्सर्वपदं — छ.
[10] सिद्धिबोधनेन द्वया० — ओ; सिद्धिर्बोधनेन द्वया० — क; सिद्धिबोधनेऽर्णद्वया० — ख, घ, छ, ज; विद्धि बोधनेन द्वया० — ङ.
[11] तुर्वादौ शर्व० — ऊ, ऋ; शर्वादिशर्व० — ओ, ङ; तुर्वादीशपर्यन्त० — ख, घ; उर्वादौ सर्वपर्यन्तं — च.
[12] ०पर्यन्तपदा० — छ.
[13] ०पद्यान्यष्टौ — ऊ, ऋ.
[14] शक्रादावीशपर्यन्तं — ऊ, ऋ, घ, च, छ, ज; चक्रादावीशपर्यन्तं — ख.
[15] पालकानां — ओ, क, ख, घ, ङ, च, छ, ज.
[16] बोधकानि — ऊ, ऋ.
[17] कर्माण्यनु० — ओ, छ, ज.
[18] द्व्यक्षरं — ओ, क, घ, ङ, छ, ज; द्वियक्षरं — ख.
[19] सर्वदर्वपदं — ऊ; सर्वदा पदं — ओ, क; सर्वपदं — ख, घ, ङ, छ, ज.
[20] स च विद्या० — ओ, क, ङ; स च विद्याधिपं स्मृतम् — ख, घ, छ, ज.
[21] आमन्त्रिणपदं — ओ, क.
[22] बोद्धव्यशास्त्र० — ङ.
[23] शास्त्रचिन्तकैः — ऊ, ऋ, च.
[24] ब्रह्मशिरं — ओ.
[25] प्रणवाद्यं — ओ; प्रणवाति — ङ.

**तृतीयमपि [1]तद्वर्णं [2]रुद्राण्या वाचकं [3]पदम् ।**
**शिवाय प्रणवाद्यं यच्चतुर्वर्णं [4]पुरुष्टुतम् ॥११३॥**
**नमो नमः [5]पाशुपतं पदं स्याच्चतुरक्षरम् ।**
**[6]चतुर्थं तानि विप्रेन्द्र पञ्चैतानि पदानि तु ॥११४॥**

**तृतीयमपि तद्वर्णं रुद्राण्याः** इति। अयमर्थः — **सर्वद** इति प्रथमं पदं विद्याङ्गहृदयस्येति विद्याधिपस्य **वाचकम्**। [7]द्वितीयम् **ओं नमो नमः** इति विद्याशिरसः। **तृतीयमपि** पदं [8]ते एव "ओं नमो नमः' इति वर्णाः यस्य तद् **रुद्राण्याः** विद्याशिखायाः **वाचकम्** आवृत्त्या बोद्धव्यम्। न तु पदान्तरम्; येन पदसंख्यायाश्चात्राधिक्यदोषो भवेदित्यविरोधः ॥१११–११४॥

[ वज्राद्यायुधमन्त्रः ]

**[9]एकवर्णं पदं [10]चान्ते [11]वज्रादीनां विधौ [12]स्मृतम् ।**

[13]अथोपसंहारः —

**[14]एकत्रैवं [15]समाप्तानि [16]एकाशीतिपदानि तु ॥११५॥**
**अष्टषष्टयधिकं प्रोक्तं वर्णानां तु शतत्रयम् ।**
**[17]अर्चा तु देवदेवस्य [18]समस्तव्यस्तरूपिणः ॥११६॥**
**[19]यस्यां संनिहितो नित्यं [20]शिवः पूजासु [21]सुव्रत ।**

---

[1] तद्वक्तुं — ओ; तद्वक्तु — क, ख, ङ, छ, ज; तद्वक्तू— घ; तद्वत्तु — च.
[2] रुद्रण्या — ओ; रुद्रं रुद्राणि वाचकम् — क.
[3] परम् — ख, घ, छ, ज; 'क' मातृकायां 'पदम्' इति नास्ति।
[4] परिष्कृतम् — ओ; पुरुष्कृतम् — क; पुरुष्टतम् — ङ.
[5] पाशुपदं — ओ, क, ङ; पाशुपतपदं — छ; पाशुपतःपदं — ज.
[6] चतुर्थ्यन्तानि — ऊ, ॠ, ओ, क, ख, घ, ङ. च, छ, ज। अत्र वृत्तिमनुसृत्य 'चतुर्थं तानि' इति पाठः शोधितः।
[7] द्वितीयांशो नमो — ऊ, ॠ.
[8] तलवोन्नमो नमः — ऊ; तलवोन्न नमो नमः — ॠ.
[9] एकवर्णपदं — ओ, क, ख, घ, ङ.
[10] चात्र — ओ.
[11] अर्चादीनां विधे — ख, घ; अचदिना विधे — छ; अचदीना विधे — ज.
[12] स्मृतः — ओ, ख, घ, छ, ज.
[13] अथोय संसार — ऊ, ॠ.
[14] एकत्रैव — ओ, क, ख, घ, ङ, च, छ, ज.
[15] समस्तानि — ऊ, ॠ, ओ, क, ङ, च.
[16] एतानीति — च.
[17] अर्चामि देव० — ओ; अर्चां तु देव० — क; अर्चात्तु देव० — घ; अचात्तु — छ; अचातु ज.
[18] समस्ताद्व्यस्त० — ख; समस्ता व्यस्त० — घ.
[19] यस्या संनिहितो — ख, ङ, छ, ज.
[20] शिवःपूजा सुव्रत — ऊ; शिवपूजा सुव्रतम् — ॠ; शिवपूजा तु सुव्रत — ओ, ङ; शिवपूजासु सुव्रत — क, छ, ज.
[21] सुव्रतः — च.

## व्योमव्यापिमन्त्राणां पदसंख्या वर्णसंख्या च

| पदसंख्या | | वर्णसंख्या |
|---|---|---|
| | **शिवाङ्गमन्त्राः** | |
| १ | ओं | १ |
| २ | व्योमव्यापिने | ५ |
| ३ | व्योमरूपाय | ५ |
| ४ | सर्वव्यापिने | ५ |
| ५ | शिवाय | ३ |
| | **विद्येश्वरमन्त्राः** | |
| ६ | अनन्ताय | ४ |
| ७ | अनाथाय | ४ |
| ८ | अनाश्रिताय | ५ |
| ९ | ध्रुवाय | ३ |
| १० | शाश्वताय | ४ |
| ११ | योगपीठसंस्थिताय | ८ |
| १२ | नित्यं योगिने | ५ |
| १३ | ध्यानाहाराय | ५ |
| | **गायत्रीमन्त्रः** | |
| १४ | ओं नमः शिवाय | ६ |
| | **सावित्रीमन्त्रः** | |
| १५ | सर्वप्रभवे | ५ |
| | **विद्येश्वरोपचारमन्त्रः** | |
| १६ | शिवाय | ३ |
| | | ७१ |
| | **पञ्चब्रह्ममन्त्राः** | ७१ |
| १७ | ईशानमूर्धाय | ६ |
| १८ | तत्पुरुषवक्त्राय | ७ |
| १९ | अघोरहृदयाय | ७ |
| २० | वामदेवगुह्याय | ७ |
| २१ | सद्योजातमूर्तये | ७ |
| | **चण्डेशमन्त्रः** | |
| २२ | ओं नमो नमः | ५ |
| | **चण्डेशषडङ्गमन्त्राः** | |
| २३ | गुह्यातिगुह्याय | ६ |
| २४ | गोप्त्रे | २ |
| २५ | निधनाय | ४ |
| २६ | सर्वविद्याधिपाय | ७ |
| २७ | ज्योतीरूपाय | ५ |
| २८ | परमेश्वरपराय | ८ |
| | **चण्डेशासनमन्त्रः** | |
| २९ | अचेतन अचेतन | ८ |
| | **अनन्तासनमन्त्राः** | |
| ३० | व्योमिन् व्योमिन् | ४ |
| ३१ | व्यापिन् व्यापिन् | ४ |
| ३२ | अरूपिन् अरूपिन् | ६ |
| ३३ | प्रथम प्रथम | ६ |
| | | १७० |

| पदसंख्या | | वर्णसंख्या |
|---|---|---|
| | | १७० |
| ३४ | तेजस्तेजः | ४ |
| ३५ | ज्योतिर्ज्योतिः | ४ |

**केसरमन्त्राः**

| | | |
|---|---|---|
| ३६ | अरूप | ३ |
| ३७ | अनग्ने | ३ |
| ३८ | अधूम | ३ |
| ३९ | अभस्म | ३ |
| ४० | अनादे | ३ |
| ४१ | ना ना ना | ३ |
| ४२ | धू धू धू | ३ |
| ४३ | ओं भूः | २ |
| ४४ | ओं भुवः | ३ |
| ४५ | ओं स्वः | २ |
| ४६ | अनिधन | ४ |
| ४७ | निधन | ३ |
| ४८ | निधनोद्भव | ५ |
| ४९ | शिव | २ |
| ५० | सर्व | २ |
| ५१ | परमात्मन् | ४ |
| ५२ | महेश्वर | ४ |
| ५३ | महादेव | ४ |
| ५४ | सद्भावेश्वर | ५ |
| ५५ | महातेजः | ४ |
| ५६ | योगाधिपते | ५ |
| ५७ | मुञ्च मुञ्च | ४ |
| ५८ | प्रथम प्रथम | ६ |
| ५९ | शर्व शर्व | ४ |
| ६० | भव भव | ४ |
| ६१ | भवोद्भव | ४ |
| | | २७० |

| पदसंख्या | | वर्णसंख्या |
|---|---|---|
| | | २७० |
| ६२ | सर्वभूतसुखप्रद | ८ |
| ६३ | सर्वसान्निध्यकर | ७ |
| ६४ | ब्रह्मविष्णुरुद्रपर | ८ |
| ६५ | अनर्चित अनर्चित | ८ |
| ६६ | असंस्तुत असंस्तुत | ८ |
| ६७ | पूर्वस्थित पूर्वस्थित | ८ |

**कमलमन्त्रः**

| | | |
|---|---|---|
| ६८ | साक्षिन् साक्षिन् | ४ |

**दिक्पालमन्त्राः**

| | | |
|---|---|---|
| ६९ | तुरु तुरु | ४ |
| ७० | पतङ्ग पतङ्ग | ६ |
| ७१ | पिङ्ग पिङ्ग | ४ |
| ७२ | ज्ञान ज्ञान | ४ |
| ७३ | शब्द शब्द | ४ |
| ७४ | सूक्ष्म सूक्ष्म | ४ |
| ७५ | शिव | २ |
| ७६ | शर्व | २ |

**विद्याङ्गमन्त्राः**

| | | |
|---|---|---|
| ७७ | सर्वद | ३ |
| ७८ | ओं नमो नमः | ५ |
| ७९ | ओं शिवाय | ४ |
| ८० | नमो नमः | ४ |

**वज्राद्यायुधमन्त्रः**

| | | |
|---|---|---|
| ८१ | ओम् | १ |
| | | ३६८ |

प्रथमं हि पदपञ्चकमत्र सर्वाङ्गादीनां पञ्चानां [१]शिवाङ्गानाम्, ततः "[२]अनन्ताय" इत्यादीन्यष्टौ विद्येशानाम्, ततः [३]पदद्वयं गायत्रीसावित्र्योः, ततः [एकं] पदं विद्येशहृदयम्, ततः "[४]ईशानमूर्धाय" इत्यादीनि पञ्च ब्रह्मणाम्, ततः परं [५]पदाष्टकं चण्डेशस्य साङ्गनेत्रासनस्य, ततः पदषट्कं धर्मादिचतुष्टयकर्णिकासहितस्यानन्तेशस्य, ततश्च अरूपपदात् पूर्वस्थितपदं यावद्द्वात्रिंशत्पदानि केसराणाम्, ततः [एकं] पदं पद्मस्य, ततोऽष्टौ लोकपालानाम्[६], ततः [७]सर्वद आदिपदचतुष्टयमेकपदावृत्त्या पञ्चानां विद्याङ्गानाम्, [८]परतस्त्वेकार्णमन्त्यं पदं [९]लोकपालास्त्राणाम् इत्येवमियमेकाशीतिपदा अष्टषष्टयधिकवर्णशतत्रय[१०]युक्ता व्योमव्याप्यादि[११]मन्त्रतनुर्भगवतः समस्ता; [१२]व्यस्ता त्वङ्गब्रह्मादिरूपेणेति ॥

**[१३]न चान्तोऽस्त्यत्र [१४]मन्त्राणामिति योगाय भाषितम् ॥११७॥**
**लक्षणं मन्त्रमुख्यानां न च [१५]व्यासोपयुज्यते ।**

**न च** अतः समुच्छ्रियमाणानां **मन्त्राणामन्तोऽस्ति इति अत्र** क्रियोप**योगाय मुख्या**नामेवोद्धारात्मकं **लक्षणं** संक्षेपेणोक्तमिति ॥

**एकोऽपि [१६]वर्णो देवानां वाचकः [१७]परिकीर्तितः ॥११८॥**
**[१८]सर्वे ह्येकस्य युज्यन्ते यतस्ते [१९]विश्वरूपिणः ।**
**[२०]सर्वकर्मकराः सर्वे सर्वे सर्वार्थसाधकाः ॥११९॥**
**सर्वरूपधराः सर्वे सर्वे चामोघशक्तयः ।**
**शिव[२१]कायोद्भवाः सर्वे न मीमांस्याः कुबुद्धिभिः ॥१२०॥**
**प्रमाणमागमं [२२]बुद्ध्वा श्रद्धा [२३]कार्या विमुक्तये ।**

---

[१] विद्याङ्गानाम् — ऊ, ऋ.
[२] मतङ्ग० क्रिया० १.६४उ० — ६९पू० ।
[३] पादद्वयं — ऊ, ऋ.
[४] मतङ्ग० क्रिया० १.७२ उ० — ७६पू० ।
[५] पदार्थाष्टकम् — ऊ, ऋ.
[६] लोकपानाम् — ऋ.
[७] सर्वदमनादि० — ऊ, ऋ.
[८] परतस्ते सत्यपदं — ऋ.
[९] लोकपालानाम् — ऊ, ऋ; 'लोकपालानाम्' इति पूर्वमेव निर्दिष्टत्वात्, मूले च 'वज्रादीनाम्' इति विद्यमानत्वात् तदनुसारेण 'लोकपालास्त्राणाम्' इति व्याख्याने शोधितम् ।
[१०] युक्त्या — ऊ, ऋ.
[११] ०मन्त्रस्तनुर्भगवता — ऋ.
[१२] व्यस्तास्त्वङ्ग० — ऋ.
[१३] न चान्योऽस्त्यत्र—ओ, क, घ, ङ; न चान्योस्तिस्त्र०—ख, छ, ज; न चान्तो न्यस्त० — च.
[१४] मन्त्राणां वियोगाय सुभाषितम् — ओ, क, ङ; मन्त्राणां द्वितयोगाय — ख; मन्त्राणां द्वितयोगाय भाषिणम् — घ, ज; मन्त्राणां द्वितयोगोय भाषिणम् — छ.
[१५] व्यास उपयुज्यते इत्यत्र संधिरार्षः ।; न्यासोप० — च.
[१६] वर्णदेवानां — छ, ज; 'वर्णो मन्त्राणां' इति वृत्तिकृदभिमतः पाठ इति भाति ।
[१७] परिकीर्तितम् — ङ, छ, ज.
[१८] सर्वेऽप्येकस्य — ओ, क; सर्वेऽप्येकत्र — ख, घ, छ, ज; सव्येऽप्येक युज्यन्ते — ङ.
[१९] विश्वमूर्तयः — ओ, क, ख, घ, ङ, च, छ, ज.
[२०] सर्वकार्यकराः — च.
[२१] ०कार्योद्भवाः — ऊ, ऋ, ख.
[२२] बध्वा — ओ, क.
[२३] कार्यविमुक्तये — ऊ, ऋ, ओ.

सिद्धये च मुनिव्याघ्र [1]नाश्रद्धातः फलं क्वचित् ॥१२१॥
[2]प्राप्यते [3]स्वल्पमप्यत्र [4]किं पुनः शिवता परा ।

**एकोऽपि** च प्रणवाद्यात्मको **वर्णः** सर्वेषां मन्त्राणां **वाचकः सर्वे** च वर्णाः **एकस्य** वाचकाः । यतो वर्णा अनेकाभिधानशक्तिमूर्तयः, तद्वाच्याश्च सर्वदा **सर्वार्थसाधकाः** इत्याद्युक्तं **विद्यापादे**[5] इति ॥

एवं मन्त्रात्मकमपि दीक्षाङ्गमुक्त्वा क्षेत्ररूपमाह —

[6]हिमवान्पारियात्रश्च[7] [8]विन्ध्यश्चाप्यचलोत्तमः ॥१२२॥
[9]पुण्योऽपरो [10]गिरिः [11]सह्यः [12]शक्तिमानपि [13]शस्यते ।
[14]श्रीशैलोऽनुत्तमः प्रोक्तो [15]महेन्द्रश्चातिपुण्यवान् ॥१२३॥
एते [16]गिरिवराः प्रोक्ताः साधकानां [17]सुखावहाः ।
[18]हिमालयसमीपस्था भूमयः प्रवरा मुने ॥१२४॥
सरिद्गङ्गा [19]महापुण्या कालिन्दी [20]चाप्यनिन्दिता ।
[21]सरस्वती [22]नर्मदा च [23]चतस्रः सरितो वराः ॥१२५॥
[24]आभ्योऽप्यभावाद्याः प्राप्ताः [25]स्वयमेव [26]महार्णवम् ।

---

[1] नाश्रद्धा तत्फलं — ऊ, ऋ; नाश्रद्धानः फलं — ङ; नाश्रद्धस्य फलं — च.
[2] प्राप्नोति स्वल्प० — च.
[3] स्वल्पमन्यत्र — ओ, क, ख, घ, ङ, छ, ज.
[4] किं पुनर्जीविता पराः — ओ, क; किं पुनः शिवतत्पराः — ङ.
[5] मतङ्ग० विद्या० ७.४२ उ० — ४४, ७२, ७३.
[6] हिमवान् वा पारियात्रो — ख, घ; हिमवान्वा पारियात्रे — छ, ज.
[7] ०यात्रं च — ङ.
[8] विन्ध्यं चा० — ङ.
[9] पुण्ये वरो — ओ; पुण्ये परो — ख, घ; पुण्यो वरो — ङ.
[10] गिरः — छ; शिरः — ज.
[11] सिंहः — ओ, क, ङ; सव्यः — ख, घ, ज; सवृ — छ
[12] शक्तिमानपि — ऊ, ऋ, ज; शक्त्यमानपि — ओ; शुक्त्यमानपि — क.
[13] शक्यते — ऊ, ऋ.
[14] श्रीशैलेनोत्तमः — ऊ, ऋ; श्रीशैलानुत्तरः — ओ; त्रिशैलोऽनुत्तमः — ख; श्रीशैलानुत्तमः — ङ.
[15] माहेन्द्रश्चापि — ऊ, ऋ; महेन्द्रश्चादि० — क.
[16] गिरिचराः — क; ते गिरयः प्रोक्ता शाकानां — च.
[17] सुखावहः — छ, ज.
[18] शिवालयसमीपस्था — ऊ, ऋ, ओ, क, ख, घ, ङ, च, छ, ज; वृत्तिमनुसृत्यात्र 'हिमालयसमीपस्था' इति पाठः शोधितः ।
[19] महामुख्या — ओ, क.
[20] चापि निन्दितः — ऋ; वाप्यनिन्दिता — ओ, क, ङ.
[21] सरामा नर्मदा चैव — ख; सरमा नर्मदा चैव — घ, छ, ज.
[22] निर्मदा च — ङ.
[23] ततस्तु सरितो — ऊ, ऋ.
[24] आभ्यो ह्यभावाद्याः प्राप्ता — ऊ, ऋ, च; आभ्येभ्यभावाद्याः प्राप्ताः — ओ; आभ्यो स भवा याः प्राप्ता — क; आभ्यो ह्यपोऽन्याः प्राप्ताश्च — ख, घ, छ, ज.
[25] स्वयमेवं — ऋ.
[26] महार्णवः — ओ, ख, घ, छ, ज.

**गङ्गायमुनयोर्मध्यं[1] दीक्षायाः क्षेत्रमुत्तमम् ॥१२६॥**
**[2]सरितां संगमः [3]शस्त उद्यानं वा [4]मनोरमम् ।**
**विमलाम्बु[5]सरः श्रेष्ठं यत्र [6]वा नलिनी [7]शुभा ॥१२७॥**
**[8]एभ्यो [9]ह्येकतमं [10]भद्रमथवा यन्मनोरमम् ।**

अत्र चोद्देशक्रमेण दीक्षाक्षेत्राणां पूर्वं पूर्वमुत्कृष्टमिति सर्वोत्कृष्टता हि हिमवतः। [11]**हिमालयसमीपस्था भूमयः** इति स्वयम्भूक्षेत्राणि भूतेश्वरादीनीत्यर्थः ॥

न चैतावदत्र क्षेत्रलक्षणम्। किं तु—

**[12]तत्र भूमिं परीक्षेत [13]घनां पूर्वोत्तर[14]प्लवाम् ॥१२८॥**
**[15]गुरुमृत्स्निग्ध[16]देशस्थां लक्षणैश्च [17]शुभैर्युताम् ।**
**[18]सुसमां [19]कारयेद्यत्नादाचार्यः शिवसंमतः[20] ॥१२९॥**
**[21]खात्वा [22]नाभिप्रमाणं [23]च [24]शल्योद्धारं [25]च कारयेत् ।**
**केशभस्मतुषाङ्गारशर्करास्थितृणादयः ॥१३०॥**
**प्राणिनश्चापि ये [26]दुष्टास्तान्प्रयत्नेन[27] संत्यजेत्[28] ।**
**[29]सत्कूर्ममीनमण्डूकाः प्राणिनः [30]शुभदाः स्मृताः ॥१३१॥**

---

[1] ०र्मध्ये — ओ, क, ख, घ, ङ, च, छ, ज.
[2] सरितः सङ्गमं शस्तम् — ओ, क, ङ; सरितः सङ्गमः शस्तः — ख, घ; सरितोः सङ्गमः शस्तः — च.
[3] शस्तपद्यानं — छ; शब्दपद्यानां — ज
[4] मनोरवम् — ङ.
[5] ०रसश्रेष्ठं — ओ, क, ख, ङ.
[6] या नलिनी — ख, घ, छ, ज.
[7] शुभाः — क.
[8] एकेभ्यो ह्येकतम भट्टथवा — ङ.
[9] ह्येकशतं — ऊ, ऋ; ०प्येकतमं — च.
[10] भद्रा यथा वायं मनो० — ओ; भद्रं यथा वायं मनो० — क; भद्रमध्वायं मनो — छ, ज.
[11] काश्मीरदेशे हरमकुटाख्यपर्वतसानौ स्थितं भूतेश्वराख्यं स्वयंभूक्षेत्रं 'बूत्सर' (Buthser) नाम्नाधुनापि प्रसिद्धम्। नीलमतपुराणे राजतरङ्गिण्यां चास्य माहात्म्यं वर्ण्यते ।
[12] अत्र भूमि — ख.
[13] घनाः — क.
[14] ०प्रभाम् — ओ; ०प्रभाः — क; ०प्लवम् — छ, ज.
[15] गुरुभूत्स्निग्धजस्थानं — ओ; गुर्वभ्रस्निग्धं तस्थाम — क; गुरुमृत्स्निग्धस्थां — ङ.
[16] ०देहस्थां — च.
[17] शुभैर्युतम् — ओ, ख; शुभैर्युताः — क; गुणैर्युताम् — च.
[18] सुसमा — ओ, घ, छ, ज.
[19] कारयेद्यत्तादद्वार्यः — ओ; कारयेद्यक्तादाचार्यः — क.
[20] ०सत्तम — ओ, ङ; ०सत्तमः — क, ख, घ, छ, ज.
[21] स्नात्वा — ओ, घ.
[22] सनादिभिप्रमाणं तु — क; निहि प्रमाणं तु — ख, छ; नातिप्रमाणं — च; निहि प्रमाणां — ज.
[23] तु — ओ, क, ख, घ, ङ, छ, ज.
[24] शिवधारं — छ, ज.
[25] तु — च.
[26] तुष्टाः — ओ, क, ङ.
[27] ताः प्रयत्नेन — ओ, क; तां प्रयत्नेन — ङ.
[28] संन्यसेत् — च.
[29] कूर्ममीनसमण्डूकाः — ओ, क, ख, घ, ङ, च, छ, ज.
[30] सुभगाः — च.

[1]वृश्चिका मूषिकाः सर्पास्त्याज्या [2]यत्नान्महामुने ।
शङ्खविद्रुम[3]वैडूर्य[4]राजावर्तादयः शुभाः ॥१३२॥
[5]धातवश्च प्रशस्यन्ते [6]सिद्धिदाश्च महीतले ।
[7]नोद्धार्याः सत्सु तेष्वत्र[8] [9]ध्रुवं सिद्धिर्भवेद्यतः ॥१३३॥
रत्नान्यपि प्रशस्तानि तेभ्यो वज्रमनुत्तमम् ।
[10]प्राच्यां जलं भवेद्भद्रं [11]याम्ये [12]गिरिवरः [13]शुभः ॥१३४॥
[14]प्रत्यग्वनं [15]सिद्धिदं स्यादुदक्सस्यं[16] प्रशस्यते[17] ।
[18]क्षेत्रं [19]दूर्वादिभिर्नद्धं [20]कुशबिल्वोप[21]शोभितम् ॥१३५॥
[22]ग्राह्यं [23]तन्त्रविदा नित्यं सुपरीक्ष्य यथाक्रमम् ।
[24]मृत्समुद्धृत्य निक्षिप्ता [25]भूयो यत्राधिका भवेत् ॥१३६॥
तत्र [26]यागः [27]प्रकर्तव्यः साधकानां महात्मनाम् ।

**घनाम्** इति [28]न तूद्भवज्जलाम् । [29]यथा [30]**गुरुमृच्चासौ स्निग्धदेशस्था** च, [31]तथाभूताम् ।

---

[1] सर्पमूषिकवृश्चिकास्त्याज्या — ओ, क; सर्पाखुवृश्चिकाद्यास्तु त्याज्या — ख; सर्पमूषिकवृश्चिकाद्यास्त्याज्या — घ, ङ, छ, ज; सर्पमूषकवृश्चीकास्त्याज्या — च.

[2] यत्ता महा० — छ; यज्ञा महा० — ज.

[3] ०वैदूर्य० — ओ, क, ख; ०वैसूर्य० — ज.

[4] ०राजावन्तादयः — ऋ.

[5] पानवस्तु — ख; पातवस्तु — घ, छ, ज; यावतश्च — ङ; ऋतवश्च प्रशंसन्ते — च.

[6] सिद्धिदास्ते — ख, घ, च; सिद्धिताश्च — ङ; सिद्धितास्ते — छ, ज.

[7] नोद्वार्याः — च.

[8] ततोद्वार्यं तु तेष्वाथ — ओ, क, ङ; नो धार्यतत्सुतेष्वाय — ख, घ, छ, ज

[9] प्लावसिद्धिर्भवेद्यतः — ओ; प्लावा सिद्धि० — क, ङ; ध्रुवा सिद्धि० — ख, घ, छ, ज.

[10] प्राच्यां जले भवेद्भद्रं — ऊ, ऋ; प्राच्योक — मभवेद्भद्रं — ओ; प्राच्योदकं भवेद्भद्रं — क, ख, घ, छ, ज; प्राच्योकं भवेद्भद्रं — ङ.

[11] याम्यं — ओ; याम्यां — क, ख, घ, ङ, छ, ज.

[12] गिरिवरं — ओ, क, ङ, च.

[13] शुभम् — ओं, क, घ, ङ, च, छ; शुभाः — ज.

[14] प्रत्यागतं — ओ, क, ङ; प्रत्यग्घनं – ऋ.

[15] सिद्धितं — ङ.

[16] सम्यक् — ओ, क, ङ; शस्यं – ख; संस्थं–च.

[17] च शस्यते — च.

[18] क्षेत्रपूर्वाभिर्नद्धं — ङ.

[19] दूर्वादिभिर्वनं — ऋ; पूर्वाभिनिन्नद्धं — ख, घ; दूर्वादि . . नंत्वं — च; पूर्वाभिनं तुत्थं — छ; पूर्वाभिनं तुद्धं — ज.

[20] कुशं — ख, घ, छ; कुशबिल्वापच्छदितम् — च; क्रूरं बिल्वोप० — ज.

[21] ०बृंहितम् — ओ, क, घ, ङ, छ, ज.

[22] ग्राहिं — छ, ज.

[23] तत्र विद्या — ओ, क, ख; तत्र विदा — ङ, छ, ज.

[24] मृत्समुत्क्षिप्य — ऊ, ऋ; भुवमुद्धृत्य — ओ; भूभृद्भृशविनिक्षिप्ता — क; मृत्स्नद्धृत्य — ङ; मृदमुद्धृत्य निक्षिप्य — च

[25] भूयो यत्रादिको — ओ, क, ङ; बुधोऽप्यत्राधिका — ख; भूयोऽप्यत्राधिका — घ; भूमौ यत्रा० — च.

[26] योगः — ख, घ, छ, ज.

[27] प्रकर्तव्या — ओ; प्रकर्तव्याः — क.

[28] न तूद्भवज्जलानां – ऊ; नभोद्भवजलानां–ऋ.

[29] तथा — ऊ.

[30] गुरुर्मृच्चासौ — ऊ; गुरुमृच्छासौ — ऋ.

[31] तथा भूतम् — ऊ.

गुरुत्वं च मृदः स्वयमेव दर्शयति — [1]"मृत्समुद्धृत्य निक्षिप्ता" इत्यादिना। **लक्षणैश्च** [2]वक्ष्यमाणैः शङ्खविद्रुमादिभिः [3]**शुभैः** युक्ताम्; [4]न त्वशुभैः केशादिभिः। **तत्र यागः प्रकर्तव्यः** इति क्षेत्राणां [5]प्रागुक्तमण्डपाद्यधिकरणतया [6]दीक्षायामङ्गत्वं [7]विकल्पितमित्यर्थः॥

एवं दीक्षाङ्गभूतं क्षेत्रमुक्त्वा द्रव्याण्याह —

**[8]मन्त्राणां [9]भक्तिमास्थाय [10]न शाठ्येन कदाचन ॥१३७॥**
**गव्येन हविषा कार्यं तर्पणं गुरुणा [11]सदा।**
**तदभावा[12]त्तिलैर्वान्यैर्यवैर्वाथ[13] सुशोभनैः ॥१३८॥**
**[14]पद्मैर्बिल्वैः [15]समिद्भिर्वा न्यायोपात्तैर्मनोरमैः[16]।**
**[17]द्रव्याण्यथाहरेन्मन्त्री [18]यथालाभं प्रयत्नतः ॥१३९॥**
**[19]अकुत्सितानि [20]यज्ञार्थं [21]पत्राणि [22]कुसुमानि वा।**
**ओषध्यः [23]सुभगाः [24]शस्ता धूपाः [25]प्राण्यङ्गवर्जिताः ॥१४०॥**
**गन्धाश्च [26]सुकृता ग्राह्या ये चान्ये [27]चन्दनादयः।**
**[28]कुङ्कुमागरुकर्पूर[29]प्रमुखाण्यपराण्यपि[30] ॥१४१॥**
**[31]सुभद्राणि सुगन्धीनि [32]धूपाश्चामोदनिस्रवाः।**

---

[1] मतङ्ग० क्रिया० १.१३६ उ०
[2] मतङ्ग० क्रिया० १.१३२उ० — १३६ पू०
[3] शुभ्रैः — ऊ, ऋ.
[4] न तु शुभैः — ऋ.
[5] मतङ्ग० क्रिया० १.१३ —५० पू०.
[6] दीक्षायाङ्गत्वं — ऋ.
[7] विकल्पित इत्यर्थः — ऊ, ऋ.
[8] 'उ, ऋ, च' मातृकासु १३७ उत्तरार्धं १३८ पूर्वार्धं च व्यत्यस्ते भवतः।
[9] भक्तिमार्गस्था — ओ, क, ङ; शक्तिमास्थाय — ख, घ, छ, ज.
[10] घनशाठ्येन — ओ; धनशाठ्येन — ङ; नसाठ्यो न — च; न शाक्तेन — ज.
[11] पुरा — ङ.
[12] ०त्तिलैर्धान्यैं० — ओ, घ, छ, ज.
[13] ०र्यवैर्वात्र — च.
[14] पद्मबिल्वै — ओ, क, ख, घ, ङ. छ, ज.
[15] शमीभिर्वा — क; समिर्व्यो न्यायोपपत्तैर्मनो० — छ; समिर्वो न्यायो० — ज.
[16] मनोहरैः — ओ, क, ङ.
[17] रुद्राण्यपि हरे० — ख, घ, छ, ज; द्रव्याण्याहारयेन्मन्त्री — ङ.
[18] यथालम्भं — ऋ.
[19] ककुत्सितानि — क; आकुत्सितानि — ङ; अकुत्सानाति — च.
[20] यज्ञार्थः — क.
[21] पात्राणि – ओ, क, ख, घ, ङ, छ; मन्त्राणि–च
[22] सुखमानिव — छ; सुखमानि वा — ज.
[23] सुभुजाः — ऊ, ऋ, ख, घ, च, छ, ज.
[24] शुद्धा — ख, घ, छ, ज.
[25] पुण्याङ्ग० — ख, घ, छ, ज.
[26] सुहता — ऊ; सुहृदा — ओ, क; विकृता–ख.
[27] नन्दनादयः — ऋ; चाष्टनादयः — ओ, क
[28] कुङ्कुमागुरु० — ऊ, ऋ.
[29] ०प्रमुखान्यपरा० — घ, ङ, छ, ज; ०प्रमुखान्यपराणि तु — च.
[30] ०ण्यपराणि तु — ऊ, ऋ,
[31] द्रव्याणि सुसुगन्धीनि — ऊ, क, घ; द्रव्याणि सुस्वगन्धीनि — ऋ; द्रव्याण्यपि सुगन्धीनि — ख; सुद्रव्याणि सुगन्धीनि — ङ; द्रव्याणि सुसुगन्धानि — च; द्रव्यासु सुगन्धिनी — छ; द्रव्यासु सुरगन्धीनि — ज.
[32] धूपश्चामोदति स्रगाः — ओ; धूपश्चामोदतिस्स्रगाः — क; धूपश्चामोदनी सृगा — ङ; धूपाश्चामोदनिश्रवाः — च.

नेत्रपट्टांशुकादीनि वासांसि सुबहून्यपि ॥१४२॥
[1]अजीर्णानि विचित्राणि चामराण्युज्ज्वलानि तु[2] ।
[3]रत्नान्यप्युप[4]शोभार्थमाहरेत्प्रयतात्मवान् ॥१४३॥
प्रादेश[5]मात्राः समिध [6]ऋज्वग्रन्थ्यव्रणाः शुभाः ।
[7]अस्फुटिताश्च शस्यन्ते [8]पलाशतरुसंभवाः ॥१४४॥
न्यग्रोधाश्वत्थ[9]प्लक्षोत्थाः [10]प्रशस्ता यागकर्मणि ।
समूलाश्च [11]कुशाः स्निग्धाः [12]निर्व्रणाः क्षेत्रजाः शुभाः ॥१४५॥

द्रव्याणि यान्यत्रोक्तानि, यानि च [13]वक्ष्यमाणानि तानि अकुत्सितादिविशेषविशिष्टान्येव दीक्षाङ्गभूतानि; न तु कुत्सितानीत्यत्र तात्पर्यार्थः। प्रादेशमात्राः समिधः इति अत्र गव्यहविषोऽसंभवेन तिलादिभिः सह विकल्पतो होमसाधकत्वेन याः श्रुताः, ता एवैतल्लक्षणा ज्ञेयाः। न त्वग्निसमिन्धनार्था याः, [14]तासामष्टादशाङ्गुलत्वेनाधिवासने[15] वक्ष्यमाणत्वात्[16] ।

[17]दीक्ष्याश्च [18]साधकास्तन्त्रे ये शिवार्पितचेतसः ।
[19]सत्सङ्गनिरताः [20]शूरा असत्सङ्ग[21]पराङ्मुखाः ॥१४६॥
[22]शुश्रूषाभिरताः शान्ताः कालेन [23]सुपरीक्षिताः ।
[24]सहिष्णवोऽनुरक्ताश्च गुरोः सर्वात्मना सदा ॥१४७॥
[25]बहिश्चर्यासु निष्णाताः स्वकर्मपरिरक्षकाः[26] ।
अन्तःकरणचेष्टाभिर्लक्षयित्वा प्रयत्नतः ॥१४८॥

---

[1] सुजीर्णानि — च.
[2] ०ण्युज्ज्वलान्यपि — ओ, क, ख, घ, ङ, छ, ज.
[3] रक्तान्यप्युप० — ङ.
[4] ०शुभार्धमाह० — छ; ०शोभाख्यमाह० — ज.
[5] ०मात्रसमिधा — ओ; ०मात्रासमिधा — क; ०मात्रासमिध — ख.
[6] ऋज्वाग्रन्थ्य० — ङ; ऋज्व्योऽग्रन्थ्य० — च.
[7] अस्थाहितश्च — ख, घ, ज; अस्फुटितास्य — ङ; अस्फाटिताश्च — च; अस्ताहितश्च — छ.
[8] पालाश० — ख, घ.
[9] ०पत्रोत्था — ऊ, ऋ; वृक्षोत्थाः–ओ, क, ङ.
[10] प्रशस्या याग० — ङ.
[11] शनैः — ओ, क.
[12] निर्वाणाः — ऋ, क, ख; निर्वाणक्षेत्रदाः — ओ; निर्वाणा क्षेत्रदाः — ङ. निवृण० — छ; निवृत्तः — ज.
[13] मतङ्ग० क्रिया० — ४.५१, ५२.
[14] तासामष्टाङ्गुलत्वे० — ऋ.
[15] मतङ्ग० क्रिया० — ५.८१ पू०.
[16] इत आरभ्य पटलसमाप्तिपर्यन्तं मूलश्लोकाः मूलमातृकासु उपलब्धाः। वृत्तिसहितमातृकयोः श्लोकाः वृत्तिश्च नोपलभ्यन्ते ।
[17] दीक्षाश्च — ओ, क, ख, घ; दीक्ष्यास्ते — च; दिव्याश्च — छ, ज.
[18] साधकस्तन्त्रे — ओ.
[19] सत्सङ्गा निरताः — क; तत्सङ्गनिरताः — ङ; सत्सङ्गतिरताः — च.
[20] शान्ता — ख, घ, छ,ज.
[21] परं मुखाः — घ; परं मुखः — छ, ज.
[22] 'ख, घ, छ, ज' मातृकासु १४७, १४८ श्लोकौ न स्तः।
[23] तु परीक्षिताः — च.
[24] 'क' मातृकायां १४७ उत्तरार्धं १४८ पूर्वार्धं च न स्तः।; स भीष्णवोऽनु० — ओ.
[25] बहिश्चर्यानुनिष्णाताः — च.
[26] परिरक्षिताः — ओ, ङ.

[1]शिवशक्तिकरैः स्पृष्टा [2]विनीताः प्रियवादिनः ।
अक्रोधिनोऽ[3]प्यचपलाः [4]श्रद्धधाना जितेन्द्रियाः ॥१४९॥
[5]तेऽनुग्राह्याः सदाक्रूराः [6]स्वाचारपरिपालकाः ।
अन्यथा नाधिकारोऽस्ति [7]दीक्ष्यदीक्षकयोरपि ॥१५०॥

[8]प्रोक्तो [9]दीक्षाङ्ग[10]षट्कः पशुपति[11]वदनोद्गीर्ण[12]तन्त्रोक्तवाक्यै-
ज्ञेयो[13] दीक्षाधिकारः[14] [15]पदगिरि[16]शिखरारूढभावेन [17]गोप्त्रा ।
[18]पाल्यः स्नानार्चनाग्नि[19]हवनजपक्रियो[20]द्गीर्णखड्गेन नित्यं
कार्यं [21]यत्नात्क्रियादौ [22]शिवपदविधिना [23]स्नानमार्गं शृणुष्व ॥१५१॥

[इति श्रीभट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ
क्रियापादे दीक्षाप्रकरणं प्रथमं समाप्तम्]
प्रथमः पटलः

[1] शुश्रूषुभिः करैः — ख, घ, छ, ज; शिवशक्तिकरे — च.
[2] विजिताः — ज.
[3] ह्यचपलाः — च.
[4] श्रद्धया नाजितेन्द्रियाः — क.
[5] तेन ग्राह्याः सदा क्रूरात् — क; तेऽनु ग्राह्यं—छ.
[6] स्ववाचा परिपालकाः — ख, घ, छ, ज.
[7] दीक्षयादीक्षयोरपि — ओ, क, ङ; दीक्षादीक्षकयोरपि — च; दिक्ष्यदिकयोरपि — छ, ज.
[8] प्रोक्तं — ओ, क; प्रेक्ष्यो — ख, घ, छ, ज; प्रोक्त० — ङ.
[9] येषाङ्गषट्कः — ख, घ, छ, ज.
[10] ०षट्कं पशु० — ओ, ङ; ०षट्कर्म पशुपति० — क.
[11] ०वचनोद्गीर्ण० — ओ, क.
[12] ०तन्त्रोत्थ० — ख, घ, छ, ज; ०तन्त्रार्णवोक्त्या — च.
[13] ज्ञेयं — ओ, क, ङ; ज्ञेये — छ, ज.
[14] ०कारे — ओ, क, ङ.
[15] पदशरि० — ओ.
[16] ०शिवारूढ० — ङ; शिखरोरूढ० — ज.
[17] गोप्ता — ख, घ, च, छ, ज.
[18] पाल्यौ स्नानार्चनेऽग्नौ भवन० — ओ, क; पाल्यास्तानर्चनाङ्गभवन — ख; पाल्या स्नानार्चानाग्नौ हवन० — घ; पाल्यौ स्नानार्चनाग्नौ हवन० — ङ; पाल्यास्तानाचनाग्नौ — छ, ज.
[19] ०प्रहुतिजपगतोद्गीर्ण० — च; ०भवन जप० — ज.
[20] ०द्गीर्णखण्डेश — ओ, क.
[21] रत्नान् क्रियादौ — ओ, क; रत्नात्क्रियादौ — ङ.
[22] शिवयति विधिना — च.
[23] स्नानमादौ शृणुष्व — च; 'शृणुष्व' इत्यात्मनेपदमार्षम् ।

## द्वितीयः पटलः

### स्नानप्रकरणम्

[1]अथ दीक्षा[2]क्रमप्राप्तं [3]स्नानं चात्र सुविस्तरात् ।
वर्णयिष्यामि ते [4]विप्र यथावत्क्रमयोगतः ॥१॥
दानं नाम परा काष्ठा [5]मन्त्रप्रध्वस्त[6]कर्मणाम् ।
[7]पशोर्या व्यक्तिमायाति प्रक्षीणकलुषस्य च[8] ॥२॥
[9]अनयोः शासने सिद्धा दीक्षा [10]क्षपणदानयोः ।
सा च यत्र यथा येन [11]यत्पूर्वा यदनुक्रमात् ॥३॥
[12]अवधारय [13]विप्रेन्द्र रहस्यमिदमुत्तमम् ।
[14]सर्वावाप्तिकरं सिद्धं तन्त्रेऽस्मिन्पारमेश्वरे ॥४॥

[15]**[दी]क्षा** इति दीक्षाशब्दः **सिद्ध** इत्यर्थः। **सा च यत्र** तत्त्वे भुवने वा **यथा** अ[ध्व]ादिसंयोजनाप्रकारयुक्ता, **येन** च शिवाचार्यलक्षणेन कर्त्रा, यस्माच्चाधिवासनादेः **पूर्वा** यस्य च [16]स्नानादेरनुक्रमेण क्रियते। तदवधार्यताम्। यत एतद्दीक्षाख्यं **रहस्यं** भुक्तिमुक्तिप्रसादकत्वात् **सर्वावाप्तिकरं सिद्धम्** इति ॥३–४॥

अथ स्नानस्यापि [17]प्रकरणाद्दीक्षाङ्गत्वे प्राप्ते वचनम् —

[18]न्यासार्चनादिकः [19]कृत्स्नो [20]विधिः स्नानपुरःसरः[21] ।
यस्मा[22]त्तस्मात्तु [23]सामान्यमादौ स्नानं [24]प्रचक्ष्यते ॥५॥

---

[1] ऊ, ॠ मातृकयोः १-४ श्लोकाः न सन्ति ।
[2] ०क्रमः प्रोक्तः — ओ, क, ङ; ०क्रमः प्राप्तः — ख, घ, छ, ज.
[3] स चेदानीं प्रवि० — ओ, क, ख, घ, ङ, छ, ज; स्थानं चात्र सु० — च.
[4] विप्रा — ङ.
[5] यत्र — ओ, क, ख, घ, ङ, छ, ज.
[6] ०वर्मणः — ओ, क; ०वर्त्मनः — ख, घ, छ, ज; ०वर्त्मना — ङ.
[7] पशोर्यं वक्ति० — ङ.
[8] तु — च.
[9] अनुश्रेयाः सासने विद्धा — ङ.
[10] क्षयपदातयोः — च.
[11] यत्पूर्ववदनुक्रमात् — ओ; यत्पूर्वयदनुक्रमात् क, घ; यत्पूर्वं यदनुक्रमात् — ख; यत्पूर्वदनुक्रमात् — छ, ज.
[12] अवधार्यं तु — ओ, क, ख, घ, ङ, च, छ, ज.
[13] विप्रेन्द्रा — ङ.
[14] सर्वप्राप्तिकरं — ओ; सर्वव्याप्तिकरं — छ; सर्ववाप्तिकरं — ज.
[15] प्रथमद्वितीयश्लोकयोर्वृत्तिर्लुप्ता ।
[16] ना प्रानादेरनु० — ॠ.
[17] प्रकरणदीक्षाङ्गत्वे — ऊ, ॠ.
[18] न्यासार्चनादिकं — ऊ, ॠ, ङ; स्नानार्चनादिकं — ओ, क.
[19] कृत्स्नविधिस्नान० — ख, घ, छ, ज.
[20] विधिस्नान० — ॠ, ओ, क, ङ.
[21] ०परम्पराः — ॠ; ०पुरःसरम् — ओ, क, छ; ०पुरःसराः — ख, घ; ०पुरःसराम् — ज.
[22] तस्मात्वसामान्य० — ओ; तस्मात्सामान्य० — क; तस्मात्त्वसामान्य० — ङ.
[23] सामान्यामादौ — छ, ज.
[24] प्रचक्षते — ऊ, ॠ, ओ, क, ख, घ, ङ, छ, ज; प्रचक्ष्महे — च.

नित्यादिसर्वकर्माङ्गमित्यर्थः। अत एव [सामान्य]मित्युक्तम्। [1]प्रकरणाद्धि वाक्यं बलवदिति **वाक्यविदः**[2]। यदाहुः[3] — "[4]श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां स[मवाये पार]दौर्बल्यम्" इति। यद्येवं दीक्षाप्रकरणे पाठोऽस्य निष्प्रयोजनम्। न, तत्राप्यङ्गत्वात्। दीक्षितपुरुषार्थत्वेनापि च **चर्यापादे** वक्तव्यस्य प्रसङ्गादत्रैव [5]निर्देश इत्यदोषः ॥५॥

तच्च यस्मिन्नधिकरणे कर्तव्यं तदुच्यते —

**नदीनदप्रवाहेषु [6]पल्वलेषु सरस्सु वा।**
**[7]तटाके [8]दीर्घिकायां वा [9]देवखातेऽपि वा शुभे ॥६॥**
**पुष्करिण्यां [10]विविक्तायां [11]गृहे वा [12]साधकोत्तमः।**
**स्नायात्कर्मप्रसिद्ध्यर्थम्"**

**दीर्घिकायाम्** इति वाप्याम्। एवं स्नानाधिकरणत्वेन सामान्यतः सर्वेषामत्र प्राप्तत्वात् परिसंख्यया अरघट्टादीनामस्य [13]वाक्यस्य निवृत्तौ तात्पर्यमिति नानर्थकता। यदाहुः[14] —

"विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्ते परिसंख्या निगद्यते॥" इति॥

तत्र —

[ वारुणस्नानविधिः ]

**"गृहीत्वा [15]मन्त्रितां [16]मृदम् ॥७॥**
**फट्कारान्तं समुच्चार्य [17]शिवास्त्रमनलप्रभम्।**
**जलतीरे विधानज्ञो [18]भूःपदेन [19]निधापयेत् ॥८॥**
**प्रथमेन [20]विशोध्यादौ ततोऽस्त्रेणाभिमन्त्रयेत्।**
**[21]तदर्धेनात्मनः [22]सर्वं [23]शरीरं [24]शिरसः क्रमात् ॥९॥**

---

[1] प्रकरणादिवाक्यं — ऋ.
[2] 'वाक्यं हि प्रकरणाद् बलीयः' — शाबरभाष्यम् २.२.८. २२.
[3] पू० मी० सू० ३.३.१४.
[4] श्रुतिलिङ्गप्रकरण० — ऋ.
[5] निर्दोष० — ऋ.
[6] पर्वतेषु — ओ, क.
[7] तडागे — च.
[8] दीपिकायां — ख.
[9] देवखाते तथा — ऊ, ऋ; देवमात्रेऽपि वा — ओ, क; देवघातेऽपि वा — ङ; देवखातेऽथवा — च.
[10] विवक्तायां — ङ.
[11] ग्रहे — छ, ज.
[12] साधकोत्तमैः — ऊ, ऋ; साधिकोत्तमः — ङ.
[13] वाक्यनिवृत्तौ — ऊ, ऋ.
[14] तन्त्रवार्तिके — १.२.४.३४.
[15] मतितां — ऋ.
[16] मृतिम् – ओ, क, घ; मतिम् – ङ; मृदा–छ.
[17] शिवस्त्रमनलं प्रभम् — छ, ज.
[18] भूपदेन — ऋ, ओ, क, ख, घ, ङ, च, छ; भूपतेन — ज.
[19] निधानयेत् — ओ, क.
[20] विशोध्याथ — ङ.
[21] तदेव नात्मतः — ऊ; तदेव नात्मनः — ऋ; तदर्थेनात्मनः — ओ; तदूर्ध्वेणात्मनः — च.
[22] सार्धं — ओ, क.
[23] शशिरं — छ, ज.
[24] शिरसा — ख, घ, ङ; सारीरं क्रमात्–छ, ज.

[1]त्रिष्कृत्वा क्षालयेत्सम्यक् [2]कटिं जङ्घे च भूरिशः ।
[3]ततोत्तीर्य [4]जलाच्छेषां [5]मृदमस्त्रेण मन्त्रयेत् ॥१०॥
ध्यायेदस्त्रं महा[6]दीप्तं [7]ज्वलद्वह्निशिखा[8]निभम् ।
[9]आग्नेय[10]धारणासंस्थस्तच्छिखोत्थेन भूरिणा ॥११॥
तेजसा [11]भाव्य ततोयं [12]भस्मीभूतं समन्ततः ।
तेन विघ्नाः [13]प्रणश्यन्ति येऽम्भसो[14]ऽन्तर्बहिः स्थिताः ॥१२॥
[15]नभःस्थाश्च [16]प्रणश्यन्ति [17]दह्यमाना भयाकुलाः ।
[18]ततोंकार[19]पदं ध्यायेदमृत[20]स्यन्दि निर्मलम् ॥१३॥
[21]तदुत्थाभिरमोघाभि[22]र्जलधाराभिरादरात् ।
[23]तत्तीर्थं पूरयेन्मन्त्री पूरयित्वा च विन्यसेत् ॥१४॥
[24]हुंकारपुटसंस्थेन [25]ज्योतिर्ज्योतिःपदेन तु ।
[26]संवर्ताग्निप्रदीप्तेन[27] [28]परितोर्ध्वमधस्तथा ॥१५॥

---

[1] त्रिः कृत्वा — ओ, क, ख, घ, ङ, छ, ज.

[2] कटिजङ्घे — ओ, क, ङ; पाणी जङ्घे च — ख, घ; पाणि जङ्घे च — छ; पाणिजङ्घे च — ज.

[3] तदोत्तीर्य — ऊ, ॠ; ततो कीर्य — ओ, क; 'तत उत्तीर्य' अत्र संधिरार्षः ।

[4] जलाच्छेषं — क; जलाच्छेद० — ङ.

[5] मृदमीशेन — ओ, क, ङ; मृदमीशान — ख, घ, छ, ज.

[6] ०दीप्त० — ओ, ङ.

[7] ज्वलदग्निशिखा० — ऊ, ॠ, ख, घ, च, छ, ज.

[8] ०कुलम् — ऊ, ॠ, ओ, क, ङ, च.

[9] आग्नेयं — ऊ, ॠ; 'आग्नेयधारणा' मतङ्गे योगपादे द्वितीयपटले रौरवे विद्यापादे १८३ पृष्ठे च पश्यत ।

[10] ०धारणास्संस्थिते . . . र्थेन — ओ, क; ०धारणासंस्थं तच्छिखोत्थेन — ख, घ, च, छ, ज; ०धारणासंस्थं तच्छिखोक्तेन — ङ.

[11] वर्तने तोयं — ओ, क; यावत्तत्तोयं — ख; यावत्ततोत्तोयं — घ; वर्तते तोयं — ङ; यावतोत्तोयं — छ, ज.

[12] भस्मभूतं — ओ, क, घ, ङ, छ, ज.

[13] प्रशाम्यन्ति — ऊ, ॠ, च.

[14] ०ऽन्तर्व्यवस्थिताः — ऊ; ०ऽन्तर्व्यवस्थितः — ॠ; ०न्ते व्यवस्थिताः — च.

[15] तटस्थाश्च — ऊ, ॠ, ओ, क, ङ, च; नभस्तथा च — घ.

[16] प्रणश्यन्ते — ख, घ, छ, ज.

[17] दण्डचमाना — ओ; गृह्यमाना भवेत्कुलाः — च.

[18] तदोङ्कार० — ऊ, ॠ, क; ततोऽङ्गार — ख, घ, ङ, छ, ज; 'तत ओंकार' अत्र संधिरार्षः ।

[19] ०भय ध्यायेदमृत० — ओ, क; ०पदं ध्यातममृत० — ख, घ, छ, ज.

[20] ०स्यन्दनिर्मलम् — ॠ, छ, ज.

[21] तदुत्थापिरमोसाभि — ङ.

[22] ०र्ज्वालाधाराभिराधरात् — ऊ; ०र्ज्वालाधाराभिराधराम् — ॠ; ०र्जलधारादिभिस्तथा—ओ, क; ०र्जलताराभिरादरात् — ङ.

[23] रुत्तरं पूरये० — छ, ज.

[24] हुंकारं पुट० — ऊ; हुंकारं पट० — ॠ; विकारपुट० — क.

[25] ज्योतिज्योतिपदेन तु — ओ.

[26] वर्तमानाग्निदीप्तेन — ओ, क, ङ; संवर्तनाग्निदीप्तेन — ख, घ, छ, ज.

[27] ०प्रदीपेन — च.

[28] परितोर्ध्वमतस्तथा — ओ, क; परितोऽग्निरधस्तथा — ख, घ, ज; परिताध्यमथास्तथा — ङ; परितोऽग्निरदस्तदा — छ; 'परित ऊर्ध्वं' अत्र संधिरार्षः ।

प्राकारमिति[1] [2]तां [3]पश्चान्मृदमस्त्राभिमन्त्रिताम्[4] ।
गृहीत्वा प्रक्षिपेद्दिक्षु तीर्थमध्ये तु [5]देशिकः ॥१६॥
[6]आलभेद्ब्रह्मभिः सम्यक् शिवेन च यथाक्रमम् ।
[7]साङ्गेन कवचं [8]पश्चाच्छादकं परिचिन्तयेत् ॥१७॥
[9]शिरोवदन[10]हृद्गुह्यं [11]ब्रह्मभिश्चालभेत्क्रमात्[12]
[13]ततोद्वर्तनकैः पश्चात् सुगन्धामलकैरपि ॥१८॥
[14]गायत्र्या मन्त्रितैर्मन्त्री[15] [16]स्नायाच्छिवमनुं स्मरन्[17] ।
अभिषेकश्च कर्तव्यो मन्त्रसंहितया [18]सदा ॥१९॥
उत्तीर्य शिवतीर्थात्तु वासोऽन्यत्परिवर्तयेत्[19] ।
ब्रह्मभिर्वन्दये[20]त्संध्यां गायत्र्या [21]तर्पणे सदा ॥२०॥
[22]स्वाहान्तया तु देवानामृषीणां तु नमोऽन्तया ।
स्वधाकारान्तसंयोगात्पितॄणां तर्पणं [23]हितम् ॥२१॥
एवं [24]संतर्प्य विधिवदुपस्थानं तु कारयेत् ।
[25]सर्वात्मना ततो मन्त्री शिवतीर्थं तु [26]संहरेत् ॥२२॥
हुंकारसंपुटस्थेन [27]शर्वशर्वपदेन तु ।
संहारमुद्रया चैव आकृष्य [28]हृदि विन्यसेत् ॥२३॥

---

[1] प्राकारमिव — ऊ, ऋ, च; प्राश्वारमिति — क.
[2] तं — ओ, क, ख, घ, ङ, छ.
[3] पश्चान्मन्त्रीमस्त्रमभि० — ओ, घ; पश्चान्मृतीमस्त्राभि० — क; पश्चाभूतमस्त्राभि० — ङ.
[4] ०मन्त्रितम् — छ, ज.
[5] दैशिकः — ऊ, च.
[6] आलभ्येद्ब्रह्म० — ऋ; अलाभे ब्रह्म० — ङ.
[7] संगेन — छ.
[8] पश्चाच्छादयन् परि० — ओ, ख, घ, छ, ज; पश्चाच्चादयन् परि० — क; पश्चाच्छादयात्परि० — ङ.
[9] शं नोवदन० — ज.
[10] ०हृद्गुह्यब्रह्म० — च, छ, ज.
[11] ब्रह्म विश्वालभे० — ज.
[12] ०श्चालनेत्क्रमात् — ओ; ०श्चालने क्रमात् — क; ०श्चालते क्रमात् — ङ.
[13] 'तत उद्वर्तनकैः' अत्र संधिरार्षः । तदोद्वर्तनकैः कुर्यात् — च.
[14] गायित्र्या — ओ.
[15] ०र्मन्त्रैः — ख, घ, छ, ज.
[16] स्नानाच्छिव० — ङ; स्वयाच्छिव० — छ, ज.
[17] ०मनुस्मरन् — ऊ, ऋ, क, ङ, च; ०मनुस्मरेत् — ख, घ, छ, ज.
[18] तथा — च.
[19] ०वर्जयेत् — ओ, क, ख, घ.
[20] ०त्सन्ध्या गायत्र्या — घ, छ, ज.
[21] तर्पणं सदा — ओ, क, ख, घ, ङ, च, छ, ज.
[22] स्वाहान्तर्यान्तु — क.
[23] हि तत् — ओ, क, ख, घ, ङ, च, छ, ज.
[24] संतर्पि विधि० — ऋ.
[25] सर्वात्मा-हृदयमन्त्रः; मतङ्ग० विद्या० ७.२७; क्रिया० १.६३ पू०; इदमर्धं 'छ, ज' मातृकयोर्न दृश्यते ।
[26] संस्मरेत् — च.
[27] सर्वसर्वपदेन तु — च.
[28] विग्रहे न्यसेत् — ओ, क, ख, घ, ङ, छ, ज.

"[1]**गृहीत्वा मन्त्रितां मृदम्**" इत्यादिना सुस्पष्टसूत्रसिद्धक्रमेण मलस्नानपूर्वं स्नात्वा, **अभिषेक-सामर्थ्यात्** [2]कलशमुद्रया [3]निर्वर्त्य, यदुक्तं [4]**श्रीमत्पौष्करे**[5] —

"मुद्रां बद्ध्वा [6]च कलशमभिषेकं तु कारयेत् ।" इति ।

ततः, [7]**ब्रह्मभिर्नन्दयेत्संध्याम्** इत्यनया समाख्यया [8]प्रतिसन्ध्यमस्य सन्ध्यावन्दनस्य विनियोगः । अन्यथा "ब्रह्मभिः प्रोक्षयेच्छिरः" इत्येव वक्तव्यं स्यादिति । ततो देवर्षिपितृतर्पणं कृत्वा, तीर्थ-मुपसंहरेत् । एतत्पर्यन्तं स्नानमित्यर्थः ॥७–२३॥

अत्र "[9]गृहे वा स्नायात्" इति यदुक्तं तद्विशेषप्रतिपादनायाह —

**वस्त्रपूतेन तोयेन पूरितैः कलशैः शुभैः ।**
**मन्त्रपूतैर्विविक्तायां [10]प्रच्छन्नायां [11]विधानवित् ॥२४॥**
**[12]भूमौ पीठस्थितः [13]स्नायात्पूर्ववच्च [14]यथा [15]मृदा ।**
**[16]समयज्ञो यथान्यायं [17]विभवस्यानुरूपतः ॥२५॥**

अथ भस्मस्नानोपक्रमः —

**[18]एवं सकृद्यथाशक्त्या[19] स्नातोऽम्भसि[20] विचक्षणः ।**
**भस्मस्नानाधिकारी[21] स्यान्नान्यथा मुनिपुङ्गव[22] ॥२६॥**
**भूयो[23]भूयोऽम्भसा यस्मात्सेव्यमानस्य[24] रुग्भवेत्[25] ।**
**[26]तस्मात्त[27]त्संततं नेष्टमिष्टमाग्नेयमुच्यते ॥२७॥**

---

[1] मतङ्ग० क्रिया० २.७ उ०.
[2] कालसमुद्रया — ऊ, ऋ.
[3] निवृत्य — ऋ.
[4] श्रीपौष्करे — ऋ.
[5] आकरो नोपलभ्यते ।
[6] तु — ऋ.
[7] मतङ्ग० क्रिया० २.२० उ०.
[8] प्रत्यसन्ध्यमस्य — ऋ.
[9] मतङ्ग० क्रिया० २.७ श्लोके ।
[10] प्रपूरायां — ओ, क; प्रपूतायां — ख, घ, ङ, छ, ज.
[11] विधानतः — ख.
[12] भुवि पीठस्थितिः — ऊ, ऋ; भुवि पीठस्थितः — च.
[13] स्नायां पूर्व० — ख, घ, छ, ज.
[14] यदा — ख, घ, छ, ज.
[15] हृदा — ओ, क, ङ; मुदा — ख, घ, छ, ज.
[16] समयज्ञैर्यथा० — ओ, क, ख, घ, ङ, छ, ज.
[17] विभवाच्चानु० — ख, घ, छ, ज.
[18] स्तुवं सकृद् — च.
[19] ०शक्ति — ऋ.
[20] स्नातो मनु० — ख, घ, छ, ज.
[21] स्नानेऽधिकारे — ऊ, ऋ; भस्मना नाधिकारी — ख; ०स्नानेऽधिकारी — च.
[22] पुङ्गवः — ङ; सत्तम — च.
[23] भूयोऽम्भसो — ऊ, ऋ, च; भूयो महास्नानं सेव्य० — ख; भूयो महास्नानं सेव० — घ, छ, ज.
[24] सेव्यमानेन — च.
[25] मुत्भवेत् — क; कुम्भवेत् — ङ.
[26] तस्मात्तं सततं — च.
[27] ०त्सततं नेष्टामिष्ट० — ङ.

**[1]आरण्यं गोमयं [2]शुष्कं [3]गव्यं जन्तुविवर्जितम् ।**
**[4]ग्राह्यं [5]शर्वपदेनाशु [6]निवाते तु सुसंचितम् ॥२८॥**
**पूर्ववत्तच्छिवास्त्रेण [7]परिरक्ष्यार्चयेत्ततः ।**
**[8]अनर्चितपदं स्मृत्वा [9]तेनैवार्घं प्रदापयेत् ॥२९॥**
**[10]शिवानलप्रदीप्तं तु [11]तेजस्तेजःपदान्वितम् ।**
**[12]भवोद्भवेन निर्वाणं संहरेन्मन्त्रवित्तमः ॥३०॥**

नित्यं हि कर्मावश्यकर्तव्यतया श्रुतत्वाद् **यथाशक्त्या** अङ्गवैकल्येनाप्यनुष्ठेयम्। काम्यं तु तद्वद्-श्रुतत्वाद् **यथाशक्त्या** सर्वाङ्गपरिपूर्णमित्यर्थः। **तस्मात् तत्संततम्** इति प्रतिसवनं जलस्नानं **नेष्टमेव** रुजाहेतुत्वात्। अपि तु भस्मस्नानमेव। श्रीमन् **निश्वासे**[13] —

"वारिणा तु सकृत्स्नात्वा त्रिसन्ध्यं भस्मना पुनः।" इति[14] ॥२६–३०॥

**[15]नमस्कारावसानाश्च कर्तव्याः प्रणवादिकाः ।**
**येषां [16]विशेषो नास्त्यत्र [17]शिष्टाः कार्या [18]यथोदिताः ॥३१॥**

अत एव सामान्यप्रकरणत्वादस्य स्नान[स्य मन्त्राः प्रणव]नमस्कारयुक्ताः प्रयोक्तव्याः; [19]**येषां** सप्रणवनमस्कारात्मको **विशेषोऽत्र** मन्त्रकोशे **नास्ति** [20]सुशिवादीनाम्। **येषां** तु [21]चण्डेश[22]विद्याङ्ग-

---

[1] आरण्यगोमयं — ङ, च.
[2] गृह्य — ख, घ, ङ, छ, ज.
[3] गव्यजन्तुविवर्जितम् — ओ, च; शुष्कं गव्यं तु वर्जितम् — ख, घ, छ, ज; गव्यं तन्तुविवर्जितम् — ङ
[4] गृह्य शर्व० — ओ, क, ख, घ, ङ, छ, ज.
[5] सर्वमदेनाशु — ऊ, ऋ; शिवपदेनाशु — च.
[6] निपाते तु ससंचितम् — ओ, क; निवातेन समन्वितम् — ख; निवाते तु समन्वितम् — घ, छ, ज; शिवायां तेऽनुसंचितम् — च.
[7] परिरक्षार्चये ततः — ओ, क; परिरक्षापयेत्ततः — ङ.
[8] अर्चितेन पदं — ओ, क; अनर्चितपदं दृष्ट्वा — च.
[9] तेनैव संप्रदापयेत् — ओ, क, घ, छ, ज; तेनैवं संप्रदापयेत् — ख, ङ; तेनैवार्घ्यं प्रदापयेत्–च.
[10] शिवानले प्रदीप्तेन — ओ, क, ङ.
[11] तेजस्तेजपदा० — ऋ, ओ, क, ङ.
[12] भवोद्भवेति — ऊ, ऋ, च; भवेद्भवेन -- ओ; भवोद्भवननिर्याणं — ख, घ, छ, ज.
[13] मृगेन्द्रे क्रियापादे द्वितीयपटले २२–२५ श्लोकवृत्तौ 'निःश्वासोत्तरे' इति निर्दिश्येदमेवार्धमुद्धृतम्, एवमेव क्रियाक्रमद्योतिकाव्याख्यायां प्रभायां २१ तमे पृष्ठे चोद्धृतम् ।
[14] २८-३० श्लोकानां वृत्तिर्न दृश्यते। तस्माद् इतः परं वृत्तेः कश्चन भागो लुप्त इति भाति । ३१ तमश्लोकस्यावतारिकाग्रन्थोऽवश्यमपेक्ष्यते ।
[15] नमस्कारावसानेन कर्तव्यं प्रणवादिना — ओ, क, ख, घ, छ, ज.
[16] विशेषा नासत्यत्र — छ; विशेषा न सत्यत्र — ज.
[17] 'शिष्टाः' इति पाठो वृत्तिमनुसृत्य शोधितः।; शेषाः — ऊ, ऋ, ओ, क, ख, घ, ङ, च, छ, ज.
[18] यशोदिताः — ओ, क, ङ.
[19] एषां — ऋ.
[20] मतङ्ग० क्रिया० १.६१ — ६४ पू०
[21] मतङ्ग० क्रिया० १.७६ उ०, ७७ पू० (चण्डेशमन्त्रः)
[22] मतङ्ग० क्रिया० १, ११२ उ० — ११३ पू० विद्याङ्गशिरःशिखामन्त्रौ).

शिरःशिखानां पठ्यते; ते **शिष्टाः यथोदिताः** एव प्रयोक्तव्याः। न तेषामाद्यन्तयोः प्रणव-[1]नमस्कारान्तरं कर्तव्यमित्यर्थः। येषां त्वादौ प्रणवः पठ्यते [2]शिवगायत्र्यष्टमादिकेसरत्रयविद्याङ्ग-कवचानां, तेषां [3]नमस्कार एवान्ते। [4]नमस्कारयुक्तस्य तु [5]पाशुपतस्यादौ प्रणवः प्रयोज्यः। न तु [6]संनियोग[7]शिष्टानामेकाभावे द्वयोरप्यभावः शङ्कनीयः। एवं यस्यापि मध्ये नमस्कारः [8]शिव-गायत्र्याश्च तस्याप्यन्तेऽन्यो नमस्कारो वचनादिति। यस्तु प्रणव एव मन्त्रः [9]शिवहृदयत्वेन, [10]लोकपालास्त्रत्वेन चोक्तः, तस्यादौ न [11]प्रणवान्तरं योज्यम्। यतोऽत्र **येषां विशेषो नास्ति,** तेषां प्रणवादि[12]युक्तिः कार्या इति श्रूयते। अस्य तु प्रणवात्मको विशेषोऽस्त्येव। ननु विशेषा-त्मक एवायं सुतरां [13]तत्प्रयोगविषयः, [14]यस्य संनिधौ यत्कार्यं गुर्वादेरिव [15]तदितरत्तदात्मन्यकर्तव्य-तया सिद्धं यतः ॥३१॥

अथ भस्मस्नानम् —

**अभिमन्त्र्य यथान्यायं शिवसंहितया [16]सकृत् ।**
**तेन स्नाया[17]द्यथाकालं [18]चर्यापादोक्तिदर्शनात् ॥३२॥**

[19]**चर्यापादोक्तिदर्शनाद्** इति अत्र ह्यर्धरात्रकाले एव विशेषोक्तिरस्य दृश्यते। नाधिकं किंचित्। यच्छ्रूयते[20] —

"अर्धरात्रे तु संप्राप्ते [21]न्यायवर्त्मनि सुस्थितः ।
उत्थाय शयनान्मन्त्री कटिशौचं विधाय तु ॥
सितेन भस्मना स्नायात् पूर्ववत्सुसमाहितः ।" इति ॥३२॥

**[22]गृहीत्वा भस्म [23]पात्रे तु [24]मृन्मये [25]वाथ वैणवे[26] ।**

---

[1] ०नमस्कारान्तकर्तव्य० — ऋ.
[2] (शिवगायत्रीमन्त्रः) मतङ्ग० क्रिया० १.६९ उ०, ७० पू०; (अष्टमनवमदशमकेसरमन्त्राः) मतङ्ग० क्रिया० १.९० उ०, ९१ पू० (विद्याङ्ग-कवचमन्त्रः) मतङ्ग० क्रिया० १.११३ उ०।
[3] नमस्कारा — ऋ.
[4] नमस्कारायुक्तस्य — ऋ.
[5] (पाशुपतमन्त्रः) मतङ्ग० क्रिया० १.११४ पू०
[6] 'संनियोगशिष्टन्यायः', महाभाष्यम् ४. १.३६।
[7] ०विशिष्टाना० — ऊ, ऋ.
[8] (शिवगायत्री मन्त्रः) मतङ्ग० क्रिया० १.६९उ, ७० पू.
[9] (शिवहृदयमन्त्रः) मतङ्ग० क्रिया० १.६० उ०
[10] (लोकपालास्त्रमन्त्रः) मतङ्ग० क्रिया० १-११५ पू०
[11] प्रणवान्तं — ऊ, ऋ.
[12] ०युक्तः कार्यं इति — ऊ, ऋ.
[13] तत्प्रयोगः विषयः — ऋ.
[14] तस्य — ऊ.
[15] तदितरां तदात्म० — ऊ, ऋ.
[16] तदा — ऊ, ऋ; यदा, ख, घ, छ, ज; सदा–च.
[17] ०द्यथान्यायं — ओ, क, ङ
[18] नानापादोक्ति० — ऊ, ऋ.
[19] चर्यापादोऽभिदर्शनाद् — ऊ; चर्यापादौभि — दर्शनाद् — ऋ.
[20] मतङ्ग० चर्या० १०.६१, ६२ पू०
[21] 'न्यासवर्त्मनि' — ऊ, ऋ
[22] गृहीता — ऋ.
[23] तन्मात्रे — ऊ, ऋ; तत्पात्रे — च.
[24] मृण्मये — ऊ, ङ, च, छ, ज; मृण्मयं — ओ, क, ख.
[25] वाधिवर्णके — छ, ज.
[26] वर्णके — ख, घ.

[1]अलाबुके वा [2]प्रच्छन्ने [3]कौबेर्यभिमुखः स्थितः ॥३३॥
शुचौ प्रदेशे शान्तात्मा [4]ध्यात्वास्त्रं पूर्ववत्सुधीः ।
भस्म[5]मुष्टिं गृहीत्वा तु दक्षिणेन करेण तु ॥३४॥
शिरो मुखं च [6]ग्रीवां च [7]लेशया [8]मर्दयेत्ततः ।

लेशया मर्दयेत्ततः इति गृहस्थाभिप्रायेण। यदुक्तं श्रीपौष्करे —
"[9]गृही [10]यथाङ्गमालभ्य तिलकैर्वा त्रिपुण्ड्रकैः।" इति ॥

[11]उभौ बाहू च हृदयं [12]पृष्ठं जठरमेव च ॥३५॥
यदगम्यं दक्षिणस्य तद्वामेन तु पाणिना ।
[13]सम्यगुद्धूलयेदङ्गं [14]स्पृष्ट्वान्योन्यं करावुभौ ॥३६॥

सम्यगुद्धूलयेत् इति यतिविषयम् ॥ ३५–३६ ॥

[15]कटिमुत्थाप्य गुह्यं च [16]ततोरुयुगलं शनैः ।
[17]जङ्घे च [18]क्रमशः पश्चात्ततोऽन्तर्वास उत्सृजेत्[19] ॥३७॥
[20]अन्योन्यं हस्तौ संघृष्य भस्मना साधकोत्तमः ।

---

[1] अनाबुको — ङ.
[2] प्रच्छन्न० — ओ, छ; प्रच्छन्नः — क; प्रच्छन्नाः — ङ.
[3] कौवीर्यादिष्वधः — ऊ, ऋ; कौबेर्याभिमुख० — क, ख; कौबेर्याभिमुखः — घ, छ, ज; कौवेर्या दिङमुखा० — ङ; कौवेर्याभिमुखस्थितः — च.
[4] ध्यात्वा स्वं — च; ध्यात्वा सं — छ; ध्यात्वा सूं — ज.
[5] ०मुष्टि गृहीत्वा — ङ; ०तुष्टिं गृहीत्वा — च.
[6] ग्रीवा च — ओ, क.
[7] वेशया — ख, घ, ज.
[8] मार्जयेत्ततः — ओ; मज्जयेत्ततः — क; तर्जयेत्ततः — ङ; मर्दया ततः — छ, ज.
[9] इदमर्धं क्रियाक्रमद्योतिकाव्याख्यायां प्रभायां २२ तमपृष्ठेऽपि 'श्रीमत्पौष्करे' इति निर्दिश्योद्धृतम् ।; कामिके पूर्वभागे ३.६१ पू०
[10] यदाङ्गमालभ्य — ऊ.
[11] उरो बाहूदरं पृष्ठं — ऊ, ऋ; उरो बाहुश्च हृदयं — ओ, क, घ, ङ; ऊरू बाहुश्च हृदयं — ख; उरो बाहू च हृदयं — च.
[12] . . . जठरमेव च — ऊ; जङ्घे जठरमेव च — ऋ; पृष्ठं जघनमेव च — ओ, क; पृष्ठजङ्घरमेव च — ङ
[13] सर्वमुद्धूलये० — ओ.
[14] स्पृष्ट्वोऽन्योन्य० — ओ; स्पृष्ट्वान्योन्य० — क, ङ.
[15] कटिमुत्थाय — ऊ, ऋ, क, ङ, च; कोटिमुत्थाप्य — ख, घ, छ, ज.
[16] तत्रोरुयुगलं — ख, घ; ततोरुयुगलाशनैः — ङ; 'तत ऊरुयुगलम्' अत्र संधिरार्षः ।
[17] जङ्घेन क्रमशः — क.
[18] क्रमतः — ङ
[19] ०र्वा समुत्सृजेत् — ओ, क, ख, घ, ङ, छ, ज; पश्चात्ततो उरसि उत्सृजेत् — च.
[20] अन्यद्धस्तौ सुसंघृष्य — ऊ; अन्यद्धस्तौ समुद्धष्य — ऋ; अन्यद्वस्त्रं तु संगृह्य — ओ, क, ङ; अन्योन्यहस्तात्संघृष्य — ख, घ, छ, ज; अन्यद्धस्तौ तु संघृष्य — च.

परिधाय शुचिर्वासः [1]पाणी [2]प्रक्षालयेत्ततः ॥३८॥
[3]सलिलेन च पूतेन पादौ [4]मृद्भिश्च सप्तभिः ।
[5]आचामेत्प्रयतो भूत्वा [6]हस्तौ [7]तु परिशोधयेत् ॥३९॥
[8]भूयोऽपि भस्मनोऽन्यस्य गृहीत्वा मुष्टिमादरात् ।
[9]लिप्तायां भुवि [10]सौम्यास्यः स्मृत्वा नाथं सदाशिवम् ॥४०॥
ईशमन्त्रेण मन्त्रज्ञः शिर [11]उद्धूलयेत्पुरा ।
[12]वदनं वक्त्रमन्त्रेण हृदयं बहुरूपिणा ॥४१॥
[13]गुह्यं वामेन [14]सद्येन शेषमुद्धूलयेत्सुधीः ।
ततोऽभिषेकं कुर्वीत पूर्ववत्सु[15]समाहितः ॥४२॥

अथोपस्पर्शविधिः —

हस्तौ प्रक्षालयित्वा तु त्रिः पिबेत्तोयमादरात् ।
प्रणवेन ततो मन्त्री [16]ओष्ठौ [17]द्विः परिमृज्य च ॥४३॥
[18]पादावभ्युक्ष्य शान्तात्मा [19]शीर्षण्यानि च संस्पृशेत् ।
[20]शिखां नेत्रे यथान्यायं [21]कर्णरन्ध्रे च सुव्रत ॥४४॥
[22]प्राणमार्गद्वयं पश्चा[23]द्बाह्वोश्च [24]शिखरे क्रमात् ।
हृदयं नाभिदेशं च भूयोऽप्येवं [25]तु पूर्ववत् ॥४५॥

---

[1] पाणिना चाचमेत्ततः — ख, घ, ज; पाणि प्रक्षालयेत्तमः — ङ; पाणिना वाचमेत्ततः — छ.
[2] प्रक्षालयेन्मृदा — ऊ, ऋ, च.
[3] इदमर्धं नास्ति — ख, घ, छ, ज मातृकासु ।; सशिवेन च पूतेन — च.
[4] मृद्भिस्तु — ङ
[5] आचमेत्प्रयतो — ऊ, ऋ, ङ; ततश्च प्रयतो — ख, घ, छ, ज.
[6] भस्मौ तु– ङ.
[7] च परिशोषयेत् — च.
[8] भूयोऽभि भस्मनो — ओ; भूयोभिर्भस्मनो — क; ४० श्लोकः ४१ पूर्वार्धं च 'ख, घ, छ, ज' मातृकासु न दृश्यते ।
[9] लिप्तायाः — ऋ.
[10] सौम्यास्य — ओ, क; सोमास्य — ङ
[11] उद्धूलयेन्मृदा — ऋ.
[12] वक्त्रं तु वक्त्र० — ख, घ, छ, ज.
[13] गुह्य वामेन — ङ
[14] शुद्धेन — ऊ; शब्देन — ऋ.
[15] ०समाहिताः — ऋ.
[16] ओष्ठा — छ, ज.
[17] त्रिः परिमार्ज्यं च — ख, घ, छ, ज.
[18] पादावमुक्ष्य — ख, घ, छ, ज.
[19] शीर्षा . . नि च सं० — ओ; शीर्षाद्यङ्गानि सं० — ख, घ, छ, ज; शीर्षं . . नि सं० –ङ; शीर्षण्या न च सं — च.
[20] शिखा नेत्रे — ऋ; शिखा नेत्रं — ख, घ, छ, ज; शिखा नेत्र यथा० — ङ; शिखास्थाने यथा० — च.
[21] कर्णनेत्रे च — ऊ, ऋ; कर्णरन्ध्रेव — छ, ज.
[22] प्राणमन्यद् द्वयं — ङ
[23] ०द्वाह्याश्चापि शिखाक्रमात् — क.
[24] शिखरक्रमात् — ओ, ख, घ.
[25] हि — ऊ, ऋ, ओ, क, ख, घ, ङ, च, छ, ज.

**कृत्वा [1]यजेत्परं देवं [2]भक्त्या तु परया सदा ।**
**[3]एवं स्नानद्वयं प्रोक्तं सर्व[4]दुष्कृतनाशनम्[5] ॥४६॥**

अयमपि पूर्वसाधारण एव[6] सामान्यप्रकरणार्थत्वात् । **शीर्षण्यानि** इति "[7]शीर्षंश्छन्दसि", "ये च तद्धिते" इति व्युत्पत्त्या शिरसि भवानि शीर्षण्यानि । [8]शिखादिनाभ्यन्तानि **संस्पृशेद्** इति दर्शयति । **भूयोऽप्येवं तु पूर्ववद्** इति द्विरुपस्पर्शनविधिः । यदुक्तं **श्रीपौष्करे**[9] —
"उपस्पृश्य ततः सम्यग्वक्त्रेणापः स्पृशेत् पुनः ।" इति ॥४३–४६॥

अथ स्नानान्तरम् —

**[10]ब्राह्ममन्यत्तृतीयं [11]स्यादभावादनयोर्द्वयोः ।**
**[12]तन्निवर्त्यं यथा मन्त्रैः सद्योजातादिभिः शुभैः ॥४७॥**
**[13]शिरः संप्रोक्षयेदद्भिः [14]शेषं स्यात्पूर्ववन्मुने ।**

जलस्नानपूर्वकत्वेन [भस्मस्नानस्य] केषांचिदसंभवाद्द्वयोरप्यभावः । [15]न भस्मस्नाने तिलकाद्यात्मकेऽप्यशक्तस्येदमप्युपपद्यते । **तच्च** [16]**निवर्त्यं यथा** तथोच्यते [17]सद्योजातादिब्रह्माभिमन्त्रितजलबिन्दुभिः **शिरः** संसेचयेत्; ततः स्नातो भवति । यदुक्तं **श्रीपौष्करे**[18] — "मन्त्रस्नानं ब्रह्मभिस्तु" इति । अत एव येऽपि शिरोरोगभयादपर्वस्वशिरस्कमेव स्नानं कुर्वन्ति, तेऽपि शिरोऽन्येन ब्रह्मपञ्चकेन स्नापयित्वा स्नाता भवन्तीति । सकलदेशप्रसिद्धः [19]समाचारोऽप्ययमविरुद्ध एव । श्रूयते च छान्दोग्यसूत्रे — [20]"पूर्वशेषाधिकारेण सशिरस्कं स्नात्वा"[21] इति । [22]तन्न केवलं लोकात् श्रुतेरपीति

---

[1] यजेत्पुरं — ओ, ख; युज्येत्पुरं — क; ययेत्पुरं — ङ.
[2] शक्त्या — ओ, क.
[3] एतत्स्नान० — ऊ, ऋ.
[4] ०दुष्कृति० — ओ, क, ख, घ, छ, ज.
[5] ०नाशनः — क.
[6] ०साधारणमेव — ऋ.
[7] पा० सू० ६.१.६०, ६१.
[8] शिखादिना कान्तानि — ऊ; शिखादिकानां कान्तानि — ऋ.
[9] आकरो न लभ्यते ।
[10] ब्रह्ममन्य० — ख; मह्यमन्य० — ङ.
[11] स्यादभवादयो द्वयोः — ङ.
[12] तन्निवर्त्यं यथा — ऊ, ऋ, च; तन्निर्वर्त्यं यथा — ओ; तन्निवर्त्य यथा — क, ख, घ, छ, ज; तन्निवृत्त्या यथा — ङ.
[13] शिरसा प्रोक्षये० — ओ, क; शिरसि प्रोक्षये० — ख, घ, ङ, छ, ज.
[14] शेष स्यात्पूर्व० — ओ.
[15] नभस्नाने — ऋ.
[16] निर्गत्य — ऊ; निर्वृत्यं — ऋ.
[17] सद्योजातादिभिः ब्रह्म० — ऋ.
[18] आकरो न लभ्यते ।
[19] समाचारोऽप्ययमेव विरुद्ध एव — ऋ.
[20] पूर्वामेषाधिकरेण — ऋ.
[21] 'सहशिरसं स्नानशब्दे' द्राह्यायणगृह्यसूत्रम् १.१.१६; 'जाबालः —
अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम् ।
आर्द्रेण वाससा वापि मार्जनं दैहिकं विदुः ॥
(छन्दोगाह्निके स्नानप्रकरणे पृ० १०);
'प्रातः सशिरस्कं कुमारमाप्लाव्य'
(गोभिलगृह्यसूत्रम् २.८.१);
'सशिरस्कमित्येतस्मादेव कुमाराणाम् अशिरस्कस्नानं दर्शयति)
(गोभिलगृह्यसूत्रभाष्यम् २.८.१)
[22] ते न केवलं लोकात् श्रुतेररिति — ऊ, ऋ.

यावत्। ततोऽप्यविरुद्ध इति। तच्च कृत्वा, **शेषं स्यात् पूर्ववत्** इति श्रुतेनाचमनभस्मस्नानतर्पणादि पूर्ववत् [1]समं कार्यं तात्पर्यत्वात्स्नानस्येत्युक्तम्॥

यदा तु दैवान्मानुष्याद्वोपरोधादत्राप्यसामर्थ्यं तदा किं कार्यमिति प्रश्नः —

**मतङ्ग उवाच —**

**अभावात्तोय[2]भस्मभ्यां [3]ब्राह्ममुक्तं [4]सुरेश्वर ॥४८॥**
**सर्वाभावात्तु [5]मनसा स्नानमन्य[6]द्वद प्रभो[7]।**

**परमेश्वर उवाच —**

**हुंफट्कारान्तसंस्थेन[8] [9]ज्योतिर्ज्योतिःपदेन [10]तु ॥४९॥**
**[11]युगान्ताग्निप्रदीप्तेन निर्दग्धं कायमादरात्।**
**प्रणवेन ततः पश्चात्स्वच्छतोयेन भूरिणा[12] ॥५०॥**
**[13]क्षालयेत्स्वां [14]तनुं मन्त्री [15]यतः स्नातो न संशयः।**

[16]तदा मानसं स्नानं विधेयमिति सिद्धान्तः। न सर्वात्मना। अपि तु बाह्यस्नानं निर्वर्त्य मलमात्रयैव। यदाह — **क्षालयेत् स्वां तनुम्** इति॥

एवं स्नानस्यानुकल्पप्रसङ्गेन[17] पूजाया अप्यनुकल्पमाह —

**कार्यान्तःकरणे[18] [19]पूजा [20]सा च योगे [21]यथार्थतः ॥५१॥**
**[22]वक्तव्या मुनिशार्दूल [23]ततो बाह्याध्वरक्रिया।**

---

[1] समकार्यं — ऊ.
[2] भस्माभ्यां — ऊ, ऋ, ख, घ; भस्मासां — छ, ज.
[3] ब्राह्ममुक्त्वा — च.
[4] सुरेश्वरः — ङ.
[5] देवेश — ऊ, ऋ, च; पयसा — ख, घ, छ, ज.
[6] ०द्वदस्व मे — ओ, क, ख, घ, ङ, छ, ज.
[7] प्रभोः — ऋ.
[8] संस्थानः — छ, ज.
[9] ज्योतिज्योति० — ओ, ङ, ज.
[10] च — ङ, च.
[11] युगान्तनिप्र० — ओ, ख, छ, ज; युगास्तानि प्र० — क.
[12] स्वजजार्णाय हारिणा — ओ; स्वजपाहूय कारिणा — क; स्वच्छपानीयभूरिणा — ख, घ, ङ, च, छ, ज.
[13] प्रापयेत्स्वां — ओ, क; प्लावयेत्स्वां — ख, घ, ङ, च, छ, ज.
[14] तनुर्मन्त्री — क, छ.
[15] ततः — ख, घ, च, छ, ज.
[16] तदा मनसंस्थानं — ऊ, ऋ.
[17] ०स्यानुप्रसङ्गकल्पकेन — ऋ.
[18] ०करणं — ओ, क, ख, घ, ङ, छ, ज.
[19] पूजायाश्च योगे — ङ.
[20] यायाद्योगे — ओ, क; यो च योगे — ख; या च योगे — घ; य चायोगे — छ, ज.
[21] यथान्यवत् — ओ, क, ख, घ, ङ; पथान्त्यवत् — छ, ज.
[22] वक्तव्यं — ओ, क, ख, घ, ङ, छ, ज.
[23] न च बाह्या० — ऊ, ऋ; न च बाह्याध्वपारया — ओ, क, ख; न च बाह्याभ्यन्तरक्रिया — घ; न बाह्याभ्यन्तरक्रिया — ङ, छ; न बाह्याभ्यन्तरक्रियाः — ज.

**कुश[1]पुष्पाम्भसोऽभावात्साधकानां प्रवर्तते[2] ॥५२॥**

[3]दैवान्मानुषाद्वा प्रतिबलात् कदाचित् **कुशपुष्पाम्भसः** असंभवेन मानस्येव पूजा कार्या। यद्वक्ष्यति[4] —

"सर्वाभावात्तु मानसम्। विधानं पुष्कलं कार्यम्" इति। **सा च** योगनिमित्तं बाह्यार्चनाधिकारार्थमप्यर्चना[5]प्रकरणे **वक्तव्या**। यद्वक्ष्यति[6] —

"एवमन्तः प्रकर्तव्यं [7]विधानमशिवापहम्।" इति।

अत एव बाह्यार्चनाधिकारार्थत्वादप्यस्या अनन्तरं बाह्यार्चनक्रिया पुष्पादिसंभवे कार्येति भेदः ॥५१–५२॥

अथ व्याख्यातार्थोपसंहाराय व्याख्येयोपक्रमाय च श्लोकः —

**स्नानं हि सम्यक् [8]कथितं [9]विभागात्**
**[10]क्रियास्वथादौ मुनिराजमुख्य[11]।**
**[12]शिवार्चनस्याप्यतुलं विधानं**
**[13]समासतस्ते कथयामि [14]युक्त्या ॥५३॥**

विभागाद् इति [15]अधिकारिभेदेन चतुर्विधम्। **क्रियासु** इति [16]नित्याद्यासु सर्वासु अङ्गत्वेन; [17]न तु दीक्षायामेवेत्युपसंहारः। अथ व्याख्येयोपक्रमः — **शिवार्चनस्याप्यतुलं विधानम्** इति प्रधानभूतं नित्यनैमित्तिककाम्यभेदे, न तु दीक्षाङ्गभूतमेवेति। ततश्च स्नानादिवदेतदपि सामान्यं **कथयामि** इत्यर्थः ॥ ५३ ॥

[इति श्री] भट्टनारायणकण्ठात्मज[18]भट्टरामकण्ठविरचितायां [19]मतङ्गवृत्तौ
क्रियापादे स्नानप्रकरणं [द्वितीयं समाप्तम् ॥]
**द्वितीयः पटलः**

---

[1] ०पुष्पाम्भसाभावात् — ओ; ०पुष्पाम्भसोद्भावात् — ज.
[2] साधकश्च प्रवर्तते — क.
[3] दैवान्मानुष्याद्वा प्राप्तिबलात् — ऋ.
[4] मतङ्ग० क्रिया० ३.७४ उ०, ७५ पू०
[5] ०प्रकरणं वक्तव्यम् — ऊ, ऋ.
[6] मतङ्ग० क्रिया० ३.३३ पू०.
[7] विधानाय शिवापहम् — ऊ, ऋ.
[8] कथितो — छ, ज.
[9] विभागान् — क.
[10] क्रियास्वधादौ — ओ; क्रियास्वयादौ — क; क्रिया यथादौ — च.
[11] ०मुख्यः — ङ.
[12] शिवार्चना स्या० — छ.
[13] सतामितस्ते — ख, घ, छ, ज.
[14] युज्या — छ, ज.
[15] अधिकारभेदेन — ऊ; अधिकारे भेदेन — ऋ.
[16] नित्यत्वाद्यासु — ऋ.
[17] नशब्दो नास्ति 'ऊ' मातृकायाम्।
[18] भट्टश्रीरामकण्ठ० — ऋ.
[19] मतङ्गप्रवृत्तौ — ऋ.

## तृतीयः पटलः

# अर्चनप्रकरणम्

**अथार्चनविधानं स्याच्छिवस्यामिततेजसः ।**

**अथ** इति स्नानादनन्तरमर्चनविधानार्थं प्रकरणान्तरम्। अत्र पदार्थादिसंबन्धाः [1]प्राग्वद्द्रष्टव्याः। वाक्यात्मकस्तु [2]"यजेत्परं देवम्" इत्यादिभिरनेकविधः। तच्च **शिवस्यामिततेजसः** संबन्धि नित्यादिकर्मभेदेन दीक्षितपुरुषार्थतयापि च **चर्यापादे** वक्तव्यमिति प्रसङ्गादत्र स्नानवत्कथितम्। न तु दीक्षायामेवाङ्गमित्यर्थः। यद्वक्ष्यत्युपसंहारे — [3]"सामान्यं यजनं ह्येतत्" इति ॥

[पूजास्थानप्रवेशः]

अथ तस्योपक्रमः —

**स्नात्वा प्राग्विधिना मन्त्री शिवार्पित[4]मनाः सुधीः ॥१॥**
**[5]विद्याधिपपदं ध्यात्वा [6]तच्चोंकारपुरःसरम् ।**
**[7]यायाद्वाक्संयमी [8]लेशात्पूजास्थानमनिन्दितम् ॥२॥**

**तच्चोंकारपूर्वमिति** ध्यानेऽपि प्रणवः प्राक्प्रयोक्तव्य इत्यर्थः। **लेशाद्** इति अल्पया मात्रया **पूजास्थानं यायात्**। न तु वेगेनेति भावः। तच्च **अनिन्दितम्** अत्यन्तमनोरमम्॥१–२॥

**[9]सुगुप्तं विजनं रम्यं [10]विकीर्णकुसुमं [11]शुभम् ।**
**[12]सुधूपामोद[13]गन्धाढ्यं चर्चितं [14]चन्दनादिभिः ॥३॥**
**वितानोपरि[15]संछन्नं [16]मुक्ता[17]दामावलम्बितम् ।**

---

[1] मतङ्ग० क्रिया० प्रथमप्रकरणोपक्रमे प्रोक्तवत्।
[2] मतङ्ग० क्रिया० २.४६ पू०.
[3] मतङ्ग० क्रिया० ३.१०१; सामर्थ्यं यजनं —— ऊ; सामर्थ्यं हि जनं — ऋ.
[4] ०मनः सुधीः — ऋ.
[5] मतङ्ग० क्रिया० १.१११उ० ('सर्वद' इति पदम्)
[6] ततोङ्कार० — ऊ, ऋ, ओ, क, ङ; तथोङ्कार० — ख, घ, च, छ, ज.
[7] यायाद्वा संयमी — ऋ; यया वाक्संयमी — ओ; लेशाद्वा संयमी — ख, घ, छ, ज.
[8] वेश्म पूजा० — ख, घ, छ, ज.
[9] स्थानं स्याद्विजनं — ख, घ, छ, ज.
[10] प्रकीर्णं कुसुमं — ऊ, ऋ; विकीर्णसुसमं — ओ; विकीर्णं सुसमं — क; प्रकीर्णकुसुमं – च.
[11] समम् — ओ, क, ख, घ, च, छ, ज; सम — ङ.
[12] सुधूमामोद० — ख, घ; सुधूममोद० — छ, ज.
[13] ०गन्धाघ्यार्चितं — ओ; ०गन्धार्घ्यं चर्चितं —— क.
[14] चादरादिभिः — ज.
[15] ०संछिन्नमुक्ता — ङ; ०संचन्नं — ज.
[16] मुक्ति० — छ.
[17] ०दामसमन्वितम् — ख; ०दामलसान्वितम् — घ, छ, ज.

[1]सितवस्त्रपताकाढ्यं सुविचित्र[2]ध्वजोच्छ्रितम् ॥४॥
[3]कुङ्कुमोदक[4]संसिक्तं [5]कर्पूरक्षोद[6]धूसरम् ।
[7]निष्कम्पार्चिःप्रदीपाढ्यं [8]दर्पणांशुप्रपूरितम् ॥५॥
[9]चतुर्दिक्षु [10]कृताटोपमश्वत्थतरु[11]निर्मितैः ।
[12]तोरणैः कलशैर्भद्रैः[13] स्वच्छपानीयपूरितैः ॥६॥
[14]एवंविधं [15]संभवतो [16]ह्यभावात्सुमनोरमम् ।
[17]स्थानं प्रथमशब्देन [18]निरीक्ष्य प्रविशेच्छनैः ॥७॥

सुगुप्तं पशूनामदृश्यम्। यथाविभवमुपशोभितं [19]तदभावेन, **सुमनोरमम्** अवश्यं कार्यम्। तच्च **प्रथमशब्देन** विघ्ननिवृत्त्यर्थं परीक्ष्यं, तस्य लिङ्गतस्तत्र शक्तिसिद्धेः। अत एव श्रीमत्[20]**स्वायम्भुवे**ऽपि विद्याङ्गास्त्रत्वेनास्यैव विनियोगो [21]मन्त्रोद्धारे प्रोक्तः। **शनैः** इति द्वारपालपूजां निर्वर्त्य **प्रविशेत्** ॥३–७॥

[करन्यासः]

तत्र [22]बद्ध्वासनं सम्य[23]गभ्यस्तमचलं दृढम् ।
निर्धूमाङ्गारदीप्तेन करावस्त्रेण शोधयेत् ॥८॥
[24]सुगन्धिगन्धमिश्रेण [25]प्रियङ्गुरजसा पुरा ।

---

[1] सितवक्त्र० — ओ; शिववस्त्रपताकाद्यं — च.
[2] ०ध्वजोत्थितम् — ऋ; ०स्वजोच्छ्रितम् — ज.
[3] कुसुमोदक० — घ, छ, ज.
[4] ०संक्षिप्तं — ओ, क, ङ; ०संसृष्टं — च.
[5] कर्पूरक्षुद्र० — च.
[6] ०केसरम् — ऋ.
[7] निष्कम्पान्ति प्र० — ऊ; निष्कम्पा च प्रदीपाढ्या — ओ; निष्कम्पा च प्र० — क; निक्षयार्चिः प्र० — ख, घ, छ, ज; निष्कम्पापि प्र० — ङ.
[8] दक्षिणांशु० — ङ.
[9] चतुर्दिक्ष्वकृताटोप० — ऊ.
[10] कृतादोषोपम० — क.
[11] ०पल्लवैः — ख, घ, ङ, छ, ज.
[12] 'ऋ' मातृकायामिदमर्धं नास्ति।
[13] ०र्भद्रे — च.
[14] एवंविधासंभवतो — ओ, क; एवंविधं संभवते — घ; एवं सिविविधं संभतो — ङ.
[15] स भवते — छ; विभवते — ज.
[16] ह्यभावाच्च मनो० — ऊ, ऋ, ख; ०प्यगावाच्च मनो० — ओ; ०प्यभावाच्च मनो० — क; ह्यभावाच्च मनोरथः — घ, छ, ज; ०प्यभावार्चने रमम् — ङ; ह्यतो यच्च मनो० — च.
[17] स्थानप्रथम० — ऊ, ऋ; स्नानं प्रथम० — ओ.
[18] निर्मक्ष्य — ख, घ, छ; निर्मक्ष्य — ज.
[19] तदाभावेन — ऋ.
[20] आकरो न लभ्यते।
[21] मन्त्रोद्धारप्रोक्तः — ऊ, ऋ.
[22] भद्रासनं — ऋ; पद्मासनं — ख, घ, छ, ज; च स्वासनं — च.
[23] ०गभ्यस्थमलसं दृढम् — ओ, ख; अभ्यस्थमलसं दृढः — क.
[24] सुगन्धगन्ध० — ओ, क; सुगन्धगन्धि० — ख, घ, छ, ज.
[25] प्रियङ्कुरससा पुरा — ङ.

[1]उद्वर्तयित्वा [2]विन्यासः कार्यो मन्त्र[3]गणस्य च[4] ॥९॥
कनिष्ठिकायां [5]विन्यस्येत्सद्योजातं समाधिना ।
[6]पश्चाद्वामादिकान्न्यस्येत्क्रमशः[7] [8]सुसमाहितः ॥१०॥
अनामिकायां [9]संस्मृत्य [10]वामदेवं प्रकल्पयेत् ।
[11]मध्यमायामघोरं तु [12]तर्जन्यां संप्रकल्पयेत् ॥११॥
वक्त्र[13]मन्त्रं तथाङ्गुष्ठे न्यसेदीशं [14]प्रयत्नतः ।

[15]तत्र वक्ष्यमाणपर्यङ्कादीनामासनानां मध्याद्यदेव अभ्यस्तं तदेव बद्ध्वा उपविश्य करन्यासं ब्रह्मभिरुक्तक्रमेण कुर्यात् ॥

[शिवतदङ्गन्यासः]

एकाशीति[16]पदोपेतशक्ति[17]गर्भं परं शिवम् ॥१२॥
न्यसेच्छक्ति समुच्चार्य [18]शान्ततेजो[19]वपुष्मतीम् ।
[20]सर्वात्मानं [21]मध्यमायां [22]विन्यसेद्धृदयं सदा ॥१३॥
[23]सुशिवाख्यं शिरो [24]न्यस्यानामिकायां [25]महात्मकम् ।

---

[1] उद्धर्तयित्वा — ङ.
[2] तु न्यासः – ख, घ, छ, ज; विन्यासकार्यो – ङ.
[3] गुणस्य — घ.
[4] तु — ओ, क, ख, घ, ङ, च, छ, ज.
[5] विन्यस्ये सद्यो० — ऊ, ॠ; विन्यस्य सद्यो० — ओ, क, ख, घ, ङ, च, छ, ज.
[6] पश्चाद्वामादिका न्यसेत् — ॠ; पश्चाद्वामादयो न्यस्य — ओ, क, ख, घ, ङ, छ, ज; पश्चाद्वासोदयो न्यस्यात् — च.
[7] ईशान्ताः — ख, घ, छ, ज.
[8] शान्तचेतसः — ओ, क, ख, घ, ङ, छ, ज; शान्तचेतसा — च.
[9] संस्मृत्वा — ऊ, ॠ, ओ, क; संहृत्य — ख; संस्पृश्य — च.
[10] वामदेवः — ऊ; वामदेवाः — ॠ; नामदेवं — च.
[11] प्रणवेन विभागोऽन्य० — छ, ज.
[12] तर्जन्या सं — ॠ; तर्जन्यायां प्रकल्पयेत् — ओ, क, ङ; तर्जन्यां तु प्रकल्पयेत् — ख, घ, छ, ज; तर्जन्यामुप० — च.
[13] ०मन्त्रमथाङ्गुष्ठे — ऊ, ॠ; ०मन्त्रं तथा गुह्ये — ख, घ, छ, ज; ०मन्त्र तथाङ्गुह्ये — ङ.
[14] प्रकल्पयेत् — ओ, क, ख, घ, ङ, छ, ज; प्रसन्नधीः — च.
[15] मतङ्ग० योग० २.१२ उ० — २२ पू०.
[16] ०पदोपेतं शक्ति० – ऊ, ॠ, क, च; ०पदोपेता शक्ति० — ङ.
[17] ०गर्भपरं — ओ, क; ०गर्भधरं — च.
[18] शान्तं — छ, ज.
[19] ०वपुष्मवान् — ओ, ख, घ, ङ, ज; ०वपुष्ठवान् — क; ०वपुष्मती — च; ०वपुष्पवान् — छ.
[20] सर्वात्मनां — ओ, क, घ, ङ, ज; सर्वात्मना — ख; सर्वात्मनाममध्यायां — छ.
[21] मध्यमया — ओ; मध्यमाया — क; मध्यमयं — ङ; मध्यायां — ज.
[22] हृदयं विन्यसेत्सदा — ओ, क, ख, घ, ङ, च, छ, ज
[23] सुशिवाख्या शिरो — ऊ, ॠ.
[24] न्यस्या नासिकायां — ऊ, ॠ; न्यस्या नादिकायां — ख; न्यस्य नामिकानां — ङ.
[25] महात्मकाम् — ॠ; महात्मना — ओ, क; महात्मनः — ख, घ, ङ, छ, ज; महामुने—च.

[1]ज्वालिनी च [2]शिखा न्यस्या [3]कनीयस्यां महामुने ॥१४॥
[4]प्रदेशिन्यामपि तथा [5]कवचं पिङ्गलं शुभम् ।
शिवास्त्रमपि [6]विन्यस्यमङ्गुष्ठे[7]ऽग्निसमप्रभम् ॥१५॥
कृत्वैवं [8]करयोर्न्यासम्"

ततश्च एकाशीति[9]पदोपेता [10]प्रागुक्ता शक्तिः गर्भे कार्यवर्त्मनि यस्य, तं परमशिवं, तामेवोपशान्ततेजःशरीरयुक्तां शक्तिम् उच्चार्य न्यस्येदिति । ततः [11]सर्वात्मादिशिवाङ्गविन्यास इति ॥

[देहशुद्धिः]

"ततः [12]संहारमुद्रया ।
[13]शर्वशर्वपदान्तस्थं [14]सर्वात्मानं [15]शिवे न्यसेत् ॥१६॥
चतस्रो धारणा [16]धार्याः क्रमशः [17]साधकोत्तमैः ।
[18]योगपादे [19]प्रविस्तीर्य [20]वक्तव्यास्ता [21]महामुने ॥१७॥

ततः अनन्तरं शर्वशर्वपदमुच्चार्य [22]संहारमुद्रया सर्वतत्त्वात्मानं सूक्ष्मशरीरं शुद्ध्यर्थं शिवचन्द्रमसि न्यसेत् । यद्वक्ष्यति योगपादे[23]—

"आत्मानं [24]हृत्प्रदेशात्तु [25]विनिगृह्य तु मुद्रया ।
योजयेत् परमे तत्त्वे बिन्द्वाख्ये [26]ह्यमृतात्मके[27] ॥" इति ।

---

[1] ज्वालिनीं — ओ, क, ख, घ, ङ, छ, ज.
[2] शिख . . न्यसायां महा० — ओ; शिखा न्यस्य कन्यसायां महा० — क, ख, घ, ज; शिखा न्यस्य कन्यसाया महा० — ङ; शिखा न्यस्य कन्यकायां महा० — छ.
[3] कनीयस्या महा० — च.
[4] तर्जन्यायामपि — ओ, क, घ, ङ, छ, ज; तर्जन्यां चापि — ख
[5] केवलं — ऊ, ॠ.
[6] विन्यस्याङ्गुष्ठे — ओ, क, ख; विन्यस्य अङ्गुष्ठे — घ, ङ, छ, ज.
[7] ०ऽग्निः सम० — ॠ.
[8] कारयेन्न्यासं — ऊ, ॠ, ख, घ, छ, ज; कारयेन्न्यस्य ततः — ओ, क; कारयें न्यस्या समं ततः — ङ.
[9] ०पदे ता प्रागुक्ता — ॠ.
[10] मतङ्ग० क्रिया० १.५८ उ० — ६० पू०.
[11] मतङ्ग० क्रिया० १.६० उ० — ६४ पू०.
[12] संसारमुद्रया — ऊ, ॠ.
[13] सर्वसर्वपदान्तस्थ० — च.
[14] स्वमात्मानं — ओ, क, ङ; शिवात्मानं — ख, घ, छ, ज.
[15] शिवं — ऊ, ॠ.
[16] धार्यो — ओ, क; धार्य — ङ.
[17] साधको क्रमैः — ङ.
[18] मतङ्ग० योग० २.३५ — ६५पू०.
[19] प्रविस्तार्य — ऊ, ॠ, ओ, क, घ, च, छ, ज; प्रविस्तार्या — ङ.
[20] वक्तव्यास्तमया तव — ओ; वक्तव्यास्तव या तपा — क; वक्तव्या स्वा — च.
[21] मया तव — ख, घ, ङ, च, छ, ज.
[22] संसारमुद्रया — ऊ, ॠ.
[23] मतङ्ग० योग० २.४०.
[24] हृत्प्रदेशान्तं पूर्ववद्विनिगृह्य तु — ऊ, ॠ.
[25] योगपादपाठमनुसृत्यात्र पाठः साधितः ।
[26] हृदयात्मके — ऊ, ॠ.
[27] अत्र पाठो योगपादानुसारेण साधितः ।

ततो [1]योगपादवक्ष्यमाणक्रमेणाग्नेयधारणयेदं भौवनशरीरं बन्धकत्वेन [2]दग्ध्वा, [3]वारुण्याप्लाव्य, [4]ऐशान्या संप्राप्तप्रभुत्वतत्सूक्ष्म[5]देहानयनपूर्वमानीय, अमृतया परमामृतेनाप्याययेत्। यद्वक्ष्यति तत्रैव[6]—

"तज्ज्योत्स्नाविद्धमात्मान[7]मुदारमनिवारितम्।
संपूर्णेन्दुनिभं ध्यायेन्मण्डलं कर्णिकोपरि॥" इति॥ १६-१७॥

[आसनम्]

**उच्चार्य [8]प्रणवं पश्चादधोवक्त्रमनाकुलम्।**
**तेन [9]शुद्धेन्दुवपुषा [10]हृद्व्योमकमले सुधीः॥१८॥**
**[11]मन्त्रैकगतचित्तात्मा[12] देवदेवस्य कल्पयेत्।**
**[13]धर्मादिचरणैर्युक्तमासनं दिव्यमद्भुतम्॥१९॥**

**उच्चार्य प्रणवं पश्चाद्** इति एवं धारणाचतुष्टयमेव शरीरं यस्य तं प्रणवमुच्चार्य **तेन शुद्धेन्दु**-शरीरेण सूक्ष्मदेहेन हृत्कमलमध्ये **देवदेवस्य कल्पयेदासनम्** इति॥ १८-१९॥

[मूर्तिकल्पनम्]

[अष्टत्रिंशत्कलान्यासश्च]

**स्वमन्त्रैः कल्पयित्वा तु कर्णिकाकेसरान्वितम्।**
**[14]पद्मं कुन्देन्दुसंकाशां[15] ततो मूर्तिं प्रकल्पयेत्॥२०॥**
**प्रणवेन [16]विभोर्न्यासः स च मन्त्रैः शिवात्मकैः।**
**[17]कर्तव्यो[18]ऽमितमूर्तेस्तु विधिसंपादनाय वै॥२१॥**

---

[1] मतङ्ग॰ योग॰ द्वितीयपटले.
[2] दग्धा — ॠ.
[3] वारुणयप्रप्लाव्य — ऊ; वारुणय प्राप्लव्य — ॠ.
[4] ऐशान्यां — ॠ.
[5] ॰देहमानयननयनपूर्वं॰ — ऊ, ॠ.
[6] मतङ्ग॰ योग॰ २.६० उ॰, ६१ पू॰.
[7] ॰मुद्धार॰ — ऊ, ॠ; 'उदारम्' इति योग-पादपाठमनुसृत्यात्र पाठः शोधितः।
[8] प्रथमं — ख, घ, छ, ज.
[9] शुद्धेन्द्रवपुषा — ओ, क; शुद्धेन वपुषा — ख, घ, च, छ, ज; बन्धेन वपुषा — ङ
[10] मूद्व्योम॰ — ख, घ, छ, ज.
[11] मन्त्रैर्भावितचित्तात्मा — ऊ, ॠ,
[12] ॰चिन्तात्मा — छ, ज.
[13] 'ऊ, ॠ' मातृकयोः १९ उत्तरार्धं २० श्लोकश्च न स्तः।; सर्पादिचरणै॰ — ख; सर्वादिचरणै॰ — घ, छ; सर्वादिधरणै॰ — ज.
[14] पद्मकुन्देन्दु॰ — ओ, क.
[15] ॰संकाशं — ओ, क, ख, घ, ङ, च, छ, ज.
[16] विभुन्यासः — ॠ; विभोन्न्यासं — ख, घ; विभो न्यासः — ङ; विना न्यासः — च; विभो न्यासं — छ, ज.
[17] 'ॠ' मातृकायामिदमर्धं नास्ति।
[18] ॰ऽमृतमूर्तेस्तु — ख, च.

**ईशानेन [1]शिरांस्यस्य प्रभोः पञ्च प्रकल्पयेत् ।**
**ततस्तत्पुरुषेणापि[2] वदनानि विचिन्तयेत् ॥२२॥**
**[3]नाभि [4]हृज्जठरे [5]ग्रीवां पृष्ठं [6]चापि यथाक्रमम् ।**
**अंसद्वयम् तथा[7] [8]चैव [9]उरश्च बहुरूपिणा ॥२३॥**
**[10]कटिं चैव तथा पार्श्वे [11]स्फिचौ मेढ्रं [12]गुदं तथा।**
**[13]ऊरुद्वितयमेवं स्याज्जानुनी च यथाक्रमम् ॥२४॥**
**जङ्घे च क्रमशः [14]पत्युर्वामदेवेन कल्पयेत् ।**
**[15]हस्तद्वयं ततः पादौ [16]बाहू चैव [17]सनासिकम् ॥२५॥**
**शिरश्चैव विभोर्नित्यं सद्योजातेन कल्पयेत् ।**

अत्र ईशानादीनामेकत्वेन श्रुतेर्न [18]स्वकलाभेदेन भेदः। अपि तु सकृदुच्चरणेन तास्तथा युगपदभिख्ययेति[19]। एव[20]मष्टत्रिंशत्कलान्यासो ब्राह्म इत्यर्थः। **शिरश्चैव विभोर्नित्यं सद्योजातेन** इति प्रागीशानकल्पितानां पञ्चानामपि शिरसामाधारभूतं शिरः सद्योजातेन **कल्पयेद्** इत्यविरोधः॥

[आवाहनाद्युपचाराः]

**शक्तिमत्[21]कारणातीतं [22]सकले निष्कलं शिवम् ॥२६॥**
**आवाहयेदजातेन [23]गुह्येन विनिवेशयेत् ।**

---

[1] शिरास्यस्य — ऊ, ऋ, छ, ज; शिरांसस्य — ओ, शिरांशस्य — क; शिरस्यास्य — ख, घ, ङ.
[2] पुरुषो वापि — ओ, क.
[3] नाभिहृज्जठर॰ — ओ, क; नाभिहृज्जठरे — ख, ङ; नाभिहृज्जठरं — च; नाडि हृज्जई — ज.
[4] हृज्जठरं — ऋ, घ; हृज्जई — छ.
[5] ग्रीवापृष्ठं — ओ, क, ङ; ग्रीवा स्पृष्टैश्चापि — च.
[6] वापि — ओ, क, ख, ङ, छ, ज.
[7] अंसकद्वितयं — ओ, क, ख, घ, ङ, च, छ; आसङ्कद्वितयं — ज.
[8] पश्चाद् — च.
[9] पुनश्च — ऊ, ऋ, ङ; ऊरू च — ख; ऊरूश्च — घ; ऊरुश्च — छ, ज.
[10] कटिश्चैव — ओ, ख, घ, छ, ज; कटिरुश्चैव — ङ.
[11] स्फिजो — ऊ, ऋ; स्फिजौ — घ, च, छ; स्थिजमैढ्रं — ज.
[12] गुदस्तथा — ङ.
[13] ऊरूद्वितयमेव स्या॰ — ऊ, ऋ, ख, घ; ऊर्ध्वद्वितय॰ — ङ; ऊरुद्वितयमेव स्या॰ — छ, ज.
[14] पश्चाद्वाम॰ — च.
[15] 'ऊ, ऋ' मातृकयोः २५ उत्तरार्धं २६ पूर्वार्धं च न स्तः।
[16] बाहुं — ख, घ; बाहुयुग्मं — च.
[17] सनासिनम् — ङ.
[18] स्वकालभेदेन — ऊ, ऋ.
[19] ॰दभिधाख्ययेति — ऋ.
[20] ॰मष्टाविंशत्कला॰ — ऊ, ऋ.
[21] कारणातीतसकले — ङ.
[22] सकलं — ऊ, ऋ, ख, घ; सकलं निष्कलः — छ, ज.
[23] गुह्येनापि निवेशयेत् — ओ, क; गुह्यकेन निवेशयेत् — च.

पूर्वस्थित[1]द्विरभ्यासपदेनैव [2]निरोधयेत् ॥२७॥
सान्निध्यं [3]बहुरूपेण ततोऽङ्गानि प्रकल्पयेत् ।
हृदि विन्यस्य हृदयं शिरः शिरसि [4]विन्यसेत् ॥२८॥
शिखायां तु [5]शिखां [6]न्यस्य सर्वाङ्गे कवचं [7]न्यसेत् ।
"[8]शिवास्त्रं [9]हस्तयोर्न्यस्य"

ततो **निष्कलं** शिवमावाह्य, तदङ्गानि यथास्थानं न्यसेत्। आवाहनं चात्र भगवतः सर्वगतस्य शरीरे इवात्मनो विशिष्टं संनिधानम्। [10]प्रतिष्ठिते तु लिङ्गादौ विशिष्टतरमेव। तदेव चार्थ-साधकं न सामान्यसंनिधानं; तथात्वेनादृष्टत्वादिति ॥

"[11]वक्त्रेणार्घादिकं विभोः ॥२९॥
[12]दत्त्वार्चनं प्रकर्तव्यमीशमन्त्रेण सुव्रत ।
[13]दिव्यैर्गन्धैश्च [14]पुष्पैश्च [15]हृद्व्योमाम्बुजसंस्थितम् ॥३०॥
[16]भक्त्या संपूज्य यत्नात्तु ब्रह्माङ्गसहितं विभुम् ।
[17]चन्दनादीनि [18]गायत्र्या स्नानकर्म च कारयेत् ॥३१॥
वस्त्रालंकार[19]स्रग्धूपं [20]भक्ष्यभोज्यान्नमेव च ।
गायत्र्या कल्पयेत्सर्वं[21] शिवस्याध्वरकर्मणि ॥३२॥

**दिव्यैर्गन्धैश्च** इति भौतिकद्रव्यापेक्षया बुद्धि[22]तत्त्वनिर्मितानां द्रव्याणां [23]शाक्तत्वं सिद्धमेव। **गाय-त्र्या कल्पयेत् सर्वम्** इति वक्ष्यति[24]—

---

[1] द्विरभ्यासात्पदेनैव — ज.
[2] नियोजयेत् — ओ, क, ङ.
[3] पुरुषेणैव येनाङ्गानि — ख, घ, छ, ज.
[4] वै क्रमात् — ऊ, ॠ.
[5] शिखान्यासं — ओ, क, ङ; शिखा न्यस्य — ख; शिखा न्यस्या — च.
[6] न्यसेत्सर्वाङ्गे — ऊ, ॠ.
[7] ततः — ऊ, ॠ.
[8] शिवास्त्रहस्तयो न्यस्य — ङ.
[9] हस्तयोस्तस्य — ॠ; हस्तयोर्न्यस्त्वा — ओ, क, ख.
[10] 'ॠ' मातृकायां 'प्रतिष्ठिते' इत्यारभ्य 'संनि-धानं' इत्यन्तं नास्ति।
[11] वस्त्रेणास्त्रादिकं — ओ, क, ङ; वस्त्रेणाप्योदकं विभो — ख; वस्त्रेणाप्युदकं विभोः — छ, ज.
[12] कृत्वार्चनं — ख, घ, छ, ज.
[13] दिव्यैर्धूपैश्च गन्धैश्च — ओ; दीपैर्गन्धैश्च धूपैश्च — क; दिव्यो गन्धैश्च धूपैश्च — छ, ज.
[14] धूपैश्च — ख, घ, ङ.
[15] व्योमम्बुज० — ख; व्योमामम्बुज० — घ, ज; व्योमामम्बुद० — छ.
[16] विद्यापादे ७.१६ उ० — १९पू० वृत्तौ 'भक्त्या संपूज्य यत्नात्तु' इति पाठो दृश्यते। अतः स एव पाठोऽत्र साधितः। प्रीत्या सं-पूज्य यत्नात्तु — ऊ, ॠ; स्मृत्वा संपूजयित्वा तु — ओ, क, ङ; प्रीत्या तं पूजयित्वा तु — ख, घ, छ, ज; प्रीत्या संपूजयित्वा तु — च.
[17] खन्दादीनि च — ओ; सन्द्यादीनि च गायत्र्या — क; वन्दनादीनि गायत्र्या — ङ
[18] कस्नान . . पकारयेत् — छ; कास्नान . . प्रकारयेत् — ज.
[19] ०पूपं च — ऊ, ॠ; ०सद्धूपं — ख, घ, छ, ज; ०भूधूपं — ङ. ०स्रग्धूप० — च.
[20] भक्ष्यं — ओ, क.
[21] कल्पयेत्सम्यक् — च.
[22] तत्त्वानिर्मितानां — ॠ.
[23] शाक्तत्वमसिद्धमेव — ऊ; शक्तित्वमसिद्ध-मेव — ॠ.
[24] मतङ्ग० क्रिया० ३.८२.

"यस्मिन्यस्मिन्न मन्त्रोऽस्ति तस्मिंस्तस्मिन्सदा भवेत् ।
गायत्री कर्मणि श्रेष्ठा" इति ॥ २९-३२ ॥

**[1]एवमन्तः प्रकर्तव्यं [2]विधानमशिवापहम् ।**
**बहिश्चावय[3]वेष्वेवं न्यासं [4]कृत्वात्मनः सदा ॥३३॥**

**एवमन्तः प्रकर्तव्यम्** इति, एवमन्तर्यागं कृत्वा **बहिः** शरीरमेतदेवमित्यष्टत्रिंशत्कलाभेदेन ब्रह्मभिः, शिवेन, [5]शिवाङ्गैश्च सकलीकुर्यात् । न तु करन्यासवत्कलाभेदं [6]विनैवेति । एवमिह "विद्याङ्गानां तथा [7]श्रुत्यभावान्न सकलीकरणे प्रयोगः" इति दर्शितं शुद्धविद्याप्रकरणे [8]प्रागेव ॥ ३३ ॥

अथ बाह्यार्चनोपक्रमः —

[विघ्नप्रोत्सारणम्]

**[9]करयोः शक्तिमुद्रां तु बद्ध्वा तालत्रयेण वै[10] ।**
**[11]विघ्नान्प्रोत्सारयेत्[12]सर्वाञ्छिवास्त्रेणोग्ररूपिणा ॥३४॥**

द्वयोरपि हस्तयोरित्यत्र विशेषविधिः ।

[दशदिग्बन्धः]

**[13]भूबन्धो [14]भूःपदेनैव [15]कार्योऽध्वरविदा तदा[16] ।**
**[17]पतङ्गेन नभोबन्धो[18] दिग्बन्धश्चापि[19] वर्मणा[20] ॥३५॥**

---

[1] एवमत्र प्र० — च.
[2] प्रधान० — ख, घ, छ, ज.
[3] ०ष्वेव — ओ, क, ख, घ, ङ; ०ष्वव्यं — छ; ष्वव्य० — ज.
[4] कृत्वा मनः सदा — ओ, क, ङ; कुर्याद्बहिः सदा — ख, घ, छ, ज.
[5] शिवाङ्गेन — ऋ.
[6] बिम्बेत्येवमिह — ऊ; विन्येवेत्येवमिह — — ऋ.
[7] श्रुतिभावा० — ऋ.
[8] मतङ्ग० विद्या० — ७. १६ उ० — १९पू० वृत्तौ ।
[9] नरयोः — ऋ; कारयेच्छक्ति० — ओ.
[10] तु — ख, घ, छ, ज.
[11] विघ्नात्प्रोत्सारयेद्धस्तात् शिवा० — ख; विघ्नात्प्रोत्सारयेद्धस्तं शिवा — घ, छ, ज.
[12] सर्वाञ्छिवास्त्रे० — ओ.
[13] भूबन्धे — ङ, च.
[14] भूपदेनैव — ऊ, ओ, ङ, च; हुंपदेनैव — क; रुपदैत्येव — ख, घ, छ, ज.
[15] कार्येऽध्वर० — ख, घ, छ, ज.
[16] ०विधानतः — ओ, क, ख, घ, ङ; ०विदा सदा — च.
[17] मतङ्गेन भुवे बन्धो — च.
[18] ०बद्धो — छ.
[19] ०बन्धाश्चापि — ओ, क; ०बन्धं चापि — ख, घ; ०बन्धनं चापि — ङ; ०बन्धश्चैव — च; ०बद्धं चापि — छ.
[20] वर्मना — ऊ, ऋ; वर्मसु — ख, घ, छ, ज.

[अर्घ्यम्]

[1]ततोऽर्घपात्रमस्त्रेण [2]संशुद्धं पूरयेत्सुधीः ।
[3]पूताम्भसा [4]पवित्रैस्तु साङ्गेन परमेष्ठिना[5] ॥३६॥
अष्टाङ्गं कल्पयित्वा तु मन्त्रयेत्साधकोत्तमः ।
जलं [6]बिल्वफलं दूर्वा [7]तिलाः पुष्पाणि तण्डुलाः ॥३७॥
[8]व्रीहिर्दर्भादयश्चेति [9]सामान्योऽयं महामुने ।
[10]अर्घोऽष्टाङ्ग इति [11]प्रोक्तस्तेन कार्याणि कारयेत् ॥३८॥
[12]प्रोक्ष्य यत्नाच्छिवास्त्रेण [13]मन्त्री द्रव्यगणं ततः ।

पवित्रैः इति ब्रह्मभिः, शिवेन साङ्गेन च पूतं हस्तेन अर्घपात्रं पूरयेत् ॥

[आसनकल्पनम्]

[14]उच्चार्यानन्तमन्त्रं तु [15]ध्यायेदध्वानमादरात् ॥३९॥
विद्या[16]तत्त्वावधिं सर्वं [17]स्पष्टं [18]कालानलादिकम् ।
ब्रह्मणोऽण्डं हि [19]तस्याधः [20]कन्दभूतं विचिन्तयेत् ॥४०॥
प्रधानतत्त्व[21]पर्यन्तं नालं [22]कण्टकिनं मुने ।

---

[1] ततोऽर्घ्यपात्र० — ओ, क, ख, घ, च; ततो-व्यपात्र० — छ, ज.
[2] संशुद्धि — ओ, क; संसिद्धं — छ, ज.
[3] भूताम्भसा — ओ; हूताम्भसा — क; पूताम्भसापि वस्त्रैस्तु — ख, घ.
[4] पदस्त्रैस्तु — छ; पवस्त्रैस्तु — ज.
[5] परमेष्ठिनः — ङ.
[6] बिल्वाफलं — ङ.
[7] तिलपुष्पाणि — ओ, क, ख, घ, ङ, छ, ज.
[8] नीलदर्भादिघ्यपीति — ऊ, ॠ; व्राहिदर्भादधिश्चेति — ओ; व्रीहिदर्भादयश्चेति — क; दिव्यदर्भादधी चैव — ख, घ; दिव्यदर्भादधिश्चेति — ङ; नीलदर्भादधीत्येवं — च; दिव्यगर्भादिभिश्चैव — छ, ज.
[9] एवमान्योन्यमाहरेत्—ख, घ; सामान्यो धर्महा मुने — ङ; एवमान्योयमाहरेत् — छ, ज.
[10] अर्घ्योऽष्टाङ्ग — ओ, क, ख, घ, ङ, छ, ज.
[11] प्रोक्तास्तेन — ॠ, ङ; ख्यातस्तेन — च.
[12] प्रोक्षयित्वा शिवा०—ओ, क, ख, घ, ङ, च, छ, ज.
[13] मन्त्रद्रव्य० — ख, घ, छ, ज; मन्त्री भद्रव्य० — ङ.
[14] उच्चार्यं तत्त्वमात्रं — ओ.
[15] ध्यायेत ध्यानमादरात् — ख; ध्यायेदध्यानमादरात् — घ; ध्यायेदच्चानमादरात् — छ; ध्यायेदच्युतमादरात् — ज.
[16] ०तत्त्वावधेः — ओ, क, ख, घ, ङ, च, छ, ज.
[17] स्फुटं — ओ, क, ख, घ, ङ, च, छ, ज.
[18] कालानलान्तिकम् — ऊ, ॠ, ओ, क, च; कालनलीदिकम् — छ; कालानलीदिकम् — ज.
[19] तत्राधः — च; तस्यासं — छ, ज.
[20] कर्मभूतं — ऊ, ॠ, च; कुन्दभूतं — ख, घ, छ, ज.
[21] ०पर्यन्तनालं — ओ, घ, ङ.
[22] कण्टकितं — ऊ, ॠ, च; कन्दकिनं — क; कर्णिकतः शुभे — ख; कर्णिकतच्छुभे — घ; ककर्णकतच्छमे — छ, ज.

[1]भुवनैर्भुवनेशैश्च तत्त्वैश्चापि यथाक्रमम् ॥४१॥
पुंस्तत्त्वाद्यावत्तत्त्वं[2] [3]कलाख्यमुदिताशयम् ।
[4]पीठं [5]विद्यावधौ तस्य देवदेवस्य नित्यशः ॥४२॥
[6]कर्णिकाधो महा[7]ग्रन्थि ध्यायेन्मायात्मकं शुभम् ।
विद्यातत्त्व[8]मयीं तस्य [9]कर्णिकां परिचिन्तयेत् ॥४३॥
[10]मन्त्राश्च केसराणि स्युर्विद्यायां ये प्रतिष्ठिताः ।
बीजानि शक्तयः प्रोक्ता दलानि [11]परमेश्वराः ॥४४॥
विद्याना[12]मीश्वरा ह्यष्टौ पीठस्योपरि संस्थिताः ।

[13]**उच्चार्यानन्तमन्त्रं** [14]तु इति आसनत्वेनानन्तस्य यो मन्त्रः [15]प्रागुद्धृतः, तमुच्चार्य; न तु [16]विद्येशमध्यव्यवस्थितत्वेनेत्यर्थः। **ध्यायेदध्वानम्** इति विद्यापादोक्तवस्तुनो दीक्षायामिवार्चनेऽपि नियोग इत्यर्थः। **कलाख्यमुदिताशयम्** इति यावत्कलाख्यं तत्त्वं यावच्चोदिताशयं [17]सर्वस्वकार्यजननापूरणात्मकं मायातत्त्वं तावद्विद्यावधिविषये देवाधिदेवस्य अनन्तेशस्य **पीठम्** अभिध्यायेदिति।

"**कर्णिकाधो महाग्रन्थि ध्यायेन्मायात्मकम्** इति महामायात्मकमित्यर्थः। यद्वक्ष्यति[18] —
"पीठस्योपरि कर्तव्यो न्यासोऽयं कमलात्मकः।" इति ॥

एवं ध्यात्वा [19]ततो [20]न्यस्येदनन्तं शक्तिमुद्रया ॥४५॥
[21]रोधयेद्विधिवत्प्राज्ञस्ततः[22] कर्म [23]प्रवर्तयेत् ।

**एवं** ध्यात्वा इति [24]ध्येयमेवैतत्। न तु विन्यसनीयमित्यर्थः। विन्यसेत्तु **ततः** अस्मादनन्तरम् **अनन्तं** [25]प्रागुक्ते मायात्मके स्वे पीठेऽनेकदलात्मनि पद्मरूपे ॥

---

[1] भुवने भुवनेशैश्च — ख, घ, छ, ज.
[2] पुंस्तत्त्वाभ्यवसान तत् — ओ, क; परं तु सद्यावर्तं तत् — ख; पुरं तु सद्यावर्तं तत् — घ; पुंतत्त्वाद्यवसानं तत् — ङ; फुरं तु संध्यावर्तं तत् — छ, ज.
[3] कलाख्यं मुदिताशयम् — ऊ, ॠ; कालाख्यमुचि ताशयम् — ओ, क, ख, घ, ङ, छ, ज.
[4] पीतं — च.
[5] विद्याद्विधौ — ऊ; विद्याविधौ — ॠ, ङ; दद्याद्विधौ — च.
[6] कर्णिकातो — ख; कर्णिकायो० — छ, ज.
[7] ०ग्रन्थि — क, ख.
[8] ०मयी तस्य — ॠ, क, च, छ, ज.
[9] कर्णिकायां विचिन्त० — च.
[10] मन्त्रास्य केसराणि — ङ.
[11] परमेश्वरः — ओ, क, छ, ज; परमेश्वरम्—ङ.
[12] ०मीश्वरोऽप्यष्टौ — ओ; ०मीश्वराप्यष्टौ — ङ.
[13] उच्चार्यानन्तरं मन्त्रं — ऊ, ॠ.
[14] विद्यामतत्वेनानन्तस्य — ॠ.
[15] मतङ्ग० क्रिया० १.८२ उ०—८७.
[16] मतङ्ग० क्रिया० १.६४ उ० .
[17] सर्वस्य कार्य० — ॠ.
[18] मतङ्ग० क्रिया० ३.५१ उ०.
[19] न्यसेत्पूर्वमनन्तं — ओ, क, ख, घ, ङ, च, छ, ज.
[20] न्यसेदनन्तं — ऊ, ॠ.
[21] बोधये० — च.
[22] ०प्राज्ञः स्वतः — च.
[23] प्रवर्तते — ऊ, ॠ, ख, घ, ङ, च, छ, ज.
[24] धेयमे० — ॠ.
[25] मतङ्ग क्रिया० ३.४२ उ०.

आग्नेय्यां [1]स्थापयेद्धर्मं सिंहरूपं महाबलम् ॥४६॥
गोक्षीरधवलं [2]पश्चाद्रक्तं निर्ऋतिगोचरे ।
चरणं सिंहवद्ध्यात्वा ज्ञानं स्वेन पदेन तु ॥४७॥
[3]कुङ्कुमोदकसंकाशं पूर्ववद्वायुगोचरे ।
[4]स्थापयेद्विधिवन्मन्त्री वैराग्यं सिंहरूपिणम्[5] ॥४८॥
[6]पादभूतं [7]तथैशान्यामैश्वर्यं [8]भ्रमरप्रभम् ।
गन्धपुष्पपवित्राद्यैः [9]प्रत्येकं [10]परिपूजयेत् ॥४९॥
ततः पद्मं समुच्चार्य [11]विकसन्निव विन्यसेत् ।
केसराणि [12]पदैः स्वार्थैर्न्यसेत्स्वस्थानवर्त्मना[13] ॥५०॥
[14]कर्णिकां स्वपदेनैव बीजानि [15]च यथाक्रमम् ।
पीठस्योपरि कर्तव्यो न्यासोऽयं [16]कमलात्मकः ॥५१॥
[17]सर्वात्मानं समुच्चार्य सहबीजेन [18]चेतसा ।
विन्यसेत्कर्णिकामध्ये [19]स्वमूर्ति [20]पारमेश्वरीम् ॥५२॥
[21]तस्यां [22]सत्यां भवेन्न्यासः[23] [24]सर्वावयवसिद्धये ।
[25]ईशानं पञ्चधा न्यस्य पूर्ववच्छिरसि क्रमात् ॥५३॥

---

[1] स्थापयेद्धर्मकर्णिका स्वप . . . —क; स्थापयेत् सम्यक् सिंह० — ख, घ, छ, ज.

[2] पश्चात्पीतं नैर्ऋतगोचरे — ओ, क, ख, घ; पश्चात्पीतनैर्ऋतिगोचरे — ङ; पश्चाद्वक्त्रं नैर्ऋत० — च; पश्चात्पीतं नैर्ऋतिगोचरे — छ, ज; अजिते — शुक्लं रक्तं तथा पीतं कृष्णं तद्रूपमुच्यते (२०–१४६) वीरागमे — शङ्खस्फटिकपीतं च रक्तं सिंहस्य वर्णकम् (३८.४२) कारणे — श्वेतं रक्तं तथा कृष्णं पीतं त्रेतादिवर्णकम् (१.३०.२४१) सुप्रभेदे — सितपीतरक्तकृष्णास्त्रिनेत्रा वज्रपीठकाः (१.८.८९).

[3] कुङ्कुमोदरसं० — ओ, ङ; कुशं मोदरसंकाशं — ङ.

[4] स्थापयेद्विविधं मन्त्री — क, च.

[5] ०रूपिणा — क.

[6] पादभूतमयीशान्या० — ख, घ, छ, ज. ; पादभूतमपीशान्या० — च.

[7] तमीशान्या० — ओ, क; तमैशान्या० — ङ.

[8] भ्रमरत्रयम् — च.

[9] प्रत्येकर्पूरपूजयेत् — छ; प्रत्यकपरपूजयेत् –ज.

[10] प्रतिपूजयेत्—ऊ, ऋ; परिपृच्छयेत्—ओ, क.

[11] विन्यसेत्तद्विकाशवत् — ऊ, ऋ; विकसंधिरविन्यसेत् — च.

[12] पदे सार्थैर्न्यसेत्—ओ; पदे सार्थैन्यासेत्—क; पदैर्वाक्यैर्न्यसेत् — ख, घ, छ, ज; पदैश्चान्यै० — च.

[13] स्वस्थानवर्मणा — ओ, क; स्वस्थानकर्मणा — ख, घ; स्वस्थाश्ववर्मणा — ङ.

[14] कर्णिका स्वज . . . — ओ; कर्णिका स्वप . . . — क; कार्तिकास्वपदेनैव — ख, घ, छ, ज; कर्णिकास्वपदेनैव — ङ.

[15] तु — च.

[16] कमलात्मकम् — ओ.

[17] सर्वात्मना समु० — ओ, क, ख, घ; सगन्धर्वान्मिनां समुच्चार्या — ङ; सर्वात्मनां समुच्चार्य — छ, ज.

[18] चेतसः — ओ, क, ङ.

[19] सा मूर्तिः पारमेश्वरी — ऊ, ऋ, च.

[20] परमेश्वरीम् — क; पारमेश्वरम् — ङ.

[21] सत्यां तस्यां — च.

[22] तस्यां भवन्यासः — ऋ; मध्ये भवे न्यासं — ओ, क; सत्याम्भसो न्यासं — ख, घ, छ, ज.

[23] तस्या मध्ये भवे न्यास० — ङ.

[24] सर्वं पयसि सन्न्यसेत् — ख, घ, छ, ज.

[25] ईशान्यां — ओ, क.

पुरुषो वक्त्रनिष्पत्त्यै [1]न्यसनीयः सुमेधसा ।
[2]अङ्गनिष्पत्तये [3]पश्चाद्बहुरूपोऽप्यथाष्टधा ॥५४॥
पूर्वोक्तेषु प्रदेशेषु वामदेवं प्रकल्पयेत् ।
सद्योजातं [4]यथान्यायं [5]पश्चादङ्गेषु [6]विन्यसेत् ॥५५॥
[7]सकलस्तु भवेदेवमन्यथा [8]निष्कलः शिवः ।
[9]ईश्वरः स तु [10]विज्ञेयो विश्व[11]मूर्तिरनेकधा ॥५६॥
संस्थितो योगसामर्थ्यान्न च सीदति [12]कर्मणा ।
क्रीडतः[13] परमेशस्य मूर्तिरेषा ह्यनिन्दिता[14] ॥५७॥

ततस्तत्रैवाग्नेयादिकोणेषु तत्सामर्थ्यविशेषात्मकान् धर्मादीन् सिंहरूपान् विन्यस्य, अनन्तेशं तत्सहितं पूजयित्वा, तेषामुपरि विद्यापद्मं स्वमन्त्रेण **केसराणि**, कर्णिकायां **बीजानि च** विन्यसेत्। बीजानां स्वमन्त्रस्य मन्त्रोद्धारेऽत्राश्रुतत्वात्कर्णिकयैव सह विन्यासः चशब्दसामर्थ्यसिद्धः। **सर्वात्मानम्** इति सर्वात्मपदं **सहबीजेन** प्रणवेन मनसोच्चार्य पद्ममध्ये मूर्ति **विन्यसेत्**। "ओं [हां] सर्वात्मने नमः" इत्यनेन मन्त्रेणेत्यर्थः। [15]मानसे तु यागे [16]प्रणवेनैवेति भेदः। **तस्यां सत्याम्** इति तामेव मूर्तिं ब्रह्मभिरष्टात्रिंशत्कलाभेदेन [17]प्राग्वत् सकलीकुर्यादित्याह— **सकलस्तु भवेदेवम्** इति। **ईश्वरः स तु विज्ञेयः** इति, अधिकारतत्त्वात्मक इत्युक्तं पतिपदार्थप्रकरणे[18] ॥४६–५७॥

अथ सकलध्यानम् —

शुद्धस्फटिक[19]संकाशं [20]स्वाङ्गोत्थ[21]किरणोज्ज्वलम् ।
[22]चिन्तयेत्पञ्चमूर्धानं देवदेवं महेश्वरम् ॥५८॥

---

[1] न्यसन्ये यः — ऋ; न्यसनीयं — ओ, क, ख, घ, ङ, छ, ज.
[2] स्वाङ्ग० — ऊ, ऋ, च; स्वाङ्गदीक्षितया पश्चा० — ख, घ, छ, ज.
[3] पश्चाद्बहुरूपमथाष्टधा — ऊ, च; पञ्चा बहुरूपमथाष्टधा — ऋ; पश्चाद्ब्रह्मरूपोऽप्यथाष्टधा — ख, घ, छ, ज.
[4] यथान्यासं — ऋ.
[5] पश्चादङ्गानि — ख, घ, ङ, छ, ज.
[6] च क्रमात् — ऊ, ऋ.
[7] सकलस्तं — ङ.
[8] निष्कलं शिवम् — ओ, क, ङ.
[9] ईश्वरस्य तु — ख, घ, छ, ज.
[10] बोद्धव्यो — ऊ, ऋ, ओ, क, ख, घ, ङ, छ, ज
[11] ०मूर्तेरनेकधा — ख, घ, छ, ज.
[12] कर्मणि — ओ.
[13] क्रीडितो — ऋ; अन्यतः — क; विक्रीडा — ख, घ, छ, ज; कृत्यतः — ङ.
[14] ०रेषाप्यनिन्दिता — ओ, क, घ, ङ.
[15] मानसं तु — ऊ, ऋ.
[16] प्रणवेनैति — ऊ.
[17] मतङ्ग० क्रिया० ३.२०–२६ पू०.
[18] मतङ्ग० विद्या० चतुर्थप्रकरणे.
[19] ०संकाशः — ओ, क; ०संकाशा — ख; ०संकाश० — ङ.
[20] सर्वाङ्गोत्थकिरणौजसा — ओ, क; स्वाङ्गोर्ध० — छ; स्वाङ्गोऽर्थ० — ज.
[21] ०करणोज्ज्वलम् — ऋ; ०किरणौजसम् — ख; ०किरणोजसम् — घ, छ, ज; ०किरणौजसा — ङ.
[22] ध्यातव्यं पञ्च० — ओ, क, ख, घ, ङ, छ, ज; ध्यायेत पञ्च० — च.

**त्रिपञ्चनयनं [1]सौम्यं पञ्चास्यं चारुनासिकम् ।**
**[2]खण्डेन्दुमण्डितेनाथ[3] [4]मकुटेन [5]सुतेजसा ॥५९॥**
**दशबाहुं[6] विशालाक्षं नागयज्ञोपवीतिनम् ।**
**[7]स्वाङ्गुष्ठपर्वणा तुल्यं [8]ध्यायेद्वै कर्णिकोपरि ॥६०॥**

**पञ्चास्यम्** इति। ननु चतस्र एव तत्पुरुषकलाः सर्वत्र पठ्यन्ते। ताभिश्च मुखकल्पना। तत्र कुतः पञ्चममास्यमिति। सत्यम्। गायत्र्या तु [9]कल्प्यम्। यदुक्तम्[10] —

"यस्मिन्यस्मिन्न मन्त्रोऽस्ति तस्मिंस्तस्मिन्सदा भवेत् ।
गायत्री" इति।

श्रीमन्निःश्वासादावपि तस्य मन्त्रान्तरेणैव कल्पनात्। यदुक्तम्[11] —

"प्रथमं प्रणवेन तु" इति ॥५८–६०॥

अथ निष्कलावाहनम् —

**[12]तस्मिन्मन्त्रतनुं ध्यात्वा [13]परं तेजो निवेशयेत् ।**

अथ किमन्तर्याग इवात्राप्यावाहनम्। नेत्युच्यते —

**गुरु[14]वक्त्रोप[15]देशेन [16]कृत्वात्र करणं शनैः ॥६१॥**

कीदृशं तद् गुरुवक्त्रोपदेशकरणमित्याह —

**सद्योजातमनुस्मृत्य [17]ध्यायेदन्तर्बहिःस्थितम्[18] ।**
**एकाशीतिपदं देवं[19] तस्मिन्संधाय यत्नतः ॥६२॥**
**[20]विसृष्टमुच्चरेत्सर्वं प्रणवात्प्रणवान्तकम्[21] ।**

---

[1] सौम्यपञ्चास्यं — ओ, ङ.
[2] खण्डेषु मण्डितं नाथं — छ.
[3] ०मण्डितं नाथ — ओ; ०मण्डितं नाथं — क, ख, घ, ङ, ज.
[4] मुकुटेन — ऊ, ऋ, ङ, च; ललाटेन — क.
[5] स्वतेजसा — ऊ, ऋ, ओ, क, ङ; तु तेजसा — ख, घ, छ, ज.
[6] ०बाहुः — ओ, घ, ङ.
[7] स्वाङ्गुष्ठं पर्वणा — ओ.
[8] ध्यातव्यं — ऊ, ऋ, ओ, क, ख, घ, ङ, छ, ज.
[9] कल्पम् — ऊ, ऋ.
[10] मतङ्ग० क्रिया० ३.८२.
[11] आकरो न लभ्यते।
[12] अस्मिन् मन्त्रतनो ध्यात्वा — ओ; अस्मिन् मन्त्रतनोर्ध्यात्वा — क; अस्मिन् मन्त्रतनौ ध्यात्वा — ख, घ, ङ; तस्मिन् मन्त्रतनौ — च; अस्मिन् मन्त्र . . तौ — छ, ज.
[13] परतेजो — ख, घ, छ, ज.
[14] ०वृत्रोपदेशाच्च — ज.
[15] ०देशाच्च — ओ, क, ख, घ, ङ, च, छ.
[16] कृत्वा तु करणं—ओ, क, ङ; कृत्वा च शरणं — ख, घ; कृत्वा नु शरणं — च; नुत्वा च शरणं — छ; नुक्त्वा च शरणं — ज.
[17] ध्यायेदन्तर्व्यवस्थया — ओ, क, ख, घ, ङ; ध्यायेदन्तव्यवस्थिदा — छ; ध्यायेदन्तव्यवस्थि वा — ज.
[18] स्थितः — ऊ; स्थितिः — ऋ;
[19] देव — ओ, क, ङ.
[20] विस्पष्ट० — ऊ, ऋ, ओ, क, ख, घ, ङ, छ, ज; विस्पष्टमुद्धरेत्सर्वं — च.
[21] प्रणवान्तिकम् — ऊ, ऋ, ओ, क, ङ, च; प्रणवादिकम् — ख, घ, छ, ज; वृत्तिमनुसृत्यात्र 'प्रणवान्तकम्' इति पाठः शोधितः।

हृत्पद्मकर्णिकासंस्थं तेजो [1]विश्वात्मना पुरा ॥६३॥
[2]समृद्धं शक्तिमार्गेण मध्यमेन शनैः शनैः ।
[3]विभुं नेत्रप्रदेशस्थं[4] कृत्वा ध्यात्वा च साधकः ॥६४॥
[5]निर्धूमभस्मकिरणैः [6]किरन्तमिव [7]पावकम् ।
तत्तेजः [8]सर्वतो दिक्षु [9]तं देवं बिन्दुरूपिणम् ॥६५॥
सकले योजयेत्सम्यक्संपातात्प्राणवर्त्मनः[10] ।

**सद्योजात**[11]**मनुस्मृत्य** इति सद्यः तत्कालमेव जातं परमशिवम् **अन्तः** यागनिमित्तं विशेषसंनिधानात्मना, **बहिः** **च** व्यापकतया सामान्यसंनिधानेन **स्थितमनुस्मृत्य**, ततस्तद्वाचकम् **एकाशीतिपदम्** [12]अन्तर्नादात्मना, बहिश्च स्थूलशब्दरूपेण स्थितं **ध्यायेत्**। यदुक्तम्[13] —

"स्थूलं शब्द इति प्रोक्तं सूक्ष्मं चिन्तामयं भवेत्।" इत्यादि।

ततः **तस्मिन्** एकाशीतिपदात्मनि नादरूपे मन्त्रे **देवं** तमजातमन्तर्यागे इव **यत्नतः** विशेषाधिष्ठायकत्वेन **संधाय**, ततः **विसृष्टं** कृत्वा [14]तमेकाशीतिपदं **सर्वम्** एवोपक्रम**प्रणवाद्** उपसंहारप्रणवं [15]यावदुच्चारयेत्। ततो [16]यत्तद्द्वितयमपि **पुरा** पूर्वमन्तर्यागनिमित्तं स्वहृदयकमलकर्णिकायां सर्वज्ञत्वादिना रूपेण **समृद्धम्** इति परिपूर्णं **तेजः** निष्कलं शिवरूपं स्थितं तद् मध्यमनाड्या नाद**शक्तिमार्गेण** **शनैः शनैः** जाग्रत्स्वप्नसुषुप्तस्थानप्राप्तिक्रमेण भ्रूमध्यात्मकतुरीयस्थानस्थं **कृत्वा स्वकिरणैः** सर्वदिक्षु **किरन्तमिव पावकं** ध्यात्वा **देवं च तम्** एव प्रागुक्तं बिन्दुरूपमिति ध्यात्वा, **सकले** [17]तस्मिन् **योजयेत् प्राणवर्त्मनः**[18] यः **संपातः** द्वादशान्ते [19]परिक्षयः, तेन हेतुना प्राणशक्तिप्रेरणोपक्षय[20]पर्यन्तान्नादशक्तिमुच्चार्य योजयेदित्यर्थः। यदुक्तम्[21] —

"[22]तावदुच्चारयेन्मन्त्रं [23]यावन्निर्वाण[24]गोचरम्।" इति।

इदं तत्करणमिति ॥

---

[1] विश्वाग्निना — ऊ, ॠ, च.
[2] समिद्धं — ओ, क, ङ, समिधं — ख, घ, छ, ज; संसिद्धं — च.
[3] विभुनेत्र० — ऊ, ॠ, च; विभुर्नेत्र० — क, ख, घ, ङ, छ, ज.
[4] ०प्रदेशिस्थ — छ; ०प्रदेशस्य — ज.
[5] निर्धूतं भस्म — ओ, क; मूर्ध्नि तद्भस्म — ख, घ, छ, ज; निर्धूतभस्म० — ङ.
[6] विकरन्निव — ओ, क, ख; विकिरन्निव — — घ, ङ, च, छ, ज.
[7] पावकैः — ओ, पावकः — क, ख, घ, ङ, छ, ज.
[8] सर्वतोदिक्कं — ओ, ख, घ, ङ, च; सर्वतो दिक्स्थं — क; सर्वतोधिक्कं — छ, ज.
[9] तदेवं बिन्दु० — ऊ, ॠ, क, ख, घ, छ, ज.
[10] संपातप्रणवात्मना — ओ, क; संपातात्प्रणवात्मना — ख, घ, ङ, छ, ज; संपातान प्राणवर्मता — च.
[11] ०मनुस्मृतेति — ॠ.
[12] 'अन्तः' इति नास्ति 'ऊ' मातृकायाम्.
[13] सार्धत्रिशतिकालोत्तरे १. ८ पू०.
[14] त्वमेकाशीति० — ॠ.
[15] यावच्चोच्चारयेत् — ॠ.
[16] यत्तद्वित्वपि पुरा—ऊ; यत्तु द्वि अपि पुरा—ॠ.
[17] अस्मिन् — ॠ.
[18] प्राणवन्मनो — ॠ.
[19] परिक्षया तेन — ॠ.
[20] ०पर्यन्तानाद० — ॠ.
[21] स्वच्छन्दतन्त्रे ३.२१ पू०.
[22] यावदुच्चारये० — ॠ.
[23] यावन्निद्राण० — ॠ.
[24] गोचर इतीदं — ऊ.

वामदेवं समुच्चार्य बीजमुद्रां प्रयत्नधीः ॥६६॥
दर्शयेन्मुनिशार्दूल [1]वस्तुमात्रम् परं शिवम् ।
[2]संस्मरेत्स्वागतं [3]वाच्यं [4]निरोधश्चाप्यनन्तरम् ॥६७॥
पूर्वस्थितेन [5]कर्तव्यो मन्त्रराजस्य [6]संनिधिः ।
[7]भवेत्संस्मरणात्क्षिप्रं मन्त्रस्य [8]बहुरूपिणः ॥६८॥
[9]आवाहन्या [10]शिवस्योक्तं सर्वदावाहनं विधौ ।

**वस्तुमात्रं परं शिवम्** इति परमार्थतोऽनाका[र]व[त्] संस्मृत्य, तस्य [11]स्वागताद्यजातादिना कार्यमित्यर्थः ॥

[ अङ्गन्यासः ]

पश्चादङ्गानि[12] देयानि पूर्ववत्परमेष्ठिनः ॥६९॥
बद्ध्वा मुद्रां [13]प्रशान्ताख्यां ध्यायेत्सकलनिष्कलम्[14] ।

**पश्चादङ्गानि देयानि** इति, ततः शिवाङ्गन्यासः ॥

[ पाद्याद्युपचाराः ]

ततः [15]पाद्यं प्रदातव्यं वक्त्रमन्त्रेण [16]धीमता ॥७०॥
[17]अर्घ्यमाचमनीयं च पुष्पाणीशेन [18]सर्वदा[19] ।

---

[1] वस्तुमात्रपरं — ओ, क, ङ.
[2] संस्मरेत्स्वां गतं — घ, छ, ज.
[3] वाक्यं — ओ, ङ; चाद्यं — क; वच्च —ख, घ; वर्चं — छ; वच्चं — ज.
[4] निरोधं चाप्यन० — ऋ, ङ; निरोधाच्चाप्यन० — ख, घ; निरोधस्याप्यन० — च.
[5] कर्तव्यः संनिधानश्च मन्त्रराट्—ओ, क; कर्तव्यं संनिधानं च मन्त्रराट् — ख, घ, छ, ज; कर्तव्य संनिधानश्च मन्त्रिराट् — ङ; कर्तव्यं — च.
[6] संततिः — ऊ, ऋ.
[7] भवेत्संसारणात् — ऊ, ऋ.
[8] ब्रह्मरूपिणः — ऋ; बहुरूपिणम् — ओ, क, ख.
[9] आवाहिन्या — ओ, क, घ, ङ, च, छ, ज; आवाहिन्यां — ख.
[10] शिवस्योक्तां — ख.
[11] 'स्वागताद्यजातादिना' इत्यत्र 'आवाहनाद्यजातादिना' इति भवितव्यम् । एवमेवान्तर्यागे ३.२७पू०. दृश्यते ।
[12] पश्चाङ्गानि च — ओ, क, ङ; पञ्चाङ्गानि तु — ख, घ, छ, ज.
[13] प्रशान्तात्मा — ख, घ, छ, ज; प्रशान्ताख्यातं — ङ.
[14] ०निष्कलाम् — ओ, क, ख, घ, च.
[15] पाद्यं च दातव्यं — ऊ, ऋ.
[16] धीमतः — ओ, क, ङ.
[17] 'ख' मातृकायां '७१' श्लोकः ७२ पूर्वार्धं च न स्तः— अर्घमाचमनीयं च — ऊ.
[18] वै सदा — ओ, क, घ, ङ, च.
[19] अर्घ्यमाचमनीयपुष्पाणि शेवै सदा — छ; अर्घ्यमाचमनीयपुष्पाणि शैवे सदा — ज.

[1]गायत्र्या दापयेद्धूपं [2]भूयोऽप्याचमनं विभोः ॥७१॥
धूपान्तरेषु [3]सर्वत्र वक्त्रमन्त्रेण [4]पूर्ववत् ।
[5]स्नानं तोयादिभिः पूतैर्घृताद्यैश्च[6] सुगन्धिभिः[7] ॥७२॥

[8]स्नानं तोयादिभिः इत्यनेन लिङ्गार्चनमेवात्र मुख्यमिति दर्शयति ॥७०–७२॥

प्रकर्तव्यं हि [9]गायत्र्या नित्यं गन्धाम्बु [10]पश्चिमम् ।
हरिचन्दनकल्केन[11] [12]कुङ्कुमेन च [13]कारयेत् ॥७३॥
विलेपयेच्च[14] गायत्र्या कर्पूर[15]रजसा तथा ।
उद्वर्तयेद्विभुं [16]शक्त्या [17]सर्वाभावात्तु मानसम् ॥७४॥
[18]विधानं [19]पुष्कलं कार्यं [20]पुष्कलां सिद्धिमिच्छता[21] ।

द्रव्यनियमविधिः —

[22]धूपः [23]कृष्णागरोः [24]शस्तस्तदभावाच्च [25]गुग्गुलोः ॥७५॥
प्राण्यङ्ग[26]रहितैर्द्रव्यैरन्यैर्वा [27]सुकृतः शुभः ।

---

[1] गायत्र्यापादये० — छ, ज.
[2] भूयश्चाचमनं — घ, छ, ज.
[3] सर्वेषु — ऊ, ऋ, ओ, घ, ङ, च.
[4] पूर्वतः — ओ, क, ङ.
[5] स्नानतोयादिभिः — ऋ, ख.
[6] घृतान्तैश्च — ओ, ख, घ, ङ, छ, ज; व्रतान्तैश्च — क; घृताक्तैश्च — च.
[7] स्वगन्धिभिः — ऋ.
[8] स्नानतोयादिभिः — ऋ.
[9] गायत्र्यां — छ, ज.
[10] पञ्चमम् — ख; 'ऋ' मातृकायां ७३ द्वितीयपादप्रभृति ७४ प्रथमपादान्तं न दृश्यते।
[11] ०कालेन — ओ, क; ०कल्पेन — च.
[12] काश्मीरेण — ओ, क, ङ, च; काश्मीरेणाप कारयेत् — ख; काश्मीरेण पकारयेत् — घ, छ, ज.
[13] कारणम् — च.
[14] विलेपयीत — ओ, क, ख, घ, ङ; विलेपयेत — च; विलेपयित — छ, ज.
[15] ०रजसाथवा — ऊ, ओ, क, ख, घ, च, छ, ज.
[16] रुद्रा — ऊ; 'शक्त्या' इत्यस्य स्थाने 'पश्चाद् भक्त्या', इति दृश्यते 'ख, घ, छ, ज' मातृकासु; भक्त्या — च.
[17] सर्वाभावाच्च — च; सर्वा तु मानसम् — छ, ज.
[18] 'ऊ, ऋ' मातृकयोरिदमर्धं नास्ति।
[19] पुष्करं — ख.
[20] पुष्कलात् — ख.
[21] ०मिच्छताम् — ङ.
[22] कृष्णागरोः शस्तमाला हाहारश्चैव गुद्गुलोः — ओ; कृष्णागरोः शस्तमाला हाहारश्चैव गुग्गुलोः — क; धूपं — ख, घ, छ, ज; धूपा० — ङ.
[23] कृष्णागरुः — ऊ, ऋ, च.
[24] शस्तास्तदभावाच्च — ऋ; शस्तमभावाच्चैव — ख, घ, छ; शक्तमभावाश्चैव — ङ; शस्तं भावयेच्चैव — ज.
[25] गुग्गुलुः — ऊ, च; गुग्गुलः — ऋ; गुद्गुलोः — घ, ङ.
[26] ०रहितैर्विद्यैरन्यो वा — ओ, क; ०रजतैर्द्रव्यैरन्यो वा — ङ; ०रहितैर्द्रव्यैरन्यो वा — च.
[27] सुकृतैः शुभैः — ऊ, ऋ; सुकृतं शुभम् — ओ, क, ख, घ, ङ, छ, ज.

[1]पूजा नीलोत्पलैः पद्मैः [2]सितैर्वाप्यथवारुणैः ॥७६॥
[3]मालती[4]मल्लिकाद्यैर्वा प्रत्यग्रै[5]रजुगुप्सितैः ।
तदभावाद्दृढैः स्निग्धैः कोमलैः परमेष्ठिनः ॥७७॥
बिल्वपत्रैः [6]प्रकर्तव्या [7]भक्तितः [8]संभवो यथा ।

अत्रैवाधिकारविधिः —

[9]विधिः प्रोक्तः प्रसिद्ध्यर्थं [10]मुक्त्यै भक्तिस्तु कारणम् ॥७८॥
[11]नेत्रपट्टांशुकादीनि वासांसि मुनिपुङ्गव[12] ।
देयानि [13]देवदेवस्य रत्नानि विविधानि [14]च ॥७९॥
केयूरकटकादीनि [15]यथा[16]शक्त्या प्रदापयेत् ।

सिद्ध्यर्थं [17]एष विधिः सर्वार्थपरिपूर्णः । मुक्त्यर्थं तु भक्तिः [18]कारणम् । यथाशक्त्या प्रयोग इत्यर्थः ॥

तमेवानन्तरमाह "अथ किं बहुनोक्तेन" इत्यादिना —

अथ किं बहुनोक्तेन यद्यद्द्रव्यमनुत्तमम् ॥८०॥
तेन तेन [19]प्रकर्तव्या पूजा [20]संभवतः सदा ।
पूर्वोक्तमखिलं कार्यं गायत्र्या सर्वमेव [21]हि ॥८१॥
यस्मिन्यस्मिन्न [22]मन्त्रोऽस्ति तस्मिंस्तस्मिन्सदा भवेत् ।
[23]गायत्री कर्मणि श्रेष्ठा संपादयति [24]योजिता ॥८२॥
[25]सर्वं सर्वेषु कार्येषु नात्र कार्या विचारणा ।

---

[1] पूजनीयोत्पलैः — ऋ; पूलानिलोत्पलैः — छ; पूलानलोत्पलैः — ज.
[2] स्थितैर्वा० — क; वितैर्वा० — ङ.
[3] 'ऊ, ऋ' मातृकयोरिदमर्धं नास्ति.
[4] मल्लिकाग्रैर्वा — ख.
[5] ०रज्जुगुम्फितैः — च.
[6] प्रकर्तव्यो — ख, घ, ङ, छ, ज.
[7] भक्तिता भस्मवो यथा — ऋ; शक्तितो संभवादि यत् — च.
[8] संभवातयम् — ओ; संभवादयः — क, ङ; संभवादियम् — ख, घ, छ, ज.
[9] विधिप्रोक्तं प्रसिद्धयर्थं — ओ; विधिप्रोक्तप्रसिद्धयर्थं — क, ङ; विविधोक्तप्रसिद्ध्यर्थं — ख, घ, छ, ज.
[10] मुक्तये भक्तिकारणम् — ओ, क, ङ; उक्तेर्भक्तिस्तु कारणम् — ख, घ; मुक्तेर्भक्तिस्तु कारणम् — च, छ, ज.
[11] नेत्रपटांशुकादीनि — ऋ; नेत्रपाटं शुक्रकादीनि — ङ.
[12] ०पुङ्गवः — ङ, च.
[13] देवदेवानि — ऊ, ऋ; देवदेवाय — च.
[14] तु — ऊ, ऋ.
[15] यथाशक्ति प्र० — ख.
[16] ०शक्त्योपपादयेत् — च.
[17] ०जापविधिः — ऋ.
[18] करणं — ऋ.
[19] प्रकर्तव्यं — ख.
[20] सांभवतः — च.
[21] तत् — ओ, क, ख, घ, ङ, छ, ज.
[22] मन्त्रोऽस्मि — ओ, ङ; मन्त्रेऽस्मिन् — क; मन्त्रेऽस्ति — छ, ज.
[23] गायत्र्या — ख, ङ.
[24] जीविता — ख.
[25] सर्वसर्वेषु कार्येण — ख, घ, छ, ज; सर्वसर्वेषु कार्येषु — च.

[1]यस्मिन् यस्मिन् न मन्त्रः इति, अनुद्दिष्टमन्त्रकेषु कर्मसु मन्त्रविधिः [2]सामान्यप्रकरणस्थत्वात्सर्वसाधारणः ॥

[ गर्भावरणपूजा ]

[3]निर्वर्त्यैवं [4]विभोः पूजा[5]मीशानं कर्णिकोपरि ॥८३॥
[6]गोक्षीरधवलं ध्यात्वा पूजयेत्कुसुमादिभिः ।
[7]कर्णिकारसमप्रख्यं प्राग्दले[8] पुरुषं न्यसेत् ॥८४॥
अघोरं दक्षिणे [9]न्यस्य भिन्नाञ्जन[10]चयोपमम् ।
[11]दाडिमीपुष्प[12]संकाशं [13]वामदेवं तथोत्तरे ॥८५॥
शङ्खकुन्देन्दुसंकाशं सद्योजातं[14] तु पश्चिमे ।
[15]न्यस्येद्दले [16]यथान्यायं [17]सुगन्धिकुसुमादिभिः ॥८६॥
मुक्ताफलसमं[18] ध्यात्वा [19]सर्वात्मानमथार्चयेत् ।
आग्नेये तु [20]दले सम्यक्[21]सुधूपादिभिरादरात् ॥८७॥
[22]सुशिवो यच्छिरः प्रोक्तमैशाने तु [23]दले [24]ततः ।
स्वच्छ[25]वैडूर्यसंकाशं ध्यात्वा [26]पूज्यं सदा बुधैः ॥८८॥
[27]तडिल्लता[28]प्रतीकाशां [29]ज्वालिनीं नैर्ऋते [30]दले ।

---

[1] यस्यां यस्यां न — ऊ, ऋ.
[2] मतङ्ग० क्रिया० ३.३२उ० 'गायत्र्या कल्पयेत्सर्वं शिवस्याध्वरकर्मणि'।
[3] निर्वर्त्यैव — ओ, क; निर्वर्त्येवं — छ, ज.
[4] विधिः — ऊ, ऋ.
[5] ०मीशानकर्णिकोपरि — ज.
[6] इदमर्धं 'क' मातृकायां ८२ पूर्वार्धानन्तरं दृश्यते।
[7] कर्णिकारदलप्रख्यं — ऊ, ऋ; कर्णिकाकारसंप्रख्यं — ओ, क; 'च' मातृकायां ८४ उत्तरार्धं ८५, ८६ श्लोकौ च न दृश्यन्ते।
[8] ०दलैः — ओ, क.
[9] वक्त्रे — ओ, क; पात्रे — ख, घ, छ, ज; पत्रे — ङ.
[10] ०चयप्रभम् — ख, घ, छ, ज.
[11] डाडिमी० — ऋ, क, ख, ङ.
[12] ०संकाशे — ऋ.
[13] वामदेवमथोत्तरे — ओ, क, ख, घ, ङ, छ, ज.
[14] प्रपूजयेत् — ओ, क, ख, घ, ङ, छ, ज.
[15] प्रत्यग्दले — ओ, क, ख, घ, ङ, छ, ज.
[16] यथा चेयं — ख, घ, छ, ज.
[17] सुगन्धकुसु० — ओ, क, ङ; कुसुमालेपनादिभिः — ख, घ, छ, ज.
[18] मुक्ताफलनिभं० — ऊ, ऋ, ख, घ, च, छ, ज.
[19] सर्वाजानमथा० — ङ.
[20] बलं सम्यक् — ऊ, ऋ.
[21] सधूपादिभि० — ओ, क, ङ; गन्धधूपादिभिः क्रमात् — ख, घ, छ, ज.
[22] सुशिवं यच्छिवः — ऊ, ऋ; सुशिरं यच्छिरः — ओ, क, ङ; सुशिवायाः शिवः — ख; सुशिखायाः शिव० — घ, छ, ज; सुशिवं यच्छिरः प्रोक्तमैशान्यां तु — च.
[23] दलान् — छ, ज.
[24] न्यसेत् — ओ, क, ख, घ, ङ, च, छ, ज.
[25] वै सूर्यसंकाशं — ओ, क.
[26] पूज्यः — ख, घ, ङ, छ, ज.
[27] तटिल्लता० — ओ, क, ख, घ, ङ, छ, ज.
[28] ०प्रतीकाशा — ऊ, ऋ, च; ०प्रतीकाशं — ओ, क, ख, घ, छ, ज.
[29] ज्वालिनी — ऊ, ऋ, ओ, ङ, च, छ, ज; 'ज्वालिनी=शिखामन्त्रः' मतङ्ग० विद्या० ७.२७ उ०; क्रिया. १.६३
[30] यजेत् — ख, घ, छ, ज.

[1]कुलिशाभं सदा [2]वर्म मारुते [3]पूजयेद्दले ॥८९॥
[4]दलाग्रेषु [5]न्यसेदस्त्रं [6]संवर्तानल[7]वर्चसम् ।
[8]चतुर्भुजा[9]श्चतुर्वक्त्रा[10]स्त्रिनेत्रा बद्धमौलयः ॥९०॥
स्वामिनःसंमुखा[11]ध्येयाःपूज्याश्चापि[12]यथाक्रमम् ।
गन्ध[13]पुष्पपवित्राद्यैर्गायत्र्या[14] साधकोत्तमः ॥९१॥

एवं न्यासादिपूजापर्यन्तमर्चनं कृत्वा, [15]गर्भावरणार्थं यथास्वं भोगस्थानेषु [16]ब्रह्माणि शिवाङ्गानि च विन्यसेत् । ततः चतुर्भुजादिरूपेण तान्ध्यात्वा संपूजयेदिति । नित्यकर्मण्यावरणान्तरान्यासो ऽश्रुतत्वात् ॥८३–९१॥

[ नैवेद्यम् ]

[17]निवेदयेद्विभोर्भक्त्या पायसं [18]घृतमिश्रितम् ।
शाल्योदनं मुद्ग[19]सूपसंमिश्रं[20] गव्यसर्पिषा ॥९२॥
[21]मोदकान्मण्डकाद्यांश्च[22] घृतमिश्रांश्च[23] [24]लालसान् ।
[25]मोदयन्त्या सुशष्कुल्यापूपकांश्चाजुगुप्सितान् ॥९३॥

---

[1] कुलिशाभः — ख.
[2] धर्मं — क, च; वर्ममाश्रिते — ज.
[3] पूजयेत्सदा — ओ, क, ख, घ, छ, ज; पूजयेत्तदा — ङ.
[4] दलाग्रे तु — ख, घ, छ, ज.
[5] क्षिपेदस्त्रं — ऊ, ऋ.
[6] स्ववर्तानल० — ख, घ; स्ववक्त्रानल० — ज.
[7] ०सप्रभम् — ऊ, ऋ.
[8] चतुर्भुजा चतुर्वक्त्रा — च; चतुर्भुजं चतुर्वक्त्रा — छ, ज.
[9] ०श्चतुर्वर्णा — ङ.
[10] मन्त्राः पद्मदलाश्रयाः — ओ, क, ख, घ, ङ, छ, ज; मन्त्रा पद्मदलाश्रिताः — च.
[11] देयाः — ऋ, ङ.
[12] यथाक्रमात् — ओ, क, ख, घ, ङ, छ, ज.
[13] ०धूपपवित्राद्यै० — ऊ, ऋ, घ, च, छ, ज.
[14] गायत्र्याः — ङ.
[15] गर्भावरणं यथास्वं — ऊ; गर्भावरणं यथास्वभोग० — ऋ.
[16] ब्रह्माणि — ऊ; द्रव्याणि — ऋ.
[17] निवेदयेद्विभो भक्त्या — ऋ; निवेदयेत्प्रभोर्भक्त्या — ओ, क, ख, घ, ङ, च, छ, ज.
[18] गुलमिश्रितम् — ख; घृतसंयुतम् — च.
[19] ०सूपं मिश्रं गन्धेन सर्पिषः — ऊ; ०सूपं मिश्रं गन्धेन सर्पिषा — ऋ; ०सूपं संमिश्रं गन्धसर्पिषा — च.
[20] ०संमिश्रः — ङ.
[21] मोदका खण्डकाद्याश्च — ख, घ, छ, ज.
[22] खण्डकाद्यांश्च — ऊ, च; जडुकाद्यांश्च — ऋ; मण्डकाद्याश्च — क.
[23] घृतमिश्रांच — ऊ; घृतमिश्रं च — ऋ; घृतपूर्णांश्च — ओ, क, ख, घ, ङ, च, ज; घृतपूर्णाश्च — छ.
[24] लालसाम् — ऊ, ऋ.
[25] असोकन्ति शष्कुल्यो पूषाश्चाजुगुप्सितात् — ऊ; अशोकन्ति शष्कुल्यो पूषाश्चाजुगुप्सिताम् — ऋ; मेचयन्त्यस्य शष्कुल्यां पूर्वकांश्चाजुगुप्सितान् — ओ; मोचयन्त्यः सशष्कुल्यः पूर्वकांश्चाजुगुप्सितान् — क; मौलवत्यः सशष्कुल्यः पूपकांश्चाजुगुप्सितान् — ख, घ, छ, ज; मेचयन्त्यः सशष्कुल्यः पूपकाश्चाजुगुप्सितान् — ङ; मोदयन्त्यः सशष्कुल्यः पूपकां० — च.

[1]अशोकवत्या [2]सुकृताँल्लड्डुकांश्चैव भूरिशः ।
दधि चैव [3]पयः सम्यक् [4]क्वथितं [5]शीतलं घनम् ॥९४॥
कन्द[6]मूलात्मकादीनि [7]सुस्वादूनि फलानि च ।
[8]व्यञ्जनानि विचित्राणि पूतानि सुकृतानि [9]च ॥९५॥

[ मुद्राप्रदर्शनम् ]

पूजयित्वा यथान्यायं बीज[10]मुद्रां प्रदर्शयेत् ।
[11]सद्यादीनां स्वमन्त्रैस्तु [12]प्रशान्तामपि दर्शयेत् ॥९६॥
अङ्गानां कवचान्तानां शिवास्त्रस्य प्रदर्शयेत् ।
[13]संहारिणीं [14]विधौ मन्त्री [15]सर्वाश्चापि [16]प्रभोः [17]स्मृताः ॥९७॥
अथवा शक्तिमुद्रां [18]तु देवदेवस्य दर्शयेत् ।

[ जपादि ]

संहितां च सकृज्जप्त्वा प्रणिपत्य च दण्डवत् ॥९८॥
[19]असंस्तुतपदं पश्चात्सकृदुच्चारयेत्सुधीः ।
अग्नावपि[20] [21]यथाशक्त्या तर्पयेन्मन्त्रसंहिताम् ॥९९॥
[22]क्षमयेच्च ततः [23]पश्चादीशानेन सदाशिवम् ।

[1] 'ऊ, ऋ' कोशयोरिदमर्धं नास्ति।; अशोकवर्त्यः — ओ, क, च; अशोकवत्यः — ख, घ, छ, ज; अमीशोकवत्यः — ङ.

[2] सुकृता लड्डुकाश्चैव — ओ, ख, ङ; सुकृताल्लड्डुकाश्चैव — क; सुकृता लघुकाश्चैव — घ; सुकृता लडुकांश्चैव — च; सुकृता लघुकांश्चैव — छ; सुकृता लवकांश्चैव — ज.

[3] पया सम्यक् कथितं — ऋ.

[4] सुकृतं — ओ, क, ख, घ, ङ, छ, ज; सुश्रितं — च.

[5] शीतली — ङ.

[6] ०मूलार्द्रकादीनि — ऊ, ख, घ; ०मूलाद्रकादीनि — ऋ च; ०मूलात्रकादीनि — क; ०मूलाग्रकादीनि — ङ; ०मूलाम्रकादीनि — च; ०मूलादृकादीनि — ज.

[7] स्वादुमूलफलानि—ओ, क; सुस्वादानि—च.

[8] 'ऋ' मातृकायामिदमर्धं नास्ति।

[9] तु — छ, ज.

[10] ०मुद्रा प्र० — ऋ.

[11] 'ऋ' मातृकायां ९६ उत्तरार्धं ९७ पूर्वार्धं च न स्तः।

[12] प्रशान्तमपि — घ, छ, ज; प्रशान्ताः समिधः शयेत् — च.

[13] संहारिणी — ऊ, ऋ, ओ, क, ख, घ, ङ, च, छ, ज.

[14] विभौ — ख, घ, छ, ज.

[15] सर्वं चापि — ओ, क, ख, घ, छ; सर्वां चापि — ङ.

[16] प्रभुः — ऋ; प्रभो — ख, घ, ङ.

[17] स्मृतः — ऋ; स्मृता — ख, घ, छ, ज.

[18] च — घ, छ, ज.

[19] असंस्कृतपदं — ओ, ख, ङ.

[20] अणूवस्य — ऋ; अनन्तमपि — ओ, क, ङ.

[21] तथा — घ, छ, ज.

[22] क्षमापयेत्ततः — ओ, क, ख, घ, ङ, च, छ, ज.

[23] पश्चामीशानेन — ऊ, ऋ, पश्चाद्दिनानेन — छ, ज.

ततः शिवादिक्रमेण नैवेद्यं मुद्राश्च तत्प्ररोचनाय दत्त्वा, शिवैकादशिकामभिजप्य, असंस्तुतपदेन अन्येन [1]च स्तुत्वा, **अग्नावपि** [2]वक्ष्यमाणतर्पणं निर्वर्त्य, विसर्जनं[3] कुर्यादिति ॥

"अथ किमर्थमेतन्नित्यादिकर्मानुष्ठीयते[4] निष्प्रयोजन[5]मेवाचोदितत्वाज्जैमिनीयैः" इति केचित्। तन्न, असमत्वात्। तेषां ह्यपौरुषेयत्वेन शास्त्रस्य प्रामाण्याभ्युपगम इति युक्तं कदाचिदेवं वक्तुम्। इह तु [6]सर्वं सर्वज्ञप्रयुक्तत्वेनेति, स कथं निष्प्रयोजनमेवोपदिशेत्। उपदिशन्वा बालोन्मत्तादिवदसर्वज्ञ[7]त्वादनादरणीय एवेति शास्त्रस्याप्रामाण्यप्रसङ्ग इति तदर्थमेतत् —

**एवं [8]यः प्रत्यहं [9]भक्त्या संपूजयति कारणम् ॥१००॥**
**न तस्य [10]जायते [11]पापं यथा[12]दित्योदयात्तमः ।**
**[13]नैवाभ्युपैति [14]देहान्ते [15]कर्माशय[16]वशाज्जगत् ।**
**[17]सामान्य[18]यजनं ह्येतन्नित्य[19]मभ्युदयावहम् ॥१०१॥**

अयमर्थः — आरब्धकार्यकर्मोपरोधेनासद्योनिर्वाणदीक्षया [20]यदक्षपितं **पापं** मलात्मकं, यच्च **जगत्** कलादिक्षित्यन्तं तु सूक्ष्मशरीरात्मकं तद् **एवं प्रत्यहम्** अपचयक्रमेण परमेश्वराराधनात्तथा तथा निवर्त्यम्[21]; न यथा तस्यारब्धकार्यस्य कर्मणो भोगोपरोधो जायते, नापि शरीरान्ते तस्य पापस्य जगतोऽवस्थितिर्भवतीति। एतच्च दर्शितं [22]विद्यापादेऽपीति [न] निष्प्रयोजनतास्येत्याह —
**सामान्ययजनं ह्येतन्नित्यमभ्युदयावहम् ।**" [इति] ॥१००–१०१॥

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य चोपक्रमाय श्लोकः —

**नित्यार्चनं [23]पत्युरमोघवीर्यं**
**पापापहं पुष्टिविवर्धनं च ।**

---

[1] वस्तुत्वग्नावपि — ऊ, ॠ.
[2] मतङ्ग० क्रिया० ४.४८,४९.
[3] विसर्गान्तं — ऊ.
[4] 'ऊ, ॠ' मातृकयोरत्र 'इति' शब्दोऽधिकतया दृश्यते ।
[5] ०मेव चोदितत्वा० — ऊ, ॠ.
[6] सर्वसर्वज्ञ० — ऊ, ॠ.
[7] 'ॠ' मातृकायां इत आरभ्य १०० तमश्लोके 'एवम्' इत्यन्तो भागो नास्ति ।
[8] यः पूतसद्भक्त्या — ओ; यत्पूतसद्भक्त्या — क.
[9] शक्त्या — ऊ, ॠ.
[10] तिष्ठते — ऊ, ॠ, च.
[11] पापे — ॠ.
[12] ०दित्योद्गमात्तमः — ऊ, ॠ, च; ०दित्योपयात्तमः — छ, ज.
[13] न चास्युपैति — ओ, क; न चाभ्युपैति — ख, घ, छ, ज; न चाप्युपैति — ङ.
[14] देहान्त० — छ, ज.
[15] कामाशय० — च.
[16] ०वशं जगत् — ओ, क, ख, घ, ङ, च, छ, ज.
[17] सामान्यं ह्यञ्जनं ह्येत० — च.
[18] ०वचनं० — ख.
[19] ०मभ्युप . . . हम् — छ, ज.
[20] यदाक्षपितपापं — ऊ, ॠ.
[21] निर्वर्त्यम् — ऊ, ॠ.
[22] मतङ्ग० विद्या० ७. ६० उ० —६२; २६.६३ वृत्तौ ।
[23] प्रत्युतिरमोघ० — ङ; पुण्यममोघ० — च.

उक्तं मया ते मुनिराजमुख्य[1]
वह्नेर्विधानं [2]शृणु सांप्रतं मे ॥१०२॥

[इति श्री] भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां [3]मतङ्गवृत्तौ
क्रियापादेऽर्चनप्रकरणं [तृतीयं समाप्तम्]।
तृतीयः पटलः

---

[1] ०मुख्या — ङ.
[2] ह्यधुना शृणुष्व — ओ, क, ङ; विधिना शृणुष्व — ख, घ, छ, ज; ह्यधुनोपवर्ण्यते — च.
[3] मतङ्गप्रवृत्तौ — ऋ.

## चतुर्थः पटलः

## अग्निकार्यप्रकरणम्

**[1]अथाग्नेर्जननं मुख्यं [2]तत्प्रवक्ष्यामि तत्त्वतः ।**

अथ अर्चनादनन्तरम् **अग्नेर्जननं मुख्यम्** इति तेन विना [3]हवनासंभवात् । पदार्थादिसंबन्धाश्चास्य प्रकरणस्य [4]प्राग्वद् द्रष्टव्याः । वाक्यात्मकस्तु —

[5]"अग्नावपि यथाशक्त्या तर्पयेन्मन्त्रसंहिताम् ।"

इत्यादिभिरनेकविधः । **तत्** च **तत्त्वतः** विस्तरेणार्चनादिवत्सामान्यम्; न तु दीक्षाङ्गभूतमेव **प्रवक्ष्यामि** । यद्वक्ष्यति[6] — "प्रशस्तः सर्वकार्येषु" इति ॥

तत्र जननं स्वसाधनपूर्वकमिति तत्सामर्थ्याक्षिप्तानि[7] तावत् [8]तत्साधनान्याह —

**[9]गत्वा पुण्यं वनं सिद्धं जप्त्वा [10]ब्रह्माणि पञ्च वै ॥१॥**
**अघोरं च [11]सहोंकारं वनमध्ये जपेत्पुनः ।**

तत्र **वनमध्ये ब्रह्माणि जप्त्वा पुनः अघोरं जपेत्** । किं संहितापाठवदेकमन्त्रभावेन । [12]न । यत आह — **सहोंकारमघोरं च** इति । [13]चशब्दादन्यान्यपि ब्रह्माणि सहोंकारं कृत्वा भेदेन जपेदित्यर्थः ॥

[ अरणीस्थापनम् ]

**[14]शमीगर्भोद्भवा [15]ग्राह्या ह्यश्वत्थाच्छुभलक्षणात् ॥२॥**
**[16]मध्यदेशे [17]सुशस्त्रेण [18]शिवास्त्रेण शनैः शनैः ।**

---

[1] अथाग्नेर्यजनं पुण्यं — ओ, क, ख, घ, ङ, च, छ, ज.
[2] तत्प्रवक्ष्याम्यतः परम् — ओ, क, च; तव वक्ष्याम्यतः परम् — ख, घ, छ, ज; तं प्रवक्ष्याम्यतः परम् — ङ.
[3] वहना० — ऋ.
[4] मतङ्ग० क्रिया० प्रथमप्रकरणोपक्रमे प्रोक्तवत् ।
[5] मतङ्ग० क्रिया० ३.९९ उ०.
[6] मतङ्ग० क्रिया० ४.१८ पू०.
[7] सामर्थ्यात्क्षिप्तानि — ऊ.
[8] 'ऋ' मातृकायां 'तद्' इति नास्ति ।
[9] 'ओ, क, ख, घ, ङ, च, छ, ज' मातृकासु प्रथमश्लोकस्योत्तरार्धं द्वितीयश्लोकस्य पूर्वार्धं च न स्तः ।
[10] ब्रह्मणि — ऋ.
[11] समोङ्कारं — ऋ.
[12] 'ऋ' मातृकायां नकारो नास्ति ।
[13] चशब्दानन्या — ऋ.
[14] शमीगर्भोद्भवो — ऊ, ऋ; शीतगर्भोद्भवो — ख, घ, छ, ज; शमीगर्भोद्भवाद् — ङ.
[15] ग्राह्य अश्वत्थशुभलक्षणम्— ऊ, ऋ; ग्राह्यावश्वत्थाः शुभलक्षणाः — ओ, क; ग्राह्यामश्वत्थाः — ख, घ; ग्राह्य अश्वत्था — ङ. ग्राह्या अश्वत्थान् शुभलक्षणान् — च; ग्राह्यामश्वत्थाच्छुभलक्षणम् — छ, ज.
[16] मध्यदेशं — ऊ, ऋ, च, छ, ज; मध्यदेशसु० — ओ; मध्ये देशे — ख, घ.
[17] सशस्त्रेण — ऊ, ऋ; स्वशस्त्रेण — ख, घ.
[18] सुशीतेन — ख, छ, ज; सुशितेन — घ; सुशिन्तन० — ङ.

[1]छेदयेत्सकलीकृत्य[2] [3]वृक्षमभ्यर्च्य यत्नतः[4] ॥३॥
[5]दैर्घ्याद्धस्तप्रमाणां[6] तु [7]विस्ताराद्द्वादशाङ्गुलाम्[8] ।
[9]अष्टाङ्गुलामथोत्सेधात्सुसमां[10] निर्व्रणां[11] शुभाम् ॥४॥
[12]अरणीं कल्पयेन्मन्त्री [13]यथावत्सुपरिस्फुटाम्[14] ।
[15]पूजितां [16]धूपितां [17]दिग्धां चन्दनेन [18]सुगन्धिना ॥५॥
सावित्र्या रक्तसूत्रेण [19]ततस्तां वेष्टयेत्पुनः ।
[20]सिक्तालक्तकसंवीतां[21] स्थापयेद्भूतले शुभे ॥६॥

**शमीगर्भोद्भवा** अरणी कार्यैव। अश्वत्थसमुद्भवायास्तु प्रकृतिद्रव्यविशेषः। शुभलक्षणत्वमशुष्कतादि। **वृक्षमभ्यर्च्य** इति — अत्र यद्यप्यरणीकल्पनात्प्रागेतच्छ्रुतम्; तथापि वृक्षश्रुत्यन्यथानुपपत्त्या छेदनादपि पूर्वं द्रष्टव्यम्। **सावित्र्या** इति [22]**अरणीं कल्पयेद्** इत्यत्राप्येतदुपतिष्ठत एव। यत एव सावित्री तद्योनितो वह्नेः समुद्भवादिति। [23]**सिक्तालक्तकसंवीताम्** इति [24]सिक्तोऽलक्तको यस्मिन्, तेन कुसुम्भरक्तेन पटेनाच्छादितां संपन्नपुंसवनसंस्कारां **स्थापयेद्** इत्यर्थः॥ तदुत्पत्तिसमनन्तरमेवेश्वरेण तद्गर्भे वह्नेः शक्त्यात्मन आहितत्वात्॥२–६॥

[ मन्थनादिकल्पनम् ]

[25]खादिरं [26]निर्व्रणं कार्यं [27]मन्थानं द्वादशाङ्गुलम् ।

---

[1] भेदयेत् — घ.
[2] सकलीभूत्वा — ओ, क, ख, घ, ङ, च, छ, ज.
[3] वृषमभ्यर्च्य — छ.
[4] ०मभ्यर्चयेत्ततः — ओ, क
[5] दैर्घ्यं हस्त० — क.
[6] ०प्रमाणं — ऊ, ऋ, ओ, क, ख, घ, ङ, च, छ, ज.
[7] विस्तारं द्वादशाङ्गुलम् — ओ, क; विस्तरद्वादशाङ्गुलम् — ख; विस्तरा द्वादशाङ्गुलम् — घ; विस्तारो द्वादशाङ्गुलम् — ङ; विस्ताराद्द्वादशाङ्गुलम् — च, छ, ज.
[8] '४' पूर्वार्धानन्तरम् 'अष्टाङ्गुलपरीणाहं भ्रमयंत्य सुवर्तताम्' इति 'ओ' मातृकायामधिकतया दृश्यते।
[9] अष्टाङ्गुलसमुत्सेधं सु० — ओ, क, ङ; अष्टाङ्गुलसमुत्सेधां — ख, घ, च, छ, ज.
[10] सुसुमां — ऋ.
[11] निर्वृणां — क; निध्यणां — छ; निर्घृणां —ज.
[12] अरणिं — छ, ज.
[13] यथावत्सुसमां दृढाम् — ऊ; यथावत्सुसमा दृढम् — ऋ; यथावच्च परिस्फुटाम् — ख, छ, ज.
[14] ०स्फुटम् — ङ.
[15] पूजितं — क, ङ; पूजिता — ख, घ, छ, ज.
[16] धूपिता — ऊ, ख, घ, छ, ज.
[17] दग्धां — ऊ, ऋ; दीग्धां — ख; दिग्धा — घ, छ, ज; दिग्ध० — ङ.
[18] सुगन्धिनः — ङ.
[19] ततस्तं — ऊ, ऋ; सततां — ख.
[20] सिद्धालक्तक० ऊ, ओ, क, ङ, च.
[21] सिद्धालक्तसमं पीतां — ऋ.
[22] अरणीकल्ययित्यत्राप्येतद् — ऊ, ऋ.
[23] सिद्धालक्तक० — ऊ; सिद्धालक्षक० — ऋ.
[24] सिद्धालक्तको — ऊ, ऋ.
[25] खदिरं — ऊ, ऋ.
[26] निर्वणं — ओ; निर्वृणं — घ, ज; निवृणं — छ.
[27] मन्धानं — ख; इन्धनम् — ङ.

[1]षडङ्गुलपरीणाहं वृत्तं [2]सारमयं शुभम् ॥७॥
[3]सुबद्धमायसेनाथ[4] [5]छत्रं स्यात्षोडशाङ्गुलम् ।
अष्टाङ्गुलपरीणाहं [6]भ्रमयन्त्रसुवर्तितम् ॥८॥
[7]मन्थानोपरि [8]संस्थाप्यमचलं [9]कुशसंचयम् ।

**मन्थानं** तु [10]खादिरं तत्सारभागप्रकृतिद्रव्यकं, तदूर्ध्वभावि च [11]छत्रं सुवृत्तं कार्यम् ।

उत्तुङ्ग[12]मध्यमापीडं वर्तुलोभयसंग्रहम् ॥९॥
खादिरं हस्तमात्रं [13]स्याच्छैंशपं वा दृढं शुभम् ।
[14]घटितं निपुणेनाथ शिल्पिना शास्त्रवेदिना[15] ॥१०॥

**उत्तुङ्गमध्यमापीडं** इति ताभ्यामुपर्यापीडं खदिरशिंशपाभ्यामन्यतरेण प्रकृतिद्रव्येण कार्यमिति ॥९–१०॥

शिरः [16]कार्यमधो[17]भागात्प्राक्शिरस्कां तु[18] विन्यसेत् ।
[19]आपीडमपि [20]तद्वत्तु मन्त्री [21]मन्त्रविशारदः ॥११॥

---

[1] 'छ' मातृकायां सप्तमश्लोकस्योत्तरार्धम् अष्टमश्लोकस्य पूर्वार्धं च न स्तः।

[2] मानमयं — च.

[3] सुबन्ध० — क, ङ.

[4] ०नात्र — ओ.

[5] चित्रं स्यात् — ऊ, ऋ; योक्त्रं स्यात् — ओ, क, ख, घ, ङ; मन्त्रं स्यात् — च; योक्तं स्याद् द्वादशाङ्गुलम् — ज; 'चतुरष्टाङ्गुलं छत्रमापीडं तत्प्रमाणतः' किरण० क्रिया० ४.३३०; "त्रयोदशाङ्गुलं छत्रं भवति' काठकसंकलनं १.१.११" श्रौतकोशे पृ० ६; उभयत्रापि अरणीलक्षणविषये छत्रमित्यस्य प्रतिपादनं वर्तते। तदनुसारेणात्र छत्रमिति पाठः स्वीकृतः।

[6] भ्रमयन्त्रं — ऋ; भ्रमयन्त्यः सुवर्तिताः — ओ, क, ख; भ्रमायन्त्यः सुवर्त्यताम् — ङ; भूयमन्त्रसुवर्तिताम् — छ; भूयमन्त्रसुवर्तिनाम् — ज.

[7] मन्थनोपरि — क; मन्धानोपरि — ङ.

[8] तत्स्थाप्य चलं — ख, घ, छ, ज; संस्थाप्यमशलं — ङ.

[9] कुशलं स्थिरम् — ऋ; कुशसंचयात् — ओ, क, ङ; कुशलसंचयात् — ख, घ, छ, ज.

[10] खादिरान्तसारभाग० — ऊ, ऋ.

[11] चक्रं — ऊ, ऋ.

[12] ०मध्यपीडव० — ओ; ०मध्यमापीठव०–क; ०मध्यमापीठं — ङ.

[13] स्याच्छिशपं — ऊ, ऋ; स्याशैशफं — ओ; स्यात् शैशफं — क; स्या शैशवां — ख; स्याच्छैशवं — घ, ङ, छ, ज; स्याच्छांशपं च — च.

[14] घटिता — ओ, क, ख, घ, ङ, छ, ज; घटिते निर्मलेनाथ — च.

[15] ०वेदिता — ऋ; ०चोदिता — ओ, ख, घ, ङ; ०चोदिताः — क.

[16] ०कायमधोभागात् — ऊ, ऋ.

[17] ०भागे — ओ, क, ख, घ, ङ, छ, ज.

[18] ०शिरस्कं तु — ऊ, ऋ, च; ०शिरस्त्वां तु — ओ; ०शिरस्त्वा च — क.

[19] आपीठमपि — ओ, क, ख, ङ.

[20] तद्वक्त्रं मन्त्री — ओ, ङ; तु द्वक्त्रं मन्त्री — क; तद्वक्त्रमन्त्रं — ख, घ, तद्वक्त्रं मन्त्रं — छ, ज.

[21] यन्त्रवि० — ओ, क, ङ.

[1]स्थाप्येऽधः[2]शिरसी नित्यं [3]द्वेऽन्ये सम्यग्विजानता ।

वृक्षमूलभागादेतेषां शिरः कार्यम् इत्यर्थः। यदुक्तं श्रीपौष्करे[4] —
"मूलतश्च शिरः कार्यं पादभागं तदग्रतः" इति।
विन्यासकाले त्वरणीं प्राक्शिरस्काम् आपीडं च विन्यसेत्। द्वे तु अन्ये चात्र मन्थाने अधःशिरसी [5]विन्यस्यन्नोष्ठमूल इति ॥

गायत्र्या सर्वमेतद्धि कार्यं [6]तन्त्रविदा सदा ॥१२॥
[7]उदङ्मुखः [8]प्रमथ्नीयाद्रज्ज्वा[9]वर्तितया शनैः ।
[10]गोवालैः [11]संस्मरन्धीमान्प्रथमाख्यं पदं शुभम्[12] ॥१३॥
[13]शिरो ग्रीवां तथा पृष्ठ[14]मूरू च जानुनी कटिम् ।
वर्जयेन्मथने [15]वह्नेररण्याः क्लेशदः सदा ॥१४॥

---

[1] स्थाप्योऽधः० — ऊ, ऋ; स्थाप्या च — ओ, क; स्थाप्याधः — ख, घ, छ, ज; स्थाप्याथ — ङ.

[2] शिरसीप्यश्च — ओ; शिरसीत्यश्च — क; शिरसा नित्यं — ख, घ, छ, शिरसिन्नित्यं — ङ; चरथा नित्यं — ज.

[3] बाह्यां सम्यग् — ओ, क; द्वाभ्यां सम्यग् — ख, घ, ङ, छ, ज.

[4] आकरो न लभ्यते।

[5] विन्यस्सेन्नोष्ठमूल इति — ऊ, ऋ.

[6] तद्वविदा — ऊ; तद्विविदा — ऋ; तत्रविदा — क, ङ, छ, ज.

[7] उदङ्मुखं — ओ, क.

[8] प्रमाधीया० — ऋ; प्रथमं नीया० — ओ, क, ङ; प्रबध्नीयादृज्वा० — ख; प्रबध्नीया० — घ, छ, ज.

[9] वक्रितया — च.

[10] गोवलैः — ऊ, ऋ; गोपलः — ओ; गोपालैः — क, ख; गोबालैः — घ; गोबलैः — छ, ज.

[11] संस्तरैर्धीमान् — ओ, क; संस्थितां धीमान् — ख; संस्थितं रं धीमान् — घ; संस्तुरे तं धीमान् — ङ; संस्थितं रन्विमान्यत्तत्प्रथमं पदम् — छ; संस्थितं रन्विमान्यंतत्प्रथमं पदम् — ज.

[12] यत्तत्प्रमथनं पदम् — ओ, क, ख, घ; यत्तत् प्रमथनं परम् — ङ; यत्नतः प्रथमं पदम् — च.

[13] १४, १५ श्लोकौ १६ पूर्वार्धं च 'ऊ, ऋ, च' मातृकासु परमुपलभ्यन्ते।;
"एवमेष स शमीगर्भस्तच्छमीगर्भस्य शमीगर्भत्वं० अयमग्निर्मिथुनात्संभवत्यथो अरण्या अथोत्तरादिति० एतद्वै विष्णुरूपम्। यदुत्तरारणिस्तद्गायत्र्या रूपं० द्वादशाङ्गुल उत्तरो भवति० त्रयोदशाङ्गुलं छत्रं भवति० त्रिषवणं नेत्रं भवति० चतुर्विंशत्यङ्गुलारणिर्भवति० तस्या यान्यग्रे चत्वार्यङ्गुलानि तच्छिरो यदन्यानि चत्वार्यङ्गुलानि सा ग्रीवा यदन्यानि चत्वार्यङ्गुलानि तदुरः स्तनो बाहू पार्श्वे पृष्ठमुदरं च यदन्यानि चत्वार्यङ्गुलानि सा श्रोणी यदन्यानि चत्वार्यङ्गुलानि तदूरू जानुनी यदन्यानि चत्वार्यङ्गुलानि तज्जङ्घे पादा इति। एतावतैवारणिः सर्वैरङ्गैः संपूर्णा भवति० यच्छ्रोण्यां मन्थति तत्सर्वेषां देवानाम्। तेन यजमानः स्वर्ग्यो भवति० (काठकसंकलनम् १.१.११) श्रौतकोशे पृ० ६.

[14] मूरुभे जानुनी कटीम् — च.

[15] वह्नेररण्यं — ऊ; वह्नेरनाण्यं — ऋ; वह्नेर्धरण्यांके सदा सदा — च.

[1]श्रोण्या अग्नेस्तु देवानां [2]तस्माच्छ्रोण्यां तु मन्थयेत् ।
यस्मादस्थानमथनात्साधको दोषभाग्भवेत् ॥१५॥
तस्मात्स्थानं तु [3]जघनं यत्र योनिः प्रतिष्ठिता ।
[4]ज्योतिर्ज्योतिःपदेनैव [5]गृह्णीयाज्जातवेदसम् ॥१६॥

**श्रोण्या अग्नेस्तु देवनाम्** इति तत उद्भव [6]इत्यध्याहारः ॥ १२–१६॥

गृहीतं [7]निक्षिपेत्कुण्डे[8] पतङ्गपदसंयुतम् ।

**गृहीतं निक्षिपेत्कुण्डे** इति न तु तस्य पुनर्गर्भाधानादयः संस्कारा वक्ष्यमाणसूर्यकान्तजादेरिव कार्याः । मन्त्रैरेव सिद्धत्वादित्यर्थः । यदुक्तं **श्रीपौष्करे**[9] —

"अमन्त्रो [10]यो नवो [11]वह्निः सौर्यो माहानसः स्मृतः ।
कर्तव्यास्तस्य संस्काराः पञ्च गर्भादयः क्रमात् ॥" इति ॥

अस्याभावान्मणेर्ग्राह्यः[12] स वह्निर्भानुजः स्मृतः[13] ॥१७॥
प्रशस्तः [14]सर्वकार्येषु [15]तदभावाद्यथेच्छया[16] ।
[17]ग्राह्योऽग्निर्मुनिशार्दूल [18]विधानेन यथा तथा ॥१८॥
[19]विधास्यामि [20]तवेदानीं [21]मन्त्रमार्गेण विस्तरात् ।

यदुक्तं **श्रीपौष्करे**[22] —

"अग्निहोत्रगृहानीतः पचनाग्निर्महानसात् ।
वैश्याद्वा धन[23]संपन्नात्सर्वोऽपि विधिनाहृतः ॥" इति ।

---

[1] श्रोण्य अग्नेस्तु — ऊ; श्राव्य अग्निस्तु — च.
[2] तस्मात्कौश्यां तु — च.
[3] जनयन् — च.
[4] ज्योतिज्योतिपदेनैव — ओ, ज; ज्योतिर्ज्योतिपदेनैव — छ.
[5] गृहीत्वा जात० — ओ, क, ख, घ, ङ, च, छ, ज.
[6] इत्याध्याहारः — ऋ.
[7] विन्यसेत्कुण्डे — ओ, क, ख, घ, ङ, च, छ, ज.
[8] कुण्डं — ऋ.
[9] आकरो न लभ्यते ।
[10] योनयो — ऋ.
[11] वह्निश्चर्या महानसः — ऊ; वह्निश्चर्या महानसं — ऋ.
[12] ०न्मनो ग्राह्यः — ऊ, ऋ; ०न्मणेर्ग्राह्या — ओ, ख, ङ; ०न्मणेर्मन्त्रग्राह्यस्वह्निनुजस्मृतः — छ, ज.
[13] भानुजं स्मृतम् — ओ; भानुज स्मृतः — ङ.
[14] 'घ' मातृकायां 'सर्वकार्येषु' इत्यारभ्य ७६ तमश्लोके 'स्रुग्भवेद्विप्र' इत्यन्तं लुप्तम् ।; सर्वभावेन — ऊ, ऋ.
[15] तदाभावा — ऋ.
[16] यथेप्सया — ओ, क, ख, ङ, छ, ज.
[17] ग्राह्याग्निर्मुनि० — छ; ग्राह्योऽग्नि मुनि० –ज.
[18] निधानेन — च
[19] विधास्यातिमिवेदानिं — छ, ज.
[20] तथेदानीं — ऊ; तदेदानीं — ओ; दमेदानी — ख.
[21] मन्त्रमात्रेण — च.
[22] आकरो न लभ्यते ।
[23] संपन्नात्स्वो . . पि विधिना — ऋ.

**स तु** [1]सूर्यकान्तजो **यथेच्छया** बाह्यतो **यथा ग्राह्यः** [2]हवनयोग्यो गर्भाधानादिसंस्कारैर्भवति **तथा** उच्यत इत्यर्थः। दर्शित एव श्रीपौष्करश्रुतितः[3] प्राक्[4] — "अमन्त्रो यो नवो वह्निः" इत्यादिना ॥

[ कुण्डसंस्कारः, वह्नेर्गर्भाधानादिपञ्चसंस्काराश्च ]

**मृत्पात्रे ताम्रपात्रे वा [5]गृहीत्वाग्निं निवेशयेत् ॥१९॥**
**[6]ऐशान्यां दिशि कुण्डस्य तेजस्तेजःपदेन[7] तु ।**
**[8]हुंफट्कारोभयुक्तेन [9]ताडयेन्मन्त्रवारिणा[10] ॥२०॥**
**सर्वात्मनार्चयित्वा तु [11]गन्धधूपस्रगादिभिः[12] ।**
**[13]कुण्डं प्राक्[14]शोधयेन्मन्त्री [15]न्यस्त्वा दिक्ष्वस्त्रपञ्जरम्[16] ॥२१॥**
**[17]अस्त्रेणोल्लेखनं [18]कार्यं विद्याङ्गोत्थेन [19]मन्त्रिणा ।**
**[20]प्रोद्धारश्चैव [21]तेनैव [22]पूरणं कवचेन तु ॥२२॥**
**[23]कुट्टयेद्भूःपदं स्मृत्वा [24]तेनैवात्र [25]चतुष्पथम् ।**
**कल्पयित्वा तु [26]सावित्रीं विन्यसेद्विष्टरोपरि[27] ॥२३॥**
**नीलोत्पलदलप्रख्यां ध्यात्वा गन्धादिभिः शुभैः ।**
**पूजयेत्कुण्ड[28]मध्यस्थामृतुमच्चारुलोचनाम्[29] ॥२४॥**

---

[1] कार्यकान्तजो — ऋ.
[2] हवनीययोग्यो — ऋ.
[3] पौष्करे श्रुतितः — ऊ, ऋ.
[4] मतङ्ग० क्रिया० ४.१७ पू० वृत्तौ।
[5] गृहीताग्निं — ऋ.
[6] ईशान्यां — ओ, ङ.
[7] ०तेजपदेन — ऋ, ओ, ङ.
[8] हंकारोभययुक्ते . . ताडये० — ऊ; हट्कारो-भययुक्ते . . ताडये० — ऋ; फट्कारो भव-युक्तेन — ओ, क, ङ; फट्कारोभययुक्तेन — ख, च; फश्चकारोपयुक्तेन — छ, ज.
[9] तसयेन्मन्त्र० — छ, ज.
[10] 'सर्वात्मनार्चयित्वा तु धूपयेन्मन्त्रवारिणा' इदमर्धं २० तमश्लोकानन्तरमधिकतया दृश्यते 'छ, ज' मातृकयोः।
[11] गन्धपुष्प० — ओ, क, ङ, च.
[12] ०सृगादिभिः — छ, ज.
[13] कण्ठ प्राग्रोधये० — ख, कुण्डलं प्रा० — ङ; कण्डू पास्रोधयेन्मन्त्री — छ; गण्डू प्राग्रो-धयेन्मन्त्री — ज.
[14] शोधयेद्धीमांस्त्यक्त्वा दिक्ष्वाशु पञ्जरम् — ऋ; शोधयेद्धीमान् न्यस्त्वा दिक्ष्व . . पञ्जरम् — च.
[15] न्यस्ता — छ.
[16] ०पञ्जरः — ज.
[17] अस्त्रेणालिखनं — च.
[18] कुर्याद्विद्या० — क.
[19] मन्त्रवित् — ऊ, ऋ.
[20] उद्धारश्चापि — ओ, क, ख, ङ; उद्धारं चापि — च; शुद्धारश्चापि — छ, ज.
[21] तेनैवं — क.
[22] प्रोक्षणं — ओ, क, ख, ङ, च, छ, ज.
[23] कुट्ठायेत्तु पदं — ऊ; कुण्ठयेत्तु पदं — ऋ; गोपयेद्भूपदं — ओ, क; कोटयेद्भूपदं — ख, च, छ; गोपयेद्भूपतं — ङ; कोटयद्भूपदं — ज.
[24] तेनैवाथ — छ, ज.
[25] चतुष्पदम् — ओ, क, ङ, छ, ज.
[26] सावित्रं — छ, ज.
[27] ०द्विस्तरोपरि — च.
[28] ०मध्यस्थामत्तमच्चार० — ऋ; मध्ये तु ऋतुमच्चारु० — ओ, क, ख, ङ, छ, ज; मध्ये तु ऋतुवच्चारु० — च.
[29] ०लोचनम् — ओ, ख, ङ, च, छ, ज; ०लोचनः — क.

आत्मानं [1]शिववद्ध्यायेद्ध्यायेदग्निं [2]च बीजवत् ।
सद्योजातेन मन्त्रेण भ्रामयित्वा त्रिधा शनैः ।२५।।
[3]जानुभ्या[4]मवनिं गत्वा [5]संमुखं चात्मनः सुधीः ।
योनौ [6]प्रपातयेत्सम्यग्विद्याङ्गहृदयं[7] स्मरन्[8] ।।२६।।
गन्धपुष्पार्चनं कार्यं [9]विद्याधिपहृदा सदा ।
[10]गर्भाधानं भवेदेवं शास्त्रेऽस्मिन्पारमेश्वरे ।।२७।।
ततः पुंसवनं कार्यं वामदेवेन सर्पिषा ।
[11]शिरस्यर्घ्यादिकं [12]प्रोक्तं कर्मण्यस्मिन्महामुने ।।२८।।
सीमन्ते बहुरूपं [13]स्याद्रुद्राणी [14]च [15]शिखा स्मृता[16] ।
जातकर्मविधानं [17]तु वक्त्रमन्त्रेण [18]कारयेत् ।।२९।।
[19]शेषं [20]पाशुपतास्त्रेण कार्यमर्घादिकं[21] सदा ।
नामकर्म च कर्तव्यमीशमन्त्रेण [22]सुव्रत[23] ।।३०।।
पुरुष्टुतेन पूर्वोक्तमर्चनं कुसुमैः स्मृतम् ।
पञ्च पञ्च प्रदातव्या ह्येकैकस्य पृथक् पृथक् ।।३१।।
[24]गव्येनाहुतयः"

**अस्त्रपञ्जरं** लोकपालास्त्रसमूहं **दिक्षु** विन्यस्य, प्रोक्षणेन शोधयित्वा कुण्डं, विद्याङ्गास्त्रतत्कवचाभ्यां भूःपदेन चान्यत्संस्कारचतुष्टयं तस्य कुर्यात्। ततो भूःपदेनैव गर्भधात्रीं विन्यस्य, **ध्यात्वा पूजयेत्**। ऋतुमत्त्वे च तस्याः पतीच्छामात्रेण गर्भग्रहणयोग्यत्वम्। ततस्तद्गर्भे वह्नेस्त्रयः, ततो

---

[1] शिववध्यात्वा येदग्निं तु — ओ; शिववद्धयात्वा यजेदग्नि तु — क; शिववद्धचायेदग्नि तु — ख, छ, ज; शिववद्धचात्वा ध्यायेदग्नि तु — ङ; च शिवं ध्यायेद् ध्याये० — च.

[2] तु — च.

[3] जानुभ्यां धरणीं गत्वा — ऊ, ऋ.

[4] ०मवनीं — क, च.

[5] संमुखेनात्मनः — ओ, क, ख, ङ; संमुखश्चात्मनः — च; समुखेनात्मनः सुधीः — — छ, ज.

[6] प्रदापयेत् — ओ, क, ङ; प्रतापयेत् — छ, ज.

[7] विद्याङ्गं हृदयं — ख, च.

[8] स्मरेत् — ओ.

[9] विद्यादिपञ्चधा — ऊ; विद्यादिपञ्चदा–ऋ.

[10] गर्भादानं — क.

[11] शिरस्यर्घादिकं — ऊ, ऋ; शिरः सर्वादिकं — क; शिरश्चार्घ्यादिके — ख, छ, ज; शिरश्चार्घादिके — च.

[12] प्रोक्त० — छ.

[13] स्यारुद्राणि — ऊ, ऋ; स्याद्रुद्राणि – ओ, छ, ज; स्यामुद्राणी — ख.

[14] तु — ओ, क, ख, ङ; त — छ, ज.

[15] शिवात्मना — ख.

[16] मता — ओ, क, ङ, च.

[17] तद् — ऊ, ऋ.

[18] तर्पयेत् — ख; कल्पयेत् — छ, ज.

[19] 'ओ, क, ङ' मातृकासु '३०, ३१, ३२' श्लोकाः '३३' पूर्वार्धं च न सन्ति।

[20] पाशपता० — ऋ.

[21] ०मर्घ्यादिकं — ख, च, ज.

[22] मन्त्रिणा — ख, च.

[23] कर्तव्य . . . मीश मन्त्रिणा — छ, ज.

[24] हव्येनाहूः यः — ऊ; हव्येनाहूय यः — ऋ; हव्येनाहुतयः — च.

निर्गतस्य द्वाविति पञ्चसंस्काराः कार्याः। प्रतिसंस्कारं चात्र करणं तत्तद्ब्रह्म विद्याङ्गं च। ब्रह्मात्राहुतिपञ्चकदानेनोपाकरोति। विद्याङ्गं त्वर्चनेनेति [1]विभेदः।

ननु चाज्यं तावदसंस्कृतमेव। न। प्रोक्षणादिभिः सामान्येन संस्कृतत्वात् पुष्पादिवत्। [वि]शेषसंस्कृतं तु तत् प्रधानहोमार्थमित्यदोषः॥

"पश्चात् [2]पूर्णां मन्त्रेण दापयेत्।
एकाशीति[3]पदेनात्र तिष्ठन्समपदेन तु ॥३२॥

संस्कारपञ्चकस्यान्ते शिवेन पूर्णाहुतिश्रुतेः, गर्भाधानादौ स्रुवाहुतय एवैता [इति] गम्यते॥३२॥

[4]आघारश्चात्र कर्तव्यः [5]श्लेषयित्वा द्वयं द्वयम्।
सद्योजातेन वामेन [6]घोरेण पुरुषेण च ॥३३॥
[7]ईशानशिवमन्त्राभ्यां [8]वक्त्रसंपादनाय तु।
प्रभोरस्त्रेण दीप्तेन [9]वक्त्रोद्घाटनमीप्सितम् ॥३४॥

अत्र जात[10]कर्मणः पूर्वं सीमन्तहोमाङ्गत्वेनायं होमः कर्तव्यः, वक्त्रसंपादनार्थत्वेन श्रूयते यतः। आघारशब्दस्य च विशिष्टकर्मनामधेयत्वेन श्रुतिसिद्धत्वादिहापि नाम्ना तद्धर्मातिदेशो मन्तव्यः। यच्छ्रूयते[11] — "आघारमाघारयति" [इति]। तदत्रापि स्पष्टया निरन्तरया पूर्ववद्दीयमानया स्रुवाहुतिधारयाघारणं कर्तव्यमित्यर्थः। तच्च सद्योजातवामदेवाभ्याम्, [अघोरतत्पुरुषाभ्याम्], ईशानशिवाभ्यां [12]श्लिष्टाभ्यामाहुतित्रयात्मकं कर्तव्यमिति। श्लेषार्थश्चात्रैकमन्त्रवत् पूर्वोत्तरमन्त्रयोरन्तोपक्रमप्राप्तस्वाहाकारप्रणवानुच्चारणमेव। ततः शिवास्त्रेण तत्रैव **वक्त्रोद्घाटनं** कुर्यादिति। अर्थादनयोः कर्मणोः सीमन्तकरणे एवान्तर्भावेनापकर्ष इति पञ्चैव गर्भाधानादयः संस्कारा इति। एवं प्रकारभेदेन जननमग्नेरुक्तम्॥ ३३–३४॥

अथ हवनं सेतिकर्तव्यताकमुच्यते —

ततोऽग्निमुद्धरेत्तस्माच्चरोः पक्त्यै[13] सदाहितः[14]।

---

[1] विभेदाः — ऋ.
[2] पूर्वान्मन्त्रेण — छ; पूर्वमन्त्रे . . सेत् — ज
[3] पदेनानुतिष्ठन् — च.
[4] अघोरश्चात्र — ख, छ, ज; आधारश्चात्र दातव्यः — च.
[5] शेषयित्वा — ऊ, ऋ.
[6] वक्त्रेण बहुरूपिणा — ऊ, ऋ, ओ, क, ख, ङ, च, छ; वक्त्रेण बहुरूपिणः — ज; 'घोरेण पुरुषेण च' इति पाठो मृगेन्द्रवृत्तौ मतङ्गागमश्लोकत्वेनोद्धृतो दृश्यते। स एव पाठोऽत्र युक्त इति स्वीकृतः। (मृगेन्द्रवृत्तिः क्रिया० ६.१८, १९)
[7] तथैश शिव० — च.
[8] वक्त्रं संपादनाय तु — ख; वक्त्रमस्मादनाय तु — च.
[9] वक्त्रोत्पाटन० — ङ.
[10] ०कर्मणा पूर्वं — ऋ.
[11] तैत्तिरीयसंहिता २.५.११.
[12] श्लिष्टाभ्यातिहोमतयात्मकं — ऊ, ऋ.
[13] पङ्क्त्ये — ऊ, ऋ; पक्वैः — ओ; पक्वे — क; पङ्क्त्यै — ख; चरो पत्त्यै — ङ.
[14] समाहितः — ओ, च; समाहिताः — क, ङ; समाहितेः — ख; समासतः — छ, ज.

**[1]सर्वात्मकेन मन्त्रेण [2]प्रोक्षयेदम्भसा शनैः ॥३५॥**

**ततः** जननादनन्तरं **तस्माद्** अरणीतः, गर्भा[धाना]दिसंस्कारेभ्यो वा जाताद् **अग्निमुद्धरेत्**। योगिवदनेकदेहनिर्माणात्मिकयेव [3]प्राकाम्यशक्त्योभयशरीरस्थं कुर्यादित्यर्थः। न तु वह्न्यादेस्तच्छरीरस्य वा भागशः खण्डनमुपपद्यत इत्यदोषः। यतोऽसौ **सदाहितः** इति आहिताग्निना सर्वकालं कुण्डान्तरे धार्य इत्यर्थः। अन्यथा प्रत्यहमेवंविधस्याग्नि[4]जननस्याशक्यानुष्ठेयत्वात्। ततश्च ततः प्रोद्धृत्य प्रत्यहं हवनं कुण्डान्तरेऽन्यत्र चरुपाकादि च चुल्ल्यादौ [5]कर्तव्यम्। हवनकुण्डस्थ[स्य] [6]वक्ष्यमाणविसर्जनश्रुतितो धारणासंभव एव यतः।

ननु लिङ्गवदत्र विसर्जनं भविष्यति। न। तत्र प्रतिष्ठाविहितसांनिध्यस्य विसर्जनाभावात्; एवंफलत्वाच्च प्रतिष्ठायाः। इह तु यथैवावाहितो [7]लिङ्गेऽर्चाकाल इव [8]तथैव विसर्जित इत्यसाम्यम्।

[9]नन्विच्छया तु तथैव कल्पयिष्याम इति केचित्। यदुक्तम्[10] —

"यत्र स्वातन्त्र्यमिच्छाया[11] नियमो नाम तत्र कः।" इति।

सत्यम्। यदि [12]शास्त्रमस्या नियामकं न भवेत्; [13]"न कलञ्जं भक्षयेत्" इत्यादिवत्। तिरस्कृतशास्त्र[14]नियमा तु सा चौरादीनामिव नरकायैवेति, कुतस्तस्याः स्वातन्त्र्यसिद्धिः।

यद्येवं परमेश्वरस्यैव विसर्जनं विधास्याम इत्यग्नेस्तत्रैव संनिधानं सेत्स्यति। न। विशेषेण प्रमाणाभावादिति [15]दर्शयिष्यामः। उक्तं च श्रीमन्**निश्वासे**[16] —

"शिवं विसर्ज्य प्राङ्नित्यं पश्चादग्निं विसर्जयेत्।" इति।

अन्यत्राप्युक्तम्[17] —

"विसर्जिते तु देवेशे चण्डवह्निस्तदा भवेत्" इति।

तस्य कर्मानधिकारित्वात्। ननु तत्रैव तथास्तु श्रुतिसामर्थ्यात्। न त्विह। यदाहुः[18] —

"क्रियादिभेदभेदेन तन्त्रभेदो [19]यतः स्मृतः।
[20]तस्मात्तत्र यथैवोक्तं कर्तव्यं नान्यतन्त्रतः॥" इति।

---

[1] सर्वात्मना मन्त्रितेन — ओ, क, ख, ङ, च, छ, ज.

[2] 'ख, छ, ज' मातृकासु '३५' चतुर्थपादप्रभृति '३७' पूर्वार्धान्तो भागो लुप्तः।

[3] प्राकामशक्त्यो० — ऊ; प्रकाम्यशक्त्यो० — ॠ.

[4] ०जननस्य शक्यानुष्ठेयत्वात् — ऊ, ॠ.

[5] प्रकर्तव्यम् — ॠ.

[6] अत्रैव पटले ४८ उ०, ४९ वृत्तौ।

[7] लिङ्गोऽर्चा० — ऊ, ॠ.

[8] तथैवं — ऊ, ॠ.

[9] नन्विच्छा यातुः तथैव — ॠ.

[10] आकरो न लभ्यते।

[11] ०मिच्छया — ऊ, ॠ.

[12] 'ॠ' मातृकायां 'शास्त्रमस्या' इत्यारभ्य 'तिरस्कृत' इत्यन्तो भागो नास्ति।

[13] 'न कलञ्जं भक्षयितव्यं' शाबरभाष्ये ६.२.१९.

[14] ०नियमात्तु — ऊ.

[15] मतङ्ग ० क्रिया० ४.४८ उ०, ४९ पू० वृत्तौ।

[16] आकरो न लभ्यते।

[17] आकरो न लभ्यते।

[18] अयं श्लोकः सार्धत्रिशतिकालोत्तरे ४.१उ०,२ पू०वृत्तौ 'उक्तं सिद्धगुरुभिः' इति निर्दिश्योद्धृतः। एतत्समानार्थकश्लोकः कामिके उत्तरभागे स्नपनविधिपटले २२७, २२८ पू, श्लोकतया दृश्यते 'क्रियामन्त्रादिभेदेन तन्त्रभेदो यतस्ततः। तस्मात्तत्र च शैवोक्तं कर्तव्यं नान्यशास्त्रतः॥' इति।

[19] यदा स्मृतः — ॠ.

[20] तस्मात्तन्त्रं तथैवोक्तं कर्तव्य तन्त्रतः — ऊ, ॠ; मतङ्ग० विद्या० १२.१ वृत्तिमनुसृत्यात्र पाठः शोधितः।

सत्यम्; यदि क्रियारूपोपदेशः स्यात्। वस्तुस्वरूपप्रकाशनपरा ह्येषा श्रुतिर्विषस्य मारकत्वश्रुतिवत्। न नियतिशास्त्रविषयत्वेन व्यवस्थापयितुं शक्या; वस्तुनः सर्वान्प्रत्यविशेषात्[1]। तदुक्तं गुरुभिः[2] —

"शब्दसामर्थ्यलभ्यं यदर्थसामर्थ्यतोऽपि वा।
वस्तुशक्त्याथवा प्राप्तं तद्ग्राह्यं [3]संहितान्तरात्॥" इति।

एवमप्यग्नेर्वस्तु[न] आत्मविशेषस्येव[4] कस्यचिन्नियतशरीरद्वारेण संस्कृतत्वाच्च [5]शरीरे गुरुमूर्त्यादाविवावाहितस्य भगवतो विसर्जने[6] सर्वकर्मण्यधिकार इति [चेद्] गुर्वादेरपि प्रसङ्गः। नास्माभिस्तन्मूर्तेस्तेजोरूपायाश्चण्डाधिष्ठानेन [7]सर्वकर्मण्यधिकारः कथ्यते। अपि तु चण्डेश्वर[8]द्रव्येन्धनाङ्गाराद्यधि[9]करणत्वान्निर्माल्याधिकर[ण]स्थिताचार्यवत्। [10]न च तस्य स्नानादिनेवास्येह काचिच्छुद्धिः श्रुतेत्यग्नेरविसर्जनाभ्युपगमेऽपि न तत्र हवनमुपपद्यत इति सूक्तं "हवनार्थमपि प्रत्यहं तस्मादुद्धरेत् कुण्डान्तरे, ततः [11]शिवहृदयेन तं प्रोक्षयेत्" इति॥३५॥

**अग्निकुण्डस्य परितस्ततो [12]दर्भान्परिस्तरेत्।**
**[13]प्रागुक्त[14]लक्षणान्मन्त्री सौम्याग्रान्पूर्वतो[15] न्यसेत्॥३६॥**
**[16]पूर्वाग्रान्दक्षिणे भागे [17]पश्चिमे चाप्युदङ्मुखान्।**
**[18]प्राच्यग्रानुत्तरे भागे [19]पूर्वतश्चापि [20]विष्टरम्॥३७॥**
**[21]ब्रह्मणः [22]कल्पयेद्यत्नात्तस्योपरि [23]ततोऽर्चनम्।**
**ब्रह्मणः[24] [25]प्रणवाद्यं स्यात्[26]प्रह्वान्तं कुसुमादिभिः॥३८॥**

ततः हवनार्थमवस्थापितवह्नेः [27]कुण्डस्य बाह्यतः पूर्वाद्युत्तरान्तक्रमेणोत्तराग्रपूर्वाग्रैर्दर्भैः [28]स्तरं

---

[1] प्रतिविशेषात् — ऋ.
[2] आकरो न लभ्यते।
[3] संहृतान्तरात् — ऋ.
[4] विशेषस्यैव — ऋ.
[5] शरीरगुरुमूर्त्या॰ — ऊ, ऋ.
[6] सत्कर्मण्यधिकारः॰ — ऊ, ऋ.
[7] न सर्वकर्म॰ — ऊ.
[8] ॰द्रव्येन्धनाङ्गाद्यधि॰ — ऋ.
[9] ॰कारणत्वा॰ — ऊ, ऋ.
[10] न शस्तस्य — ऋ.
[11] शिवहृदयम् — सर्वात्ममन्त्रः। मतङ्ग॰ विद्या॰ ७.१७ पू॰, क्रिया॰ १.६३ उ॰
[12] दर्भास्तु विस्तरेत् — ऊ, ऋ; दर्भात् परिस्तरेत् — ङ; दर्भान् प्रविस्तरेत् — च.
[13] मतङ्ग॰ क्रिया॰ १.१४५ उ॰.
[14] लक्षणमन्त्री — ओ; लक्षणो मन्त्री — च.
[15] ॰न्सर्वतो — ऊ, ऋ; सौम्याग्रां पूर्वतो — च.
[16] सर्वाग्रान् दक्षिणे — ऊ, ऋ; पूर्वाग्रं दक्षिणे — ओ; पूर्वाग्रा दक्षिणे — क, ङ; पूर्वाग्रां दक्षिणे — च.
[17] पश्चिमेनाप्युदङ्मुखम् — च.
[18] प्राच्यग्रामुत्तरे — च.
[19] पूर्वतस्योपविष्टरम् — ऊ, ऋ.
[20] विस्तरम् — च.
[21] ब्रह्माणं — ओ; ब्रह्मणा — क.
[22] कल्पयेद्यस्तु स्नातस्योपरि — ङ.
[23] तमर्चयेत् — ओ, क, ख, च, छ, ज; तज्जयेत् — ङ.
[24] ब्रह्मणे — ओ, क, ख, छ, ज; ब्रह्माणं — ङ.
[25] प्रतिवाद्यं — छ, ज.
[26] प्राह्वान्तं — ऋ; प्रस्वान्तकुसुमा॰ — ओ, ङ; ह्रस्वान्तकसमा॰ — क; प्रह्वान्तकुसुमा॰ — ख, छ, ज; प्रभूतैः कुसु॰ — च.
[27] कुण्डव्यं बाह्यतः — ऊ.
[28] स्तरो दत्त्वा — ऊ, ऋ.

दत्वा ततः **पूर्वतः** [1]विष्टरे ब्रह्माणं निवेश्य **अर्चनं तस्य** [2]प्रणवादिस्वनाममध्यनमस्कारान्तेन कुर्यात्। यद्वक्ष्यति[3] — "स्वनाम च ततः पश्चाच्चतुर्थ्यन्तम्" इति।

ननु तद्दीक्षाप्रकरणेनावरुद्धम्? न सर्वमेव वाक्यं प्रकरणेन वावरोद्धुं शक्यमिति तत्प्रकरणे एव [4]वक्ष्यामः।

ततः "[5]तस्यार्चनं [6]यथान्यायं कृत्वा दक्षिणतोऽर्चयेत्" [7]इत्यादिवक्ष्यमाणत्वा[8]च्छ्रुत्या मन्त्रविन्यासात् परतोऽपि पठितानां [9]विष्णुरुद्रशिवानां तथैव दक्षिणपश्चिमोत्तरासु दिक्षु **सदा** इति सर्वकालं न्यासादि कर्तव्यं पाठक्रमाच्छ्रौतस्य बलीयस्त्वात्। श्रीमत्पौष्कर**निश्वासा**दाव[10]प्यत्रैवं श्रुतं यतः। ब्रह्मादिद्वारेण चात्रापि शतरुद्रादय एव पूज्यन्ते। न पारमेश्वरे शास्त्रे पशवः पाशाश्चेज्यन्ते यतः ॥३६–३८॥

[ पूर्णाहुतिः ]

**ततः शक्त्या समुत्थाय [11]पूर्णां पूर्णेन चेतसा।**
**पातये[12]न्मध्यमे वक्त्रे न चान्यत्र कदाचन ॥३९॥**

**ततः** तेषामेव संतर्पणार्थं व्योमव्याप्यादिकया **शक्त्या** पूर्णाहुतिं [13]प्रागुक्तानुक्रमेण दद्यात् ॥३९॥

**आज्यभागं [14]तु जुहुया[15]दाहुतीनां त्रयेण तु।**

**आज्यभागं तु जुहुयात्** इत्येतत्तु [16]"अधिश्रयणमादौ" इत्यनन्त[र]श्रुतेराज्यसंस्कारेभ्यः पश्चान्मन्तव्यम् ॥

अथाज्यसंस्कारः —

**[17]अधिश्रयणमादौ तु [18]हविःस्थाल्यां [19]समाहितः ॥४०॥**
**उद्द्योतनं च विधिवत्तेजस्तेजःपदान्वितम्[20]।**

---

[1] विष्टरब्रह्मणं — ऋ.
[2] प्रणवादिस्वनाम ये ध्यानं नमस्कारान्तं — ऊ; प्रणवाद्यर्चनामये ध्यानं नमस्कारान्तं — ऋ.
[3] मतङ्ग० क्रिया० ५.१११पू०.
[4] मतङ्ग० क्रिया० ५.११० उ०, १११ वृत्तौ।
[5] मतङ्ग० क्रिया० ४.४६ उ०.
[6] यथान्याय्यं — ऊ, ऋ.
[7] इति वक्ष्यमाण — ऊ, ऋ.
[8] ०च्छ्रुत्वा — ऊ, ऋ.
[9] रुद्रविष्णुशिवानां — ऊ.
[10] ०प्यत्रैव श्रुतम् — ऊ, ऋ.
[11] पूर्णपूर्णेन — ओ, क.
[12] ०न्मध्यवक्त्रे तु — ऊ, ऋ.
[13] मतङ्ग० क्रिया० ४.३२.
[14] च — ऊ, ऋ, ओ, क, ख, ङ, च, छ, ज.
[15] ०दाहुतीभिस्तु तिसृभिः — च; ०दाहुतिभिसतिसृभिः — छ, ज.
[16] मतङ्ग० क्रिया० ४.४०उ०.
[17] अधिश्रपण० — ओ; अधिश्रवण० — क, ङ.
[18] स्नेहस्थाल्यां — ऊ, ऋ; विहस्याल . . . — ओ; विहस्थल . . .—क; हविस्थाल्या समा० — ङ.
[19] समाहितैः — ख.
[20] ०स्तेजपदान्वितः — क, ङ.

**[1]कर्तव्यं ज्योतिरुच्चारा[2]दवलोकनसंज्ञकम्[3] ॥४१॥**
**[4]कर्मास्मिन्कर्मसंताने[5] तदुत्प्लवनमाचरेत्[6] ।**
**[7]दर्भाभ्यां [8]मन्त्रमुख्येन नानात्रितययोजनात् ॥४२॥**
**[9]सर्वदेन ततः [10]पश्चात्कार्यं संप्लवनं मुने ।**
**[11]साक्षिन्साक्षिन्पदोपात्तं[12] कुर्यान्नीराजनं[13] शनैः ॥४३॥**
**प्रोक्षणं [14]च सदा कार्यं गायत्र्या [15]सुसमाहितैः ।**

[16]**हविः**शब्देन तावदत्र प्रकृतत्वादाज्यमुच्यते। तेन युक्ता [17]**स्थाली** आज्यभाण्डमित्यर्थः। तस्यामप्युपर्यग्नेः **श्रयणं**[18] पाकं प्रथमं कुर्यात् **उद्द्योतनं च** इति अनन्तरं [19]समुच्चिततेजःपदेनैव ततः [20]प्रदीप्तेनोल्मुकेनोद्द्योतनं, तदनु चालोकनं **कर्तव्यम्**[21]। ततस्तस्य प्रविलीनस्य सतो दर्भकाण्डद्वयेनोर्ध्वं **प्लवनं** नयनं कुर्यात्। कथमित्याकाङ्क्षायां संहितान्तराद्विशेषः। यदुक्तं श्रीमत्**सर्वज्ञानोत्तरे**[22] —

"अङ्गुष्ठानामिकाभ्यां [च] [23]गृहीत्वोत्प्लवनं कुरु।
हस्ताभ्यां दर्भपिञ्जलम्" इति।

एवं सम्यगात्माभिमुख्येनानयनं [24]**संप्लवनं** कृत्वा, **नीराजनं** बाह्यतो [25]निश्शेषेण राजनं पर्यग्निकरणं, ततः **प्रोक्षणं** चामृतीकरणार्थं **कुर्याद्** इति सप्ताज्यसंस्कारान्कृत्वा [26]प्रागुक्तमाज्यभागमाहुतित्रयमग्नय एव जुहुयात्॥

---

[1] कर्तव्यज्योति० — ङ.
[2] ०दवलोकेन संज्ञितम् — क; ०दवलोकं न संचितः — ख; ०दवलोकेन संस्थितम् — — ङ.
[3] ०संज्ञितम् — ओ, च; ०संजितः — छ, ज.
[4] तदास्मिन् — ऊ, ऋ.
[5] ०संतानात् — ख, छ, ज.
[6] तदोत्प्लवनमारभेत् — ओ, क, ङ, च; ततोत्प्लवनमारभेत् — ख, छ, ज.
[7] दर्भा सा मन्त्र०—क; दर्भाद्यामन्त्र० — छ; दर्भाद्यां मन्त्र० — ज.
[8] मन्त्रिमुख्येन — च.
[9] सर्वदैनं ततः — ख; सर्वदैव — च; सर्वदेनं ततः — छ, ज.
[10] पश्चात्कार्यां — छ, ज.
[11] साक्षिसाक्षिपदो० — ओ, क; साक्षिसाक्षिपदोपान्तं — च; साक्षिसाक्षिपदोपेतं — छ, ज.
[12] ०पदोपेतं — ख; ०पदोपातः — ङ.
[13] कुर्यान्नीराञ्जनं — क.
[14] हि — ओ, क, ङ.
[15] सुसमाहितम् — ओ; सुसमाहितः — क, ख, ङ, छ, ज.
[16] अपिशब्देन — ऊ, ऋ.
[17] स्थालीमाज्यं भाण्ड० — ऊ, ऋ.
[18] पाकप्रथमं — ऊ, ऋ.
[19] समुच्चयत्तेजः पदेनैव — ऊ; समुच्चयतेजपदेनैव — ऋ.
[20] प्रदीप्तेनोल्केनो० — ऋ.
[21] चालोकनं चेत्यनन्तरं कर्तव्यम् — ऋ.
[22] 'अङ्गुष्ठानामिकैर्गृह्य घृतस्याप्लवनं कुरु।' सर्वज्ञानोत्तरे क्रियापादे अग्निकार्यप्रकरणे श्लो० २१. (टि. ३३४).
[23] गृहीतोप्लवनं — ऋ.
[24] सोपप्लवनं — ऊ, ऋ.
[25] निःशोषणराजनं — ऊ, ऋ.
[26] मतङ्ग० क्रिय० — ४.४० पू०.

**एवं [1]कृते [2]यथोद्दिष्ट[3]मासनादिप्रकल्पनम्[4] ॥४४॥**
**[5]कर्तव्यं [6]मन्त्रमुख्यानां स्वदिग्भागेन पूर्ववत् ।**
**गन्धपुष्पार्चनं कृत्वा [7]बहिर्देवान्निवेशयेत् ॥४५॥**

ततोऽर्चनप्रकरणोक्तक्रमेणासनादिन्यासपूर्वं परमेश्वरस्य तन्मूर्तिदिग्विभागेन मूर्धादीनां [8]ब्रह्मणा, हृदयादीनां चाङ्गानां [9]**प्रकल्पनं** कृत्वा, गन्धादिभिश्चाभ्यर्च्य, मूर्तितो [10]**बहिः**भोगस्थाने तानेव ब्रह्माङ्गात्मकान् **देवान्** क्रीडायोगिनो [11]**निवेशयेद्** इति। न त्वत्रावरणान्तरन्यास इति दर्शितमत्र"[12] प्रकरणे ॥४४-४५॥

**विष्टरे पूर्वतो ब्रह्मा [13]प्रागेव परिकल्पितः[14] ।**
**तस्यार्चनं [15]यथान्यायं[16] कृत्वा दक्षिणतो[17]ऽर्चयेत् ॥४६॥**
**[18]स्वनामोच्चारणा[19]द्विष्णुं [20]चतुर्थ्यन्तं नमोऽन्तकम् ।**
**[21]प्रणवादिं ततः [22]पश्चाद्रुद्रं पश्चिमतोऽर्चयेत् ॥४७॥**
**[23]सदाशिवमथोदीच्यां विष्टरे संप्रपूजयेत् ।**

एतत् [24]पूर्वमेव यथानुष्ठानं व्याख्यातम् ॥

**पूजयित्वा [25]शिवस्यादावाहुतीः प्रतिपादयेत् ॥४८॥**
**हविषा शक्तितः पश्चान्मन्त्राणां तर्पणं भवेत् ।**
**[26]दशभागोदितं शम्भोः पूर्णां पश्चात्प्रपातयेत्[27] ॥४९॥**

---

[1] कृतो — ख, ङ, छ, ज.
[2] यथोद्दिष्टा० — छ.
[3] ०मासनानि — क.
[4] ०प्रकल्पना — ओ, क, ङ; ०प्रकल्पनात् — ख, छ, ज.
[5] कर्तव्या — ङ.
[6] मन्त्रमुनीशानां — ख.
[7] बहिर्देवं नि० — ख, ज; बहिर्देव नि० — छ.
[8] ब्रह्मणा — ऊ.
[9] प्रकल्पनां — ऊ, ऋ.
[10] बहिर्भाग० — ऊ, ऋ.
[11] निवेदयेद् — ऊ.
[12] मतङ्ग० क्रिया० ३.८३ — ९१ वृत्तौ।
[13] मतङ्ग० क्रिया० ४.३७उ०, ३८पू०.
[14] परिकल्पकम् — छ, ज.
[15] पुरान्यायं — क.
[16] ०न्याय्यं — ऊ, ऋ.
[17] न्यसेत् — ओ, क, ख, ङ, च, छ, ज.
[18] 'ऋ' मातृकायां '४७' तमश्लोको नास्ति।
[19] ०द्विष्णु चतुर्थ्यन्तं — ओ; ०द्विष्णुश्चतुर्थ्यन्तं — क, ख, छ, ज.
[20] चतुर्वृत्तेननोत्रिकम् — च.
[21] प्रणवादि ततः — ओ, क, ख, ङ, छ, ज; प्रणवादिपदं — च.
[22] पश्चाद्रुद्रतत्त्वं निवेशयेत् — ओ, क; पश्चात्-पश्चाद्रुद्रं निवेशयेत् — ख, च, छ, ज, पश्चाद्रुद्रं तत्त्वनिवेशयेत् — ङ.
[23] 'ख, छ, ज' मातृकासु इदमर्धं नास्ति।
[24] मतङ्ग० क्रिया० ४.३६–३८ वृत्तौ।
[25] शिवस्यार्घ्यमाहुतिं च प्रदापयेत् — ओ, क; शिवस्यार्घ्यमाहुतिं प्रतिपादयेत् – ख, ङ, छ, ज.
[26] दशभागोचितं — ओ, क, ख, ङ; दशभागोचिते शंभौ — च; दशभिः गोचितं शंभोः — छ, ज.
[27] प्रतापयेत् — ऋ; प्रदापयेत् — ओ, क, ख, ङ, च, छ, ज.

घृतेन यथाशक्त्या नित्यकर्मणि **शिवस्याहुतीः** प्रतिपाद्य, ततो ब्रह्माङ्गानि तद्दशभागेन तर्पयित्वा **शम्भोः पूर्णां पश्चाद्** इति सर्वहोमकर्मणः पश्चाद् विसर्जनाय **प्रपातयेत्** तया शिवाग्निं विसर्जयेदित्यर्थः ॥४८–४९॥

अथ कीदृशे वह्नौ होतव्यं, कीदृशे नेत्युच्यते —

**विधूमे [1]लेलिहानेऽग्नौ होता सिद्धिमवाप्नुयात् ।**
**अप्रबुद्धे [2]सुधूमे च न होतव्यं कदाचन ॥५०॥**

[3]अधुना नित्यहोमेन कदाचिद् घृताभावात्प्रतिनिधित्वेन [4]तिले प्राप्ते द्रव्यान्तरस्य विकल्पेन विधिः —

**[5]घृताभावात्तिलैर्होमः [6]कर्तव्यः कृष्ण[7]वर्णकैः ।**
**[8]व्रीहिभिर्वा यवैर्वापि [9]समिद्भिर्वाजुगुप्सितैः ॥५१॥**
**[10]पद्मैर्बिल्वफलैः स्निग्धैर्घृतेन[11] पयसापि वा ।**
**तण्डुलैर्वाथ कर्तव्यो होमः [12]शास्त्रविशारदैः ॥५२॥**

ननु सामान्यप्रकरणस्थत्वादस्य [13]स्नानार्चनादेरिव दीक्षायामपि प्राप्तिसिद्धेः प्राक् तदङ्गप्रकरणोक्तस्य "[14]तदभावात्तिलैर्वान्यैः" इत्यादेर्वाक्यस्यानर्थक्यमेव । न । अत एव विशेषार्थत्वात्तत्र तिलगतस्य गुणस्य तण्डुलानां प्राप्तौ[15] [16]बाध इति ॥५१–५२॥

**[17]बहुहव्येन्धने दीप्ते वह्नौ [18]होमः प्रशस्यते ।**

न केवलं लेलिहान एव होतव्यं [19]यावद्वह्निन्धनेऽपीति ॥

---

[1] लेलिहाग्नौ स्थ हिता — क.
[2] च होमे च — ऊ, ॠ; सधूमे च — ख, छ, ज; सुति धूमे च — ङ; मध्यमे च — च.
[3] अधुनादित्यहोमेन — ऊ.
[4] तैले — ऊ, ॠ.
[5] घृताभावे तिलैर्होमः — ओ, क, ख, छ, ज; घृताभावैस्तिलैर्होमाः — ङ.
[6] कर्तव्यं — क.
[7] ०वर्त्मनि — च.
[8] प्रहीभि० — छ; प्रहिभि० — ज.
[9] समिद्भिश्चाजुगुप्सितैः — ओ, क, ख, ङ, छ, ज.
[10] पद्मैश्च सतिलैः स्निग्धै० — क.
[11] घृतेन घृतयुक्तेन पयसा इत्यर्थः; अन्यथा घृताभावे निर्दिष्टद्रव्येषु पुनर्घृतनिर्देशोऽयुक्तः स्यात् । तदिदं स्पष्टं ५५ तमे श्लोके — 'पायसस्य घृतयुक्तस्य होमयेत्' इति ।
[12] शास्त्रविदा सदा — ओ, क, ख, ङ, च, छ, ज.
[13] स्नानहोमादेरिव — ऊ, ॠ.
[14] मतङ्ग० क्रिया० १.१३८, १३९; तदाभावात्तिलै० — ॠ.
[15] प्राप्तानां — ऊ, ॠ.
[16] बाधयति — ॠ.
[17] बभुभवेन्धने — ख; बहूभवेन्धने — छ; बभूभमन्धने — ज.
[18] होमौ — क.
[19] यावद्वह्निन्धने पैति — ऊ; यावद्वहिन्धने — ॠ.

[1]सततं [2]गुग्गुलोर्होमो [3]घृतमिश्रस्य सिद्धिदः ॥५३॥

काम्यविषयम् ॥५३॥

अथ [4]नित्यकर्मण्युक्तानां, काम्ये च [5]वक्ष्यमाणानां होमप्रमाणम् —

[6]कर्कन्धुमात्रा [7]गुलिका [8]होतव्या [9]गुग्गुलोः सदा ।
तिलानां शस्यते होमः सततं शङ्खमुद्रया ॥५४॥
[10]कर्तव्यः सर्वधान्यानां मुष्टिना [11]साधकैः सदा ।
[12]शुक्तिमात्रां[13] पायसस्य [14]घृतयुक्तस्य होमयेत्[15] ॥५५॥
ग्रासमात्रा[16] सदा शस्ता[17] [18]भक्तस्याहुतिरत्र तु ।
[19]स्रुवमात्रा व्यञ्जनानां भक्ष्याणां स्वप्रमाणतः ॥५६॥
धात्रीफलप्रमाणं तु [20]कृसरस्य प्रपातयेत् ।
[21]लवणस्यापि तिलवत् [22]प्रमाणं कीर्तितं पुरा ॥५७॥
[23]लाजाश्चात्र सदा होम्या [24]बद्ध्वा [25]चावाहनीं शुभाम् ।
फलानां कुसुमानां [26]तु [27]स्वप्रमाणमभीप्सितम् ॥५८॥

---

[1] नित्यं गुग्गुलुना होमो — च.
[2] गुग्गुलो होमो — ऊ, ऋ; गुग्गुलोर्होमः — ओ, क, ङ.
[3] घृतमिश्रेस्यसि . . — ओ, क; घृतमिश्रेण सि० — च.
[4] मतङ्ग० क्रिया० ४.५१, ५२.
[5] मतङ्ग० क्रिया० ४.६०–६७.
[6] कल्कं तु मात्रा — ख, छ, ज.
[7] गुणिका — ओ, क, ङ; गुटिका — च.
[8] होतव्यं — ख, छ, ज.
[9] गुग्गुलो सदा — ऋ; गुग्गुलैः सदा — च.
[10] होमयेत्सर्व०—ओ, क, ख, ङ, छ, ज; सर्वेषां चैव धान्यानां — च.
[11] साधकोत्तमः — ओ, साधकः सदा — च.
[12] 'ओ' मातृकायां '५५' उत्तरार्धप्रभृति '५९' श्लोकान्तो भागो नास्ति ।; शुक्तिमात्राच्च पयसो — च.
[13] शुक्तिमात्रा — ऊ, ऋ, ख; शक्तिमात्रं — क, ङ.
[14] घृतहोमं समापयेत् — च.
[15] '५५' श्लोकानन्तरं 'तीक्ष्णतैलेन समिधो विभीतकसमुद्भवाः' इतीदमर्धमधिकतया दृश्यते 'ऊ, ऋ' मातृकयोः । परस्तात् '६१' श्लोकस्योत्तरार्धत्वेन सर्वासु मातृकासु दृश्यमानत्वात्प्रकृते चास्यासङ्गतत्वाच्चेदमर्धं नात्र पाठतया स्वीकृतम् ।
[16] ०मात्राः — ख, छ, ज.
[17] शस्ताः — ख.
[18] भक्तव्याहुतयोऽत्र तु — क; भक्तस्याहुतयात्र तु — ख; भक्तस्याहुतयोऽत्र तु — ङ, च, छ, ज.
[19] स्रुवमात्रं — क; ध्रुवमात्रा — ख, ङ, छ, ज.
[20] प्रातरस्य — ख, छ, ज.
[21] लवणस्य तिलानां च — क, ख, ङ, च, छ, ज.
[22] यत्प्रमाणं प्रकीर्तितम् — च; तिलानां परिमाणकथनं '५४' उत्तरार्धे ।
[23] राजाश्चात्र — ङ.
[24] बद्ध — ऋ.
[25] त्वाहवनीं — ऊ, ऋ, ख, ङ, च; त्वाहवनि — छ; त्वावाहनिं — ज.
[26] च — क, ख, ङ, च, छ, ज.
[27] सुप्रमाण० — छ, ज.

कन्द[1]मूल[2]गणस्यापि संस्कृतस्य तु मन्त्रवित् ।
होमये[3]द्बृहती[4]तुल्या आहुतीः [5]साधकोत्तमः ॥५९॥

[6]**शुक्तिमात्रां पायसस्य** इत्यादि चरुविषयं, वैश्वदेवविषयं च। **बृहतीतुल्याः** इति तत्फलेन तुल्याः ॥५४–५९॥

अथ काम्ये द्रव्यविधिः —

[7]होमयेत्पद्मबिल्वानि [8]श्रीधनार्थं च [9]नित्यशः।
[10]सौभाग्ये लवणं शस्तं कुसुमानि च नित्यशः ॥६०॥

एषां नित्यार्थमपीत्युक्तम् ॥६०॥

[11]उच्चाटे तुष[12]कम्बूककेशास्थीनि[13] च होमयेत् ।
[14]तीक्ष्णतैलेन समिधो [15]विभीतक[16]समुद्भवाः ॥६१॥
[17]होतव्या मारणे [18]नित्यं शास्त्रेऽस्मिन्पारमेश्वरे ।
[19]विरुद्धप्राणिसर्वाङ्गै[20]र्होमो विद्वेषकर्मणि ॥६२॥
[21]ऊर्ध्वशुष्कैश्च [22]कर्तव्यस्तरुभिः[23] कृतनिश्चयैः[24] ।
प्रेतदारुश्मशानोत्थैरसृङ्मिश्रैश्च[25] शस्यते ॥६३॥
[26]उन्मादे मुनिशार्दूल नात्र कार्या विचारणा।

---

[1] ०मूलफलस्यात्र सुकृतस्य — क, ख, ङ, छ, ज.
[2] ०गणस्यात्र सुकृतस्य तु — च.
[3] ०द्बृहतीं — ख; ०द्बहतिं — छ, ज.
[4] ०तुल्या आहुतिः — ऊ, ऋ; ०तुल्या नाहुतिं — क; ०तुल्यामाहुतीं — ख; ०तुल्या नाहुतिं — ङ; तुल्यामाहुतिं — छ, ज.
[5] साधकोत्तमाः — ऊ, ऋ.
[6] शुक्तिमात्रा — ऊ, ऋ
[7] होमयेद्बिल्वपद्मानि — ओ, ख, छ, ज.
[8] श्रीधनार्थी च — ओ, क, ङ; श्रीधनानां च — ख; श्रपणार्थं च — च; शोधनार्थं च — छ; श्रयनार्थं च — ज.
[9] होमयेत् — क.
[10] 'ओ, क, ख, ङ, छ, ज' मातृकासु इदमर्धं नोपलभ्यते।; सौभाग्यं — च.
[11] उच्चाटने तुषकम्बू० — ऋ; निकटे तुष० — क.
[12] ०कम्पूक० — ओ, क; ०काम्पुके० — च; ०कम्पूज० — छ; कम्बूज० — ज.
[13] ०केशास्त्रीनि — ऊ, ऋ; ०केशास्थिनि—ओ, क; ०केशास्थानि — ख.
[14] दीक्षणतैलेन समिधौ — ङ.
[15] भीतसमुद्भवा — ङ.
[16] ०समुद्भवा — ओ, क.
[17] होतव्यं — ओ, क, ख, ङ, छ, ज.
[18] तस्मिन् तन्त्रेऽस्मिन् — च.
[19] विरुद्धः प्राणि० — ओ, क, ङ.
[20] ०र्होमविद्वेष० — ऊ.
[21] ऊर्ध्वं शुष्कैश्च — ओ, क.
[22] कर्तव्यो — ऊ, ऋ; कर्तव्यं — ओ, क; होतव्यं — ख, ङ, छ, ज.
[23] गुरुभिः — ऊ, ऋ.
[24] ०निश्चयात् — ओ, क, ख, ङ; ०निश्चयान् — च; ०कृतिनिश्चयात् — छ, ज.
[25] ०मिश्रं च — ओ, क, ङ; ०मिश्रश्च — ख; ०रसृमिश्रश्च — छ; ०रश्रं मिश्रश्च — ज.
[26] उत्साते — ओ, क; उत्सादे — ख, ङ; उत्साहे — छ, ज.

[1]कटुकण्टकिनो [2]वृक्षाः शस्ता विप्राभिचारके[3] ॥६४॥
शान्ति[4]पुष्टिवशाकर्षे क्षीरिणस्तरवः शुभाः ।
[5]दध्नः प्रशस्यते [6]होमः स्रुङ्[7]मात्रस्यैव [8]साधने ॥६५॥
चतुष्पदानां सर्वेषा[9]मायुषः शस्यते [10]पयः ।
[11]पलमात्रं च [12]मधुनस्तदुत्कर्षे [13]पलद्वयम् ॥६६॥
होतव्यं साधकेन्द्रेण [14]भूयश्च त्रितयं यदि ।
एकत्र [15]मिश्रं [16]जुहुयात्सिद्धये[17] सर्वकर्मसु ॥६७॥

**प्रेतदारु** इति विभीतक[म्] । **पलमात्रं च** [18]**मधुनः** इति [19]**आयुषः शस्यते** इति संबन्धः । **तदुत्कर्षे** तु **पलद्वयम्** इति । **भूयश्च त्रितयं यदि** इति आज्यपयोमध्वात्मकम् ॥६१–६७॥

अथ स्रुचो लक्षणम्—

[20]**स्रुक्प्रमाणे स्मृतं** [21]**दैर्घ्यं दोर्दण्डपरिमाणतः ।**
**षडङ्गुलं भवेद्वृत्तं** [22]**स्रुग्दण्डस्य सुवर्तितम् ॥६८–॥**
[23]**भ्रमयन्त्रविनिष्क्रान्तं** [24]**कार्यमव्रणमादरात् ।**

---

[1] कटुकण्ठकिनो — ऊ, ऋ; करकर्णिकिनो — ओ, क; क्षीरकण्टकिनो — ख; करकण्टकिनो — छ.
[2] विप्र शस्ता — ख; वृक्षा शास्त्रा — ङ; विप्र शस्त्रा० — छ, ज.
[3] ०चारिके — ऊ, ऋ, ज.
[4] ०पुष्टी वशाकर्षे — क; ०पुष्टिवशात्कर्षे — ख, छ, ज.
[5] दध्ना — ओ, क; दग्धुं प्र० — ख; दण्डूः प्र० — छ, ज.
[6] होमं स्रुङ मात्रं चैव — ओ, ङ; होम स्रवमात्रं चैव — क; होमसृङमात्रश्चैव — ख; होमस्त्रं मात्रिश्चैव — छ, ज.
[7] ०मात्रश्चैव — ऊ, ऋ, च.
[8] शासने — ओ, क, ङ, च.
[9] ०मायुषे — ओ, क, ख, ङ, च, छ, ज.
[10] वयः — ओ; वधः — क; पथः — छ, ज.
[11] फलमात्रश्च — ओ, क; फलमात्रं च — ख, ङ.
[12] मधुनः पदोत्कृष्टा — ऊ, ऋ; मधुना सदा तुष्टो — ओ; मधुना सदा कृष्टो — क, ङ; मधुना सदा कृष्टौ — ख, छ; मधुनः सदोत्कृष्टं — च; मधुना सदा तुष्टौ — ज.
[13] फलद्वयम् — क, ख, ङ, छ, ज.
[14] भूतिश्च — क.
[15] मिश्रितं — ओ, क, ख, ङ, छ, ज.
[16] कुर्यात् — ख, छ, ज.
[17] सिद्धचेत् — ओ, ङ, छ, ज.
[18] मधुना इति — ऋ.
[19] आयुः शस्यते — ऊ, ऋ.
[20] स्रुक्प्रमाणं स्मृतं दैर्घ्याद् — ऊ; स्रुक्प्रमाणं स्रुचो दैर्घ्याद् — ऋ; स्रुक् प्रमाणमिदं तन्त्रे — ओ, क; स्रुक्प्रमाणं स्मृतं तन्त्रे — ख, च, छ, ज; हृत्प्रमाणमिदं तन्त्रे—ङ.
[21] दैर्घ्या दोर्दण्डमायतम् — ओ, क, ख, ङ, छ, ज; दैर्घ्याद्दोर्दण्डमानतः — च.
[22] स्रुग्भाण्डस्य सुवृत्तिदम् — ख, छ, ज; स्रुङ्मण्डलं सु० — च
[23] भ्रमयित्वा विनिष्क्रान्तं — ऊ, ऋ; भूमियज्ञश्च निष्क्रान्तं — ओ, क, ङ; भूयन्त्रवच्च निष्क्रान्तं — ख; भूमियन्त्र च निष्क्रान्तं — छ, ज.
[24] कार्यमप्रण० — ओ, क, ख, छ, ज.

[1]स्रुगग्रमायतं कार्यं प्रादेश[2]सदृशं यथा ॥६९॥
[3]भवेन्मानेन विप्रेन्द्र [4]पुष्करं [5]चतुरङ्गुलम्।
[6]वृत्तमुच्छ्रयमानेन [7]द्व्यङ्गुलं [8]खातमिष्यते ॥७०॥
चतुरश्र[9]मधोभागे कर्तव्यं सुसमं शुभम्।
[10]द्व्यङ्गुला [11]मूलदेशे तु [12]कर्तव्या [13]गण्डिका [14]समा ॥७१॥
[15]चतुरश्रा चतुर्दिक्षु [16]नालिकात्र कदाचन।
[17]अग्रं गोकर्णवद्भद्रं प्रणालेन [18]विभूषितम् ॥७२॥
द्व्यङ्गुलेन विचित्रेण [19]मध्यरेखान्वितेन च[20]।
यवमात्रा[21] [22]भवेद्रेखा [23]पुष्करच्छिद्रमेव च ॥७३॥
सम्यग्विजानता[24] कार्या यथा भवति शोभना[25]।
[26]चतुष्पला न त्वधिका न्यूना [27]वा शस्यते [28]शुभा ॥७४॥

---

[1] स्रुवाग्रमायतं — ओ, ख, छ, ज; स्रुवाग्रामायतं — क; स्रुवाग्रमायतः — ङ, समग्रं मानतः — च.

[2] ०सदृशायतम् — ओ, क, ख, ङ, छ, ज.

[3] भावेन्मानेन — ख.

[4] दुष्करं — ख, छ, ज.

[5] चतुरश्रकम् — 'ख' पाठान्तरम्.

[6] वृत्तमुच्छ्राय० — ओ, क, ख, ङ; वृत्तसूत्रप्रमाणेन — च.

[7] द्व्यङ्गुले — ऊ; द्व्यङ्गुल्ये — ॠ; द्व्यङ्गुलयाखात० — ओ, क.

[8] घात० — ङ.

[9] ०मधोभागं — ख, ङ; ०मिथोभागं कर्तव्यमसुसंशुभम् — छ, ज.

[10] द्व्यङ्गुलं — ङ, छ.

[11] मूलदेशेन — छ, ज.

[12] कर्तव्यं — ङ, छ, ज.

[13] चण्डिका — ऊ, ॠ; ग्रन्थिका — ख, ज; ग्रन्थिता — छ.

[14] शुभा — ओ, क, ख, ङ, च.

[15] 'ओ, क, ख, ङ, छ, ज' मातृकासु इदमर्धं '६८' श्लोकोत्तरार्धादनन्तरमेव दृश्यते।; चतुरश्रश्चतु० — ओ, क; चतुरश्राच्चतु० — ख, छ, ज.

[16] नाधिका तु — ऊ, ॠ; नाधिकार — ओ; नाधिकारः — क; नासिकात्र — ख, छ, ज; नाडिकारः — ङ; नाधिका च — च;

[17] अयं गोकर्ण० — च; अग्रं गोवर्ण० — छ, ज.

[18] विभूतिदम् — ङ.

[19] मध्यरेखोनितेन — ओ; मध्यरेखोन्नतेन—क; मध्यमेकान्वितेन च — छ.

[20] तु — ऊ, ॠ.

[21] यावन्मात्रं — ओ, क, ङ, छ; यवमात्रं — ख; यावमात्रं — ज.

[22] भवेद्रख्या — छ, ज.

[23] पुष्करश्छिद्र० — ऊ; पुष्करं चित्र० — ओ; पुष्करं छिद्र० — क, ख, छ, ज; पुष्करक्षिद्र० — च.

[24] ०ग्विधानतः — ओ, क, ङ.

[25] शोभनम् — ओ.

[26] चतुष्पथानामप्यानोक्ताना शस्यते — ओ; चतुष्पथानामप्यधिकानोक्ताना शस्यते — क; चतुष्पलानप्यधिका तेन वा शस्यते — ख; चतुष्पलानामप्यधिकानोन्ताना शस्यते — ङ; चतुष्पदा न त्वधिका न नावाशस्यते — च; चतुष्पले न त्वधिका तो ना वा शस्यते — छ; चतुष्पले न त्वधिकां ते नावा शस्यते — ज.

[27] ना शस्यते — ऊ, ॠ.

[28] समाः — ओ, क, ङ; समा — ख, छ, ज.

[1]वैकङ्कततरोर्ग्राह्या [2]तदभावात्प्रशस्यते ।
[3]श्रीपर्णीदारुसंभूता [4]पैप्पली [5]वाव्रणा [6]शुभा ॥७५॥
[7]ऋज्वी सर्वसमा [8]शस्ता विपरीता न शस्यते ।

**पुष्करच्छिद्रमेव च** इति यवमात्रमेव। एवं हि व्योमव्यापिना चतुरङ्गुला पूर्णाहुतिर्दीयमानोपपद्यत इति भावः। **चतुष्पला [9]न त्वधिका** इति प्रकरणस्था स्रुगेव ॥

अथ स्रुवलक्षणम् —

[10]यन्मयी स्रुग्भवेद्विप्र [11]स्रुवोऽपि हि [12]तदुद्भवः ॥७६॥
हस्तमात्रः[13] [14]प्रकर्तव्यः समोऽव्यङ्गोऽव्रणः[15] [16]शुभः ।
[17]चक्रवाकास्यतुल्येन [18]फणेन सुशुभेन च ॥७७॥
[19]कर्षाहुतिप्रमाणः[20] स्यात्प्रशस्तः[21] सर्वकर्मसु ।
ताभ्यां होमः [22]प्रकर्तव्यः साधकैः शास्त्र[23]वित्तमैः ॥७८॥

[अग्नेर्वर्णाद्यानुगुण्येन कर्मसिद्धिः]

अग्नेर्वर्णाश्च[24] गन्धाश्च[25] [26]शब्दाश्चाकृतयस्तथा[27] ।

---

१ 'ऋ' मातृकायां '७५' तमश्लोको नास्ति ।
२ तदभावे प्र० — ख, छ, ज.
३ श्रीपर्णिसारसंभूता — ओ, क, छ, ज; श्रीपर्णीसारसंभूता — ख, च; श्रीपर्णीसारसंभूतां — ङ.
४ पैप्पला — ओ, क, ख, ङ, च, छ.
५ वा प्रणा — ओ; वव्रणा — ङ; नाव्रणा — — च; वा प्रण — छ, ज.
६ शुभाः — ओ, क; शुभन — छ; शुभौ –ज.
७ ऋज्वि सर्वसमं — ङ; ऋज्वि सद्यसमा–छ, ज.
८ सताष परिनान्वशिष्यते — छ; शस्ता परिनान्व शिष्यते — ज.
९ न त्वधिकत्वे प्रेकरण० — ऋ.
१० धम्मयी स्रुग्—छ; यन्मयी स्रग्—ज.
११ स्रुवश्चापि हि — ऊ; ऋ; स्रुवोऽपी हि — ओ, क, घ; स्रुवो विहि — छ, ज.
१२ तन्मयः — ऊ, ऋ; तदुद्भवा — ख; तदुद्भवम् — छ, ज.
१३ ०मात्रा — ऋ; मात्रं — ओ, क, ख, घ, ङ, छ, ज.
१४ प्रकर्तव्या — ओ, क, ख, घ, ङ, प्रकर्तव्य० — छ, ज.
१५ ०ऽव्यङ्गोऽव्रणा — ओ, क; ०ऽप्यङ्गोऽव्रणा — ख, घ; ०ऽव्यङ्गावणा — ङ; ०ऽप्यङ्गोऽप्रणा — छ, ज.
१६ शुभा — ओ, क, ख, घ, ङ; शुभाः – छ, ज.
१७ चक्रवाकस्य कुण्डेन — ऊ, ऋ; चक्रवाकस्य तुल्येन — ओ, ख, घ, ङ, छ, ज; चक्रवाकस्य तुण्डोन — च.
१८ फलेन — ऊ, ऋ; पणेन — ओ, क, ख, ङ.
१९ कर्माहुति० — ऊ, ऋ;
२० ०प्रमाणं — ओ, क, ख, घ, च, छ, ज.
२१ ०त्प्रशस्तां — ओ, क, ङ; स्या स्वशस्तः – च.
२२ प्रकर्तव्याः — ऊ, ऋ.
२३ ०चिन्तकैः — ओ, क, ख, घ, ङ, छ, ज.
२४ ०वर्णश्च — ऊ; वर्णांश्च — ओ, क, ङ.
२५ गन्धांश्च — ओ, क, ङ; गण्डाश्च — ज.
२६ शब्दाश्चात्र यतःसदा — ओ; शब्दांश्चाक्रयतःसदा — क, ङ; शब्दाश्च कृतयः सदा — ख.
२७ ०कृतयः सदा — घ, छ, ज.

[1]विकाराश्च शिखाश्चैव [2]वेद्याः कर्मप्रसिद्धये ॥७९॥

[वर्णः]

पद्मरागद्युतिः श्रेष्ठो[3] [4]लाक्षावर्णसमोऽपि वा।
[5]बालार्कवर्णो हुतभुग् [6]जयार्थं शस्यते मुने ॥८०॥
इन्द्रगोप[7]कसंकाशः[8] [9]शोणिताभोऽथ पावकः।
[10]शक्रचापनिभः शस्तः कुङ्कुमाम्बुनिभस्तथा[11] ॥८१॥
[12]रक्तानां पुष्पजातीनां [13]तुल्यो वर्णः प्रशस्यते।
दिव्याना[14]मप्यदिव्यानामाकृष्टाविष्यते[15] सदा ॥८२॥
[16]धातुचामीकर[17]प्रख्यो [18]हरितालनिभश्च [19]यः।
[20]हरिद्राकुनटीवर्णो [21]रोचनाभश्च शस्यते ॥८३॥
[22]पीतानां पुष्पजातीनां [23]स्तम्भनेऽग्निः प्रशस्यते।
[24]षट्पदाञ्जन[25]निस्त्रिंश[26]तुल्यो वर्णः प्रशस्यते ॥८४॥
मारणो[27]च्चाटनोच्छेदकर्मण्यस्मिन्नुदाहृतः[28]।

---

[1] विखारणशिखा० — ओ; सखारणशिखा० — क; विकारस्य शिखा० — ख, घ, छ, ज; विकारणं च शिखा चैव — ङ.
[2] वेद्यः कर्म० — छ, ज.
[3] पद्मरागरतिः श्रेष्ठा — ओ; पद्मरागातिश्रेष्ठा — क; पद्मरागद्युतिश्रेष्ठा — ख, घ, ङ; ०द्वितिश्रेष्ठा — छ, ज.
[4] लाक्षारस० — ऊ, ऋ, ओ, क, ख, घ, ङ, छ, ज
[5] बालार्कवर्णे — च.
[6] विजयार्थे प्रशस्यते — ख, घ, ङ; विजयार्थि प्रशस्यते — छ; विजयार्थि प्रशस्यते — ज.
[7] ०प्रतीकाशः — ओ.
[8] ०संकाशाः —ऋ; ०संकाशा — ख, घ, छ, ज.
[9] श्रोणिताभो० — क; शोणिताम्भोधपावकाः — छ; शोणीताम्भोऽथपावकाः — ज.
[10] चक्रचाप० — च; शर्कराप० — ज.
[11] ०स्तदा — छ.
[12] रत्नानां — ख; इदमर्धं 'छ' मातृकायां न दृश्यते।
[13] तुल्यवर्णः — ऊ, ऋ, ख, ज; तुल्येन वर्णः — ङ; तुल्यवर्णं — च.
[14] ०मपि दिव्याना० — ऋ.
[15] ०विस्यते — ऊ, ऋ; विद्यते — क; ०पीष्यते — ख, घ, ङ; ०पिष्यते — छ, ज.
[16] ध्वान्तचामीकर० — ओ, क; ध्मातचामीकर० — ख, घ; ध्मान्तचामीकर० — ङ; ध्वातचामीकर० — छ; ध्वातचामिकर०—ज.
[17] ०प्रख्या — ख; ०प्रख्यौ — घ, छ, ज.
[18] हरितारनिभश्च — ङ.
[19] या — ख, छ, ज.
[20] हरिद्रकनदीवर्णो — ओ, क; हरिद्रनदीपूर्णो—ङ.
[21] रोचनाभा च — ऋ; रोचनाभास्य — ओ, क; रोचनाभस्य — ङ; रोचनांभश्च — छ.
[22] 'ख, छ, ज' मातृकासु इदमर्धं नास्ति।
[23] तुल्यो वर्णः प्रशस्यते — ओ, क, घ, ङ.
[24] षट्पदाञ्जनि० — च.
[25] ०निस्त्रंश० — छ; ०निस्तूल० — ज.
[26] ०तुल्यवर्णेन सिद्धिदः — ऊ, ऋ; ०तुल्यो वर्णो न सिद्धिदः — ख, घ; ०तुल्यवर्णो न सिद्धिदः — च; ०तुल्यो वर्णो न सिद्धिदाम् — छ, ज.
[27] ०च्चाटनच्छेदेकर्म० — ऊ, ऋ; ०च्चाटनेच्छेद० — ख, घ, छ; ०च्चाटनोच्छेदाकर्म० — ङ; ०च्चाटनोत्सादे कर्म० — च.
[28] ०न्नुदाहृता — ओ, क; ०न्नुदाहृताः — ङ.

कृष्णानां पुष्पजातीनां [1]वर्णेनाग्निरिहेष्यते[2] ॥८५॥
शङ्खस्फटिक[3]कुन्देन्दु[4]वर्णोऽन्योऽपि [5]सितः [6]शुभः ।
शान्तिके पौष्टिके चैव [7]विहितः [8]सर्वदानलः ॥८६॥
[9]मार्जाराक्षिनिभो [10]ग्राह्यः शुक[11]पिञ्छाभ एव च ।
मयूर[12]कण्ठसदृशस्तथा पारावतोपमः[13] ॥८७॥
विचित्रो [14]हूयमानो [15]यः [16]सहसैव प्रजायते ।
ज्ञात्वा कर्मानु[17]रूपं तद्यस्य यस्या[18]नुकूलता ॥८८॥
कर्मणः सततं [19]ग्राह्यस्त्याज्यो वा [20]तद्विलोमतः ।

[गन्धः]

[21]सुगन्धिद्रव्यगन्धोऽग्निर्घृत[22]गन्धश्च [23]शोभनः ॥८९॥
आयुषे पद्म[24]गन्धः स्याद्बिल्व[25]गन्धश्च सुव्रत ।
[26]उग्रगन्धोऽभिचारे तु प्रशस्तः [27]सर्वदानलः ॥९०॥

---

[1] वर्णैर्नाग्नि० — ऊ, ऋ; वर्णेनागैरिहे० — ङ.
[2] ०रिहोष्यते — क; ०रिहोच्यते — च.
[3] ०रुन्देन्दु० — छ; ०रुद्रेन्दु० — ज.
[4] ०वर्णोऽन्यापि — ओ; ०वर्णेन्यापि — क; ०वर्णेभ्योऽपि — ख, घ, ङ, छ, ज.
[5] स्थितः — ङ.
[6] शुभैः — ऋ.
[7] शोभनः — ऊ, ऋ
[8] सर्वदानिलः — घ, छ, ज.
[9] 'ङ' मातृकायामयं श्लोको न दृश्यते ।; मार्जाराग्निनिभो — ख, घ, छ, ज.
[10] ग्राह्या — ओ, ख; ग्राह्याः —क.
[11] ०पिञ्जाभ — ऋ; ०पिञ्छाव — घ; ०पिच्छाभ — च.
[12] ०कर्णसदृश० — ओ, क, छ, ज.
[13] ०वतोऽनलः — ओ, क, ख, घ, छ, ज.
[14] च्यायमानौ — ओ; ०च्छ्रायमानौ — क, ङ; च्छ्रायमानोऽयं — ख, घ; ०च्छ्रायमानो य — छ, ज.
[15] च — ओ, क, ङ.
[16] सहस्येव प्र० — ऋ; सहसा देव जायते — ओ, च; सहसा चैव जायते — क; सहसा नैव जायते — ख, घ; सेह सुन्नैव जायते — — छ, ज.
[17] ०रूपं स्याद्यस्य — ओ, ख, घ, च, ज; ०रूपंस्यात्तस्य — क; ०रूपं स्याद्रव्य० — छ.
[18] ०नुरूपतः — ओ, क, ख, घ, ङ, छ, ज.
[19] ग्राह्यो त्याज्यो — ओ, क; ग्राह्यास्त्याज्यो — ख, घ, छ, ज; ग्राह्या त्याज्यो — च.
[20] न विलोमतः — ओ, ङ; न फलो मतः — क; तद्द्विजोत्तम — ख, घ; तद्द्विजोत्तमः — छ, ज.
[21] सुगन्धद्रव्यगन्धोऽपि घृत० — ओ, क; सुगन्धगन्धोऽग्निघृत० — ख, ङ; सुभगेन्द्रस्य गन्धोऽग्निघृत० — छ; सुगसेंद्रव्यगसोऽग्निघृत०–ज.
[22] ०गन्धेश्च — छ; ०गंसेश्च — ज.
[23] शोभनम् — ओ; शेभन — ख.
[24] ०गन्धश्च बिल्व० — ऊ, ऋ; ०गन्धं स्याद्बिल्व० — क, ङ; ०गन्धि स्याद्बिल्व० — ख, घ, छ, ज.
[25] ०गाढश्च सुव्रतः — ङ; ०गन्धेश्च — छ; ०गसेच्च — ज.
[26] पग्रगन्धो — छ; प्रग्रासोऽभि० — ज.
[27] सर्वदानलाः — ऋ; सर्वदानिलः — ख, घ.

नीलोत्पल[1]समो गन्धः [2]सौभाग्ये शस्यते सदा।
[3]पूतिः सर्वेषु [4]कार्येषु नेष्यते मुनिसत्तम[5] ॥९१॥

[शब्दः]

[6]हूयमानो [7]यदा [8]वह्निर्मुञ्चेदम्बुद[9]निस्वनम्।
[10]तदा [11]होतुर्विजानीयात्कर्म[12]सिद्धिमभीप्सिताम् ॥९२॥
जीमूतवल्लकीशङ्खमृदङ्गध्वनितुल्यगः।
शब्दोऽग्नेः[13] सिद्धये [14]होतुरतोऽन्योऽसिद्धये स्मृतः[15] ॥९३॥

[आकृतिः]

[16]छत्राकारभुजः श्रेष्ठो ध्वज[17]चामरयोस्तथा।
[18]वृषकुञ्जरयानेन [19]तुल्योऽग्निः पुष्टिदः[20] सदा[21] ॥९४॥
[22]विमानानां वितानानां प्रासादानां च [23]यो भवेत्।
[24]आकारेणाथ [25]हंसानां मयूराणां च शस्यते ॥९५॥

---

[1] ०समो गन्धो — ऊ, ऋ, ओ, क; ०समागन्धो — ङ.
[2] सौम्येभ्यः शस्यते — क.
[3] प्रतीयः सर्वकार्येषु — ऊ, ऋ; प्रतीपः सर्वकार्येषु — च.
[4] कालेषु — छ.
[5] ०सत्तमः — ङ.
[6] तोयमानो — ङ.
[7] यथा — छ.
[8] वह्निर्मुमोचाम्बुद० — ओ, क, ख, छ, ज; वह्नि र्मुमोचाम्बुज० — घ; वह्निरमोदाम्बुद० — ङ; वह्निर्मुमोचाम्बु च — च.
[9] ०निंस्वनः — ओ, क, ख; ०निस्वना — घ, छ, ज; ०निःस्वनात् — ङ; ०निःस्वनः — च.
[10] त्यदा हेतु० — ङ.
[11] होतुर्व्यंजानीयात् — छ, ज.
[12] ०सिद्धिरभीप्सिता — ओ, क, घ; ०सिद्धिरनीप्सिता — ख; ०सिद्धिरभीप्सितः — ङ; ०सिद्धिरभिप्लुता — छ, ज.
[13] शब्दोऽग्निः — च, छ, ज.
[14] हेतुरतोऽन्ये — ऋ, ख, घ; हेतुरतोऽन्यो — ओ, क, छ, ज; होतुरतोऽन्यः सिद्धिदः स्मृतः—च.
[15] यो सिदा स्मृताः — ङ; ०ऽसिद्धिदा स्मृताः — छ; ०ऽसिद्धिदाप्सता — ज.
[16] छत्राकारा भृगुः — ऊ; छत्राकारभृगुः — ऋ; छत्राकारभृगुश्रेष्ठो — ओ, क; छत्राकारभुजश्रेष्ठा — ख; छत्राकारभुजश्रेष्ठो — घ, ङ; छात्राकारभुजश्रेष्ठो — छ; क्षात्र . . भुजश्रेष्ठो — ज.
[17] ०चामर एव च — ओ, क, ख, घ, ङ, छ, ज.
[18] वृक्षकुञ्जर० — ख, घ; वृक्षकुञ्जाधानेन — छ, ज.
[19] तुल्योऽग्निपुरतः सदा — ओ, क; तुल्या श्रीः पुष्टिदः — ख; तुल्याग्निपुष्टिदः —ध; तुल्याग्निः पुष्टिदः — छ, ज.
[20] पुष्टिदाः — ऋ; पुष्टितः — ङ.
[21] तदा — छ.
[22] विमानाद्धि — ऊ, ऋ; विमानानि — ओ, ख; विमानादि० — क; विमानाद्रि० — च.
[23] वै भवेत् — क; शोभयेत् — ख.
[24] आकारेण तु — ऊ, ऋ; अकारेणाथ —ज.
[25] हण्डानां — ख.

सिंहा[1]कृतिः सदा वह्निः [2]सद्यः सिद्धिकरः स्मृतः ।
[3]शेषाणां दंष्ट्रिणां [4]रूपं [5]न शस्तं होमकर्मणि ॥९६॥
खरोष्ट्रमहिषादीनां [6]रूपमत्र न [7]सिद्धये ।
स्निग्धः [8]प्रदक्षिणावर्तः [9]सुशब्दश्चापि यो भवेत् ॥९७॥
[10]वेद्यः सोऽर्थप्रसिद्ध्यर्थमन्यथा[11] विघ्नचोदकः[12] ।
[13]घनाः स्निग्धाः पिण्डिताश्च [14]निर्धूमाश्चातिसौरभाः[15] ॥९८॥
[16]भास्वराः सर्वदा शस्ताः सिद्धये सर्ववस्तुषु[17] ।
[18]रूक्षश्चटचटा[19]शब्दो ह्यपसव्यगतिस्तथा[20] ॥९९॥
[21]उल्लिखन्वसु[22]धां यश्च [23]यश्चाधः[24]शिख एव च ।
[25]नेष्यते स मुनिव्याघ्र [26]तन्त्रेऽस्मिन्पारमेश्वरे ॥१००॥
[27]वर्णो गन्धोऽथवा शब्दः [28]स्निग्ध एको [29]मनोहरः ।

---

[1] ०कृतिर्यदा — ऊ, ॠ; ०कृतः सदा — ओ; ०कृति तदा — छ.

[2] समासिद्धि० — ओ; समः सिद्धि० — क.

[3] गोषांस्या दंष्ट्रिणां — ख; शोषां हि दंष्ट्रिणां — घ; शोषा स्या दंष्ट्रिणा — छ; शोषा स्या दंष्ट्रिणां — ज.

[4] रूपे — ऊ, ॠ.

[5] प्रशस्तं — ओ, क, ख, घ, ङ, छ, ज.

[6] रूपमन्त्र — क, छ, ज.

[7] सिद्धयेत् — ख.

[8] प्रदक्षिणावर्तसु० — ङ.

[9] सुशब्दाच्चापि — ॠ; सुशब्दः सर्ववस्तुषु — ओ, क, ङ.

[10] 'ओ' मातृकायां '९८' श्लोकः '९९' पूर्वार्धं च नास्ति । वेद्यस्यार्थ० — क; वेद्यः सोऽर्थः प्र० — च; वेद्यः सोद्धि प्र० — छ; वेद्यः सोऽर्थिप्र० — ज.

[11] ०प्रसिद्धयमन्यदा — ङ.

[12] ०चोदिकः — ॠ; ०बोधकः — क; ०कारकः — ख, घ, ङ, छ, ज.

[13] वनाः — क; घना स्निधः — छ, ज.

[14] निर्धूताश्चाति० — ऊ, छ, ज; निर्धूता चाति० — ॠ; निश्चमाश्चाति० — क; निर्धूताश्चापि — ख; निर्धूमश्चाति० — ङ.

[15] ०भास्वराः — ऊ, ॠ; ०भासुराः — ख, घ, च, छ, ज.

[16] 'क' मातृकायामिदमर्धं नास्ति ।; भृगवः — ऊ, ॠ, घ; भारवः — ख, छ, ज; मृगवः — ङ.

[17] ०कर्मसु — ख, घ, छ, ज.

[18] रूक्षच्चटचटाशब्दमप० — ङ; रूक्षश्चटवटा० — ज.

[19] ०शब्दः आपः सद्यगति . . दा – ओ, ङ; ०शब्द आप सद्यगतिः सदा — क; ०शब्द अपसव्यं तु इती सदा — ख; ०शब्द अपसव्यं त इती सदा — घ; बद अपसव्यं तति सदा — छ; बद अपसव्यं ततः सदा — ज.

[20] ०गस्तदा — च.

[21] उल्लिखेद् — ख, च; उल्लेखेद् — घ, छ; मल्लिखेद् — ङ, ज.

[22] ०धातांश्च — ओ; ०यातांश्च — क; ०धां यच्च — च.

[23] यस्याधः शिव० — क.

[24] ०शिघ — ऊ, ॠ.

[25] नेष्यतेऽसौ — ओ, ख, घ, ङ, च, छ; ज; नेष्यतेऽष्टौ — क.

[26] शास्त्रे० — ओ, क, ख, घ, ङ, च, छ, ज.

[27] वर्णगन्धो — ओ, क.

[28] स्निग्धवेगो — च.

[29] मनोरमः — ओ, क, ङ.

[1]क्षीणो हि कार्यसिद्धयर्थं [2]वह्निस्त्याज्यः सदा बुधैः[3] ॥१०१॥

सिद्धय[4]सिद्धिनिमित्तमेभिर्विकारैर्वह्निं लक्षयेत् । तत्र पद्मराग इत्यादिना वर्णलक्षणम् । कुनटीवर्णः इति कुनटी मनःशिला[5]। ... .... .... ...

[सिद्धयानुगुण्येन दिक्षु कुण्डकल्पनम्]

चतुरश्रं भवेत्कुण्डं चतुर्विंशतिकाङ्गुलम्[6] ।
[7]कार्यं [8]त्रिमेखलं मध्ये कुलिशेनाथ [9]लाञ्छितम् ॥१०२॥
सर्वसिद्धिप्रदं[10] नृणां पूर्वस्यां [11]विहितं सदा ।
[12]आग्नेय्यां दिशि सौभाग्ये कुण्डं कुर्याद्भगाकृतिम्[13] ॥१०३॥
[14]याम्यायामर्धचन्द्रं [15]स्याच्छान्त्यै तद्विहितं मुने ।
त्रिकोणं [16]मारणे शस्तं नैर्ऋत्यां [17]तु प्रकल्पयेत् ॥१०४॥
वारुण्यां [18]वर्तुलं [19]शस्तं पुष्टयै [20]राज्यार्थमेव च ।
वायव्यामपि कर्तव्यं पञ्चकोणं समं शुभम् ॥१०५॥
उच्चाटने मुनिव्याघ्र पद्मा[21]कारमुदग्दिशि ।
[22]दिव्यसिद्धौ [23]सदा शस्तं कुण्डं [24]पद्मदलान्वितम् ॥१०६॥

---

[1] क्षणाधिकारी सिद्धयर्थे — ऊ, ॠ; क्षीणोभिकासिसिद्धयर्थं — ओ; क्षीणोगिकासिसिद्धयर्थं — क; क्षणाद्वा कार्यसिद्धयर्थं — ख, घ, छ, ज; क्षाद्वा कार्यसिद्धयर्थं — ङ; क्षणाद्विकारी सि० — च.

[2] वह्निस्त्याज्या — ऊ, ॠ; वह्निः स्याद्यः सदा भवेत् — ओ, ङ, वह्निः स्यार्धः सदा भवेत् — क; वह्निस्याद्यः सुधबुधैः — ख; वह्निस्याद्यः सुधा बुधैः — घ; वह्निः स्याद्यः सुदा बुधैः — छ, ज.

[3] 'ऊ, ॠ' मातृकयोः '१०२' श्लोकादारम्य पञ्चमपटले दशमश्लोके 'दिशोऽवलोक्य नेत्राभ्याम्' इत्यन्तो भागो लुप्तः ।

[4] ०सिद्धनिमित्त० — ॠ.

[5] इतः परं पञ्चमपटलस्थतृतीयश्लोकोत्तरार्धस्यैव वृत्तिरुपलभ्यते, मध्यभागो लुप्तः ।

[6] ०विंशति चाङ्गुलम् — ओ; ०विंशतिरङ्गुलम् —क, ङ, ०विंशत्तदङ्गुलम् — ख, घ, छ, ज.

[7] कार्या — ख, घ.

[8] त्रिमेखला — ओ ख, घ, छ; त्रिमेखलो — क; त्रिमेखले — ङ.

[9] संयुतम् — च

[10] ०प्रदां — ओ, क .

[11] विभिनः — ओ; दन्तिनः — क; विहितः —ङ; वहितं — छ; वहितं — ज.

[12] आग्नेय्यामपि सौ० — ख, घ, च, छ, ज.

[13] ०कृति — च.

[14] याम्यां दिश्यर्धचन्द्रं — ख.

[15] स्याच्छत्रौ — च.

[16] मरणे — क, ख, घ.

[17] तत्प्रकल्प० — घ, च, छ, ज.

[18] वर्तुला — घ, छ; वर्तुलां — ज.

[19] शब्दं — ख.

[20] राज्यत्वमेव — ख, घ, छ, ज.

[21] ०कारमिदं दिशि — ङ; ०कारमुदं दिशि — छ.

[22] विद्यासिद्धौ — छ.

[23] तदा — ख, घ.

[24] पद्मोदरान्वितम् — ख; पद्मोदराङ्कितम् — घ, च; पद्मोदरोः कितम् — छ, ज.

[1]ऐशान्यामष्टकोणं स्याद्योगसिद्धावभीप्सितम्[2]।
कर्तव्यं [3]सुदृढं [4]भद्रं [5]पक्वेष्टकासुसंचितम् ॥१०७॥
[6]अथ सर्वेषु कार्येषु वर्तुलं स्यात्त्रिमेखलम्।

[ वृत्तकुण्डलक्षणम् ]

हस्तमात्रं [7]प्रकर्तव्यं शृणु लक्षणतोऽधुना ॥१०८॥
[8]स्वमानद्वयङ्गुलं [9]त्याज्यं [10]बहिर्वृत्तं [11]मनोरमम्।
चतुरङ्गुल[12]वत्कार्यं [13]तदधश्चापरं[14] शुभम्[15] ॥१०९॥
[16]त्र्यङ्गुलं चापि कर्तव्यं [17]द्वयङ्गुलोपरि [18]मण्डितम्।
द्वयङ्गुलेनाथ [19]दिव्येन सोच्छ्रायेण पृथक् पृथक् ॥११०॥
नाभिरभ्युन्नता[20] मध्ये [21]निम्नार्धेन्दुसमा बहिः।
[22]कार्याभ्यन्तरतो वापि किंचिदग्रे [23]स्रुवाकृतिः ॥१११॥
एवं [24]सर्वेषु कुण्डेषु [25]स्वाकारेणैव मेखला।
[26]कर्तव्या [27]साधकेन्द्रैस्तु बुद्ध्वा[28] शास्त्रं [29]शिवोदितम् ॥११२॥

---

[1] ईशान्या० — च.
[2] ०सिद्धिरभीप्सिता — ओ, क, ख, घ, ङ, छ, ज.
[3] सा दृढं — छ, ज.
[4] पद्मं — ख, घ, छ, ज; भव्यं — च.
[5] पक्वेष्टकसु० — ख, घ, ङ, छ, ज.
[6] अत सर्वेषु —ओ; अथवा सर्वकार्येषु — ख, घ, ङ, च, छ, ज.
[7] च कर्तव्यं — च.
[8] स्वनामाद्यङ्गुलं — ओ, क; समाना द्वयङ्गुलं — ख; समानाद्यङ्गुलं — घ; स्वनामाद्द्वयङ्गुलं — ङ; स्वमानाद्द्वयङ्गुलं — च; स्वमानाद्यङ्गुलं — छ, ज.
[9] त्याम्य — ओ, क; त्याज्य — ख, घ, छ, ज; त्यज्य — ङ, च.
[10] बहिर्वृत्ता — ओ, क, च; त्वहिवृत्तं — छ; त्वही घृतं — ज.
[11] मनोरमा — ओ, च.
[12] ०वत्कार्या — ओ, च.
[13] तदर्थं चापरं — ख, घ, ज; तदर्धं चाचरं –छ.
[14] ०श्चापरा — ओ, ङ, च.
[15] शुभा — ओ, ङ.
[16] त्र्यङ्गुलावपि — ओ, क; त्र्यङ्गुलस्यापि ख, घ, छ, ज; त्र्यङ्गुलापि प्रकर्तव्यं — ङ; त्र्यङ्गुला वापि कर्तव्या — च.
[17] द्वयङ्गुला परि० — च.
[18] मण्डिता — ओ, ङ; मण्डला — ख, घ, च, छ, ज.
[19] रिप्येन सोच्छ्र्येण — घ, छ, ज; दिव्येन सोत्सेधेन — च.
[20] ०रप्युन्नता — ख; ०रप्युन्नतं — छ, ज.
[21] निम्नाद्येन्दुसता बहिः — ओ, क; निम्नार्धेन्तुसमाहितः — ख, घ, ज. निम्ना सेन्द्रसमा बहिः — ङ; मध्यमानर्धेन्दुसमाहितः — छ.
[22] कार्या ह्यन्तरतो — ख; कार्या चाभ्यन्तरे — च.
[23] स्रुजाकृतिः — च; स्रुवाकृती — ज.
[24] कुण्डेषु सर्वेषु — च.
[25] स्वकारेणैव — ओ, क; स्वेनाकारेण — ख, घ, छ; श्वेताकारेण — च; स्वेनाकारेव — ज.
[26] कर्तव्याः — ङ.
[27] पावकेन्द्रैस्तु — छ.
[28] बद्ध्वा — ङ.
[29] शिखोदितम् — ज.

[मन्त्राद्यनुरोधेन कुण्डकल्पनम्]

[1]मन्त्राणामप्यथैन्द्राणां चतुरश्रं प्रशस्यते।
सौम्यानां वर्तुलं [2]शस्तमुग्राणां तु त्रिकोणकम् ॥११३॥
[3]तैजसानां भगाकारं [4]पञ्चाश्रं [5]मारुतात्मनाम्।
पद्माकारं तु सिद्धीनां वृत्तं सर्वार्थसिद्धिदम् ॥११४॥
अष्टकोणं च यत्रोक्तं साक्षात्सिद्धिफलप्रदम्।
एवं ज्ञात्वा सदा मन्त्री यत्नात्कुण्डं [6]प्रकल्पयेत् ॥११५॥

[होमानुगुण्येन कुण्डप्रमाणम्]

शान्तिके नित्यहोमे च [7]तच्चतुर्विंशदङ्गुलम्।
कार्यं [8]साहस्त्रिके होमे द्विहस्तं मुनिपुङ्गव ॥११६॥
शत[9]साहस्त्रिके कार्यं चतुर्हस्तं मनोरमम्।
कर्तव्यं कोटि[10]होमे तु नित्यमष्टकरं शुभम् ॥
कुण्डानां यावती [11]वृद्धि[12]स्तावती मेखलास्वपि ॥११७॥
अग्नेर्विधानं [13]प्रयतं [14]मयोक्तं समासतश्चा[15]प्यधुना यथावत्।
दीक्षा[16]क्रमं चाप्यधिवासनाद्यं प्रभोः समासादव[17]धारयस्व ॥११८॥

... ... ... ... ... ...

[इति श्रीभट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ
क्रियापादे अग्निकार्यप्रकरणं चतुर्थं समाप्तम्]
चतुर्थः पटलः ॥

---

[1] मन्द्राणामप्यचन्द्रोणं — ख; मन्त्राणामप्यन्द्रोणं — घ; मन्द्राणामप्यथै० — ङ; मन्त्राणामप्य . . द्रोणं — छ, ज.

[2] शस्तमृगाणां — ङ; शश्वमुग्राणां — छ; शश्वस्तमुग्राणां — ज.

[3] भगाकारं तेजसां च — ओ, क, ङ; भगाङ्का तु तैजसानां — घ, छ, ज, भगाकारं तैजसानां—च.

[4] पञ्चाग्रं — क; पञ्चाश्रयं — ङ; पञ्चास्त्रं — च.

[5] मरणात्मनाम् — ओ, क, ख, घ, ङ, छ, ज; 'ख, घ, च, छ, ज' मातृकासु '११४' उत्तरार्धं '११५' पूर्वार्धं च न स्तः।

[6] परीक्षयेत् — ओ, क, घ, ङ, च, छ, ज.

[7] चतुर्विंशद्लाङ्गुलम् — ख, घ, छ, ज; न चतुर्विंश० — च.

[8] साहस्रके होमे — ओ, क; साहस्त्रिकैर्होमे — ख.

[9] ०साहस्त्रिकं — च.

[10] ०होमेन नित्यमष्टाकरं — ओ, क; ०होमेऽपि — च; 'घ' मातृकायां 'नित्यमष्टकरं' इत्यारभ्य पञ्चमपटले '१६' तमश्लोकस्य प्रथमपादे 'दृष्टकर्मा' इत्यन्तो भागो लुप्तः।

[11] वृत्तिस्तावती — ओ, क, ङ.

[12] ०स्तावत्तन्मेखलास्वपि — ख, च; तावतं मेखलास्वपि — छ; तावत्तं मेखलास्वपि —ज.

[13] प्रयतो मयोक्तः — च.

[14] मनोक्तं — ख.

[15] ०प्यथवा — च.

[16] ०क्रमोऽथोऽप्यथ वासनाद्यं — ख; ०क्रमः सोऽप्यधिवासनाद्यः — च; ०क्रमाथोऽप्यसिवासनाद्यं — छ; ०क्रमायोऽप्यधिवासनाद्यं —ज.

[17] ०धारयध्वम् — ख, छ, ज; ०धारय त्वम्—ङ.

## पञ्चमः पटलः

### अधिवासप्रकरणम्

[1]अतः परं प्रवक्ष्यामि दीक्षाविधिमनुत्तमम्[2]।
क्षेत्रमादौ [3]परीक्षेत पूर्ववल्लक्षणान्वितम् ॥१॥
दर्पणोदरसंकाशं कृत्वा कार्यं [4]सुवेष्टितम्।
यज्ञद्रव्याण्यशेषाणि [5]समाहृत्य [6]प्रयत्नधीः ॥२॥
पूर्वोक्तेन विधानेन [7]स्नात्वा चैव [8]सुयन्त्रितः।
विद्यापादार्थकुशलः क्रिया[9]पादगत[10]क्रमः ॥३॥
योगपाद[11]कृताभ्यासश्चर्यापादानुवर्तकः।
... ... ... ... ..

**विद्यापादार्थ**योगः समस्ततत्त्वादिविचारात्मकः, तत्र **कुशलः** [12]क्षमः, यत्र बुद्धिरुच्यते। तथा **क्रियापादा**भिधेय[13]दीक्षायाः **गतः** अधि[14]गतः **क्रमः** येन; अभ्यस्तदीक्षाक्रम [15]इत्यर्थः। तथा दीक्षोत्तरकालमनुष्ठेयत्वेन चोपपादित**योगपादार्थ**भावनानिष्ठः, **चर्या**[16]**पादार्थ**स्य च नित्यनैमित्तिककाम्यनिषिद्धपरिहारादेः **अनुवर्तकः**। न तु स्वच्छन्दचारी कुलाचार्यो वेत्यर्थः॥

सितचन्दन[17]लिप्ताङ्गः श्वेतमाल्यविभूषितः[18] ॥४॥
[19]सुश्लक्ष्णसित[20]वस्त्राढ्यः सुधूपामोद एव च।
मकुटेन विचित्रेण स्फुरन्माणिक्कतेजसा[21] ॥५॥
मुक्ताफलमये शुभ्रे [22]कुण्डले [23]रुक्मसंचिते।
[24]चित्रे [25]कर्णावलम्बे तु कण्ठे मणिविभूषितम् ॥६॥

---

[1] अथातः संप्र० — च.
[2] ०मनुक्रमम् — ओ, क, ङ.
[3] परीक्ष्येत — क.
[4] विचेष्टितम् — ख, छ, ज.
[5] समावृत्य — क.
[6] सुयत्नधीः — ख, छ, ज; प्रयत्नतः — च.
[7] स्नात्वाचम्य — ख, ङ, च, छ, ज.
[8] स्वतन्त्रितः — ओ, क.
[9] ०पादागमक्रमः — ङ; ०पादसुपेशलः — च.
[10] ०क्लमः — ओ.
[11] ०कृताभ्यासं चर्या० — च.
[12] क्षमा — ऊ, ॠ.
[13] दीक्षाण्ये गतो — ऊ, ॠ.
[14] ०गतं — ॠ.
[15] इति भावः — ॠ.
[16] ०पदार्थस्य च नित्यनैमित्तिकानिषिद्ध०—ऊ, ॠ.
[17] ०लिप्ताङ्गश्वेत० — ख, छ; ०दिग्धाङ्गः —च.
[18] ०माल्याभिभूषितः — ज.
[19] सुश्लक्ष्णः सि० — ओ, घ; सुश्लक्ष्णवन्ति —ङ.
[20] ०वक्त्राढ्यः सु० — ख; ०वक्त्राढ्यसु० — ङ; ०वस्त्राङ्गः — च.
[21] माणिक्यतेजसा — ङ, च.
[22] कुशले — ज.
[23] रुग्म० — ङ; ०गम संचिते — छ, ज.
[24] च्छत्रे — ओ, घ; चत्रे — क; छिद्रे — ख, ङ, छ, ज.
[25] कर्णवलम्बे — क; कर्मावलम्बे — ङ.

[1]नायकेन विचित्रेण [2]मध्ये नीलेन वर्चसा ।
पद्मरागमयेनाथ [3]लक्षणैर्लक्षितेन च[4] ॥७॥
सुक्ताभरणं[5] भद्रं ब्रह्मसूत्रं च मौक्तिकैः ।
निर्मितं [6]वर्तुलं भद्रं कटिसूत्रं च काञ्चनम् ॥८॥
कटके च शुभे [7]धार्ये [8]वज्रपङ्क्तिसुवर्चिते ।
[9]धार्यं दक्षिणहस्तेन [10]रत्नाढ्यं [11]त्वङ्गुलीयकम् ॥९॥
[12]ततश्चोप[13]विशे[14]न्मौनी [15]कौबेरीदिङ्मुखः सदा ।
दिशोऽवलोक्य [16]नेत्राभ्यां [17]पिङ्गपिङ्गमनुं स्मरेत् ॥१०॥

स यथाविभवं वस्त्रालंकारभूषितः [18]सामान्यप्रकरणोक्तयागगृहं प्रविश्योत्तराभिमुखम् **उपविशेत्**। केवलं तत्र [19]"स्थानं प्रथमशब्देन निरीक्ष्य" इत्युक्तं तद्बाधनायात्र **पिङ्गपिङ्ग**[20]**मनुं स्मरेद्** इति ॥४–१०॥

ततः [21]पूर्वोदितं सर्वं [22]कृत्वार्घान्तावसानकम् ।
पञ्चगव्यं च विधिव[23]त्कार्यं"

**ततः** तत्र **पूर्वोदितं** करन्यासमन्तर्यागं, बहिः शिवतनुं, करद्वयकृतशक्तिमुद्रातालत्रयेणास्त्रेण यागगृहविघ्ननिवृत्तिं, भूरितिपदेन भुवः, पतङ्गपदेन [24]नभसः, [25]शिवकवचेन च दिशां बन्धम्, अष्टाङ्गार्घान्तं च सर्वं कृत्वा, **पञ्चगव्यं** कुर्यात् ।

---

[1] सर्वासु मातृकासु '७, ८' श्लोकौ विपर्यस्तौ; नायकेनाथ चित्रेण — च.
[2] मध्ये निलेन — ज.
[3] लक्षणे लक्षितेन — ख.
[4] तु — च.
[5] सुक्ताहरणं — ख; सुक्तमाभरणं — छ, ज.
[6] वर्तुलैर्भद्रैः — च.
[7] कार्ये — च.
[8] वज्रे पङ्क्तसुवर्चिते — ओ, क; वज्रमौक्तिकतच्चिते — ख; वज्रे पङक्तिषु च सर्जिते — ङ; वज्रपङ्क्तिषु संस्कृते — च; वज्रवृत्तिचर्चिते — छ; वज्रविर्ति चर्चिते — ज.
[9] धार्ये दक्षिण० — क; धार्यदक्षिण० — ङ.
[10] रत्नाढ्या — छ.
[11] चाङ्गुलीयकम् – ख, छ, ज; अङ्गुलीयकम्–च.
[12] 'ओ' मातृकायां दशमश्लोकः एकादशश्लोकपूर्वार्धं च न दृश्येते
[13] ०विशोन्मौनि — छ; ०वरोन्मौनि — ज.
[14] ०न्मौलिनि कौबेर्यन्दादिङ्मुखः सदा — ङ; ०न्मन्त्री कोबेर्याभिमुखः — च.
[15] कौबेर्यां दिङ्मुखः — छ; कौबेर्यं दिङ्मुखः–ज
[16] नैर्ऋत्यां — च.
[17] पिङ्ग पिङ्ग तनुं स्मरन् — ऊ; पिङ्ग पिङ्गमनुस्मरन् — ॠ, क, ख, च, छ, ज.
[18] मतङ्ग० क्रिया० ३.३–७.
[19] मतङ्ग० क्रिया० ३.७उ०.
[20] ०मनुस्मरेत् — ऊ, ॠ.
[21] पूर्वादितः — ख, छ, ज.
[22] कृत्वार्घान्तावसानिकम् — ऊ; कृत्वार्घावान्तिसानिकम् — ॠ; कृत्वा चैवोपवासकम् — क; कृत्वा ध्वान्तवसानकम् — ख; कृत्वाभ्यर्घ्याग्निोपसानकम् — ङ; कृत्वाघर्म्भोवसानिकम् — च; कृत्वा ध्वान्तोवसानकम् — छ; कृत्वा ध्वान्तावसानकम् – ज.
[23] ०त्कार्यमन्त्र० — च; कथ्यं मन्त्र० — छ; कृथ्यं मन्त्र० — ज.
[24] 'ऊ, ॠ' मातृकयोः 'नभसः' इत्यस्य स्थाने 'भमः' इति दृश्यते ।
[25] 'सर्वव्यापिने' इति मन्त्रेण । मतङ्ग० क्रिया० १.६० उ०–६४पू०.

येन त्वत्र एतच्छास्त्रक्रमं विहाय **स्वतन्त्रपद्धतिक्रम** उल्लिखितः [१]स्वच्छन्दमुपेक्षणीय एव। यतो यत्रेतिकर्तव्यता न श्रूयते, तत्राकाङ्क्षाबलात् संहितान्तरतस्तदपेक्षा युक्ता, न सर्वत्रानवस्थिते-रित्युक्तम् —

[२]"क्रियादिभेदभेदेन तन्त्रभेदो यतः स्मृतः।
तस्मात्तत्र यथैवोक्तं कर्तव्यं नान्यतन्त्रतः॥" इति।

तत्रापि च स्वस्रोतस [३]एवैकस्रोतोपदेशरूपत्वेन [४]संनिकर्षात्; न स्रोतोऽन्तरतः। अत एव विप्र-कर्षे [५]द्विरुद्धानुष्ठानप्रसंगाच्चेत्युक्तमस्माभिरन्यत्र[६] —

"न च शास्त्रान्तरे कर्तुं युक्तं शास्त्रान्तरश्रुतम्[७]।
शास्त्र[८]स्यान्यानपेक्षत्वात्पुंबुद्धिप्रभवं हि तत्" ॥इति॥

**[९]"मन्त्रगणेन तु ॥११॥**
**सद्योजातेन मन्त्रेण गोमयं [१०]चाभिमन्त्रयेत्।**
**गोमूत्रं वामदेवेन मन्त्रयेच्छास्त्रवित्तमः[११] ॥१२॥**
**बहु[१२]रूपः सदा ज्ञेयो दध्नश्चैवाभिमन्त्रणे[१३]।**
**[१४]पयसः पुरुषो नित्यं [१५]घृतस्येशः प्रशस्यते ॥१३॥**
**[१६]गायत्र्या मन्त्रयेन्मन्त्री [१७]कुशाम्भो विधिवत्सदा।**
**[१८]व्यस्ताभि[१९]मन्त्रणं [२०]कृत्वा पश्चादेकत्र कारयेत् ॥१४॥**
**सौवर्णे राजते [२१]पात्रे [२२]मृण्मये वा सुशोभने।**

---

[१] स्वच्छन्दर्युपेक्षणीय — ऊ, ॠ.
[२] अयं श्लोकः सार्धत्रिशतिकालोत्तरे ४.१उ०, २ पू० वृत्तौ 'उक्तं सिद्धगुरुभिः' इति निर्दिश्योद्धृतः। एतच्छ्लोकसदृशः कामिके उत्तर-भागे स्नपनविधिपटले २२७, २२८पू० श्लोक-तया दृश्यते —
"क्रियामन्त्रादिभेदेन शास्त्रभेदो न वा भवेत्।
क्रियामन्त्रादिभेदेन तन्त्रभेदो यतस्ततः॥
तस्मात्तत्र च शैवोक्तं कर्तव्यं नान्यशास्त्रतः।" इति।
[३] एवैके स्रोतो० — ॠ.
[४] संनिकर्षानुस्रोतो — ॠ.
[५] ०द्विरुद्धान्नष्टन० — ऊ; ०दिरुद्धावद्धानु-प्रसङ्गा चेत्युक्त० — ॠ.
[६] आकरो न लभ्यते।; सार्धत्रिशतिकालोत्तरे ४.१.उ० २ पू० वृत्तावप्येवमेवोद्धृतः।
[७] ०श्रुतिम् — ऊ, ॠ; सार्धत्रिशतिकालोत्तर-वृत्तिमनुसृत्यात्र पाठः शोधितः।
[८] ०स्यान्यानुपक्षत्वात् — ॠ.
[९] मन्त्रं तृणेन — क; अत्र गणेन — ङ.
[१०] चापि —ङ.
[११] ०वित्तमाः — ॠ; वित्तमम् — ख.
[१२] ०रूपं सदा ज्ञेयं — ओ, क, ख, ङ; ०रूपस्तदा — छ, ज.
[१३] ०मन्त्रयेत् — ओ, क, ख, ङ, छ, ज.
[१४] पयस्तत्पुरुषो — ऊ, ॠ, ख, छ, ज.
[१५] घृत . . ते — ओ; घृतमेवं प्रशस्यते — क; घृतेशश्च प्रशस्यते — ख, छ; घृतमीशः — च; प्रदेशश्च — ज.
[१६] गायत्र्यं — ङ.
[१७] कुशाम्भो दधिवत्सदा — ॠ; कुशाम्बु विधि० — च; कुशनम्भो — छ; आशनम्भो०— ज.
[१८] विस्तादिमन्त्रिणं — छ, ज.
[१९] ०मन्त्रितं — ओ, क, ङ.
[२०] 'ओ, क' मातृकयोः 'कृत्वा' इत्यारभ्य 'भूयो-ऽभिमन्त्रणं' इत्यन्तं नास्ति।
[२१] ताम्रे — ऊ, ॠ.
[२२] मृन्मये वाथ शोभने — च; मृन्मये वा सु-शोभने — छ, ज.

[1]भूयोऽभिमन्त्रणं शस्तं [2]मन्त्रसंहितया सकृत् ॥१५॥

तत्रादौ गोमयगोमूत्रतद्दधिक्षीर[3]घृतानि क्रमेण सद्योजातादिभिः सामर्थ्याद्यथास्वं ब्रह्मादिङ[4]निवेशित-तयात्र स्थितान्येव। पृथक् कुशोदकं च **गायत्र्या** अभिमन्त्र्य, ततः [5]पात्रान्तरे तेनैव क्रमेणैकी-कृत्य **संहितया** अभिमन्त्रयेदिति ॥११–१५॥

अथाचार्येण दीक्षा[6]कालेऽन्यैव शिवतनुः कार्येत्युच्यते —

**दृष्टकर्मा शुचिर्दक्षः [7]शिष्यानुग्रहतत्परः।**
**शिववद्[8]भावयेन्नित्यमात्मानं देशिकोत्तमः ॥१६॥**

[9]प्रागुक्तविशेष आचार्य एव **आत्मानं शिववद्** ध्यायेत्; न शिष्य इत्यर्थः। सोऽपि च **शिष्यानुग्रहतत्परः** [10]वक्ष्यमाणदीक्षाशब्दवाच्यप्रधानकर्मानुष्ठानपरो यदा भवति, तदैव कुर्यात्; न [त]तः प्रागधि[11]वासया[गा]र्थं मण्डलयागार्थं वा। नाप्यत्र नित्यादिस्व[12]कर्मणि शिवतुल्यस्य याग उपपद्यते यतः। तत्र [13]तु पूर्वस्या एवाङ्गत्वं [14]प्रेर्यत्वानिवृत्तेः। अत एव न दीक्षा[या] यागत्वम्; अपि तु आचार्याभिव्यक्तशिवकर्तृकं[15], मन्त्राधिकरण[16]माज्याहुत्याद्यभिव्यक्तं, शक्तिपाताघ्रातपुरुष-विषयं, बन्धनिवृत्त्यादिफलं संस्कारकर्मैव सेति दर्शयिष्यामः[17]। एवं च सति [18]वक्ष्यमाणप्रकरणक्रमेण समयसंस्कारान्तं दीक्षाङ्गचक्रं [19]निर्वर्त्य, [20]पूर्वसमयिनस्तु श्रुत्यादिसंपन्नस्य मण्डलतर्पणान्तान्येव दीक्षा-ङ्गानि संपाद्य, पुनर्मण्डलस्थस्य [21]वीक्षणादिकं [22]कृत्वा भगवतो दक्षिणस्यां मूर्तौ जानुभ्यां स्थित्वैवं-विधां विज्ञप्तिकां कुर्यात्—"भगवन् भगवतैव गुर्वधिकरणेन ममाभिषेककाले नियमोऽत्र[23] दत्तो यथा—
"[24]मच्छक्त्याधिष्ठिताः शिष्या अनुग्राह्यास्त्वया सदा" इति।

तदमी तथाभूता एवेति [25]मया यथावत्परीक्षिताः। मम चोपाध्यन्तरानपेक्षयैते दययैवानुग्राह्या-

[1] भूयो भूमन्त्रिणं शक्तं — ङ; भूयो हि मन्त्रणं — च.
[2] मन्त्रसंनिहितः सकृत् — च.
[3] ०कृतानि — ऊ, ऋ.
[4] ०निवेशितयात्र — ऊ; ०निवेशतयात्र — ऋ.
[5] पाकान्तरे — ऊ, ऋ.
[6] ०कालेऽन्येव — ऊ; ०काल्येऽन्येव — ऋ.
[7] सृष्टयनुग्रह० — च.
[8] भाव्यन्नित्य० — ख, घ, छ, ज.
[9] मतङ्ग० क्रिया० ५.३-१०.
[10] मतङ्ग० क्रिया० ७.२० वृत्तौ।
[11] वासयामर्थमण्डल० — ऋ.
[12] कर्मणि न शिवतुल्य० — ऋ.
[13] मूपर्वस्या — ऋ.
[14] प्रेर्यतानिवृत्तेः — ऋ.
[15] ०कर्तृत्वं — ऋ.
[16] ०सायुज्याहुत्या० — ऊ.
[17] मतङ्ग० क्रिया० ५.३४-५०; ७.२० वृत्तौ।
[18] मतङ्ग० क्रिया० ७.१-१६ श्लोकेषु प्रोक्तक्रमेण.
[19] निर्वृत्य — ऋ.
[20] 'पूर्वसमयिनः' इत्यारभ्य 'पुनः' इत्यन्तं 'ऋ' मातृकायां नास्ति।
[21] उभयोरपि मातृकयोः 'वीक्षणादिकं' इत्यस्य स्थाने 'दीक्षादिकं' इत्येव पाठो दृश्यते। असङ्गत-त्वादत्र 'वीक्षणादिकं' इति पाठः साधितः।
[22] दत्वा — ऊ.
[23] 'अत्र' इति 'ऊ' मातृकायां नास्ति।
[24] इदमर्धम् अभिषेकप्रकरणे स्थातव्यम् इति भाति। किं तु तत्र नोपलभ्यते। एतत्समा-नार्थकश्लोकार्धं 'अनुग्राह्यास्तथा शिष्याः शास्त्र-दृष्टेन कर्मणा' इति सर्वज्ञानोत्तरे क्रियापादे अभिषेकप्रकरणे '२०' तम श्लोकस्य पूर्वार्धतया दृश्यते।
[25] मयावत्परीक्षताः — ऋ.

त्वेन व्यवस्थिता इति भगवानेव सर्वज्ञत्वाद्विजानाति। तन्मम विशेषाधिष्ठानं [1]भगवान् करोतु; येन त्वया सहैककारकीभूयानुग्रहमेषां संपादयामि। यतस्त्वदधिष्ठानं विनानन्तादयोऽपि विद्येशास्त्वच्छक्त्यानादिनिरुद्धत्वान्न विमोक्तुं शक्नुवन्ति" इति [2]विज्ञाप्य, तदुत्तरभूतामीश्वराज्ञामेवंविधां भावयेत् — "एवं करोम्यनु[3]तिष्ठ मद्विहितम्" इति। ततो विशेषाधिष्ठानात् "यथायं शिवो बन्धनानां विच्छेदस्य, शिवत्वव्यक्तेश्च कर्ता तथैवाहमस्मिन् प्रयोगे; ये चास्य मन्त्रा गर्भाद्यावरणपूज्या विनियोज्यास्ते [4]सर्वं एव मम; यच्चास्य कर्तव्यं तन्ममैव" इति **शिववत्** कारकांशेनाभिन्नम् **आत्मानं भावयेत्**। व्योमव्यापिनमुच्चारयेत्[5] संहितां वा। यद्वक्ष्यत्यत्रैव —

[6]"आचार्यः स्वतनुं ध्यायेत्पञ्चमन्त्रमयीं शुभाम्।
[7]संस्मरन्संहितां पूर्णां शक्तिं वाथ पदात्मिकाम्" इति॥१६॥

[8]एवमिमां परां शिवतनुं कृत्वा, ततः शिवहस्तं कुर्यादिति। तदर्थमेतत् —

**[9]सुगन्ध[10]गन्धगन्धाढ्यं करं कृत्वा तु दक्षिणम्।**
**[11]तन्मध्ये विन्यसेद्धीमान्ब्रह्माङ्गसहितं[12] शिवम्॥१७॥**
**गन्धपुष्प[13]पवित्राद्यैः [14]पूजयेच्च यथाक्रमम्।**
**[15]तस्मिंस्तेजः परं[16] ध्यात्वा[17] सर्वकर्माणि [18]कारयेत्॥१८॥**
**शिव[19]हस्त इति प्रोक्तः पाशानां [20]नाशने शुभः।**

**सुगन्धेन** सामान्यप्रकरणोक्तेन[21] गन्धप्रियङ्ग्वादिना **गन्धाढ्यम्** उद्वर्तिततद्द्रव्यं **गन्धैश्च** धूपादिभिः। **करं दक्षिणम्** इति अर्थाद्वामहस्ते[न] **कृत्वा तन्मध्ये ब्रह्माङ्गसहितं शिवं** तेजोरूपमेव **ध्यात्वा**, विन्यस्य, पूजयित्वा, तेन **तस्मिन्** तत्त्वात्मनि भुवनरूपे वा स्थाने **कर्माणि** पाशच्छेदादीनि कुर्यात्। यदाह — **पाशानां नाशने शुभः** इति। अथ किमत्र सामान्यवदासनन्यासादिकं कर्तव्यम्। [22]नेत्याह — **शिवहस्तः** इति। इत्थं शिवैका[23]दशिकयैवाधिष्ठितत्वात् **शिवहस्तः प्रोक्तः**; न प्रकरणान्तरेणेति॥

---

[1] 'ॠ' मातृकायां 'भगवान्' इत्यारभ्य 'त्वदधिष्ठानम्' इत्यन्तं नास्ति।
[2] विज्ञापि तदुत्तर० — ॠ.
[3] ०तिष्ठा मद्विहितं — ऊ, ॠ.
[4] सर्वमेवं — ॠ.
[5] ०मुच्चारयन् — ॠ.
[6] मतङ्ग० क्रिया० ५.१३४.
[7] स्मरद्वै संहितां — ऊ, ॠ.
[8] एवमियं परां — ऊ; एवमियं पुरां — ॠ
[9] स्वगन्ध० — ॠ.
[10] ०गन्धगन्धाढ्यां — ॠ, ख; ०गन्धमाल्याढ्यं — ओ; ०गन्धमालाढ्यं – घ; ०गन्धिमाल्याढयं — ङ; ०गन्धमूल्याढ्यं — छ, ज.
[11] तस्य मध्ये न्यसे० — ओ, क, ख, घ, ङ, छ, ज.
[12] ब्रह्मार्णसहितं — छ, ज.
[13] ०पवित्राढ्यैः — छ.
[14] पूजयेत — च.
[15] यस्मिन् — च.
[16] तेजः पदं — ऊ, ॠ, घ, छ, ज; तेजःप्रदं — ओ, ख; तेजप्रदं — क; तेजःप्रदा — ङ.
[17] ज्ञात्वा — छ, ज.
[18] साधयेत् — घ, छ, ज.
[19] ०हस्तमिति — घ, छ, ज.
[20] शासने — ओ, क, ख, घ, ङ, छ, ज.
[21] मतङ्ग० क्रिया० १.१४०–१४२पू०
[22] तेनाह — ॠ.
[23] ०दशिकायैवा० — ऊ; ०दशकायैवा० — ॠ.

ननु [1]"फलवत्संनिधावफलं तदङ्गम्" श्रूयते। [2]"पाशानां नाशने [3]प्रभुः" इति श्रुत्यात्र शिवहस्तस्य फलम्। तत्कथं [4]दीक्षाङ्गतेति। तदर्थमेतत् —

**अनेनालब्ध[5]मात्रास्तु [6]पशवः पाशगोचरात्[7] ॥१९॥**
**[8]निष्क्रान्ताः शिवतां यान्ति [9]स्वच्छन्दा विगतज्वराः।**
**भवन्ति [10]मन्त्रसामर्थ्यात्तन्त्रेऽस्मिन्मुनिसत्तम[11] ॥२०॥**

प्रतिस्थानं पुंसां [12]वक्ष्यमाणक्रमेण शरीरात्मकेषु पाशेषु शैथिल्योत्पादनायालम्भनमात्रमनेन कर्तव्यम्।

ते तु **अनेन आलब्धमात्राः मन्त्रसामर्थ्यात्** दीक्षालक्षणात् संयोजनादिक्रमेण **पाशगोचरात्** वि-निष्क्रान्ताः **शिवतां यान्ति** इति [13]स एव फलवान् न तु शिवहस्तः। ततोऽस्य तदङ्गतैव युक्ते-त्युक्तं भवति। अत एव च भोगतत्त्वं बिन्दुभुवनं वा यावच्छिवहस्तस्य व्यापारो दीक्षातः पूर्वं च प्रयोग[त]ः सिद्धः। प्रोक्तं च श्रीमद्**रौरवादौ**[14] —

[15]"आलभ्य हृदये प्राज्ञः सपवित्रेण पाणिना।
ततो दीक्षां प्रकुर्वीत" इति।

यद्येवं परतोऽनुष्ठेययोः शिवतनुशिवहस्तयोरनयोरत्राभिधाने किं प्रयोजनम्। अभ्युदय एव। एवं पठितं ह्यभ्युदयाय [16]भवति। प्रायश्चित्तनिवृत्तिश्च। तत्रापि [17]संहितापाठस्याम्नात-त्वात् ॥१९–२०॥

यद्येवं पञ्चगव्यादनन्तरं किं कर्तव्यमित्युच्यते —

**[18]आलभ्य [19]कुशमादाय [20]दिशोऽस्त्रेण महौजसा।**
**[21]क्ष्रूंकाराद्यन्तदीप्तेन [22]विद्याङ्गोत्थेन देशिकः ॥२१॥**

---

[1] शाबरभाष्ये. ४.४.१९.
[2] मतङ्ग० क्रिया० ५.१९पू०.
[3] प्रभुरिति पाठो नोपलभ्यते।
[4] दीक्षाङ्गत्वेति — ऋ.
[5] ०मात्रस्तु — ख, च; ०मन्त्रास्ते — छ; ०मन्त्रास्तु — ज.
[6] पशिवा — छ, ज.
[7] ०गोचराः — ङ.
[8] निष्क्रम्य — ओ, क, ख, ङ, च; निष्काम्य — घ; निष्क्राम्य — छ, ज.
[9] सछंदा — छ; सछंदं — ज.
[10] मन्त्रिसामर्थ्यात्तान्त्रे — छ, ज.
[11] ०सत्तमः — क, ङ, छ.
[12] मतङ्ग० क्रिया० ७.२१उ०, २२पू० वृत्तौ।
[13] तदेव — ऊ, ऋ.
[14] मुद्रितरौरवे नोपलभ्यते।
[15] 'आलभ्य हृदये विद्वाञ्शिवहस्तेन तं पुनः' मालिनीविजयोत्तरे ९.५८उ०.
[16] पठति — ऊ, ऋ.
[17] असंहिता — ऋ.
[18] आलभ्याः — ऊ; आलभ्यः — ऋ; आलभेत् — ओ, क, ख, घ, च; आलभे — ङ; आलभावेत्कुश० — छ, ज.
[19] कुशमायाति — क; कुलमादाय — ख.
[20] ईशोऽस्त्रेण — क, ङ; दिशोऽस्त्रेण — ख, घ.
[21] क्षंकाराद्यन्त० — ओ; क्षुंकाराद्यन्त — क; हुंकाराद्यं तु — ख, घ; क्षुकाराद्यन्त० — ङ; क्षुंकाराद्यत्र — च; क्षुंकाराद्यं तु — छ, ज.
[22] विद्याङ्गोऽर्थेन — ओ, च, ज; विद्याङ्गोऽर्धेन — छ.

[1]ततः संमार्जयित्वा तु भूपृष्ठं गन्धवारिणा।
प्रोक्षयेत्प्रयतो भूत्वा [2]पश्चाद्द्रव्याणि वारिणा ॥२२॥
[3]मन्त्रितेनाथ [4]संशोध्य [5]कुशाग्रैस्तु शनैः शनैः।
[6]तिल[7]लाजा यवाश्चैव [8]दूर्वाः सिद्धार्थकाः [9]शुभाः ॥२३॥
कुसुमानि च शुक्लानि [10]सुगन्धीनि च भूरिशः।
[11]ईषच्चन्दन[12]कल्केन [13]मिश्रोऽयं [14]विकिरः शुभः ॥२४॥
[15]विकिरेच्छब्दशब्देति [16]पदमेतत्समुच्चरन्।
[17]धूपपदसमायुक्तो भूयः संमार्जयेत्क्षितिम् ॥२५॥
चामरेण सुशुभ्रेण हेमदण्डेन [18]चादरात्।
[19]विभोर्भक्तिरियं प्रोक्ता नित्यं वितानुरूपतः[20] ॥२६॥
[21]फलं ददाति [22]कारुण्याद्भक्तानां परमेश्वरः।
स्वच्छ[23]पानीयसंपूर्णं [24]रत्नगर्भं [25]सुवर्चितम् ॥२७॥
सितवस्त्र[26]परीधानं [27]मेध्यौषधिसमन्वितम्।
[28]मन्त्रैरालभ्य विधिवत्कलशं[29] काञ्चनं शुभम् ॥२८॥

---

[1] तत सौ मार्जयित्वा — छ, ज.
[2] पञ्चद्रव्येण — ओ, क; पश्चाद्द्रव्येण — — ङ; पभाद्रव्याणि — छ; पणद्रव्याणि — ज.
[3] मन्त्रीथेतनाथ — ङ.
[4] संगृह्य — ओ, क, ख, घ, ङ, च, छ, ज.
[5] कुशाग्रेण — ओ, क, ङ.
[6] तिला लाजा — च.
[7] ०लाजयवा० — ओ, क, ख, घ, ङ, छ, ज.
[8] दूर्वासिद्धार्थकाः — ओ, क, ङ; पूर्वाः सिद्धाः कुशाः — ख, घ; दूर्वां सिद्धकुशाः — छ; दूर्वाः सिद्धाः कुशाः — ज.
[9] तथा — ऊ, ॠ.
[10] सुसुगन्धीनि भूरिशः — ऊ, ॠ, ख; सुसुगन्धानि भूरिशः — घ, च, छ, ज.
[11] ईशश्चन्दन० — ऊ, ॠ.
[12] ०कल्पेन — ओ, क, ख, घ, ङ, छ, ज.
[13] विश्रान्तान् विकिरेच्छुभान् — ओ, क; मिश्रो यविकिरेच्छुभान् — ङ; मिद्यश्राद्यं — छ; मिश्रेयः — ज.
[14] विकरः — ख, च.
[15] विकिरेच्छब्दाच्छब्देति — ऊ; विकिरेच्छर्वशर्वेति — ओ, क, ख, घ, ङ, छ; विकिरेच्छन्दछन्देति — च; विकिरे तु शर्वं शर्वेति — ज.
[16] पदमेतत्समा . . । — ओ; पदमेतत्समुद्धरेत् — क, ख; पदमेतत्समुद्धरन् — घ, छ, ज; पदमेतत्समुच्चरेत् — च.
[17] धूपदीपसमायुक्तो — ओ, ङ.
[18] सादरम् — ओ, क, ख, घ, ङ, छ, ज; साधरम् — च.
[19] प्रभोर्भक्ति० — ओ, क, ख, घ, ङ, छ, ज.
[20] ०नुसारतः — च.
[21] २७ तमश्लोकप्रभृति ३१ तमश्लोकान्तो भागो 'ङ' मातृकायां नास्ति।
[22] कारुण्यान्मुक्तानां — ऊ, ॠ.
[23] ०पानीयस्थपूर्ण० — क.
[24] रक्तगर्भं — ऊ, ॠ; रत्नगर्भा — ओ; रत्नगर्भ० — छ, ज.
[25] सुचर्चितम् — ऊ, ॠ, च; सावचितम् – छ, ज.
[26] ०परिधानं — छ.
[27] मन्त्रौषधि० — ओ; मध्वौषधि० — क; मध्योषधि० — ख, घ, छ, ज.
[28] मन्त्रैरारभ्य — ओ, क.
[29] ०त्कालसं — च.

समभ्यर्च्य यथान्यायं[1] स्थापयेदीशगोचरे[2] ।
[3]वर्धनीमप्ययास्त्रेण [4]क्षूंमध्येन [5]निवेशयेत् ॥२९॥
आलभ्य तोय[6]संपूर्णं [7]तथैव सुसमाहितः ।
[8]ईश[9]कर्णात्समारभ्य प्रदक्षिणमथानयेत् ॥३०॥
[10]अविश्रान्ताम्भसो धारां [11]यावत्कर्णं तु [12]शाङ्करम् ।
[13]सित[14]वस्त्रकृताटोपं कलशस्य समीपतः ॥३१॥
स्थापयेदस्त्र[15]राजानं [16]गृणन्पाशुपतं परम् ।
[17]गन्धपुष्पार्चनं कृत्वा [18]तयोः शान्तेन चेतसा[19] ॥३२॥
[20]प्रणिपातं च सुप्रीत्या माङ्गल्ये संनिधीभव[21] ।
विज्ञाप्यैवं [22]शिवं शान्तं [23]कलशाधारमीश्वरम् ॥३३॥

ततो दर्भपवित्रमादाय क्षूंकारसंपु[ट]स्थेन[24] पाशुपतेन यागस्थाने **दिशः** पूर्वादीशानान्तक्रमेण **आलभ्य** प्रोक्षयित्वा, संमार्ज्य, गन्धोदकेन प्रोक्षणं, ततोऽर्घपात्रपानीयेन सकुशपवित्रेण सर्वद्रव्याणि **संशोध्य** तेषां मध्यात् [25]तिलादिभिः **चन्दनकल्क**[26]मिश्रितैः षड्भिः षड्भिः **शब्दशब्द**पदोच्चारणेन विकिरं दत्त्वा, धूपदोच्चारणया **चामरेण** [27]पुनः संमार्ज्य, शिवकलशं शिवहस्तविधानवद् ब्रह्माङ्ग-शिव[28]मन्त्रैरभिमन्त्रि[तम्] **ईशगोचरे** [स्थापयेत्] [29]**वर्धनीं** च पञ्चगव्यदिगालम्भनवत् क्षूंकारसंपुटस्थेन

---

[1] ०न्याय्यं — ऊ
[2] ०गोचरैः — क.
[3] वर्धनीं चाप्यथा० — ऊ, ऋ.
[4] ष्ठंमध्येन — ओ; क्षुन्मध्येन — क; तन्मध्येन — ख; क्षुंमध्येन — घ; क्षुमध्येन — छ, ज.
[5] निवेदयेत् — ख.
[6] ०संपूर्णं — ओ, क, ख, घ, छ, ज.
[7] तथैव — ऊ, ऋ, ओ, क, ख.
[8] ईशे कर्णा० — ख, घ; ईशोत्कर्णा० — छ, ज.
[9] ०कर्मात्समारभ्य — ऊ; ०कर्मा समारभ्य — ऋ; कर्णान्समा० — च,
[10] अविश्रान्तोऽम्भसा — ख.
[11] यवकर्णं तु — छ; यावकण्ठं तु — ज.
[12] शाङ्करीम् — ख.
[13] शिववस्त्रकृताटोपां — च.
[14] ०वस्त्राक्षताटोपं — ओ; ०वस्त्रकृताकोटापं — छ; ०वस्त्रकृताकोटां — ज.
[15] ०राजानां — क; ०राजानु — छ.
[16] गृह्णन् — क; शृण्वन् — ख, घ, ङ; श्रवन् — छ; श्रुवन् — ज.
[17] गन्धधूपार्चनं — ओ, क, ख, घ, ङ, च; गन्धरूपत्वनं — छ; गन्धरूपजनं — ज.
[18] तयोर्जतिन — ओ; ततिजान्तेन — ङ; तोयशान्तेन — ज.
[19] तेजसा – ओ, क, ङ; चेतसु — छ; चेतसाः — ज.
[20] प्रणिपातव्यसुप्रीत्या — च; प्रणिपातश्च संप्रीत्या — छ, ज.
[21] संनिधीभवेत् — च; संनिवेशयेत् — छ, ज.
[22] शिवाशान्तं — छ.
[23] कलशायामीश्वरम् — छ; कलशाधानमीश्वरम् — ज.
[24] संपुस्थानेऽथ — ऋ.
[25] तिलाभिचन्दन० — ऋ.
[26] ०मिश्रेतैः — ऋ.
[27] पुनः संमाज्य — ऊ; पुरः साज्य — ऋ.
[28] ०मन्त्रैमभिमन्त्रैरीश० — ऋ.
[29] वर्धनी च — ऊ, ऋ.

पाशुपतास्त्रेणैवाभिमन्त्र्येशानकोणप्रदक्षिणक्षिप्तधारां तदनन्तरमवस्थाप्य, संपूज्य, [1]अविघ्नायात्र संनिधानं कर्तव्यमिति विज्ञापयेत् ॥२१–३३॥

[कलशनिवेशने दिव्यानि निमित्तानि]

**कलशस्य निवेशे तु [2]निमित्तान्युपलक्षयेत् ।**
**भर्तुरध्वरकालेऽस्मिन्भक्त्याविष्टाः[3] सुरेश्वराः[4] ॥३४॥**
**[5]विमानस्थाः [6]प्रदृश्यन्ते निमित्तं [7]तच्छुभं मुने ।**
**कुसुमानि [8]सुशुक्लानि प्रत्यग्राणि [9]बहून्यपि ॥३५॥**
**पतन्ति [10]खतलाद्भूमौ तदप्यत्र शुभं मुने ।**
**निमित्तं [11]भूतये [12]ग्राह्यं [13]निःस्वनाम्बुमुचः शुभाः[14] ॥३६॥**
**[15]अकालवृष्टेर्मेघस्य सुरेन्द्रधनुषोऽथवा[16] ।**
**शस्यते देवदेवस्य [17]यागे संदर्शनं [18]सदा ॥३७॥**
**उल्कापातोऽथ भूकम्पो [19]निर्घातः केतुदर्शनम्[20] ।**
**[21]न शस्तं [22]सिद्धये नृणां [23]मुक्त्यर्थं [24]न विरुध्यते ॥३८॥**
**[25]रेण्वङ्गाराश्म[26]रक्तानां [27]पतनं नेष्यतेऽध्वरे[28] ।**

---

[1] अविघ्नयात्र — ऊ.
[2] निमित्तानुप० —ङ.
[3] भक्त्या शिष्टाः — ज.
[4] स्मरेश्वरः — ॠ.
[5] विमानस्थां — ओ, ङ, छ, ज.
[6] प्रदर्श्यन्ते — घ, छ, ज.
[7] यच्छुभम् — ओ.
[8] सुशुभ्राणि — ऊ, ॠ; च शुक्लानि — ङ; सुशूकानि — छ.
[9] बहूनि च —ॠ
[10] खेतला० — ओ, घ; केवलाद्भूमौ — छ, ज.
[11] भूतले — ओ, क, ख, घ, ङ, छ, ज.
[12] ग्राह्य — ख, घ, छ, ज.
[13] निःस्वनोऽम्बुमुचः शुभः — ऊ, ॠ; निःस्वनो मुमुचः शुभाः — ओ, ङ; निःस्वना मुमुचः शुभाः — क; निःस्वनो मुमुचुः शुभः — ख, छ, ज; निस्वनो मुमुचुः शुभः–घ.
[14] शुभे — च.
[15] अकालवृष्टिदी तस्य — ऊ, ॠ; अकालदृष्टे मीनस्य — ओ; अकालदृष्टेर्मीनस्य — क; अकालपृष्टेर्मेघस्य — ख; 'अकालवृष्टेर्' इत्यनन्तरं ३८ तमश्लोकस्यान्तिमपाद एव दृश्यते; 'ङ' मातृकायाम्; । अकालवृष्टिमीनस्य — च; अघालपृष्टे मेघस्य — छ, ज.
[16] ०धनुषोऽपि वा — च.
[17] यागसंदर्शनम् — ऊ, ॠ, घ, छ, ज; योगे संदर्शनं — ओ, क; यागः संदर्शनं — ख.
[18] तथा — छ, ज.
[19] निघ्नातः — ओ; तिर्घातः — क; निघा — ख, छ, ज.
[20] ०दर्शनः — छ, ज.
[21] नाशस्तं — ऊ; नालस्तं — ॠ.
[22] भक्तये — ख, घ, छ, ज; सिद्धयेन्नृणां–च.
[23] मुक्त्यर्थे — ओ, क, ङ, च; भुक्त्यर्थं — ख, घ, छ, ज.
[24] तन्निरुध्यते — ख; वरुध्यते — छ, ज.
[25] नखाङ्गारास्थि० — ओ, क, ङ; रेखाभारास्थि० — ख, घ, छ, ज.
[26] ०रत्नानां — ज.
[27] पातनं — ओ, ङ.
[28] नेष्यते स्वरे — ज.

[1]भानुरश्मि[2]समायोगादम्भसः पतनं शुभम् ॥३९॥
[3]निमित्तमुत्तमं [4]ह्येतद्ग्राह्यं [5]सिद्धयै विपश्चिता।
[6]एतद्दिव्यं समाख्यातं कलशस्य निवेशने ॥४०॥

[ भौमानि निमित्तानि ]

शिखिहंसशुकादीनां मधुरालाप इष्यते।
शङ्खदुन्दुभिजीमूतवल्लकीनां [7]ध्वनिः [8]शुभः ॥४१॥
आचार्यविप्रनारीणां नरेन्द्राणां च [9]दर्शनम्।
[10]भौममेतत्सदा [11]शस्तमाममांसस्य [12]चैव हि ॥४२॥
[13]श्वेताम्बुजस्य [14]वस्त्रस्य [15]वाजिनो वृषभस्य च।
[16]सहसा दर्शनं [17]शस्तं [18]दध्नश्चाप्युत्तमं [19]मतम् ॥४३॥
[20]हस्तिनः [21]कूजितं [22]भद्रं [23]दर्शनं चापि शस्यते।
[24]खरोष्ट्र[25]महिषव्याल[26]व्रतिनग्नादयोऽशुभाः ॥४४॥

---

[1] '३९' उत्तरार्धं '४०' पूर्वार्धं च 'ओ' मातृकां विना सर्वासु मातृकासु '४१' पूर्वार्धानन्तरं दृश्येते। अर्थानुरोधेन पूर्वत्र निवेशितम्।

[2] भाररश्मि० — क, छ, ज; सा तु रश्मि–च.

[3] निमुत्तमुत्तमं — छ; निर्मुक्तमुत्तमं — ज.

[4] ह्येतद्गुह्यं — ख, घ, छ, ज.

[5] सिध्यविपश्चिता — ऊ, ऋ; विद्येविपश्चिता — ओ; विद्धचै — क.

[6] 'ओ' मातृकायां '४०' उत्तरार्धं '४१' पूर्वार्धं च न स्तः।

[7] स्वनिः — छ, ज.

[8] शुभाः — ऋ; शुभम् — ओ; शुभाम् — क; शुभा — ङ.

[9] दर्शयेत् — ख, घ, छ, ज.

[10] भौमं तु तत्सदा — ऊ, ऋ; होममेतत्सदा — ख, घ, छ, ज; होम एतत्सदा — ङ.

[11] शस्तं माममांसस्य — ऊ; शस्तं नाममांसं ओ; शस्तमाममांसं — क; शस्तममांसस्य — ख, घ, ज; शस्तमामासं — ङ; शस्तं मांसस्य — छ; 'शस्तं' इत्यारभ्य '४३' तमश्लोकस्य तृतीयपादे 'सहसा दर्शनं' इत्यन्तं 'ऋ' मातृकायां नास्ति।

[12] तथैव हि — ओ, क, ङ.

[13] श्वेताम्बुधस्य — छ.

[14] वक्त्रस्य — ऊ.

[15] वाजिनां — ऊ; वाजिना — ख.

[16] सगणां — ख; सगणं — घ, छ; सगणान् — ज.

[17] शब्दं — ओ, क; बद्धं — ओ. पाठान्तरम्।; शस्ता — ङ.

[18] दध्ना चाप्युत्तमं — ङ.

[19] महत् — ओ, क, ङ; शुभम् — ख, घ, छ, ज.

[20] हस्तिना — ओ, क; हस्तिनां — ख, घ, छ, ज.

[21] कूजिता — क; कुञ्जिनं — च; तुजितं–ज.

[22] भद्रदर्शनादपि — छ, ज.

[23] दर्शनादपि — ऊ, ऋ, ओ, क, ख, घ; दर्शनारपि — ङ.

[24] स्वराष्ट्रे — ओ; रेखोष्ट्र० — छ, ज.

[25] ०बहिषव्याल० — क.

[26] ०प्रेतनग्नादयोऽशुभाः — ऊ, ऋ, च; ०प्रेतनग्नादयोऽशुभम् — ओ, ङ; ०प्रेतनग्नादयः शुभम् — क; ०वृतनग्नादयो इभाः — ख; ०प्रतनग्नादयोऽशुभाः — घ; ०पृतनग्नादयो — छ; पृतनश्नादयो — ज.

[1]मत्स्यमांसादयः [2]शस्ताः [3]श्वबिडालादयोऽशुभाः ।
[4]वाक्प्रशस्तं सदा शस्तं [5]वाग्दुष्टं नेष्यतेऽध्वरे ॥४५॥
[6]अकस्मा[7]त्कलहो नेष्टः [8]प्रदाहो वा [9]सुदारुणः ।
[10]प्रासादागारवृक्षाणां [11]नगराणां यदा भवेत् ॥४६॥
पतनं गात्रभङ्गो वा [12]तदा विद्ध्यशुभं ध्रुवम्[13] ।
[14]सुतकन्यासुवर्णा[15]न मिष्टानामपि शस्यते ॥४७॥
लाभः सदाध्वरे [16]पत्युर्नर्तकानां च दर्शनम् ।

[ अशुभेषु शान्तिः, गर्भावरणपूजा च ]

[17]एवमादीनि बुद्ध्वा तु निमित्तानि महामुने ॥४८॥
[18]यागः कार्यः शुभेष्वादावशुभेषु[19] घृतस्य च[20] ।
अघोरेण [21]शतं [22]होम्यं [23]फट्कारान्तेन [24]शान्तये ॥४९॥
ततोऽर्चनं विभोः कार्यं द्रव्यैः पूर्वोदितैः शुभैः ।
[25]निर्वर्त्य [26]पूर्ववत्सम्यग् [27]दीक्षामन्त्रमथोत्तमम् ॥५०॥

---

[1] मद्यमांसादयः — ऊ, ऋ.

[2] शास्ताः — क; शस्ता — ङ, छ; शस्तं — ज.

[3] श्वबिडालादयः शुभाः — ऋ, ङ; अश्वपीडादयः शुभाः — ओ; अश्ववीडादयः शुभाः — क; श्वविरालादयोऽशुभाः — च; बिल्वालादयो — छ; बबिल्वालादयो — ज.

[4] प्रशस्तं सर्वदा शस्त्रं — ख, घ, छ; प्रशस्तं सर्वदा शस्तं — ज.

[5] मवाग्दुष्टं न्यतेऽध्वरे — ओ; अर्वाक् दृष्टन्यतेऽध्वरे — क; वाग्वृष्टेन्नेष्यतेऽध्वरे — ख; वाग्वृष्टेर्नेष्यते धुरे — घ; वाक्स्पृष्टं — च; वपृष्ठेन्नेष्यते धुरे — छ, ज.

[6] अकस्मात्को नष्टः — छ; कस्मात्कहो नष्टः—ज.

[7] ०त्कलहे नष्टं — ओ; ०त्कलहे नेष्टं — क; ०त्कलहो नष्टः — ख, घ; ०त्कलहो नेष्टं —ङ.

[8] प्रवाहो — ओ, क, ङ; प्रदाभो — छ, ज.

[9] सुदारुणम् — ओ.

[10] प्रासादागरुवृ० — ओ, क; प्रादाभारप्रक्षाणां — छ, ज.

[11] नराणां दया भवेत् — ऊ, ऋ; नराराणां च यदा भवेत् — ओ; नराणां च यदा भवेत् — क, ख, घ, च, छ, ज.

[12] तदा विध्यशुभं — ख; तदा विध्यः शुभध्रुवम् — ङ; तदा विद्याच्छुभं — च.

[13] तदाविद्धकम् — छ; तदाविधवर्मः — ज.

[14] सुरकन्या० — च.

[15] ०नामविशस्तं प्रशस्यते — ओ, क, ङ.

[16] पत्युरन्तकानां च — ऊ, ऋ; पत्युर्नबकानां च — ओ.

[17] एव .. द्धि दीनानि निमित्तानि ; — ऋ.

[18] यागकार्ये — ओ, क, ङ; पाशः कार्यः शुभेष्टादौ — च.

[19] अशोभेषु — ङ; वल्गुतेषु — च.

[20] तु — ऊ, ऋ; हि — च, छ, ज.

[21] घृतं — ख, घ, छ, ज.

[22] होम्यमफट्कारं तेन — ज.

[23] हुंकारान्तेन — ऊ, ऋ; फट्कारेणैव — च; फट्कारं तेन — छ.

[24] चिन्तये — छ; शिन्तये — ज.

[25] निर्वृत्य — ओ, क, घ.

[26] पूर्ववत्सर्वं — च.

[27] दीक्षामन्त्रमथोत्तरम् — ऊ, ऋ; ष . . मात्रं ततोऽन्तरम् — ओ, क; पीठमात्रं ततोत्तरम् — ख; पीठमात्रं तरोत्तरम् — घ, छ, ज; पीठमात्रं ततोऽन्तरम् — ङ; पीठमात्रं तथोत्तरम् — च; मतङ्ग० क्रिया० ७.२० तमश्लोकस्य वृत्तिमनुसृत्यात्र पाठो निर्धारितः ।

ततः कलशनिवेशनकालपरिदृष्टानामशुभानामेव शान्त्यर्थं घृतहोमं विधाय, यागमण्डपमध्ये स्थण्डिले एव तावदर्चनं भगवतः; सामान्यकान्यभ्यर्चयेत्। यद्वक्ष्यति —

[1]"ततश्चाहुतयः क्रमात्।
साङ्गेन [2]देवदेवेन ब्रह्मभिश्च यथाक्रमम्॥" इति।

तेषां च [3]सामान्यप्रकरणवदत्राप्यर्चनसिद्धेर्दीक्षाया [4]मन्त्रत्वमनेन ज्ञाप्यते। ततश्च भोगभोजनमेव [5]वक्ष्यमाणैका[दशा]हुत्यात्मकं दीक्षा। [यानि] संयोजनादीनि, तानि तु तदङ्गभूतान्येवेत्युक्तं भवति॥३४–५०॥

[ द्वितीयावरणपूजा ]

**विद्येश्वराणां प्राच्यादौ [6]कर्तव्यं भक्तितः सदा।**
**शिवायपदसंयुक्तं [7]सुगन्धकुसुमादिभिः॥५१॥**
**अनन्तः[8] पूर्वतः [9]स्थाप्यः [10]सूक्ष्मो दक्षिणतः स्थितः।**
**[11]शिवोत्तमश्च वारुण्यामेक[12]नेत्रस्तथोत्तरे॥५२॥**
**विभागे शाङ्करे [13]पूज्यो ह्येकरुद्रो [14]निवेश्य तु।**
**ततो वै वह्निदिग्भागे[15] निवेश्येज्यस्त्रिमूर्तिमान्[16]॥५३॥**
**[17]श्रीकण्ठो [18]नैर्ऋते भागे [19]पूज्यो गन्धादिभिः शुभैः।**
**[20]आनिले [21]पूजनीयस्तु [22]विद्येशः [23]कुसुमादिभिः॥५४॥**

---

[1] मतङ्ग० क्रिया० ७.२०.
[2] देवदेवस्य — ऊ, ऋ.
[3] मतङ्ग० क्रिया० ३.८३उ०–९१ श्लोकेषूक्तवत्।
[4] ०मन्तत्वमनेन — ऋ.
[5] मतङ्ग० क्रिया० ७.२० वृत्तौ। तद्वृत्तिमनुसृत्यात्र पाठः शोधितः।
[6] कर्तव्या शक्तितः — च.
[7] सुगन्धं कुसु० — ङ; सुगन्धैः कुसु० — च.
[8] अनन्तं रं — ओ; अनन्तरं — क; अनन्तं — ख, घ, ङ, च; दिनं तं — छ, ज.
[9] स्नाप्यः — ऊ, ऋ; स्थाप्य — ओ, क, ख, घ, ङ, च, छ, ज.
[10] सूक्ष्मं दक्षिणतस्तथा — ओ, क, घ, ङ, च; पूर्वदक्षिणतस्तथा — ख; पूर्वं दक्षिणस्तदा — छ; पूर्वं दक्षिणता यथा — ज.
[11] शिवोत्तमं च — ओ, क, ख, घ, ङ, च, छ, ज.
[12] ०नेत्रं तथोत्तरे – ओ, क, ख, घ, ङ, च, छ, ज.
[13] पूज्यैकरुद्रो — ओ; पूज्य एकरुद्रो — क; पूज्योऽप्येकरुद्रो — ख, घ, छ, ज; पूज्यो एकरुद्रो — ङ.
[14] निवेश तु — ऋ.
[15] वाह्ने वै दिग्विभागे तु — ऊ, ऋ; वह्निदिग्भागभागेषु — ख; वह्निदिग्भागभागे तु — घ; वाह्नेये दिग्विभागे तु — च; वह्निदिग्भागा केतु — छ; वह्निदिग्भाभाकेत् — ज.
[16] निवेश्येज्यं त्रिमूर्तिनम् — ओ, क, ङ; निवेश्यज्यां त्रिमूर्तिनम् — ख; निवेश्याज्या त्रिमूर्तिनम् — घ, छ, ज; निवेश्ये ह्यत्रमूर्तिनम् — च.
[17] श्रीकण्ठं — ओ, क, च; श्रीकण्ठे — ङ.
[18] निर्ऋते — ऊ, ऋ.
[19] पूज्यं — च.
[20] अनिले — ऊ, ऋ, ओ, क, घ, ङ.
[21] पूजनीयं हि विद्येशं — च.
[22] विद्येशस्तु समाहितः — ओ, क, ङ.
[23] सुसमाहितः — ख, घ, छ, ज; सुसमाहितैः — च.

[1]शिखण्डीशस्ततः पश्चाल्लोक[2]पालान्प्रपूजयेत् ।
चतुर्भुजाश्चतुर्वक्त्राः सर्वे [3]खण्डेन्दु[4]मौलयः ॥५५॥
[5]सुशुद्धशङ्ख[6]धवला[7]स्त्र्यम्बकाः [8]परमेश्वराः ।
ध्यातव्या भक्तितः सर्वे पूज्याश्च परमार्थतः ॥५६॥
द्वितीयावरणे सम्यग्विधिरुक्तः समासतः[9] ।

[ तृतीयावरणपूजा ]

[10]तृतीयेऽप्युच्यते विप्र [11]विधानमिदमत्र [12]तु ॥५७॥
[13]स्फुरद्वज्र[14]निभं प्राच्यां [15]सुरेशं [16]पूजयेत्क्रमात् ।
[17]आग्नेय्यामग्निराजानं पद्मरागसमप्रभम् ॥५८॥
भिन्नाञ्जननिभं [18]याम्यां [19]पूजयेत्कुसुमैः शुभैः ।
विधिवद्धर्मराजानं [20]नैर्ऋत्यामप्यनिन्दितम् ॥५९॥
रक्षोऽधिपं [21]विधानेन [22]राजावर्तनिभं सदा ।
वारुण्यां [23]वरुणं देवं [24]शङ्खकुन्देन्दुसुप्रभम् ॥६०॥
[25]वायव्यां वायुराजानं पुष्यराग[26]समप्रभम् ।
कुबेरमपि कौबेर्यां [27]रक्ताशोकनिभं सदा ॥६१॥

---

[1] शिखण्डिनं ततः — ओ, क, ङ, च.
[2] ०पालांश्च पूजयेत् — च.
[3] खण्डेषु मौल्यः — छ.
[4] ०मण्डिताः — ऊ, ऋ.
[5] सुगन्धशङ्ख० — क.
[6] ०वलयांस्त्र्यम्बकाः — च.
[7] ०स्त्र्यम्बकः — छ.
[8] परमेश्वरः — क, छ, ज.
[9] विधिवत्तत्समासतः — ओ, क, ख, ङ; विधिवत्तत्समाहितः — घ, छ, ज.
[10] तृतीयेऽप्यर्चिते — ओ, क, ङ; तृतीयेत्युच्यते — घ; तृतीयेन्युच्यते — छ, ज.
[11] विधानं चित्रमत्र — ख, घ; विधानत्रमन्नवै — छ; विधानत्र मतत्र वै — ज.
[12] 'ओ, क, ख, घ, ङ, च' मातृकासु तुकारस्य स्थाने 'वै' इति दृश्यते ।
[13] स्फुरद्वज्ञनिभप्राच्य — छ.
[14] ०मिदं प्राच्यां — ओ, क; ०निभप्राच्या — घ; ०मिदं प्राच्या — ङ; ०निभप्राय — ज.
[15] सिरेशं — छ.
[16] पूज्यमादरात् — च.
[17] आर्यो म निराजानं — ङ; आग्येय्यमग्निराजानं — छ.
[18] याम्ये — ऊ, ऋ; याम्यं — ओ, क, घ, ङ.
[19] पूजयेत्सकलैः — ओ, क, ङ.
[20] नैर्ऋत्यामपि निन्दितम् — ऋ; 'ङ'मातृकायां '५९' उत्तरार्धे 'नैर्ऋत्यां' इत्यारभ्य ६१ पूर्वार्धे 'वायुराजानं' इत्यन्तं नास्ति ।
[21] निवेशेत — ऊ, ऋ.
[22] राजवर्त० — ऊ, ऋ.
[23] वारुणं — ऋ, क.
[24] शुद्धशङ्खसमप्रभम् — ऊ, ऋ, ओ, क, ख, घ, छ, ज.
[25] वायव्यागायुराधानं — छ, ज.
[26] ०वपुस्ततः — ऊ, ऋ; ०वपुष्मतम् — च.
[27] रक्ताम्भोजनिभं — ख, घ, ङ, छ, ज; रक्ताशोकनिभः — च.

[1]पूजयेद् गन्धपुष्पाद्यैर्भर्तुर्यागे[2] प्रयत्नतः ।
[3]ऐशान्यामप्यथेशानं शुद्धस्फटिकनिर्मलम् ॥६२॥
[4]स्वमन्त्रैर्विधिवत्सर्वे[5] दिक्पालाः[6] साधकोत्तमैः[7] ।
[8]संपूज्या गन्धकुसुमै [9]र्धूपामोदपवित्रकैः ॥६३॥

ततो विद्येश्वराणां द्वितीयस्मिन्नावरणे शिवपदसंयुक्तं पूजनं कृत्वा चतुर्भुजादिरूपाः त्र्यम्बकाः च त्रिनेत्रा अभिध्येयाः । शिवपदस्यैव [10]प्राग् विद्येश्वरोपचारे मन्त्रत्वेनोद्धृतत्वात् । ततो [11]लोकपालान् पूजयेत् तृतीयस्मिन्नावरणे ॥५१–६३॥

[ चतुर्थावरणपूजा ]

अस्त्राण्यन्यानि[12] विप्रेन्द्र [13]प्रणवेनादिवर्तिना ।
हुंफट्कारान्तयुक्तेन स्वेन [14]नाम्ना [15]स्वकां स्वकाम् ॥६४॥
[16]दिशमाश्रित्य सर्वाणि [17]संस्थितानि [18]महात्मनः ।
पञ्चमन्त्र[19]तनोर्यागे यथावद्विधि[20]विस्तरात् ॥६५॥
[21]वज्रं [22]संपूजनीयं तु [23]पूर्वतः कुसुमादिभिः ।
शक्तिमप्यानले[24] भागे याम्ये दण्डं प्रपूजयेत् ॥६६॥
[25]नैर्ऋते निर्मलं खड्गं पाशं भागे तु वारुणे ।
अङ्कुशं वायवे भागे गदामप्युत्तरे [26]तथा ॥ ६७॥

---

[1] यजेद्गन्धादिभिर्भक्त्या भर्तु० — ऊ, ऋ.
[2] ०र्यामे — च.
[3] ऐशान्यामथैशानं — ओ; ऐशान्यामप्यथैशानं — क, च; ईशान्यामप्यथेशानं — ख, घ, छ, ज; ईशान्यामप्यथैशान्यां — ङ.
[4] स्वमन्त्रं विधि — ऊ, ऋ.
[5] ०त्सर्वैः — ख, घ, च, छ, ज.
[6] दिक्पालान् — ख, घ, ङ, च, छ, ज.
[7] साधकोत्तमः — ख, घ, छ, ज.
[8] संपूज्य — ओ, क, ख, घ, ङ, छ, ज; इदमर्धं 'ऊ, ऋ' मातृकयोर्नास्ति ।
[9] ०र्धूमामोद० — ओ, क, ख, घ, ङ.
[10] मतङ्ग० क्रिया० १. ७१उ०, ७२ पू०.
[11] लोकपालाः — ऊ, ऋ.
[12] अस्त्राणामपि — ओ, क, घ, ख, ङ, च; आद्याणामपि — छ, ज.
[13] प्रणवाद्यनुवर्तिना — ओ; प्रणवाद्यानुवर्तिना —क, ङ.
[14] नाम्न स्वकान् स्वकान् — छ, ज.
[15] स्वकान् स्वकान् — ख, घ, ङ.
[16] दिशि माश्रित्य — ओ, क; दिशामाश्रित्य- छ, ज.
[17] संस्था ताति — छ, ज.
[18] महात्मना — ख, घ, छ, ज; महात्मनाम् — च.
[19] ०ततोर्यागे — ऊ, ऋ; ०ततो योगे — ओ; ०ततोर्योगे — क.
[20] ०विस्तरे — ओ, क, ख, घ, ङ, च, छ, ज.
[21] वस्त्रं — ओ, क; . . त्रं — ङ.
[22] संपूजयेद्यत्नात् — ऊ, ऋ.
[23] ०पूर्ववत्कुसुमादिभिः — ऊ, ओ, क, ख, घ, ङ, छ, ज; ०पूर्ववत्सुसमादिभिः — ऋ.
[24] ०मप्यनले — ओ, क, ङ; ०माननले — ख, घ, छ, ज.
[25] नैर्ऋतं — छ.
[26] सदा — ऊ, ऋ, च; तदा — ओ, क, ङ.

**त्रिशूलमीशदिग्भागे [1]न्यस्य [2]पूज्यं प्रयत्नतः ।**
**स्वदिक्पतीनां वर्णेन [3]ध्यातव्यानि [4]महात्मभिः ॥६८॥**
**दंष्ट्राकरालविकटैरा[5]कारैरस्त्र[6]नायकाः ।**
**[7]लम्बोदरा भीमवक्त्रास्ताम्रनेत्रा महाबलाः ॥६९॥**
**[8]पिङ्गभ्रूश्मश्रुलोमानो वामनाश्च [9]बृहत्स्फिचः ।**
**[10]लम्बोष्ठचिपिटघ्राणास्तडित्पुञ्जचयोपमाः ॥७०॥**
**स्वायुधाकारशिरसः [11]सर्वे चामोघशक्तयः ।**
**अस्त्राणां [12]नायकाः पूज्या नित्यं पाशुपतात्मना[13] ॥७१॥**

चतुर्थे तु तदस्त्राणि विन्यस्य **पाशुपतात्मना** पूज्यानि । तद्द्वारेण पाशुपतास्त्रमेव [14]पूज्यम् । ततश्च "पारमेश्वरे शास्त्रे [न] पशवः पाशाश्चेज्यन्ते" इत्युक्तं प्राक्[15] ॥६४–७१॥

[नैवेद्यादि]

**[16]अस्त्राणां [17]विधिवद्यागे; [18]भक्ष्यभोज्यान्नपानकैः ।**
**निवेदनैर्विचित्रैश्च[19] तथा[20] प्रतिसरैः शुभैः ॥७२॥**
**वित्तानुसारतः कार्यो [21]विधिः प्राक्सूचितो[22] यथा ।**
**[23]सर्वस्वेनापि देवस्य [24]लुप्तशाठ्येन मुक्तये ॥७३ ॥**
**[25]सिद्धये च [26]यतः पुंसां भक्तिरेवात्र कारणम् ।**

---

[1] स्थाप्य — ओ, क, ख, घ, ङ, च, छ, ज.
[2] पूजां — ओ क.
[3] यातव्यानि — क.
[4] महात्मनि — ख, घ, छ, ज.
[5] ०कारैस्तत्र — ओ, क, ख.
[6] ०नायकैः — ऋ, ओ, क; ०नायकः — ङ; ०नायकं — च; ०नायक — छ.
[7] लम्बरो भीमवक्त्रास्ता ताम्र० — घ, छ, ज; लंभोदा भीम० — ङ.
[8] पिङ्गला श्मश्रु० — ओ; पिङ्गला श्मशू० — क; पिङ्गलश्मश्रुरोमाणो — ख, घ, ङ, छ, ज.
[9] बृहत्स्फिजः — ऊ, ऋ, घ, च; बृहस्फिचि — ख; बृहत्स्फिजाः — छ, ज.
[10] लम्बाधरोष्ठविधिप्राणा० — ओ; लम्बोदशोष्ठा विप्राणा० — क; लम्बोष्ठचिबुकघ्राणा० — ख, घ, ङ, छ, ज; लम्बोष्ठाश्चिपिट० — च.
[11] सर्वे वामोघ० — ऊ, ऋ; सर्वाश्चामोघ० — ख, घ, छ, ज.
[12] नायकः — छ, ज.
[13] ०पतात्मनाम् — ओ, क.
[14] पूज्ये — ऊ, ऋ.
[15] मतङ्ग० क्रिया० ४.३६-३८ वृत्तौ.
[16] अस्त्राणि — ऊ, ऋ; अस्त्रेण — च.
[17] विधिवद्यागं — ऊ, ऋ; विधिवद्रागे — ङ.
[18] भक्षयेज्यान्न० — ऊ, ऋ; भक्ष्ये भोज्यान्न० — क.
[19] ०चित्रैस्तु — ओ, क, ख, घ, ङ, च, छ, ज.
[20] यथा — ख.
[21] विधिवत्प्राक् — ओ, क.
[22] सूचितं — ऊ, ऋ; सूचिता — ओ, क.
[23] सर्वे स्वे० — क, ख, घ, छ, ज.
[24] लुप्तसाम्य . . मुक्तये — ओ; लुप्तसाम्या न मुक्तये —क; लुप्तशाखेन मुक्तये — छ.
[25] इदमर्धम् 'ओ' मातृकायां न दृश्यते ।
[26] ततः — ऋ, क.

विद्येशानां [1]प्रयोक्तव्या [2]शक्तिमुद्राध्वरे [3]तथा ॥७४॥
[4]प्रशान्ता लोकपालानां शक्रादीनां यथाक्रमम् ।
अस्त्र[5]वर्गस्य योक्तव्या मुद्रा [6]संहारिणी शुभा ॥ ७५॥
[7]कृत्वैवं सकलं कर्म [8]गुरुर्यज्ञविशारदः ।

**प्रतिसरैः** इति स्रग्दामैः। ततो यथा[9]विभवं [10]सामान्यप्रकरणोक्तक्रमेण नैवेद्यं दत्त्वा, मुद्राः प्रयोज्या इति ॥

[11]गत्वाग्निकुण्डसामीप्यं [12]विघ्नानस्त्रेण वारयेत् ॥७६ ॥
पूर्वोक्तमखिलं वह्नेः [13]कार्यमुल्लेखनादिकम् ।

समीपमेव **सामीप्यम् अग्निकुण्डस्य गत्वा**, तत्र यागमण्डपविघ्नोत्सारणादि कृत्वा, यद्यसावनाहिताग्निराचार्यः, ततो **वह्नेः** अपि [14]**पूर्वोक्तं** संस्कारचक्रं कुर्यात्। अथाहिताग्निस्ततः कुण्डस्यैव **उल्लेखनाद्य**ङ्गजातम्। अत एव कुण्डान्तर एवाहिताग्निनाग्निः परिरक्ष्यो न हवनकुण्डे इत्युक्तमग्निकार्यसामान्यप्रकरणे[15] ॥

स्रुक्स्रुवौ तापयेद्धीमान्प्रागलभ्य[16] कुशैस्त्रिधा ॥७७॥
गायत्र्या वामपार्श्वे तु स्थापयेत्साक्षिमुच्चरन्[17] ।

अयमत्र स्रुक्स्रुवयोः संस्कारान्तरविधिः, प्रोक्षणादेरेव [18]सामान्यप्रकरणे प्रोक्तत्वात्। वाम[19]पार्श्वस्थापनस्य तु तयोराज्य[20]पात्रवद्धोमानुगुण्येन तत्रापि प्राप्तिसिद्धेरत्र साक्षिन्पदेनेति विशेषविधिः ॥

ततो मन्त्र[21]गणं सर्वं निवेश्योक्तं यथा पुरा ॥७८॥
तर्पयेद्भक्तियुक्तात्मा [22]सुविशुद्धेन सर्पिषा ।

---

[1] प्रयोक्तव्यं — ख, घ, छ, ज.
[2] 'शक्तिमुद्रा' इत्यारभ्य 'अस्त्रवर्गस्य योक्तव्या' इत्यन्तं नास्ति 'ऋ' मातृकायाम्.
[3] सदा — ऊ, च.
[4] प्रशान्तो — ऊ.
[5] ०वज्रस्य — ओ, क.
[6] संसारिणी — ऊ, ऋ, घ; संहारिणा शुभाः — ओ.
[7] कृत्वैव — ओ, घ; कृत्वैवमखिलं — च.
[8] गुरुयुज्ञ० — ङ.
[9] ०विभवे — ऊ, ऋ.
[10] मतङ्ग० क्रिया० ३.९२-९५ श्लोकैरुक्तक्रमेण ।
[11] गत्वाथ — ओ, क, ङ.
[12] विघ्नानात्रेण — ङ.
[13] कार्यं चापि च योजयेत् — ओ, घ.
[14] मतङ्ग० क्रिया० ४.१९उ० — ३२
[15] मतङ्ग० क्रिया० ४.३५ वृत्तौ ।
[16] प्रागलभ्य — ओ.
[17] ०त्साक्षमुच्चरन् — ऋ.
[18] मतङ्ग० क्रिया० ४.३५,४४.
[19] ०पार्श्वस्थापरस्य तु — ऊ, ऋ.
[20] ०मात्रवद्धोमानुगुणेन — ऋ.
[21] ०गणां — छ, ज.
[22] सविशुद्धेन — ओ, क.

ततः स्थण्डिलपूजनवदग्नावपि **मन्त्रगणं निवेश्य** घृतेनैव **तर्पयेत्** ॥

**प्राक् [1]प्रदेयास्तु रक्षार्थे [2]ब्रह्मवृक्षसमुद्भवाः[3] ॥७९॥**
**[4]समच्छेदाश्चतुर्दिक्षु बाहु[5]मात्राः प्रयत्नतः ।**
**[6]विधौ परिधयः पूर्वमिध्मान्पश्चात्तु[7] होमयेत् ॥८०॥**
**अष्टादशाङ्गुलान्मन्त्री"[8]**

मन्त्रनिवेशनात् **प्राग्** अग्नेस्तरवः **परिधयः** देयाः । [9]तान् **पूर्वं** दत्त्वा **पश्चाद्** अष्टादशाङ्गुला एवेध्मा देयाः । किमर्थमिति चेत्, अत एव कर्मान्तराश्रवणादग्निसमिन्धनार्था एव । [10]कियन्त इत्याशङ्कायां संहितान्तराद्विशेषः । यदुक्तं **श्रीमत्किरणे**[11] — "नव[12]षट्कैव संख्यया" इति । तदभावे तु तिस्र एव स्युः; [13]त्रिष्वपि बहुत्वस्य परिसमाप्तत्वात् । बहुत्वान्तरोपादाने[14] च तस्य प्रथममवश्यो पादेयत्वादित्ययमत्रैव विशेषः, न नित्य[हो]मे [15]प्रागनुक्तत्वादिति ॥

**"ततो द्रव्याधिवासनम् ।**

**द्रव्याणां** पूर्वेद्युरेव संस्कारपूर्वमाहरणम् **अधिवासनम्** उच्यते ॥

अथ कोऽसौ संस्कार इत्युच्यते —

**सूत्रेण [16]वेष्टनं कार्यं [17]संपातश्च सकृत् सकृत् ॥८१॥**
**[18]साक्षिन्साक्षिन्पदोच्चाराद्विहितं[19] कर्मसिद्धये[20] ।**

---

[1] प्रधेयाः परिधयो — ऊ, ऋ; प्रदेशास्तु रक्षार्थे — ओ, क; प्रभेदास्तु रक्षार्थे — ङ; प्रदेयाश्च चत्वारो — च.

[2] ब्रह्मवृक्षे — ओ, क, ङ; ब्राह्मवृक्ष० — ख, घ.

[3] ०समुद्भवः — ङ.

[4] समुत्सेधा० — ऊ, ऋ; समच्छेदाच्चतु० — क, ख, घ, छ, ज.

[5] ०मात्रा प्रयत्नधीः — ओ, क; ०मात्रा प्रयत्नतः — ख, घ, ङ, छ, ज; मात्रा प्रसन्नधीः — च.

[6] विधेः — ओ, क, ख, घ, ङ, छ, ज; विधेया विधयः — च.

[7] पूर्वमिन्धनं चात्र — ख, घ, छ, ज, पूर्वमिध्मं पश्चात्तु — च.

[8] ०दशाङ्गुला मन्त्री — ओ, ख, घ; ०दशाङ्गुला मन्त्रीं — क; ०दशाङ्गुला मन्त्रै — छ; ०दशाङ्गुला मन्त्रि — ज.

[9] ताः पूर्वं — ऊ, ऋ.

[10] किमन्य इत्या० — ऊ, ऋ.

[11] किरणे अग्निकार्यपटले १९उ०.

[12] ०षट्कैव संख्याय — ऊ, ऋ; 'षट्कैकसंख्यया' इति मुद्रितकिरणे पाठो दृश्यते ।

[13] शाबरभाष्यम् ११.१.८.३८; कपिञ्जलाधिकरणन्यायः — लौ० न्या० साहस्री ५३६

[14] बहुतान्तरोपादाने — ऋ.

[15] चतुर्थेऽग्निकार्यप्रकरणे ३६-३८ श्लोकेषु.

[16] वेष्टिनं — ओ.

[17] संपातं च — ख, घ, छ, ज.

[18] साक्षिसाक्षिपदो० — ओ, क, ख, घ, ङ, छ, ज; साक्षिः साक्षिप्रदाचारा० — च.

[19] ०च्चारान्वितम् — ओ, क; ०च्चाद्द्विहस्तं — ङ.

[20] कर्मप्रसिद्धये — ओ, क.

तच्च केषांचित् स्वतः, केषांचिदाधारद्वारेणेति। **सकृत्** [1]संपातः होमात्मकस्तु सर्वेषां साक्षादेव। पुष्पादीनां त्वधिवासस्य विनाशहेतुत्वेनासंभवादर्थलुप्तमुभय[2]मपीति॥

[ चरुपाकः ]

**[3]चरुः [4]पाच्यो यथान्यायं विद्याङ्गैर्वह्निना मुने ॥८२॥**
**[5]पूर्वोदितेन [6]संस्कारान् [7]कृत्वा चुल्ल्यां पृथक् शनैः।**
**[8]सुदृढामव्रणां [9]भद्रां स्थालीमादाय [10]मङ्गलाम् ॥८३॥**
**[11]क्षालितां [12]मन्त्रतोयेन पञ्चगव्येन च क्रमात्।**
**[13]आलभेदस्त्रमुख्येन [14]विद्याङ्गोत्थेन यत्नतः ॥८४॥**
**ब्रह्माङ्ग[15]सहितेनाथ [16]शिवेन च [17]महात्मना।**
**[18]कुशवर्त्या स्मरन्धर्मं [19]बध्नीयात्कण्ठदेशतः[20] ॥८५॥**
**[21]घृतेनाभ्यज्य विधिव[22]च्चरोः साधनमाचरेत्।**
**गव्येन पयसा मन्त्री [23]सुशुभ्रैः शालितण्डुलैः ॥८६॥**
**[24]तेभ्योऽभावा[25]द्यवैः क्षुण्णैर्गोधूमैर्वा दलीकृतैः[26] ॥**
**[27]श्यामाकतण्डुलैः शस्तैर्नीवारैर्वाथ सुव्रत[28] ॥८७॥**

---

[1] संपाते — ऊ, ऋ.
[2] ०मपीतीति — ऋ.
[3] चरुं — ओ, क.
[4] प्राच्यो — ओ; पूर्वो — क.
[5] पूर्वोद्धृतेन — ऊ, ऋ, ओ, क, ख, घ, ङ, च, छ, ज; वृत्त्यनुसारेणात्र पाठः शोधितः।
[6] संस्कारः — ओ, क, ख, घ, ङ, छ, ज.
[7] पृथक् क्षाल्यै शनैः शनैः — ओ, पृथक् क्षाल्ये शनैः शनैः — क; प्रक्षाल्य च शनैः शनैः — ख, घ, ङ, छ, ज; पृथक् कृत्वा शनैः शनैः — च.
[8] सुदृढामप्रणं — छ, ज.
[9] शुद्धां — ख, घ; रम्यां — च, छ, ज.
[10] सिद्धिदाम् — ख, घ, छ, ज.
[11] कालिकामन्त्र० — च.
[12] मन्त्रगेन — ओ, क, ङ.; मन्त्रितोयेन — छ, ज.
[13] आलभेच्चास्त्र० —ऊ; आलभेताः शास्त्र० — ऋ.
[14] विद्याङ्गोऽर्थेन — ओ, क.
[15] ०सहितेनापि — ओ, क, ख, घ, ङ, छ, ज.
[16] शिवेनापि — ओ, क, ङ.
[17] शिवेन च — ओ, क, ङ पाठान्तरम्।; महात्मनः — ङ.
[18] कुशवन्त्या स्पन्ध. मं — ऊ; कुशवन्त्या स्पन्धधर्म — ऋ; महात्मना कुशं बध्वा — ओ, क; कुशवर्त्या शुरं धर्मं — ख, घ, छ, ज; कुशवन्ध्यात्मकं धर्म — ङ; कुशवत्या स्मरन् धर्म० — च.
[19] . . . येत्कर्ण० — ओ, ज; धर्मयेत्कर्म० — क; बन्धयेत्कण्ठ० — ख, घ, ङ, च.
[20] ०देशतम् — ज.
[21] घृतेनाभ्यर्च्य — ख, घ, छ, ज.
[22] ०च्चरोः सवनमारभेत् — ओ, क, ख, घ, छ, ज; ०च्चरोत्सवनमारभेत्—ङ; ०च्चरोः साधनमारभेत् — च.
[23] सुशुभैः — ऊ, ऋ, ओ, क, ख, घ, छ, ज.
[24] तेभ्यो वा मध्यपः क्षुण्णैः — ङ.
[25] ०द्यवः क्षुण्णैः — ओ; ०द्यवः क्षुण्णो — क
[26] ०धूमैर्वदलीकृतैः — छ, ज.
[27] श्यामाकं तण्डुलैः — क.
[28] ०निवातैर्वात सुव्रत — ङ.

**विद्याङ्गै[1]र्वाग्यतो भूत्वा [2]शनैर्मृद्वग्निना पचेत् ।**
**स्थाली[3]प्रमाणः सुस्विन्नो [4]ह्यदग्धोऽकठिनः शुभः[5] ॥८८॥**
**[6]न चातिशिथिलः पाच्यो न चातिबहु शस्यते ।**
**[7]चुल्ल्यां स्थितस्य विद्याङ्गैरभिघारः प्रशस्यते ॥८९॥**
**[8]तप्तशीताभिघारश्च[9] शिवेनैवावतार्य तु[10] ।**
**[11]दातव्यः स्रुवमापूर्य [12]परितः क्षालयेच्छनैः ॥९०॥**
**[13]साक्षिन्साक्षिन्पदं [14]स्मृत्वा [15]पीडचाङ्गुष्ठेन कारयेत् ।**
**[16]संपाताभिहुतं पश्चाद्देवाय विनिवेदयेत् ॥९१॥**
**सघृतं काञ्चने पात्रे [17]मृण्मये वाप्यभावतः ।**
**हुत्वा [18]भागं तथैवाग्नेः [19]शिष्टं वै साधकात्मसु ॥९२॥**
**पिधाय स्थापयित्वा तु"**

ततः **पूर्वोदितेन** पञ्चसंस्कारसंस्कृतेन **वह्निना चरुः पाच्यो विद्याङ्गैः संस्कारान् कृत्वा चुल्ल्यां पृथक् शनैः**, अग्निकुण्ड इव प्रोक्षणोल्लेखनादिकान् । **मन्त्रतोयेन** इति अर्घपात्रपानीयेन । अत्र चरुसिद्धयादौ मन्त्रात्मकविशेषविधिः । नित्यहोमे च सामन्यतः सर्वयागो[20] गायत्र्यैव । चरोः सिद्धादभिघारिताच्च देवाय परिवारयुक्ताय निवेदयेद् **भागं** जुहुयाच्च । [21]**शिष्टं भागं** शिष्याणामात्मनश्च भोजनव्रतसंपत्तये तत्रैव **पिधाय स्थापयेत्** ॥

---

[1] ०र्वा. . तो — ऊ; ०र्वा ततो — ॠ.
[2] शनैस्तद्धचग्निना — च.
[3] ०प्रमाणं सुस्यन्दो — ओ; ०प्रमाणं सुस्थन्दो — क, ङ; ०प्रमाणं सिं स्वि. ो-ख; ०प्रमाणं स्विस्विन्नो — घ; ०प्रमाणं स्वीनिन्नो — छ; ०प्रमाणं स्वसिन्नो — ज.
[4] ०ऽप्यदग्धो लोकनैः शनैः — ख; ०ऽप्यदग्धोलोकनैः शुभैः — घ, छ, ज; ह्यदग्धेऽक्लिन्नताः शुभाः — ङ.
[5] ०ऽक्लिन्नता शुभा — ओ, ०ऽक्लिन्नताः शुभाः — क.
[6] न च तीशिथिलं पाच्यो — ओ; न चातिशिथिलं प्राच्यो — क, ङ.
[7] 'ख, घ, छ, ज' मातृकासु '८९' उत्तरार्धं न दृश्यते ।; चुल्यास्ति तस्य — ङ.
[8] सप्त० — ओ, क.
[9] ०भिवाराश्च — छ, ज.
[10] ०वतार्य च — ओ, क, ङ.
[11] दातव्य स्रुव० — ओ; दातव्य स्रव० — क; दातव्य पूर्व० — ख; दातव्यं स्रुव० — घ, च, छ, ज; दातव्यं ध्रुव० — ङ.
[12] पूरितक्षा० — ओ; परीतः क्षाल०—ख, घ; पूरितः — च; चरितः — छ, ज.
[13] साक्षिसाक्षिपदं — ओ, क, ख, घ, ङ, छ, ज.
[14] स्मृत्य — ख, घ, छ, ज.
[15] पीडचङ्गुष्ठेन — ऊ, ॠ; पीढचाङ्गुष्ठेन ओ; प्रपीडचाङ्गुष्ठेन — क, ङ; पीडाङ्गुष्ठेन — ख, प्रपीडाङ्गुष्ठेन — घ; प्रविधाङ्गुष्ठेन — छ; प्रविद्धाङ्गुष्ठेन — ज.
[16] 'ओ, क, ख, घ, ङ, छ, ज' मातृकासु '९१' उत्तरार्धं ९२ श्लोकः ९३ पूर्वार्धं च न सन्ति; संपातिभिर्हुतं — ऊ, ॠ.
[17] मृन्मये — च.
[18] भागोऽग्नये सम्यक् — च.
[19] शेषं — ऊ, ॠ, च.
[20] ०यागं — ऊ, ॠ.
[21] शेषं — ॠ.

[1]"ततः शिष्यान्प्रवेशयेत् ।
[2]यथोपसन्नं क्रमशः प्रागेव [3]सुपरीक्षितान् ॥९३॥

[4]वक्ष्यमाणश्रुत्योपोषितान् स्नातानाचान्तान् सितवस्त्रसंवीतान् **यथोपसन्नम्** इति ये ये उप[5]सन्नाः, तान् ब्राह्मणादिक्रमेण प्रवेशयेत्। यस्तु यथोपसन्नानिति बहुवचनान्तं व्याचष्टे, तस्य यत्तदोर्नित्यमभिसंबन्धतस्तथैव प्रवेशयेदिति क्रमस्य सिद्धत्वात् **क्रमशः** इति पदमनर्थकमेव। ब्राह्मणादिक्रमस्य च परित्यागात् संहितान्तरविरोधोऽपि। यदुक्तं श्रीमद्**रौरवादौ**[6] —

"ब्राह्मणान्क्षत्रियान्वैश्याञ्शूद्रांश्चैव स्त्रियस्तथा ।"

इति पूर्वैव व्याख्या युक्ता। तच्चोप[7]सन्नत्वं तेषां शक्तिपातविषयीकृतत्वमत्राधिकारनिमित्तं **प्रागेव** संसार[8]वैतृष्ण्यादिभिः [9]परीक्ष्यमित्युक्तं [10]**विद्यापादे** ॥९३॥

ननु यथैव वैदिकसंस्कारो ब्राह्मणादीनां शरीरस्य जातेर्वा संस्कारकः, तदनुमेयस्य कर्मणो वा कश्चित्। यदाह **मनुः** —

[11]"कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ।
[12]गार्भैर्होमैर्नामकर्मचौड[13]मौञ्जीनिबन्धनैः ॥" इति ।

पुनश्च —

[14]"महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ।" इति ।

[15]**बैजवापो**ऽपि —

[16]"नित्यादिकर्मणामुक्तमाधार[17]मुपकारकम् ।" इति ।

तथायमपि भविष्यतीति किमत्रोपसन्नसत्त्वपरीक्षयेति। तदर्थमेतत् —

[18]**निरपेक्षो विधिर्यस्मात्तस्माद्भक्तिर्गरीयसी ।**
[19]**नात्र पिण्डस्य संस्कारो [20]न जातेर्न च कर्मणः ॥९४॥**

---

[1] 'ऋ' मातृकायां '९३' तमश्लोकस्य द्वितीय-तृतीय-चतुर्थपादाः न सन्ति ।; ततः शिष्यं — च.
[2] यथोपपन्नं — ऊ; यथोपसन्नात् — ओ, ख, ङ; यथोपपन्नान् — क, घ; यथोपसन्नान् — च; यथोपन्नात् — छ; यथोपपन्नात् — ज.
[3] सुपरीक्षितात् — ऊ.
[4] मतङ्ग० क्रिया० ५.१०२.
[5] ०सन्नांस्तान् — ऊ.
[6] मुद्रितरौरवे नोपलभ्यते ।
[7] ०सन्नं तेषां — ऊ, ऋ.
[8] ०वैतृष्ण्याभिः — ऊ; ०वैतृष्णाभिः — ऋ.
[9] परीक्षमित्युक्तं — ऊ.
[10] मतङ्ग० विद्या० ४.४४ वृत्तौ ।
[11] मनुस्मृतिः — २. २६ उ० , २७ पू०
[12] गार्भैर्होमनामकर्म० — ऊ, ऋ; गार्भैर्होमैर्जातकर्म० — मनुस्मृतिपाठः.
[13] ०मुञ्जी० — ऋ.
[14] मनुस्मृतिः २.२८ उ०; महाभारते आश्वमेधिकपर्वणि ११०. ५३ उ०
[15] बैजवपोऽपि — ऊ, ऋ.
[16] आकरो न लभ्यते ।
[17] ०मुपाकारकम् — ऋ.
[18] निरपेक्ष्ये विधि० — ङ; निरपेक्ष्यो — च.
[19] नात्रापि यस्य सं० — ओ, क; नात्र पिण्डवत्सं० — ख.
[20] जायते न च कर्मणः — ऊ, ऋ; न जातेर्न च कर्मणाम् — ङ.

[1]नापेक्ष्य युज्यते [2]मुक्त्यै [3]सिद्ध्यै वाप्यथ [4]लौकिकीम् ।
मुमुक्षोर्भक्ति[5]मापेक्ष्य तेषाम[6]प्यग्रणीः [7]सदा ॥९५॥
सर्वात्मना निषण्णो [8]यः [9]सर्वदाराधने गुरोः ।

यतो **न** अयं शरीरादेः **संस्कारः**, अपि तु निरपेक्षत्वेन मुक्त्यर्थं भोगाय च शक्तिपाताघ्रातस्य मलपाकवतः पुंस एवेत्युक्तं [10]**विद्यापादे**। ततो लोकसिद्धब्राह्मणादिजातियुक्तानामपि मध्याद् **यः अग्रणीः** स्वकर्मवेदाध्ययनादिनिष्ठः, तस्य यदि भक्त्याद्यात्मकमुपसन्नत्वं शक्ति[11]पाताव्यभिचारि निश्चितं भवति, तदात्राधिकारो [12]नान्यस्यापीति ।

एतदेवात्राधिकारनिमित्तम्; [13]न तु ब्राह्मणत्वादिजातिमात्रमेवेति [14]**विद्यापाद**सिद्धवस्त्वनुभाषणेन दर्शयति —

[15]आराधने शिवस्येच्छाप्रेरितस्य [16]प्रवर्तनम् ॥९६॥
[17]यदाघ्रातः पशुः [18]सम्यक् शिव[19]शक्त्या [20]तदैव सः ।
[21]विमुक्तो [22]विगतायासो [23]भोगसंघार्णवाद् ध्रुवम् ॥९७॥
[24]तथापि [25]गुरुतोऽज्ञस्तु स्वाधिकारवशात्पशुः ।
[26]मन्त्रदीक्षा[27]मवाप्नोति [28]यया [29]निर्वृतिमृच्छति ॥९८॥

---

[1] नापेक्षा — ऊ, ॠ, च, छ, ज; नापेक्ष्या — ओ, ख, घ; नानापेक्ष्या — ङ.

[2] मुक्तौ — छ.

[3] सिद्धये वाथ — ओ, क, ख, घ, ङ, च, छ, ज.

[4] लौकिकी — ऊ, ॠ, च; लौकिकम् — ओ, क, ख, घ, छ, ज.

[5] ०मावेक्ष्य — ओ, ङ.

[6] ०प्यग्रणी सदा — ॠ; ०प्यग्रणी समा — ओ, ङ; ०प्यग्रतीः सदा — ख; ०प्युग्रणीः सदा — छ.

[7] समा — क.

[8] या — ङ; ०ऽयं — च.

[9] सदाराराधने — ओ; सदराराधने — क; सर्वधाराधने — ख; सर्वदाराधरे — ङ; सर्वदा धारणे — च.

[10] मतङ्ग० विद्या० ४.४४-५०.

[11] ०पाताद्व्यभिचारि — ऊ, ॠ.

[12] नान्य तथा तस्यापीति — ऊ, ॠ.

[13] नत्वब्रह्मणत्वादि० — ॠ.

[14] मतङ्ग० विद्या० ४.४४–५०.

[15] आराधनं — ऊ, ॠ, ओ, क, घ, ङ, छ, ज; आराधनशिव० — ख; आराधनाच्छिव० –च.

[16] प्रवर्तते — ऊ, ॠ, च; विवर्तनम् — ओ, क.

[17] यथाघ्रातपशुः — ओ, ङ; यथाघ्रातः पशुः — क; यदाघातं — छ, ज.

[18] शम्यच्छिव० — ओ.

[19] ०भक्त्या — ङ; ०शक्त्योर्न वैवशः — च.

[20] तदैव सि — छ; तदैव हि — ज.

[21] विमुक्तोऽयं गता० — छ, ज.

[22] विगतायासे — ख.

[23] भोगसंगार्णवाद् ध्रुवम् — ओ, क, च; . . गान्नवा ध्रुवात् — ख; भोगसंगान्नवा ध्रुवात् घ, छ, ज; भोगसंगार्णवा ध्रुवम् — ङ.

[24] यथा हि — ओ, क, ख, घ, छ, ज; यथा च हि — ङ.

[25] गुरुताज्ञस्तु — च.

[26] मन्त्री दीक्षा० — ॠ; मन्त्री दीप्ता० — ख, घ; मन्त्रदीप्ता० — छ, ज.

[27] ०मवाप्तोऽपि — ओ, क.

[28] यथा — ओ, क, ख, ङ, छ, ज.

[29] निर्वृतिमर्छति — ऊ, ॠ; निर्वृतिमिच्छति — ओ, ख, ङ; निघृतिमिच्छति — क; निवृतिमिच्छति — क; न वृतिमिच्छति — छ; निव्रतिमिच्छति — ज.

**न [1]चात्राणोर्भवेद्दीक्षा न [2]बन्धस्य शिवस्य वा।**

"ननु चैतच्छ्लोकत्रयं तावत्प्रकृतानुपयोगि। पूर्वसूत्रेण च विरुद्धम्; उक्तं हि—**पशुर्मन्त्रदीक्षामवाप्नोति** इति। [3]"दानं नाम परा काष्ठा" इत्यादिना स्नानप्रकरणोक्तेन, [4]विद्यापादोक्तेश्च वान्यैर्गतार्थम्। अस्य प्राप्तप्रतिषेधाच्च निष्प्रयोजनमपि; **न** हि **बन्धस्य**, [5]**शिवस्य वा दीक्षा** संभवति यतो नान्यपरत्वात्। यदुक्तं [6]प्राग् दानक्षपणलक्षणा दीक्षेति तदेवात्र विप्रतिपत्तिनिराकरणतो दीक्षायाः फलवत्तास्मरणेन अधिवासादीनामङ्गत्वसिद्धयेऽनूद्यते। **तथापि नात्राणोः** [7]दानं, क्षयो [8]वा नित्यत्वात्। नापि बन्धस्य सर्वपुरुषसाधारणत्वेनैकपुरुषानुरोधस्तथात्वानुपपत्तेः। नापि पशुगतस्य शिवत्वस्य तद्वन्नित्यत्वव्यापकत्वा[9]दिति दीक्षानुपपत्तिरेव" इति ये आहुस्तान्प्रत्युच्यते—

**[10]पशुत्ववासना पुंसः [11]कलातत्त्वाश्रिता तु या ॥९९॥**
**[12]तदभावे स्मृता दीक्षा [13]प्रसूतेः क्षपणं [14]क्षयः।**
**[15]पशोर्ध्वस्तप्रसूतेर्या [16]काष्ठा [17]व्यक्तिमुपैति हि ॥१००॥**
**[18]तद्दानमुभयोर्धात्रा[19] दीक्षा तन्त्रे [20]प्रकाशिता।**
**[21]कर्तव्या सा यथान्यायं [22]शिष्यसंतानवर्त्मनि ॥१०१॥**

---

[1] चात्राणो ह्वेर्दीक्षा—ओ, घ; चात्राणो भवेद्दीक्षा—क, ख; चात्राणो ह्वेद्दक्षा—ङ; चात्राणो भवेद्दीक्षां—छ, ज.

[2] बन्धस्याच्छिवस्रवा — ओ, बन्धस्यात् शिवस्रवि — क, बन्धः स्याच्छिवस्य वा —ङ.

[3] मतङ्ग० क्रिया० २.२,३.

[4] मतङ्ग० विद्या० ४.५८ उ०, ५९.

[5] भावप्रधानो निर्देशः, शिवत्वस्येत्यर्थः।

[6] मतङ्ग० क्रिया० २.३.

[7] मानं—ऊ, ऋ.

[8] 'ऋ'मातृकायां 'वा' इति नास्ति।

[9] ०दितीर्थं दीक्षा—ऊ, ऋ.

[10] पशुत्वं वासना—ऋ, ओ, क, ङ.

[11] कलाश्रितात्यथा—ऋ; कलां तत्वाश्रृतानया—ओ; कला तत्त्वाश्रुतानया—क; कलातत्त्वाश्रितास्तु या—ङ; कालतत्त्वाश्रिता—छ, ज.

[12] तदभावः स्मृता—ऊ, च; तदभाव स्मृता—ऋ, ख, घ, छ; तदभावस्तदा—ज.

[13] प्रसूते क्षपणं—ओ, क; प्रसृतेः क्षपण०—ख, छ, ज; प्रस्नुतेः क्षपण०—घ; प्रसूते क्षपण०—ङ; प्रसृते क्षपणः—च.

[14] क्षपः—ऊ, ऋ.

[15] पशोर्ध्वत्ततप्रसूतोर्धा०—ओ; पश्वे ... त्तत्प्रसूतेर्या—क; पशोध्वप्रसृतेय्यां—ख; पशोध्वप्रसूतेर्या—घ; पशोध्वस्तत् प्रसूतिर्यो—ङ; पशोर्भूप्रसरे रुद्धा व्यक्ति०—च; पशोर्ध्वप्रसृते कार्या—छ; पशोर्ध्वप्रसृतै . . र्याः—ज.

[16] काष्ठार्यत्वमुपैति हि—ऊ, ऋ.

[17] व्यक्तिमवैति हि—ओ.

[18] तद्दानमुपभयोर्धात्वोः—ऊ; तद्दात्रमुभयोर्धात्रो—ऋ; तद्दानं मुनये त्वात्रा—ओ; तद्दानं मुनये ध्वात्र—क; तदा. . मभयोर्धात्वोः—ख; तस्यान्नमुभयोर्धात्वोर्दीक्षा—च.

[19] ०र्धात्वो०—घ, छ, ज; ०ध्यात्वा—ङ.

[20] न काशिता—ऋ; प्रभाषिताः—ओ, क, ख; प्रभाषिता—घ, च.

[21] कर्तव्य सा—ओ, छ, ज.

[22] शिष्यः संतान०—ओ; शिष्यं संतान०—क.

**पशुत्वेन** मलेन सह या **वासना** कर्मसंस्कारात्मिका, या च पृथिवीतत्त्वात् **कलातत्त्वं** यावद् **आश्रिता** सूक्ष्मदेहात्मिका[1] साधारणतत्त्वसृष्टिर्विद्यापादोक्ता [2]तस्याः, अस्य प्रतिपुरुषमसाधारणस्य बन्धस्य क्षयो दीक्षार्थः संभवत्येव साधारणस्यापि। **प्रसूतेः** तं प्रति कार्याभिमुख्यभावक्षयः क्रियत एवेति। ततश्च शुद्धेऽध्वनि प्रतिस्थानं क्रमेण स्वगुण[3]व्यक्तिरेवाणोः शिवत्वदानमुपपद्यत इति दर्शितमस[कृ]द् **विद्यापादे**[4] इति। सैव मुमुक्षोः साधकस्य [5]वाधिवासादिसर्वाङ्गयुक्तात्र कर्तव्यत्वेनोक्तेति [6]न दोषः कश्चित् ॥९९–१०१॥

एवं प्रासङ्गिकं परिसमाप्य प्रकृते[7] —

**शिष्याश्चोपोषिताः[8] स्नाताः[9] [10]शुचयो विनयान्विताः।**
**शिरःसु [11]शिवहस्तेन शिरसा [12]शिववारिणा ॥१०२॥**
**प्रोक्षयित्वा [13]शिवास्त्रेण [14]ताडयेद् भस्मना शनैः।**
**[15]प्रवेश्योपरि[16] दर्भाणां [17]निवेश्यालम्भनं कुशैः ॥१०३॥**
**नाभेरूर्ध्वं [18]त्रिधा कृत्वा ततो[19]ऽधस्तादयं विधिः।**
**[20]उदङ्मुखस्य गुरुणा [21]पूर्वास्येन [22]सुमेधसा ॥१०४॥**
**[23]सर्वात्मना प्रकर्तव्यः करन्यासश्च[24] पूर्ववत्।**
**ब्रह्मभिः [25]सकलीकृत्य गायत्र्यार्घादिकं[26] पशोः[27] ॥१०५॥**
**गन्धपुष्पपवित्रैश्च [28]धूपामोदसमन्वितैः।**

---

[1] ०देहात्मिके — ऊ, ऋ.
[2] तस्यास्य — ऊ; तस्या तस्य — ऋ.
[3] ०व्यतिरेवाणोः — ऊ, ऋ.
[4] मतङ्ग० विद्या० २.१,२पू० वृत्तौ; ३.२उ० वृत्तौ; ४.५४-५९ वृत्तौ।
[5] वा दिवसादिवसादि० — ऋ.
[6] 'ऋ' मातृकायां 'न' इति नास्ति।
[7] 'ऋ' मातृकायामत्र चकारोऽधिकः।
[8] शिष्याश्चैवोषिताः — ख, घ, छ, ज; शिष्यश्चोपोषिता — ङ; शिष्यांश्चोपोषितान् — च.
[9] ०तास्ताताः — क; तांस्तान् — च.
[10] शुचींश्च विनयान्वितान् — च; शुचयोऽपि नया० — छ, ज.
[11] निव० — ओ, क.
[12] वारिणा शिवम् — ओ, क.
[13] शिखास्त्रेण — च.
[14] ताडयेत्पद्मना — ङ.
[15] 'ख, घ, छ, ज' मातृकासु इदमर्धं नास्ति।
[16] प्रपश्योपरि — क.
[17] निवेशः लम्भनं कुशैः — ऋ; निवेश्यालम्बनं शनैः — ओ, निवेश्यालभनं शनैः — क; निवेन्यालम्भनं शनैः — ङ.
[18] स्त्रिधा — ओ; स्त्रियां — क.
[19] यश्चाप्ययु विधि — ओ; यश्चाप्ययं विधिः — क, ज; ०धश्चाप्ययं विधिः — ख, घ, ङ; ०धस्थाप्ययं — छ.
[20] भ्रुवोर्मुखस्य — ओ, ख, घ, ङ, छ, ज; सुवो मुखस्य — क.
[21] पूर्वा येन — ओ, क; पूर्वाख्येन — ख, घ, ङ; पूर्वखेन — छ, ज.
[22] तु मेधसा — च.
[23] सर्वात्मनः — ऋ, ओ, क.
[24] ०न्यासेन — ओ, क, ख, घ, ङ, छ, ज.
[25] सकलं कृत्वा — ओ, क, ख, घ, ङ, छ, ज. सकलीकृत्वा — च.
[26] ०र्घ्यादिकं — ओ, क, ख, घ, ज; ०र्घ्यदिशं — ङ; ०र्घादितं — छ.
[27] भशोः — ङ.
[28] धूपाधूमसम० — ऋ.

**कार्यमस्यार्चनं [1]पश्चात्तं देवाय [2]प्रपातयेत् ॥१०६॥**
**[3]अभ्यर्चयित्वा तु ततः[4] कुण्डस्याथ[5] समीपतः ।**
**[6]स्थाप्याधः[7]शिरसः शिष्यान्संपातांश्च[8] प्रपातयेत्[9] ॥१०७॥**
**[10]सर्वैर्मन्त्रैर्यथान्यायं[11] वह्नौ [12]पूर्णां [13]प्रदापयेत् ।**
**एकैकस्य [14]च मन्त्रस्य संनिधानाय सर्पिषा ॥१०८॥**
**तिस्रस्तिस्रः प्रदातव्या [15]गुरुणाहुतयः शिवाः[16] ।**

ततः [17]प्रागुक्ता ये **शिष्याः**, तान् शिव**शिरसा** अर्घपात्रपानीयेन च **प्रोक्षयित्वा, शिवास्त्रेण भस्मना शनैः** न यथैतच्छरीर[18]बाधा भवेदेवमाताडच, **दर्भाणामुपरि** उदङ्मुखानुपवेश्य, स्वयं च प्राङ्मुखमुपविश्य, शिवहस्तं कृत्वा तेन **शिरःसु** विषग्रस्तापामार्जनवत्, पाशस्तोभार्थं दर्भैः [19]**नाभेरूर्ध्वं त्रिधा**, तदधश्च तथैव आल[म्भनं कृत्वा], करन्यासदेहन्यासयुक्तान् कृत्वा, अर्घादिभिरभ्यर्च्य, स्थण्डिलादिस्थस्य भगवतः प्रणिपातपूर्वं पूजां कारयित्वा, अग्निसमीपे [अधः]शिरस्कानवस्थाप्य, [20]शिवैकादशिकया संपातहोमं तत्र [21]निर्वर्त्य, **संनिधानाय** इति श्रुतेः सर्वावरणन्यस्तानां मन्त्राणां प्रत्येकमाज्या[22]हुतीस्तिस्रो हुत्वान्ते [23]पूर्णाहुतिं शिवेन दद्यादिति शिवमन्त्राधिवासनम् ॥

अथ होमप्रसङ्गेन सकल[24]मन्त्रयोजनविधिः —

**प्रणवोच्चारसंयुक्तं[25] पदमन्त्रं[26] नियोजयेत् ॥१०९॥**
**[27]स्वाहान्तं प्रयतो भूत्वा होमकर्मणि नित्यशः ।**

**नित्यशः** इति सर्वत्र नित्यादिकेऽपि कर्मण्ययं विधिः । यस्य मन्त्रस्य यत्पदं प्राङ्मन्त्रत्वेनोद्धृतं,

---

[1] पश्चात्तद्देवाय — ऊ, ऋ, ओ, क, ख, घ, ङ, छ, ज.
[2] प्रदापयेत् — ऋ, क, ख, घ, ङ, छ, ज; प्रकल्पयेत् — च.
[3] 'ऋ, ङ' मातृकयोरयं श्लोको न दृश्यते ।
[4] अर्चयित्वा ततस्तस्य — ओ, क; अर्चयित्वा ततः पश्चात् — ख, घ, छ, ज; अर्चयित्वा च तत्कुण्डं — च.
[5] कुण्डस्यायं — ओ, क; कुण्डस्यापि — ख, घ, छ, ज.
[6] ०कृत्वाधः० — ऊ, ऋ.
[7] ०शिरसं शिष्यं — ओ, क, ख, घ, च, छ, ज.
[8] संपाताश्च — ऊ, छ, ज.
[9] प्रदापयेत् — ओ, क, ख, घ, छ, ज.
[10] 'ख, ङ, छ, ज' मातृकासु इदमर्धं नास्ति ।
[11] ०न्याय्यं — ऊ.
[12] पूर्वां -- ऋ; पूर्णं — क.
[13] प्रपातयेत् — ऊ, ऋ, च.
[14] तु मन्त्रस्य — ओ, क, ङ, च; तु मन्त्रेण — ख, घ, छ, ज.
[15] गुरूणां हुतयः शुभाः — ङ.
[16] शुभाः — च.
[17] मतङ्ग क्रिया० ५.९३.
[18] ०बाधभावो देव० — ऊ, ऋ.
[19] ना भवदूर्ध्वं — ऋ.
[20] शिवैकदशिकया — ऊ, ऋ.
[21] निवर्त्य — ऊ, ऋ.
[22] ०हुतयस्तिस्रो — ऊ, ऋ.
[23] पूर्वाहुतिं — ऋ.
[24] ०मन्त्रयोर . . विधिः — ऊ, ऋ.
[25] ०संयुक्तः — छ, ज.
[26] पदमत्र — च, छ, ज.
[27] स्वाहान्तः — छ, ज.

तस्य तदोंकारपूर्वं **स्वाहान्तं** च होमकाले कुर्यात्। अर्चने तु नमस्कारान्तमेवेत्युक्तं सामान्यप्रकरणे —

"[1]नमस्कारावसानाश्च [2]कर्तव्याः प्रणवादिकाः" इति।

इहापि तदेवानुवदिष्यति —

"[3]न्यासार्चनजप[4]स्नानकर्मण्युक्ता महामुने।
नमस्कारावसानास्तु मन्त्राः" इति॥

यस्य तु [5]मन्त्रोद्धारे प्राक् [6]पदं नोद्धृतं गणपत्यादेः —

**[7]पूर्वं प्रणवमुच्चार्य [8]पदं स्यात्तदनन्तरम्॥११०॥
स्वनाम [9]च ततः पश्चाच्चतुर्थ्यन्तं प्रयोजयेत्।
[10]ततश्चैवेन्धका योज्या विधौ कर्मानुरूपतः॥१११॥**

तस्यात्र **प्रणवं पूर्वमुच्चार्य स्वनाम** एव **पदं स्यात्**। तच्च विद्येश्वरादिपदवत् **चतुर्थ्यन्तम्** एव **प्रयोजयेत्** यथास्वमूहेनैव[11] तथापि प्रकृतिवत्कर्तव्यतया सिद्धेः। **ततः** अनन्तरं होमार्चन**कर्मानुरूपतः** [12]स्वाहाकारनमस्कारात्मकाः **इन्धकाः योज्याः नित्यशः** इति। अत एव च नित्यश इति श्रुतेर्नैवंविधं वाक्यं प्रकरणेन नियन्तुं शक्यमित्युक्तम्[13]। न च सामान्य[14]प्रकर[ण]स्थेन वाक्येन सहास्य [15]विरोधः, अनुद्धृतपदानामेव मध्ये नाम चतुर्थ्यन्तं मन्त्रपदत्वेन [16]योज्यमित्यस्यार्थो यतः॥११०–१११॥

**आमन्त्रणे संनिधाने पशुकार्ये च नित्यशः।
[17]हुंकारश्चात्र संहारे ग्रहणे [18]फट् प्रकल्पयेत्॥११२॥
शिरश्छेदे तथा शस्तः[19] [20]फट्कारान्तो वियोजने।**

---

[1] मतङ्ग० क्रिया २.३१ पू०.

[2] कर्तव्यः प्रणवादिकः — ॠ.

[3] मतङ्ग० क्रिया० ५.११५उ० ११६पू०.

[4] ०स्नानकर्मण्युक्ता – ऊ; स्नाता कर्मण्युक्ता–ॠ

[5] मतङ्ग० क्रिया० १.६० उ०–११७ पू०.

[6] पदेनोद्धृतं — ऊ, ॠ.

[7] ख, घ, छ, ज मातृकासु ११० उत्तरार्धं, १११ श्लोकः, ११२ पूर्वार्धं च न सन्ति।

[8] पादं — ॠ.

[9] ०वचनं पश्चा चतु० — ओ; ०वचनं पश्चात् चतु० — क, ङ.

[10] ततश्चैवोन्धका — ऊ, ॠ, क; ततश्चैवोन्धकानां योज्यं — ओ; ततश्चैवेन्धिका — च

[11] ०स्वसमूहेनैव — ऊ, ॠ.

[12] 'स्वाहा' इत्यारभ्य 'इति श्रुतेः' इत्यन्तं 'ॠ' मातृकायां नास्ति।

[13] मतङ्ग० क्रिया० ४.३६-३८ वृत्तौ।

[14] ०प्रकरणे वाक्येन — ॠ.

[15] विरोधानुद्धृत० — ऊ, ॠ.

[16] योक्यामित्यस्यार्थो — ऊ, ॠ.

[17] हुंकारा चात्र — ओ; हुंकारश्चारसंहारे–ङ.

[18] क्षां — ऊ, ॠ; षट् — ओ; षा — क; क्षाः ख, घ; — क्षाङ — ङ; चात्र क्षा च; — कारयेत् प्रकल्प० — छ, ज.

[19] ...च्छेदने सदा शस्तः — ऊ; ..श्छेदेन सदा शस्ता — ॠ; शिरश्छेदो तथा शस्तं — ओ; शिरच्छेदे तथा शस्तं — क; शिरसे न तदा शस्तः — ख; शिरसे न तथा शस्तः — घ, छ, ज; शिरसे न तथा शस्तं — ङ; विच्छेदने सदा शस्तं — च.

[20] फट्कारोक्तो वियोजयेत् — ओ, क; फट्काक्तोऽपि वियोजयेत् — ख; पट्काक्तोऽपि योजयेत् — घ, छ; फट्कारोक्तोऽपि योजयेत् — ङ; हंकारोक्तो — च; फट्काक्तोऽपि प्रयोजयेत् — ज.

[1]संयोजने वषट्कारो[2] वौषडाप्यायने[3] मतः ॥११३॥

एतद् नित्यशः इति श्रुतेः सर्वार्थमेव ॥११२–११३॥

[4]स्वधाकारः पितॄणां [5]स्याद्धं स्तम्भे संप्रयोजयेत्[6]।
[7]उपहारे बलौ धूपे [8]प्रदीपेषु च नित्यशः ॥११४॥
योक्तव्या [9]देशिकेन्द्रेण स्वाहान्ता मन्त्रनायकाः।
[10]न्यासार्चन[11]जपस्नान[12]कर्मण्युक्ता [13]महामुने ॥११५॥
नमस्कारा[14]वसानास्तु मन्त्राः सर्वार्थसाधकाः।

ननु गतार्थमेतत्; यदुक्तं सामान्यप्रकरणे —

[15]"स्वधाकारान्तसंयोगात्पितॄणां तर्पणं हितम्।" इति।

न। अत [16]एवात्र तस्याङ्गत्वेन वक्ष्यमाणपाकयज्ञार्थतया प्रवृत्तेस्तस्यापि पितृकर्मत्वादित्यविरोधः[17]॥

अथ प्रासङ्गिकस्योपसंहारः —

[18]यो यत्र [19]युज्यते येन [20]स्वेन्धकेन पुटीकृतः[21] ॥११६॥
स तत्रैव [22]प्रयोक्तव्यो [23]नान्यथा [24]फलदो यतः।

---

[1] संजने वषट्कारो — ऊ; संजनेव वषट्कारो — ऋ; वषट्कारोवौषडा — ओ; वषट्कारो वौषडा वा — क; न संयोजनो वषट्कारो — घ; सौयोजने वषट्कारो — ङ; संयोजनो वषट्कारो — छ, ज.

[2] वषट्कारे — ख.

[3] वौषडाप्याते — घ; वौषडाप्यानते — छ, ज.

[4] स्वाहाकारः — ऊ, ऋ; स्वधाकारं — ओ, क, ङ.

[5] स्याद्वस्तम्भो संप्रयोजयेत् — ऊ; स्याद्वसुम्भे संप्रयोजयेत् — ऋ; स्यात्ततमसंप्रयोजयेत् ओ; स्यात्ततमं संप्रयोजयेत् — क; स्याद्यस्तम्भे संप्रयोजयेत् – ख; स्याद्धस्तम्भे संप्रयोजयेत् –घ, ज; स्यात्ततस्तंसं—ङ; स्याद्धूंस्तम्भेऽस्य प्रयोजयेत्— च. स्याद्धस्तंभे स प्रयोजयेत् — छ.

[6] प्रयोजने — ङ.

[7] बल्युपहारधूपेषु — ओ, ङ, ज; बल्युपहाराधूपेषु — क; बल्युपाहारधूपेषु — ख, घ, छ; बल्योपहारधूपेषु — च.

[8] 'ओ' मातृकायां 'प्र' इति नास्ति।

[9] दैशिके० — ऊ, ऋ.

[10] ध्यानार्चन० — ओ, क, ङ.

[11] ०जपध्यानस्नान० — ख.

[12] कर्माण्युक्तान् — ओ; कर्माण्युक्ता — क, ङ.

[13] हृदा मुने — क.

[14] ०वसानं तु – ङ.

[15] मतङ्ग० क्रिया० २.२१ उ०; स्वाहाकारान्त० — ऊ, ऋ.

[16] एवात्रा — ऊ.

[17] ०दिति विरोधः — ऋ.

[18] ये यत्र — ओ, क.

[19] पूज्यते — च.

[20] स्वेन्धनेन — ऊ, ऋ, ओ, क, ङ; स्वे गन्धेन — ख, घ, छ, ज.

[21] ०कृतम् — ओ, क, ङ.

[22] प्रवक्त यो — ऊ, ऋ, घ; प्रयोक्त यं — ओ; प्रयोक्तव्य — क; प्रयोक्त या — ङ.

[23] नान्यदा — ओ.

[24] फलदा — ङ.

**यः** प्रणवादित्वेन मन्त्रः प्रोक्तो **यत्र** होमादिकर्मणि **स्वेन्धकेन** प्रणवादि[1]स्वाहाकाराद्यन्तेन **पुटीकृतः** छादितः, **सः तत्रैव प्रयोक्तव्यः, न कर्मान्तरे**[2] ॥

किं कर्तव्यमित्युच्यते —

**[3]विसृज्य देवदेवेशं [4]भूयोऽग्निस्थं [5]स्वशक्तितः ॥११७॥**
**तर्पयित्वा [6]ततः [7]शिष्यान्पञ्चगव्यं [8]तु [9]पाययेत् ।**
**[10]चरुं विभज्य यच्छिष्टं दत्त्वा देयं [11]प्रयत्नतः ॥११८॥**
**ऋज्व[12]ग्रन्थ्यव्रणं [13]सान्द्रं क्षीरवृक्षसमुद्भवम् ।**
**[14]कनिष्ठाङ्गुलिवत् [15]स्थौल्यं दैर्घ्यं च[16] द्वादशाङ्गुलम् ॥११९ ॥**
**[17]दन्तकाष्ठं विधौ शस्तं [18]देयं मुञ्चपदान्वितम् ।**
**[19]उदग्वक्त्रेण [20]शनकैर्दन्तान्संघृष्य [21]लेशतः ॥१२०॥**
**[22]प्रक्षाल्य यत्नात्संत्याज्यं [23]नातिदूरं व्रजेद्यथा ।**
**प्रत्यक्[24]प्रागुदगी[25]शोर्ध्ववक्त्रं स्यात्सिद्धये हितम् ॥१२१॥**
**शेषेषु [26]दिग्विभागेषु [27]पतिते होममाचरेत् ।**
**गव्येन [28]हविषा सम्यक्प्रथमेन[29] [30]शतद्वयम् ॥१२२॥**

---

[1] ०स्वाहाकाद्यन्तेन — ऊ; ०स्वाहकाद्यन्तेन–ऋ.
[2] कर्मान्तरं — ऊ, ऋ.
[3] विसर्ज्य — ऊ, ऋ; विसर्म्य — ओ, क; विसृजं — च.
[4] भूयोऽग्निस्थः — च; भूयोऽग्निस्थ० — ज.
[5] सशक्तिता — ओ.
[6] गतः — ख, घ.
[7] शिष्यं — ख, घ, ङ, छ, ज.
[8] च — च.
[9] पाचयेत् — ङ; पायसेत् — छ, ज.
[10] 'ख, घ, छ, ज' मातृकासु ११८ श्लोकस्योत्तरार्धं ११९, १२० श्लोकौ च न सन्ति ।; चरोर्विभज्य यच्छेषं — ओ, क, ङ, च.
[11] ततः क्रमात् — ओ, क, ङ.
[12] ०ग्र . . प्रमाणं स्यात्क्षीर० — ओ; ०ग्रन्द्वयप्रमाणं स्यात्क्षीर० — क; ग्रंमव्रणं — च.
[13] सान्द्रक्षीर० — ऊ, ऋ; सार्द्रं क्षीर० — ङ; सान्द्रं क्षीरि० — च.
[14] कन्यसाङ्गुल्यवत्स्थौल्यं — ओ, क; कन्यसाङ्गुल्यवत्स्थौल्य — ङ.
[15] स्थौल्याद् — ऊ, ऋ.
[16] दैर्घ्याद्वा — ऊ, ऋ; दैर्घ्याद्वै — च.
[17] दन्तकाष्ठविधौ — ओ, क, ङ.
[18] देयमुञ्च० — ओ, ङ; देयं पञ्च० — च.
[19] उद्वक्त्रेणे च — ओ; उद्वक्त्रेणें च — क; उद्वक्त्रेण — ङ; उदग्वक्त्रेण तु शनैर्दत्तांशघृतलेशतः — च.
[20] शनैर्दन्तान् — ङ.
[21] लेशया — ओ, क, ङ.
[22] प्रक्षालयिप्या संत्यज्य — ओ; प्रक्षालयित्वा संत्यज्य — क, ङ, क्षालयित्वा तु संत्यज्य — ख, घ, छ, ज; प्रक्षालयित्वा संत्याज्यं — च.
[23] 'ख, घ, छ, ज' मातृकासु 'नातिदूरं' इत्यारभ्य १२२ प्रथमपादान्तो भागो नास्ति ।
[24] ०प्रागुदगोर्ध्वं च कं स्यात् — ओ; ०प्रागुतश्चोर्ध्वं च कर्म स्यात् — क.
[25] ०शोर्ध्वं चक्रस्यासिद्धये — ङ; ०शौर्ध्ववक्त्रं — च.
[26] दिशि भागेषु — ङ.
[27] पतितो — ऊ, ऋ.
[28] हविष्या — ऋ.
[29] प्रमथेन — ऊ, ऋ, च.
[30] शतद्वयः — ज.

आहुतीनां ततः पश्चात्तस्य[1] पापस्य शान्तये ।
अधोवक्त्रे [2]ध्रुवं [3]मृत्युरूर्ध्ववक्त्रे जयः [4]सदा ॥१२३॥
पूर्वास्ये शान्तिमाप्नोति पतिते दन्तधावने ।
[5]आग्नेयाभिमुखे [6]दद्यात्संतापं [7]साधकात्मनाम् ॥१२४॥
[8]याम्यास्ये मरणं [9]विद्धि [10]क्षुद्भयं नैर्ऋतानने ।
प्रत्यग्वक्त्रे ध्रुवं [11]लाभः [12]पुष्टिश्चैवोपजायते ॥१२५॥
अनिर्वृतिः[13] प्रवासो[14] वा वायव्याभिमुखे[15] ध्रुवम् ।
सौभाग्यं चैव वृद्धिश्च[16] मेधा [17]चैवोपजायते ॥१२६॥
[18]उदग्वक्त्रे[19] मुनिव्याघ्र [20]ज्ञानवानीशगोचरे ।
चक्रवर्तिपदं प्राप्य [21]रमते साधकोत्तमः ॥१२७॥
[22]देशिकस्या[23]प्यभीष्टं स्यात्स्वसन्तानविवृद्धये ।

**ततः** तस्मात् स्थण्डिलादेव परमेश्वरं विसर्जयेत्, न वह्नितः । तेन तस्याधिवासार्थं पुनस्तर्पणं कृत्वा, मण्डपान्तरेऽर्थतः शिष्याणां पञ्चगव्यं पानाय दत्त्वा, चरुशेषं **विभज्य** भक्षणाय दद्यात् । आत्मना च [24]भक्ष्येत । यदुक्तम् — [25]"शिष्टं वै साधकात्मसु" इति । न च चरुं भुक्त्वान्यद् भोजनं भोक्तव्यं जननियमविधित्वेनास्य तन्निवृत्तिफलत्वात् । श्रीमत्पौष्करेऽप्युक्तम् —

[26]"चरुं भुक्त्वा न चाप्यन्यद्भोक्तव्यं [निय]मेन तु ।" इति ।

---

[1] ०त्तस्याः — ओ, क.
[2] चैव — च.
[3] पत्युरूर्ध्वं वक्त्रेण यः — ऊ, ऋ; पत्युरूर्ध्ववक्त्रजयः — ख, घ; मृत्युमूर्ध्ववक्त्रे जयं— च.
[4] समा — ज.
[5] आग्नेय्याभि० — ऊ, ख, घ; आग्नेय्यामभि० — ऋ.
[6] विद्यासं० — ओ, क, ख; विद्यात् सं० — घ, ङ, छ, ज; विद्यात्संतानः — च.
[7] साधकात्मनः — ओ, क, ख, घ, ङ, छ, ज; साहकात्मनाम् — च.
[8] य . . तु — ख; याम्यायां — घ; याम्यायामरणश्चिद्धि — छ, ज.
[9] विरु. . . रुग्भयं — ऊ; वि. . .रुग्भयं — ऋ.
[10] हृयुद्भवं — ख; उद्भवं — घ, छ, ज; रुग्भयं — च.
[11] लाभं — ओ, क, ख, घ, ङ, छ, ज.
[12] वृष्टि० — ख.
[13] अनिर्वृत्तिः — ऊ, ऋ, च; अनिर्वृत्ति० — ओ, ङ, अनिद्धृति० — क; अनिवृत्ति० — ख, घ.
[14] प्रवासे — ओ.
[15] ०मुखो — च.
[16] सौभाग्यसंपदारोग्यं — ओ, क, ख, घ; सौभाग्यं संपदारोग्य० — ङ; सौभाग्यसंपदारोग्य० — च.
[17] वै वोपजायते — ओ, क.
[18] उदवयक्रं मुनिव्यां च — छ; उदवयत्रं मुनीनिव्यां च — ज.
[19] ०वक्त्रो — ऊ, ऋ; ०वक्त्रं — ख, घ; ०वक्त्र० — ङ.
[20] ग्यज्ञानवानिगोचरे — छ, ज.
[21] भ्रमते — ऊ, ऋ; रमतः — छ, ज.
[22] दैशिकस्या० — ऊ, ऋ.
[23] ०प्यनिष्टं — ख, घ, छ, ज.
[24] भक्षयेत् — ऊ, ऋ.
[25] मतङ्ग० क्रिया० ५.९२उ०.
[26] आकरो न लभ्यते ।

ततश्चाचम्य शिष्याणामुदङमुखानां **दन्तकाष्ठम्** [1]ऋज्वादिलक्षणयुक्तं मुखशुद्धये समर्प्य, तत्त्याग-[2]कालाशुभदिक्पातसूचितदोषशान्तिं प्रथमपदेन गव्याज्याहुतिशतद्वयप्रयुक्त्या कुर्यात् ॥

ततः —

**यागभूमौ [3]गुरुः स्वप्याच्छिष्यैः सार्धं महीतले ॥१२८॥**
**नील[4]दर्भादिविस्तीर्णे[5] [6]कृतरक्षे [7]सुधूपिते ।**
**[8]सुगन्धिगन्धसंसिक्ते[9] [10]सुशुक्ल[11]कुसुमोज्ज्वले ॥१२९॥**
**सितभस्मकृताटोपे[12] सिद्धार्थपरिवारिते[13] ।**

[14]समाप्त[15]विधानव्यापारो **गुरुः शिष्यैः** सह यागगृहे एव भूमौ दर्भादिप्रस्तरे **स्वप्यात्** । अत एव गुरुरपि [16]व्रतस्थ एवेति च [17]गुरुभिरुक्तः । स तु तत्र न स्वप्यादेव ।

किं तु —

**[18]सकलीकृत्य [19]सर्वाङ्गं मौनमास्थाय देशिकः ॥१३०॥**
**[20]शिखां शिखिशिखाका[21]रामुच्चरन्संयमेच्छिखाम् ।**
**[22]शिष्याणा[23]मप्यथाध्वानमखिलं भुवनात्मकम् ॥१३१॥**
**तत्त्वात्मकं वा यच्छोध्यं ध्यायेद्वा[24] युक्तितः क्रमात् ।**

---

[1] ऋक्ष्वादि० — ऊ, ॠ.
[2] ०कला — ऊ, ॠ.
[3] स्वपेद्विद्वान् शिष्यैः — ओ, क, ख, घ, ङ; सुपेद्विद्वान् शिष्यैः — छ, ज; स्वपेद्विद्वान् स्वप्येत्सार्धं — च.
[4] ०दर्भा प्रविस्तीर्णे — ऊ, ॠ; ०दर्भे स्तीर्णे — ओ; ०दर्भे सुविस्तीर्णे — क; ०दर्भ-प्रविस्तीर्णे — च.
[5] तिलदेहे प्रविस्तीर्णे — ख, घ, छ, ज; तिल-दर्भैः प्रविस्तीर्णैः — ङ.
[6] कृताक्षे ससुधू० — ख; कृताक्षे सुधू०—घ; कृतक्षुद्र० — च; कृताक्षे सुयुतापिते—छ, ज;
[7] सुधीपिते — ऊ, ॠ.
[8] सुगन्धगन्ध० — ओ, क.
[9] ०संधिक्ते — छ.
[10] सुशुक्ले — च.
[11] ०कुसुमो कटे—ओ, क, ख, घ, ङ, च, छ, ज.
[12] सितपद्मकृताटोप० — ख, घ; सितपद्म-कृताटोपे — छ, ज.
[13] ०हारिते — ख, घ, छ, ज.
[14] ०'ऊ, ॠ' मातृकयोरत्र 'ततः' इत्यधिकम् ।
[15] ०विधासव्यापारो — ऊ, ॠ.
[16] व्रतस्य — ऊ, ॠ.
[17] गुरुभुगुक्तः — ऊ, ॠ.
[18] सकलीकृतसर्वाङ्गो — ओ, क, ख, घ; सकली-कृतसर्वाङ्गे — ङ, च. सकलीकृतसद्याङ्गो — छ, ज.
[19] सर्वाङ्गो — ऊ, ॠ.
[20] शिखां छित्त्वा शिखा० — च.
[21] ०रामुद्बध्य . . ओ; ०रांकरमुद्बन्ध . . मत् — क; ०रां मृद्बन्धां संधयेच्छिखाम् — ख, घ; ०रामुद्बद्धां सं — ङ; रं मृद्बन्धां संयमे च्छिखम् — छ; रां मृद्बन्धां संयमेच्छिखम् — ज.
[22] 'ओ' मातृकायामिदमर्धं नास्ति ।
[23] ०मथाध्वानं विलिखन् भुव० — ख; ०मप्य-थाध्वानं विलिखन् भुव० — घ.
[24] ध्यायेद्वै — ओ, क, ख, घ, ङ, छ, ज.

**आपादतलमस्तिष्कं [1]शक्तिं वाप्यथ निर्मलाम् ॥१३२॥**
**सुसूक्ष्मां व्यापिनीं देवीं सर्वतत्त्वावभासिकाम्[2] ।**
**गायत्रीजापनिरतः[3] [4]सद्भावार्पित[5]मानसः ॥१३३॥**

पूर्ववत् [6]क्रमेणान्तर्बहिश्च सर्वमङ्गं **सकलीकृत्य**, वाग्यतः सन् शिवशिखया[7] शिखाबन्धं **शिष्याणामपि** कृत्वा, ततो येनाध्वना तेन दीक्षा कर्तव्या, तं **तत्त्वात्मकं** भुवनरूपं वा तेषाम् **आपादतलमस्तिष्कं** स एव क्रमेण **युक्तितः** यथा तद्ध्यानं तत्र न निरवलम्बनं भवति तथा **ध्यायेत्**। **वा**शब्दो वक्ष्यमाणविकल्पापेक्षया। अत्र च या युक्तिः, सा [8]"मृत्त्वमस्ति मृदस्तत्र" इत्यादिना **योगपादे** भविष्यतीति। अत्रैव ध्यानविकल्पः — "**शक्तिं** [9]**वाप्यथ निर्मलाम्**" इति। यदि वा परमेश्वरशक्तिमेव सर्वाध्वव्यापारतया वक्ष्यमाणशक्तिदीक्षाप्रकरणनयेन[10] गायत्रीं जपन् [11]शक्तिलक्षण**सद्भावमानसः**[12] ध्यायेदिति ॥१३०–१३३॥

अत्रैव पक्षान्तरम् —

**[13]आचार्यः [14]स्वतनुं ध्यायेत्पञ्चमन्त्र[15]मयीं [16]शुभाम् ।**
**[17]संस्मरन्संहितां पूर्णां[18] शक्तिं [19]वाथ [20]पदात्मिकाम् ॥१३४॥**

यदि वा **आचार्यः** स्वामेव **तनुं** [21]प्राग्वच्छिवरूपेण तदध्वविच्छेदकतया **संहितां**, व्योम[22]व्यापिनीमुच्चारयन्वा **ध्यायेद्** इति ॥१३४॥

**[23]समाधावास्थितो [24]धीमान्क्षिपेद्रात्रिमनिद्रितः[25] ।**

---

[1] शक्यं — ज.
[2] ०तत्त्वाभवासिकाम् — ऊ, ऋ; ०भक्तावभासिकाम् — ज.
[3] गायत्रीजापरिणतः — ऊ, ऋ; .. जापनिरतो — ओ, ङ; गायत्रीजापनिरते — क; गायत्रिजापनिरत० — ख, छ, ज; गायत्रिजापनिरतः — घ.
[4] तद्भावार्पित० — छ; तद्भावा पिङ्ग० — ज.
[5] ०चेतसः — ओ, क; ०चेतसा — ख, घ, ङ, छ, ज.
[6] क्रमेणाप्यन्त० — ऋ.
[7] ०शिखाया — ऊ, ऋ.
[8] मतङ्ग० योग० ४.३उ०.
[9] व्याप्याथ — ऊ, ऋ.
[10] नवमप्रकरणे प्रोक्तनयेन।
[11] शक्तितक्षण० — ऋ.
[12] ०मानसं — ऊ, ऋ.
[13] आवायु — छ, ज.
[14] स्वां तनुं ध्वात्वा पञ्च० — ओ, क, ख, घ, ङ, छ, ज.
[15] ०मयी शुभाम् — छ, ज.
[16] शुभाः — क.
[17] संहरन् — ऊ, ऋ.
[18] संहिता पूर्णा — ख, घ; संहिताः पूर्णाः — ङ; संहिता पूर्णां — छ, ज.
[19] वाधि — ख, छ, ज.
[20] वदात्मिकाम् — ओ; सदात्मिकाम् — च.
[21] मतङ्ग० क्रिया० ५.१६ वृत्तावुदाहृतवत्।
[22] ०व्यापिनामुच्चार० — ऊ, ऋ.
[23] समाधायास्थितो — ओ; समाधाय स्थितो — क, ङ.
[24] धीमान्क्षपे० — ओ, क, ख, ङ, छ, ज.
[25] ०मतन्द्रिताम् — ऊ, ऋ; ०मनिन्दितः — क, घ, छ, ज; ०मतन्द्रितः — च.

[1]शक्त्या [2]स्वपेद्वा स्थितये [3]सुप्रभाते [4]तु भूतलात् ॥१३५॥
उत्थायावश्यकं[5] कृत्वा [6]स्नात्वाचम्य च पूर्ववत्।
एकाशीतिपदोपेतां[7] [8]संहितां शक्तितो जपेत् ॥१३६॥
[9]सितवस्त्रसुसंवीताः [10]कृतशौचा [11]मुमुक्षवः।
[12]हृष्टा [13]वाक्संयताः [14]स्नाताः पुष्पहस्ताः [15]सुभाविताः ॥१३७॥
[16]गुरोः पादौ समभ्यर्च्य विनयेनोपविश्य च[17]।
प्रणम्य शिरसा सर्वे [18]गुरुवाक्यानुवर्तिनः ॥
[19]आचार्येणापि [20]प्रष्टव्याः [21]स्वप्नान्सुस्निग्धया गिरा ॥१३८॥

एवं प्रकारत्रयेण समाधौ युक्त एव **रात्रिं क्षिपेत्**। यथाशक्त्या **वा समाधावास्थितः** सन्नन्तरं शरीरस्थित्यर्थं [22]स्वप्यात्। ततः प्रातः **उत्थायावश्यकं कृत्वा**, आचम्य, [23]**स्नानप्रकरणो**क्तक्रमेण संध्यावन्दनं निर्वर्त्य, यथाशक्त्या शिवैकादशिकां **जपेत्**। ततः सितवस्त्रादिविशेष[24]युक्तास्तदग्रतो निविष्टाः सन्तः शिष्यास्तेन **स्वप्नान् प्रष्टव्याः** इति ॥१३५–१३८॥

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य चोपक्रमाय श्लोकः —

[25]गुरोर्विधानं [26]त्वखिलं [27]यथोक्तं
यदध्वरेऽस्मिन्नधिवासनाख्यम्।

---

[1] स्वपेदशक्तः स्थितये — ऊ, ॠ; शक्या स्वपेद्वा — ओ; ०शक्त्या धिपेद्युस्थये तु सु० — छ; शक्त्याधिपेम्युस्थये तु सु० — ज.
[2] सुपेद्वा — ख, घ; स्वप्नेद्वा — ङ; स्वप्याद्वा — च.
[3] स्वप्रभाते — ऊ, ॠ.
[4] सभूतलात् — क, च; नु भूतलात् — ङ.
[5] उत्थाय वासकं — ओ; पत्थाया पश्यतः — छ; पन्थाया पश्यतः — ज.
[6] स्नात्वा चाचम्य पूर्वं० — ऊ, ॠ, घ, ङ, छ, ज; स्नात्वाचम्य तु पूर्वं० — ख.
[7] ०पदोपेता — क, ङ, छ, ज; पदोपेतान् —घ.
[8] जपेत्ताञ्छक्तिशक्तितः — ओ; जपेच्छक्तिं तु शक्तितः — क, ख, घ, ङ, च, छ, ज.
[9] सितवस्त्रस्य संवीतां — छ, ज.
[10] कृताशौचा — ख, घ, छ, ज.
[11] मुमुक्ष्वमः — छ, ज.
[12] मृष्टवाक्संयता — ओ, ङ; मृष्टवाक् संयतः–क.
[13] वाक्संयता — छ, ज.
[14] स्नायात्पुष्प० — ओ, क, ख, ङ; स्नातां पुष्प० — घ; स्नाता पुष्पनस्ताः — छ; स्नातां पुष्पनस्ताः — ज.
[15] सुभाषिताः –ओ; सुभावितः — छ, ज.
[16] गुरो पदौ मसंभ्यच्य — छ.
[17] ०नोपविध्य च — ॠ; ०नोपविश्यते — ओ, क, च; ०नोपदिश्यते — ख, छ, ज; ०नोपदिश्यतो — घ; ०न्नोपविश्यते — ङ.
[18] गुरुवागनु० — क.
[19] आचार्येणाथ — ज.
[20] प्रष्टव्या — ओ, क, ख, घ, ङ, च, छ, ज.
[21] स्वप्नाते स्निग्धया—ओ; स्वप्नान्ते स्निग्धया — क, ङ; स्वप्नान्ते सिद्धया — ख, घ, छ, ज; स्वप्रान्ते स्निग्धया— च.
[22] सुप्यात् — ॠ.
[23] मतङ्ग० क्रिया० द्वितीयप्रकरणे।
[24] ०युक्त्या तदग्रतो — ॠ.
[25] गुरो धियानं — ओ; गुरोर्ध्यानं — क; गुरोर्विधातं — छ, ज.
[26] यदिदं — ख.
[27] तवोक्तं — ओ, क, ख, ङ, च; तं वेत्तं — घ, छ, ज.

**[1]स्वप्नाधि[2]कारोऽवसरागतोऽयं[3]**
**सोऽप्युच्यते युक्ति[4]बलाद्विमिश्रः ॥१३९॥**

**अध्वरेऽस्मिन्** दीक्षाख्ये गुरुकर्तृकं **विधानं** [यत्] तदुक्तम्। अधुना तु **स्वप्नाधिकारोऽयमवसरागतः** इति [**सोऽपि**] प्रासङ्गिक[5]क्रमेण च मिश्रः कथ्यते ॥१३९॥

[इति श्री]भट्टनारायणकण्ठात्मज[6]भट्टरामकण्ठविरचितायां मतङ्गवृत्तौ
क्रियापादेऽधिवासप्रकरणं पञ्चमं समाप्तम्।

[ **पञ्चमः पटलः** ]

---

[1] सुप्ताधिकारो — छ, ज.
[2] ०कारावसरागतो यः — ङ.
[3] ०वसनागतो यः — ख; ०वसरागतो यः — घ, छ, ज; वशरागतोग्रं — च.
[4] ०बलाद्विमिश्रम् — ऋ; ०वशां दिदृक्ष्व — क; . . . द्विवृज्य — घ; ०वशाद्विमृश्य — ङ; ०बलाद्विमृश्य — च; ०वशाद्विवृज्य — छ, ज.
[5] ०गमेन — ऊ, ऋ.
[6] ०भट्टरामविरचितायां — ऋ.

## षष्ठः पटलः

## स्वप्नप्रकरणम्

**अथ [1]स्वप्नान्समासेन नराणां हितकाम्यया।**
**वर्णयिष्यामि [2]विस्पष्टं विचारोक्त्या[3] तवाधुना ॥१॥**

**अथ** इति स्वप्नप्रतिपादकस्य प्रासङ्गिकस्य प्रकरणस्याधिकारः। न च प्रासङ्गिकस्य संबन्धो वक्तव्यः, [4]प्रासङ्गिकसंबन्धेनैव सिद्धेरित्युक्तम्।[5]

अथ किमेते स्वप्नाश्चतुर्दशविधस्य भूतसर्गस्य संबन्धिनोऽत्र वक्तव्याः। नेत्याह — **नराणां** संबन्धिनो ये **स्वप्नाः**, तानेव **तव हितकाम्यया** स्पष्टं कृत्वा **विचारोक्त्या** प्रवक्ष्यामीति। सर्वमेव शास्त्रं [6]"विचारयुक्तं सद्वस्तु स्फुटमाम्नायदर्शनात्" इत्यादि[7]प्रश्नाभ्युपगमपूर्वं मतङ्गमुनेरेवं[8] वक्तव्यत्वेन प्रतिज्ञातं यतः। यद्येवमन्यस्य पशुमृगादेर्दैवयोन्यन्तस्य भूतसर्गस्य कीदृशाः स्वप्नाः। किमनेनात्राप्रस्तुतेनोक्तेन। किं वा तेषां तेन। सन्त्येव सुषुप्तावस्थात्मकत्वान्निद्राप्रवृत्तेरिति। सर्वसर्वज्ञस्यैवमादौ ज्ञानं संभवति; न सर्वज्ञमात्रस्यापि। श्रुतिरप्याह — [9]"यो अस्याध्यक्षः परमे [10]व्योमन्त्सो अङ्ग वेद यदि वा न वेद" इति। तस्मिन्नपि स्वप्ने वक्तव्यमस्ति। यतः [11]कैश्चिदसौ वातादिधातुक्षोभनिमित्त एवेष्यते। सांख्यादिभिस्तु [12]जाग्रद्वद्विशिष्टभोगप्रदकर्मनिमित्त एवेति। उभयथाप्यस्य न भाविशुभाशुभसूचकत्वं स्वदेहप्रतिबद्धजन्मत्वाद् घटादेरिव। सूचकेन सूच्यं केनापि प्रतिबद्धेन सूचनीयम्, नान्यथा सर्वस्य सूचकत्वप्रसङ्गात्। तच्च सूचकत्वं न तावत्स्वप्न[13]तत्कार्यतया, तस्य स्वकारणादेवोक्तात्सिद्धेरित्युक्तम्; [14]न तु भावित्वेन तिरस्कृतकारणभावात्सूच्यात्[15]। नापि तत्कारणत्वतो भोग्यत्वेन, तस्यापि कर्मफलत्वात् स्वप्नकारणत्वासिद्धेः;[16] स्वप्नादीनां तज्ज्ञापकत्वाभ्युपगमाच्च। नापि [17]सामान्यतो दृष्टात्, तस्यापि सहभाविप्रतिबन्धनिबन्धनत्वेन [18]प्राक् [19]पतिपदार्थप्रकरणे प्रतिपादितत्वादतो भाविना [20]सूच्येन सहात्रानुपपत्तेः। न चान्यः कश्चित्प्रतिबन्धोऽस्तीत्युक्तं तत्रैव। तदेवं विप्रतिपत्तिनिराकरणेन[21] **विद्यापादे**ऽनुक्तत्वाच्च स्वप्ना विशेषतो वक्तव्या एवेति ॥१॥

---

[1] स्वप्नात् — ज.
[2] विस्पष्टविचारोक्त्या — ऊ, ऋ.
[3] विचारोक्तो — क.
[4] प्रसङ्गिसं० — ऊ, ऋ.
[5] मतङ्ग० विद्या० पञ्चमप्रकरणोपक्रमे.
[6] मतङ्ग० विद्या० १.२८उ०.
[7] प्रसङ्गात्युपगम० — ऋ.
[8] मुनेरेव — ऊ, ०मुनिरेव — ऋ.
[9] ऋग्वेदे १०.१२९-७; यो अस्यध्यक्षः — ऋ.
[10] व्योमरसो — ऊ, ऋ.
[11] केचिदसौ — ऊ, ऋ.
[12] जाग्रवद्विशिष्ट० — ऊ, ऋ.
[13] ०तत्कार्यं तया — ऋ.
[14] न त्वभावि० — ऋ.
[15] ०भावान् सूच्यात् — ऊ.
[16] ०कारणत्वात्सिद्धेः — ऋ.
[17] सामान्यदृष्टात् — ऊ.
[18] मतङ्ग० विद्या० ३.१–३ 'मूर्तित्वेनोपचर्यते' इत्यस्य विवरणे।
[19] प्रतिपदार्थ० — ऊ, ऋ.
[20] सूचेन — ऋ.
[21] ०करणत्वेन — ऋ.

तत्र जाग्रत्सिद्धिक्रमेण तेषां वक्तव्यत्वात् तदेव तावद्विद्यापादसिद्धवस्त्वनुवादेनोच्यते[1] —

**भोक्तुर्भोगा[2]त्मकः कायो [3]निबद्धः [4]कारणेच्छया।**
**कला[5]धाराशया[6]यत्तस्तत्प्रमाणायुषि [7]स्थितः ॥२॥**
**भोगाश्च विविधाः प्रोक्ताः [8]सुख[9]दुःखात्मकाः [10]पुरा।**

**भोगस्य आत्मा** कारणं **कायः भोक्तुः** ईश्वरेच्छया [11]संबद्धः प्रोक्तः। [12]**कलादीनां च** सूक्ष्मदेहारम्भि[13]काणाम् **आधारः आशयः** कर्मसंस्कारः, तस्य **आयत्तः**। अत एव स कर्माशयः **प्रमाणं** [14]परिच्छेदको यस्य **आयुषः** तस्य, तस्मिन्नसौ कायः **स्थितः** इत्यप्युक्तम्। तथा [15]**भोगाश्च** तस्याशयस्य विपाकात्मकाः शुभाशुभा अपि पूर्वमुक्ताः॥

ततः [16]प्रकृते किमित्युच्यते —

**[17]इच्छाद्वेषात्मकैर्भावैरन्योन्याति[18]शयात्मकैः ॥३॥**
**[19]कलातो व्यक्तिमापन्नैः [20]सततोद्भूतवृत्तिभिः।**
**[21]भोक्ता [22]संसेवते नित्यं बलवद्भिर्महात्मभिः ॥४॥**
**कर्मसामर्थ्यसंपुष्टै[23]रनिवारितशक्तिभिः।**
**[24]निबिडालिङ्गितो मूढस्तत्तन्त्रश्च[25] यतः पशुः ॥५॥**
**[26]जाग्रदश्नाति [27]ज्ञानाह्व[28]कोटचा [29]लौल्यास्यशोभया[30]।**

---

[1] ०वादो नोच्यते — ऋ.
[2] ०त्मकं कार्यं निबद्धं — ओ, क, ख, घ, ङ, छ, ज.
[3] निबद्धधारणेच्छया — च.
[4] करणेच्छया — ऋ.
[5] ०धाराश्वा यत्तत्प्रमाणं युद्धि० — ख.
[6] ०यत्तत्प्रमाणायुषि — ओ, क, ङ; ०यत्ततत्प्रमाणं युधि — घ, छ, ज.
[7] स्थितिः — ऊ. ऋ; संस्थितम् — ओ, क, ङ; स्थितम् — ख, घ; . . . थितम् — छ; वस्थितम् — ज.
[8] खुख० — ओ.
[9] ०दुःखात्मकः — छ; ०दुःखात्मकं — ज.
[10] परा — ऋ.
[11] संबन्धः — ऊ, ऋ.
[12] कालानां च — ऊ, ऋ.
[13] ०कानाम् — ऊ, ऋ.
[14] परिच्छेदवो — ऋ.
[15] भोगाच्च — ऊ, ऋ.
[16] प्रहति — ऊ; प्रकृति — ऋ.
[17] इच्छादेशात्मकैः० — ऋ.
[18] ०शयक्रमात् — क.
[19] कालतो — ऊ, ऋ, ओ, ख.
[20] पततो० — ख, घ; सतताद्भुत० — च; पततो भूत० — छ, ज.
[21] 'ऊ, ऋ' मातृकयोरिदमर्धं नास्ति।; भोक्त्रा — च.
[22] संसेव्यते — ओ, क, घ, ङ, च.
[23] ०रनीचारित० — ओ.
[24] निपीढचा० — ओ; निपीडचा० — क; निपीडा० — ङ.
[25] ०स्तन्त्रतश्च — ऋ; ०स्तत्तत्रश्च — ओ, क; तत्रस्थश्च — च.
[26] जाग्रमश्नाति — ओ, क; जाग्रमग्रादि० — ख, घ, छ, ज; जाग्रमाणाति — ङ.
[27] जानाह्वा — ओ, क; जान्वाह्व० — ङ; जानाहु० — छ, ज.
[28] ०कोटचलोलाक्ष० — ख, घ, ज; कोटिलोलाक्ष० — छ.
[29] लोल्यास्य०–ऊ, ऋ; लोलास्य०–ओ, क, ङ.
[30] ०शातया — च.

[1]**प्रार्गाजतं तथा**[2] **कोटचा**[3] **प्रकरोति** [4]**क्रियाह्वया ॥६॥**
[5]**व्यक्तयाक्षत्वभावेन कर्माख्येनातिसर्पिणा**[6] **।**
[7]**भूतये** [8]**तद्विपाकाम्भो** [9]**ज्ञानसत्तात्मकैर्मुखैः ॥७॥**
**स पञ्चभिः पिबेद्भूयो**[10] [11]**भूयोऽप्येवं यदुत्कटम् ।**

बुद्धिवृत्त्यात्मना भावयन्तीति **भावाः** इच्छाद्वेषाध्यवसायादयः, तैः परस्परोप[12]कारकैः **कलातः** इति [13]भागेनैकदेशतोऽपि [14]व्यक्तैः **सततोद्भूतवृत्त्यादिविशेषणैश्च** यतो भोक्ता नित्यं सेवते; ततो **निबिडेन** स्थूलेन भावेन **आलिङ्गितः मूढः** अनात्मन्यात्माभिमानयुक्तः **पशुः** मलयुक्त एव इच्छा-**द्वेषात्मकभावपरतन्त्रः, सः प्रार्गाजितं** शुभाशुभं **ज्ञानाख्यया** शक्त्या **लौल्यं** रागजनितोऽभिलाषः [15]तदेव **आस्यं**, तेन जनित**शोभया जाग्रदश्नाति। तस्य** च प्रार्गाजितस्य कर्मणः **विपाकः** एव **अम्भः यदुत्कटं** तत्, **ज्ञानसत्तात्मकैर्मुखैः**[16] **पञ्चभिः** बुद्धीन्द्रियैः पिबति। **तथा क्रिया**ख्यया शक्त्या कर्मेन्द्रियाभि**व्यक्तया** पुनः शुभाशुभं करोतीति। एवमन्तःकरण[17]बहिष्करणाभ्यां विषयवेदनं जाग्रदवस्थेत्युक्तं भवति॥

अधुना केवलयैवान्तःकरणवृत्त्या विषयवेदनं स्वप्न इति दर्शयितुं तत्कारणद्वारेणोच्यते —

**यस्यानु**[18]**रूपकं** [19]**तत्स्याद्विपक्वस्यापि कर्मणः ॥८॥**
[20]**कर्मोपोद्बलितं भोक्तुर्निद्राव्याकुलितस्य च**[21] **।**

---

[1] प्राङ निर्जितं — ऊ, ऋ; प्राङ निर्जितः — ख, घ; प्रार्गाजिते — च.
[2] प्राङ निर्जितस्थिता — ओ, क; प्राङ निर्जितस्थता — ङ, छ, ज.
[3] कोटचोः — च.
[4] क्रियाश्वया — क.
[5] वक्तयक्षत्वयाभावे — ओ; व्यक्तयक्षत्वयाभावो — क.
[6] ०नाविसर्पिषा — ओ; ०नातिसर्पिषा — क; ङ; सति सर्पिणा — च.
[7] भूयते — ओ, क, ङ; भूतलेनाथ पाकानाम्भो — ख; भूतलेन वि० — घ, छ, ज.
[8] तद्विपाकांह्रो — ङ.
[9] ज्ञानसन्तात्मकै० — ओ, क, ङ; जनासक्तात्मकै० — ख; जानसत्तात्मकै० — घ; जनसन्तात्मकै० — छ, ज.
[10] पञ्चभिः पञ्च . . . भूयो० — ओ; पञ्चभिः पञ्चधा भूयो० — क, ख, घ, ङ, छ, ज; पञ्चभिः पिबते भूयो — च.
[11] ०प्येवं यदुत्कटद्वयम् — ओ; ०प्येयं यदुत्कटद्वयम् — क.
[12] कारकैः कालतः — ऊ; ०कारैः कालतः — ऋ.
[13] भागो नैकदेशतो — ऋ.
[14] व्यक्त्यैः — ऊ.
[15] तदेवास्यान्तेन — ऋ.
[16] ०कैर्दुःखैः — ऊ, ऋ.
[17] ०बहिःकरणाभ्यां — ऊ, ऋ.
[18] ०रूपं तत्स्याद्धि पक्षस्यापि — च.
[19] न स्याद्विपक्वस्यापि — ऊ, ऋ; तस्याद्विपक्व० — ओ, ख, घ, छ; तस्याद्विवक्त्रस्यापि — ज.
[20] कर्मापोद्वलिने भोक्तुं — ऊ, ऋ; कर्मोपोद्बलिते भोक्तुः — ओ; कर्मापोद्वलिते भोक्तुं — क, ङ; कर्मोपोद्वलितैर्भोक्तुं — ख, ज; कर्मोपोद्वलितैर्भोक्तुः — घ, छ; कर्मोपोद्वलने भोक्तुः — च.
[21] निद्रयाकुलितस्य तत् — ओ, घ, ङ; निद्रायाकुलितस्य तत् — क; निधयाकुलितस्य तत् — ख; निप्रयाकुलितस्य किम् — च; निद्रयाकुलितस्य तु — छ, ज.

**व्यक्तिमायाति[1] विस्पष्टं [2]येनासावतिभावितः ॥९॥**
**[3]प्रबुद्धोऽपि विजानाति [4]वासनान्तरदर्शनात् ।**

**यस्य कर्मणः विपक्वस्यापि** स्वप्नैकभोग्यत्वेन [5]जाग्रद्भोग्यं [6]**कर्म अनुरूपमु**पोद्वलकत्वेन संभाव्यते। **तद् निद्राव्याकुलितस्य** तस्य **भोक्तुः विस्पष्टं** कृत्वा **व्यक्तिमायाति। येनासौ** भोक्ता **प्रबुद्धोऽपि** तत्संस्कारेणैव [7]स्मरति। **वासनान्तरस्य** तस्य तदानीं **दर्शनात्** सिद्धेरिति। अयमर्थः — द्विविधं कर्म बाह्येन निर्वर्तितं शुभाशुभं वा तदेव बाह्ये [8]जाग्रदवस्थायां भोग्यं भवति। यत्त्वन्तःकरणेनैव निर्वर्तितं शुभाशुभानुमोदनादि तज्जाग्रद्भोगेन कर्मणानुरूपत्वादन्तःकरणैकभोग्यत्वेन स्वप्नस्य कारणं संपद्यत इति। अत एव ये आहुः "वातादिक्षोभमात्रं स्वप्नो न भोगकारणम्" इति ते प्रतिक्षिप्ताः॥

यतः —

**[9]हसन्प्रबुध्यते [10]हृष्टः [11]प्ररुदन्वा भयार्दितः ॥१०॥**
**[12]शोकाविष्टो[13]ऽथवा ग्लानो [14]विस्मितो [15]वाथ पीडितः ।**

स्वप्नप्रबुद्धेषु केषुचिद्धर्षविषा[दा]द्यनुभवरूपभोगसिद्धेर्विरुद्धकार्योपलम्भादभोगात्मकवातादिक्षोभहेतुत्वनिषेधः। [16]यदेतत्सिद्धौ प्रमाणमुक्तं "यद्भोग्यं तदवितथमेव यथा जाग्रति स्त्र्यादि। यत्तु वितथं तदभोग्यमेव मनोराज्याद्यवस्थायां वितथं च स्वप्नदृष्टमाकाशगमनस्वशिर[17]श्छेदादि तन्न भोग्यम्। अपि तु [18]वातादिक्षोभजनिता भ्रान्तिरेव सा" इति। [तदयुक्तम्।]

तथाहि —

**[19]न्यूनं [20]वाप्यतिरिक्तं वा [21]भूत्यै भोगभुजः सदा ॥११॥**
**[22]व्यनक्त्याशयसामर्थ्यान्नित्यं भोगी यतः पुमान् ।**

---

[1] ०मायान्ति — ओ.
[2] येन सावितभावितः — ओ, क; येनासावत्र भावितः — ख; येनासौ वत्रि भावितः — घ; येनासावत्र विभावितः — ङ; येनासावपि भावितम् — च; येनासौ व्रतभावितः — छ; येनासौ वक्त्रभावितः — ज.
[3] प्रबद्धोऽपि — ऋ, छ; विबुधोऽपि — घ.
[4] वासरान्तर० — च.
[5] जाग्रन्भोग्यं — ऊ, ऋ.
[6] कर्माणुरूपोद्वल० — ऋ.
[7] तं स्मरति — ऊ.
[8] जगदवस्थायां — ऊ, ऋ.
[9] प्रहसन्बुध्यते — ओ, क, ङ, च; प्रभवद्बुध्यते — ख, घ, छ, ज.
[10] हृष्टं — ओ, ख, घ, छ, ज.
[11] प्राकारं भवियार्जितः — ओ; प्राकारम्भविधार्जितः — क; प्रकारमभयार्दितम् — ख, घ, छ, ज; प्रागारम्भभयार्जितः — ङ; प्ररोदं चाभयार्दितम् — च.
[12] कोशाविष्टो — ख; श्लोकाविष्टो — च.
[13] यवांश्चानो — ओ, क; यथाह्लानो — ख; ०ऽथवाम्लानो — च; ऽथवा ह्लानो — छ, ज.
[14] छस्मितो — ख.
[15] वा निपीडितः — ओ, क, ङ; वा न पीडितः — ख, घ, छ, ज.
[16] यद्येत० — ऊ, ऋ.
[17] ०श्छेदादितस्तन्न — ऊ, ऋ.
[18] वाक्यादि० — ऊ, ऋ.
[19] नूनं — क; नन० — घ, छ, ज.
[20] वातिरिक्तं — ऊ, ऋ; वा व्यतिरिक्तं — ङ.
[21] भूतेभ्यो मनुजः — च.
[22] यद्यप्याशय० — ओ, क, ख, घ, ङ, छ, ज; व्यज्यत्याशय० — च.

यत्तदन्तःकरणैकभोग्यं कर्म प्रोक्तं, तत् स्ववासना**सामर्थ्याद् न्यूनम्** एव भोग्यं बाह्यभोग्यापेक्षया [1]प्रतिभासैकसारं **व्यनक्ति** स्वप्नावस्थायाम्, अतीव **रिक्तं** न्यूनतरं **वा** मनोराज्याद्यव[2]स्थासु **यतः**; ततो **नित्यं भोगी** एव पुमान् सिद्धः। अयमर्थः — स्वप्नमनोराज्यादिदृष्टानामत्र सपक्षतैव, बुद्ध्याकारकरूपत्वेन तेषां भोग्यतो वितथत्वाभावात्। यथा च वस्तुभूतबुद्ध्याकारकत्वमेव तेषां तथोक्तं [3]**पुंपाशेश्वरप्रकरणे**। अथ बाह्येन रूपेण तेषां वितथत्वमुच्यते। बाह्यानामपि तेन रूपेण वितथत्वादनैकान्तिकता। बाह्यविलक्षणेन च तेषां प्रतिभासमात्रसारेणैवात्मनां सुख-दुःखसाधनत्वेन सिद्धेर्वितथत्वस्यासिद्धेरेवेत्यत्र हेतुता। न च स्वप्नस्य स्मृतित्वमेव; नानापुरुष-प्रकाराद्यनुभवस्मरणविषयत्वेनैव सिद्धेः। प्रोक्तं च सौगतैरपि —

[4]"सर्वोऽत्र स्मर्यते स्वप्नोऽनुभवः" [इति]॥

स्मरणात्मकत्वात्सुषुप्तस्य [5]जाग्रत इव कर्मनिमित्तत्वमत्र सिद्धमेवाग्रे[6] प्रपञ्चयिष्यतीति, सुषुप्तस्य प्रसङ्गाद्वक्तुमुपोद्घातः —

**त्रिपादोक्त्या [7]प्रपत्तव्यं पुंसः कर्मविपाकजम्[8] ॥१२॥**
**[9]जाग्रत्पाद[10]स्थितं स्थूलं [11]फलं [12]भुङ्क्ते विपाकजम्[13] ।**
**स्वप्न[14]पादगतो वाथ सूक्ष्म[15]मश्नाति [16]पुद्गलः ॥१३॥**
**[17]सुखदुःखप्रदं [18]प्रोक्तमेतत्पादद्वयं[19] मया ।**

तत्र [20]**जाग्रत्पादे स्थूलं** बाह्यमेव भोग्यमित्युक्तम्। स्वप्नाख्ये तु **सूक्ष्मं** बुद्ध्याकारात्मकमेव। मनोराज्याद्यवस्थापि स्वप्नतुल्यैवेति **वा**शब्देन दर्शयति॥

सुषुप्ताख्यं तु पदमवेद[21]नात्मकत्वादकर्मफलमिति **नैयायिकवैशेषिकाः**। तत्प्रतिक्षेपायाह[22] —

**सुखदं [23]यत्सुषुप्ताख्यं [24]स्थानमाशयगोचरे ॥१४॥**

---

[1] प्रत्यभासैकसारं — ऋ.
[2] ०स्थास्वयतः — ऋ.
[3] मतङ्ग० विद्या० ६.२२ उ० वृत्तौ।
[4] आकरो न लभ्यते।
[5] 'ऋ' मातृकायां 'जाग्रत' इत्यारभ्य 'प्रपञ्चयिष्यतीति' इत्यन्तं नास्ति।
[6] मतङ्ग० क्रिया० ६,१६,३३–३७.
[7] प्रकर्तव्यं — ओ, क, ख, घ, ङ, छ, ज; प्रमन्तव्यं — च.
[8] ०विधायजम् — च.
[9] जाग्रपालस्थितिर्मूलं — ख, घ; जाग्रपाल-स्थितिमूलं — छ; जाग्रपालस्थितिं मूलं—ज.
[10] ०मथ स्थूलं — ओ; ०मतस्थूलं — क.
[11] स्थूलं — ओ.
[12] भुङ्क्तेऽपि पाप० — ङ.
[13] विपाकभुक् — ऊ, ऋ, ओ, क, ख, घ, छ, ज.
[14] ०पादं गते — ओ, ङ; ०पादं गतो — क; ०वातगतो — ख, घ, छ, ज.
[15] मग्नाति — क.
[16] पुद्गुलाः — ऋ; पुंगलः — च.
[17] दुःखं दुःखप्रदं — ओ; दुःखं दुःखप्रतं — क; सुखदुःखद्वयं — ख, ङ, छ, ज.
[18] भोक्तामेत० — ओ, क.
[19] ०त्पातद्वयं — छ, ज.
[20] जाग्रत्पदे — ऋ.
[21] ०नात्मकत्वात्कर्म० — ऋ.
[22] ०क्षेपायाः — ऊ, ०पेक्षायाः — ऋ.
[23] यत्सुषुम्णाख्यं — च.
[24] नाम्ना वाशय० — ओ; नाम्ना दाशाय० — क.

[1]**कुतोऽवसीयते** [2]**यस्मात्सहसा** [3]**बोधितः पुमान् ।**
[4]**दुःखेन** [5]**युज्यते** [6]**तस्माज्जाड्यं वात्मनि मन्यते ॥१५॥**

अध्यवसायाद्यन्तःकरण[7]वृत्त्यभावात्मकमपि **सुषुप्ताख्यं यत्** पदं तदाशयस्य कर्मवासनात्मनो यो **गोचरः** समाश्रयः [8]तस्मिन्विषये [9]प्रागुक्ता बुद्धिः केवलानध्यवसितसुखदुःखादिप्रदा[10] [11]गाढप्रहारादि-[12]मूर्च्छास्विव [13]सिद्धा। **पातञ्जलैरपि** बुद्धिवृत्तित्वे[14]नाभ्युपगमात्। यदाहुः[15] — [16]"अभावप्रत्यया-लम्बना वृत्तिर्निद्रा" इति। **कुतोऽवसीयते** [17]एतदिति चेद् **यस्माद्** झटित्येव प्रतिबोधितः पुरुषः सुखमहमस्वाप्सं दुःखं वा इत्यादिना स्मरणविषयीकृतेन **दुःखेन** सुखेन वा **युज्यते**। तमोवृत्त्य-नु[18]भवात्मकं **जाड्यं वात्मनि** स्मरति। [19]**तस्माद्** जाग्रदनुभवसिद्धस्मरणसामर्थ्यात् स्वप्नपद इव तत्रापि सुखानुभवसिद्धिः ॥१४–१५॥

अत्र पराभिप्रायः —

**सुख[20]दुःखोज्झितं [21]स्थानं [22]मन्यते चेत्"**

अथैवं यदि मनो **मन्यते सुखदुःखादिशून्यमसंवेदनात्मकमेव** सुषुप्तपदमिति। नन्वत्र 'सुख-महमस्वाप्सम्' इति तदुत्तरकालं स्मरणं नोपपद्यत इत्युक्तम्। नेदं स्मरणम्; अपि तु तत्-कालभाविशरीरगतान्तरस्पर्श[23]विशेषानुभवपूर्वक[24]मनुमानमेवेत्यभिप्रायः। "नूनमहं सुखमस्वाप्सं, येन प्रतिबुद्धः सुखपरिणत्यात्मकमेव शरीरमनुभवामि" इति, तत्कुतः सुषुप्तपदेऽनुभवसिद्धिरिति॥

सिद्धान्तस्तु —

**"तदस्फुटम्[25] ।**
**धर्माधर्ममयं [26]न स्याच्छरीरमवसीयते ॥१६॥**

---

[1] कृतो० — ङ, ज.
[2] यस्मात्सहस्रा० — ऋ; यस्यात्सहसा — ओ; यत्स्यात्सहसा — क; यस्मात्सहसां–छ.
[3] वधिता — ऋ; शोधितः — ओ.
[4] सुखेन — ऊ, ऋ; दुःखैर्न — ओ.
[5] व्यज्यते — ऊ, ऋ.
[6] तस्माज्जात्यं — ऊ, ऋ; न स्याज्जाड्य-मात्मनि — ओ, क; न स्माज्जाल्यं वात्मा न — ख; न स्याज्जाल्यं वात्म न — घ, छ; न स्याज्जाड्या मात्मा न — ङ; तस्माज्ज्या-ज्यं चात्मा न — च; नस्माज्जख्यं वात्मा न–ज.
[7] वृत्त्याभावात्म० — ऊ, ऋ.
[8] प्रागुक्ता बुद्धिः तस्मिन् विषये — ऊ, ऋ.
[9] मतङ्ग० विद्या १७.२ वृत्तौ।
[10] ०प्रदं — ऊ, ऋ.
[11] गाढमप्रहारादि — ऊ, ऋ.
[12] ०मूर्छामिव — ऋ.
[13] सिद्धम् — ऊ, ऋ.
[14] ०नागभ्युप० — ऋ.
[15] योगसू० — १.१०.
[16] अभावालम्बना० — ऊ, ऋ.
[17] एवदिति — ऋ.
[18] ०भावात्मकं — ऊ, ऋ.
[19] तस्मादनु जाग्र० — ऋ.
[20] ०दुःखोचितम् — ओ; ०दुःखोधितं — क; ०दुःखोज्झितस्तस्य — ख, छ.
[21] स्थस्य — घ, ज.
[22] मन्यसे — ओ, क, ख, ङ, च; न्यसेचेत्तद० — घ, न्यसेच्चेत्तद० — छ, ज.
[23] ०विषयानुभवपूर्वक० — ऋ.
[24] ०मनुस्वारमेवे० — ऊ, ऋ.
[25] तत्स्फुटम् — ऊ, ऋ; चेतनः स्फुटम् — च.
[26] तस्य शरीर० — ओ, क, घ, ङ, च; तस्मा-च्छरीर०—ख; तस्माच्छरीरामव०—छ, ज.

यद्येवं सर्वत्रैव सुखादिस्मरणस्यानुमानत्वमिति, ततः स्मरणादन्यत्रापि स्वप्नपदे, जाग्रति, बालाद्यवस्थासु सुखाद्यनुभवासिद्धेः **धर्माधर्मनिमित्तं शरीरं** [1]भवत्पक्षे **न स्यादि**त्यभ्युपगमविरोधः। अध्य-[व]सीयते च भवद्भिः सुखाद्यनुभवस्मरणसामर्थ्येन स्वप्नादिपदेषु धर्माधर्मात्मकं शरीरमिति। एवमत्रापि सुखाद्यनुभवानुबन्धिकस्मरणसंभवात् सुषुप्तस्यापि धर्माधर्मनिमित्तत्वसिद्धिरित्यविरोधः ॥१६॥

अत्र मतङ्गमुनिः —

**मतङ्ग उवाच —**

**यद्येवं स्यात्ततः सिद्धं स्थावराणां [2]परं सुखम् ।**
**[3]सर्वेन्द्रिय[4]विमूढत्वात्सुषुप्ता[5]स्तरवः सदा ॥१७॥**

[6]**यदि** सुषुप्तावस्थायां जाग्रत्सुखादिस्मरणसामर्थ्येन सुखाद्यनुभवोऽवस्थाप्यते, [7]तदा स्थावरयोनीनां **सर्वेन्द्रियविमूढत्वेन** सुखादिस्मरणस्याप्यनुपपत्तेः, सुखदुःखाद्यनुभवसद्भावे प्रमाणाद्यदि परं दुःखनिवृत्त्यात्मकमेव [8]प्रागग्रप्रकरणोक्तं, येन **परं सुखम्**, इति; तत एव चतुर्दशविधाद्भूतसर्गा-[9]दुत्कृष्टाः प्रसक्ता इति पूर्वः पक्षः ॥१७॥

तदयुक्तमिति सिद्धान्तः —

**परमेश्वर उवाच —**

**पापेन महता [10]विद्धाः कृत्स्न[11]संरुद्धशक्तयः ।**
**किं तु [12]त्वगिन्द्रियद्वारवदनेन विपाकजम्[13] ॥१८॥**
**[14]फलं कर्मवशात्प्राप्तं[15] भुञ्जते [16]ते सुदुःखिताः ।**
**[17]छेदाग्निहिम[18]सेकाद्या भोगाः स्थावरजातिषु ॥१९॥**

**ते** ह्यतिदुष्कृतिनः, तद्वशादेव यद्यपि निरुद्धसमस्तेन्द्रियशक्तयः; तथापि त्वगिन्द्रियशक्त्यनु-

---

[1] भवत्पक्षेण स्या० — ऋ.
[2] परं परम् — ख, घ, छ; परं पदम् — ज.
[3] सर्वेन्द्रियाणि गूढत्वात् — ख, घ, ङ, छ, ज.
[4] ०विमोर्दत्वात् — ऋ; ०निगूढत्वात् — ओ, च; ०निग्रहत्वात् — क.
[5] स्थावराः — ओ, क, ख, घ, ङ, छ, ज.
[6] यद्यसुषुप्ता० — ऋ.
[7] तदावस्थानयोनीनां — ऊ, ऋ.
[8] मतङ्ग० क्रिया० ६.१४उ०, १५; प्राग्राग . . . प्रक० — ऊ, ऋ.
[9] ०दुत्कृष्टासक्ता — ऋ.
[10] विद्धः — ज.
[11] ०संसुद्ध० — ख.
[12] त्वदिन्द्रियद्वार० — ऊ, ऋ; त्वगिन्द्रियाधार० — ओ, क, ङ.
[13] विपाकजः — ख, घ, छ, ज.
[14] फलकर्म० — ऊ, ऋ, क, ख, घ, ङ, छ, ज.
[15] प्राप्तां — छ, ज.
[16] सुखदुःखिताः — ओ, क.
[17] च्छेद्या हिमासे द्या च भोगस्था० — ओ; छेद्या हिमसेकाद्या चभोगस्था० — क; छेद्यहिमा सेकाद्या भोगस्था० — ङ.
[18] ०सेकाद्यो भोगःस्थावरजन्तुषु — च; सेकाटयाभोंगास्थावर० — छ; ०सेकाद्या भोगास्थावर० — ज.

रोधात् तन्मुखेन छेददाहादि सविशेषात्मकं बाह्यमेव कर्मविपाकफलमुपभुञ्जत इति जाग्रत्पदा-[1]वस्था एव मन्तव्याः ॥१८–१९॥

एवं च —

[2]यद्वत्सर्वेन्द्रियाभावाद्भोगाभावः[3] प्रतीयते ।
[4]भोगाभावाच्च [5]मरणं यतो [6]भोगात्मिका तनुः ॥२०॥
[7]तद्वत्कृत्स्न[8]त्वगुत्पाटात्स्थावराणां प्रतीयते ।
भोगा[9]भावात्ततो मृत्युरिति मे निश्चिता मतिः ॥२१॥

यथा पश्वादी[नां] सर्वेन्द्रि[10]याधिकरणत्वगुत्पाटनेन मरणं सिद्धं, तथैव स्थावराणाम् [11]एवं स्पर्श-नेन्द्रियं सर्वत्वगधिष्ठातृत्वात् सर्वमिति, तत्पाटनेनैव मरणमित्यविरोधः ॥२०–२१॥

अथ प्रकृते स्वप्नसुषुप्तयोर्हेतुभूतयोर्निद्रास्वरूपम् —

निरोधस्तमसो [12]वृत्तिरिन्द्रियाणां यतस्ततः[13] ।
निरुद्धेन्द्रिय[14]सामर्थ्यं निद्रा संविश्य चेतसि ॥२२॥
[15]करोत्यात्मवशं यस्मात्तस्मा[16]त्सुप्तो विभाष्यते ।
यद्यप्युक्तं पुरा [17]सत्त्वं सुखदं सर्वजन्तुषु[18] ॥२३॥
तथापि संनिरुद्धाक्ष[19]वृत्तेस्तु [20]तमसात्मनः ।

---

[1] ०वस्था एवं — ऊ; ०वस्था देव — ऋ.
[2] यद्यत्सर्वे० — ऊ, ऋ, ओ, क, ङ.
[3] ०द्भोगभावः — क; ०भावं — ज.
[4] भोगाद्भावाच्च — छ, ज.
[5] स्मरणं — ऊ, ऋ, क, ख.
[6] भागात्मिका — ओ, क.
[7] यद्वत्कृत्स्न० — छ, ज.
[8] ०त्वगुत्पादा० — ओ, क, ङ, छ, ज.
[9] ०भावान्मतो — ऊ; ०भावान्मनो — ऋ; ०भावात्मत्तो — ख; ०द्भावात्ततो — छ, ज.
[10] ०यादिकरणत्वदुत्पाट० — ऊ; ०यादिकरण-त्वादुत्पाट० — ऋ.
[11] एव स्पर्श० — ऊ; एव स्पर्शे — ऋ.
[12] वृत्तिमिन्द्रियाणां — ख, घ, छ, ज; वृद्धि-वृत्तिरिन्द्रियाणां — ङ; वृत्रमिन्द्रियाणां — च.
[13] 'ऊ, ऋ' मातृकयोः ६,२२ उत्तरार्धप्रभृति ७.२० प्रथमपादपर्यन्तं श्लोकाः लुप्ताः। तथा ६.२२ श्लोकात् प्रभृति ७.१७ तमश्लोकान्तभागस्य वृत्तिरपि लुप्ता।
[14] ० सामर्थ्यान्निद्रा — ओ, क, ङ.
[15] करोत्यात्मा पशु यस्मा० — क; करोत्या-मनसं — च.
[16] ०त्स्वप्नाभिभाष्यते — ओ; ०त्स्वप्नोऽपि भाष्यते — क; ०त्सुप्तोऽभिभाष्यते — घ, ङ, च, छ, ज.
[17] सित्वं सुखदः — ओ; सत्त्वसुखदं — ख, घ, छ, ज; सित्त्वसुखदः — ङ; सत्त्वगुण-वृत्तयः — मतङ्ग० विद्या० १६.१७उ०–१९पू० श्लोकेषु प्रोक्ताः।
[18] सर्वजातिषु — च.
[19] ०पृत्तेस्तु — छ.
[20] तमसात्मकम् — ख, घ, छ, ज; तमसात्मक — ङ.

[1]सत्व[2]मुन्मीलकं किंचिद् [3]दृश्यते [4]रजसस्तथा ॥२४॥
[5]प्रवृत्तिरिष्यते भोक्तुः[6] स्वप्नेऽपि [7]त्रितयं [8]युतम् ।
[9]युगपच्चेष्टते [10]किं तु तेभ्यो [11]योऽभ्यधिकः [12]सदा ॥२५॥
[13]संलक्ष्यते [14]गुणः पुंसो नित्यं [15]येनापि [16]दृश्यते ।

[ वातादिनिमित्ततस्त्रिविधः स्वप्नः, तत्र श्लेष्मजः ]

वातपित्तकफा[17]यत्तः स्वप्नश्चेत्त्रिविधः [18]सदा ॥२६॥
[19]सिद्धमाध्यात्मिकं वृत्तं[20] [21]तद्द्वारेणोभयोरपि ।
[22]पादयोर्यस्तृतीयोऽन्यः [23]सोऽतिश्लेष्मसमाश्रयात् ॥२७॥
नदीनदतटाकानां सागराणां च दर्शनम् ।
औदासीन्याच्च[24] [25]दृष्टिर्वा [26]स्वप्नः श्लेष्मसमुद्भवः[27] ॥२८॥

---

[1] सत्वं मुनिजिकं कंचिद् — छ; सत्त्वंदुनिजिकं कंचिद् — ज.
[2] ०मुन्मीलनं — ओ; मुन्मीलिनं — क, ङ.
[3] दृश्यते श्रुत्यै — ओ; ऋते श्रुत्यै — क; ऋते . . ख; ऋते भूत्यै — घ, छ, ज; ऋते भृत्यै — ङ; चित्तभूत्यै — च.
[4] रजस्तथा — ओ, घ, ङ, च, छ, ज.
[5] प्रवृत्ता भीष्यते — ओ, क; ०वृत्ता भीष्यते — ङ; प्रवृत्ताविष्यते — च.
[6] भोक्ता — ओ, क; भोक्तु — ख, घ, ङ, छ, ज.
[7] तृतयं यतः — छ, ज.
[8] युता — ओ, घ; यतः — ख, ङ; ततः — च.
[9] युगपच्छेष्टिते — ओ, ङ; युगपच्चेष्टिते —क.
[10] किंचित्तभ्यो — ओ; किंचितेभ्यो — क; किंचित्तेभ्यो — ङ; किं ते — च.
[11] योऽभ्याधिकः — क; योऽभ्यधिकं — ख, घ, छ, ज; यो ह्यधिक० — ङ.
[12] तथा — ख, घ; तदा — छ, ज.
[13] स लक्ष्यते — ओ, च.
[14] गुणासंसो — ओ; गुणा पुंसो — क.
[15] येनापदिश्यते — ख, घ; येनोपदिश्यते — च; येनापतिष्यते — छ, ज.
[16] दृम्यते — ङ.
[17] यत्तत्सुषुप्ति च — ओ; यत्तत्सुप्तिश्च — क; यत्त सुप्तश्च — ख; यत्तः सुप्तश्च — घ, छ, ज; यत्तत्सुप्तश्च — ङ; यत्र स्वप्नश्चेत्त्रिविधस्तदा — च.
[18] तथा — ख, घ, ज; तदा — छ.
[19] सिद्धमध्यात्मकं — ख, घ, छ, ज.
[20] वृत्त० — ङ.
[21] दद्यारेणोभयोरपि — ओ, क; द्वारेणैवोभयोरपि — ख; द्वारेणोभययोरपि — घ, छ, ज; द्वारेणोभयोरपि — ङ.
[22] पादयोन्यस्तृतीयोऽन्यः — ओ, क; पदयोर्यस्तृतीयोऽन्याः — ख, घ; पदयोन्यस्तृतीयो न्याः — छ, ज.
[23] सोऽतिशेषसमा० — ख; सोऽति श्रेष्ठसमा० — ज.
[24] ०सीन्यैश्च — ओ, क; ०सीन्याश्च — ङ; अदासिन्याश्च — च.
[25] वृत्तेर्वा — ओ, क, ङ; दृष्टेर्वा — ख; पृष्टेर्वा — घ, छ, ज; ०वृष्टिर्वा — च.
[26] स्वप्नश्लेष्म० — क, घ, ङ, छ, ज; स्वर्गश्लेष० — ख; स्वप्नाः — च.
[27] ०समुद्भवम् — क; ०समुद्भवाः — च.

[ पित्तजः ]

[1]सर्वंज्योतिष्मतां दीप्तिः[2] प्रज्वलत्यथ[3] सर्वतः[4] ।
[5]पित्तस्य च समुद्दिष्टं [6]द्रष्टुः स्वप्ने निदर्शनम् ॥२९॥

[ वातजः ]

[7]विघूर्णमानास्तरवो [8]वायुनाथ [9]शिलोच्चयात् ।
[10]पतन्ति देवता[11]भासास्तोरणानि [12]गृहाणि [13]वा ॥३०॥
ध्वजशाखाकुलं[14] वाथ [15]तद्वायोश्चेष्टितं ध्रुवम् ।
[16]मिश्राणि वातमिश्रैस्तु धातुभिः पश्यते पुमान् ॥३१॥
जाग्रन्नपि सदा [17]पश्येदौदासीन्यतया[18] भृशम् ।

[ कर्मायत्तः स्वप्नः ]

अनेनैवानुमानेन [19]सिद्धः [20]कर्मवशात्मकः ॥३२॥
स्वप्नमत्यद्भुतं [21]यादृक्तादृग्जाग्रन्न पश्यति ।

---

[1] सर्वंज्योतिष्मता — ओ, क, ख, ङ; सर्वज्योतिष्मत० — घ, छ, ज.
[2] दीप्तः — ओ, क, ख, ङ.
[3] प्रज्वलस्तथ — ओ, क; प्रज्वलस्तथा — ङ; प्रज्वलं वाथ — च.
[4] शर्ववत् — ओ, क; सर्वतत् — ङ.
[5] वृत्तस्य च समुद्दिष्टं — ओ, क; तत्पित्तस्य समुद्दिष्टं — ख, घ, च, छ, ज.
[6] दृष्टौ स्वप्ननिदर्शनात् — ओ; दृष्ट्वा स्वप्ननिदर्शनात् — क, ङ; दृष्ट स्वप्नेति दर्शनम् — ख; दृष्टु स्वप्ने — छ; दृषुस्वप्ने — ज.
[7] निपूर्णमाणा० — ओ; निघूर्णमाना० — क, ङ; विघूर्णमान० — घ. विपूर्णमानस्तरवो — छ, ज.
[8] वायुना वा — ओ, क, ङ; वायुना चाशुलोच्चयात् — ख, घ, छ, ज.
[9] शिवोच्चयात् — ओ, क; शिलोच्चयाः — च.
[10] पदन्ति — ङ.
[11] ०भासात्तो० — ख, घ, छ, ज; ०वासास्तो — च.
[12] ग्रहाणि — ओ, क, ङ.
[13] च — च.
[14] स्वजलाकूल — ओ; स्वजलो नकुलं — क; ध्वजशाकाकुलं — ख, घ; ध्वजमालाकुलं — च; ध्वजरीकाकुलं — छ, ज.
[15] तद्द्वयो० — ङ.
[16] शोणिताभिमुखेशोऽस्तु — ओ, क; विश्राणि वा विमि० — ख, घ, छ, ज; शोणितौघविमि० — ङ.
[17] पश्यदौदा० — ख, घ, छ, ज; पश्य तदौदा० — च.
[18] ०सीन्यास्तथा — ओ, क; ०सीन्यस्तथा — ङ; ०सिन्यतथा — ज.
[19] सिद्धिः — क.
[20] कर्माशयात्मयः — ओ; कर्माशयात्मिकः — क; कर्मशयात्मकः — ङ; कर्माशयात्मकः—च.
[21] यावक्तादृग्ज्ञानं — ख; यावत् दृक्तादृज्जानन्न — घ; यादृत्तादृज्जानन्न — ज.

[1]धातुभिश्चेत्तदा किं स्यादाकाशगमनादिकम् ॥३३॥
धातवोऽपि हि [2]बोद्धव्याः [3]प्रक्षीणाधिक[4]वृत्तयः ।
अधर्माशयसामर्थ्याद्[5]भोक्तुर्दुःख[6]प्रदा यतः ॥३४॥
[7]धर्माशयवशात्पुंसो धातवः [8]समतां ययुः ।
समधातुर्यतो [9]लोकः [10]स्वस्थ इत्यभिधीयते ॥३५॥
[11]स्वप्नानामप्ययोक्तानि द्वाराणि [12]स्युर्विभूतये ।
[13]भोक्तुराशयतन्त्राणि यतः कर्मवशाज्जगत्[14] ॥३६॥
भ्राम्यते भोग[15]संसिद्धौ [16]न च पाशादृते क्वचित् ।
[17]प्रवृत्तिर्दृश्यते यस्मात्तस्माद्बलवती[18] क्रिया ॥३७॥

[ग्राह्योऽग्राह्यश्च स्वप्नः]

[19]ध्यानाद्वाप्यथवा [20]सङ्गादभ्यासाद्वा [21]प्रपश्यति ।
कर्माशय[22]वशाविष्टो [23]यादृग्यादृग्विचेष्टितम्[24] ॥३८॥
कुरुते [25]तन्मया[26]सक्तस्तादृक्तादृक्प्रपश्यति ।
[27]न तद्ग्राह्यं [28]विधावस्मिञ्शुभाशुभपरीक्षणे ॥३९॥
[29]नियमे संस्थितस्यास्य स्वस्थचित्तस्य नित्यशः ।
न्यस्तमन्त्र[30]कलापस्य [31]ग्राह्यं स्वप्ननिदर्शनम् ॥४०॥

---

[1] धातूश्चै तदा — ख.
[2] बोद्धव्यो — ओ, क, छ; बोद्धव्यः — ज.
[3] प्रकीर्णाधिक० — ख; दक्षिणाधिक० — छ; प्रदक्षिणाधिक० — ज.
[4] ०व्यक्तयः — ङ.
[5] भोक्तुस्तु स्ते दुःखदा यतः — ख, ङ; भोक्तुस्ते दुःखदा यतः — घ, छ, ज; भोक्तुस्ते दुःखदायकाः — च.
[6] ०प्रदायकाः — क.
[7] धर्मादिव वशा० — क.
[8] सुखतां — ओ, क; सामतां — ख, ङ, छ, ज; सामताः — घ.
[9] लोके — ओ, क, ख, घ, ङ, छ, ज.
[10] ध्वस्त — ख.
[11] स्वप्नामपुधोक्तानि — ङ.
[12] म्युद्धि भूतये — ओ; सिद्धिभूतये — क; स्युर्विभूतये — ङ.
[13] भोक्तुराश्रय० — ख, घ.
[14] ०वशाज्जगः — छ, ज.
[15] ०संसिद्धो — ख, घ, छ, ज; ०संसिद्धचै — च.
[16] न चैशादृते क्वचित् — ओ; न च ऐशादृते — क; न च भोगादृते — च.
[17] प्रवृत्ति दृश्यते — च, ज; प्रवृत्ति दृश्यते — छ.
[18] ०द्बलवति — छ, ज.
[19] ध्यानाच्चाप्यथवा — ओ, क, ङ.
[20] सर्गदभ्या० — ओ; सर्गादभ्या० — क.
[21] प्रपश्यते — ङ.
[22] ०वशावृष्टो — ङ.
[23] यातृक्तादृ० — ओ, क, ख, घ, ङ, छ, ज.
[24] ०ग्विधिचेष्टितम् — ङ.
[25] यन्मयासक्त० — ख, घ, छ, ज; तत्समाविष्ट० — च.
[26] ०शक्तस्ताद० — ङ.
[27] न त ग्राह्यान्विधातव्यस्मिन् — ओ; न तद्-. वर्जविधे तस्मिन् — क; न तद्ग्राह्ये विधा तस्मिन् — ङ.
[28] विधावस्मत् — ख, घ, छ, ज.
[29] नियामसं० — ज.
[30] ०विकल्पस्य — ओ, क, ख, घ, ङ, छ, ज.
[31] संग्राह्यं स्वप्नदर्शनम् — च.

[ शुभाशुभसूचकत्वे प्रश्नः ]

[मतङ्ग उवाच] —

[1]भूतये भोक्तुरित्येव[2]मुक्ताः शब्दादयो [3]यदा ।
[4]जाग्रतश्चैव सुप्तस्य [5]तदा सर्वं [6]नियुज्यते ॥४१॥
शुभाशुभोप[7]लब्ध्यर्थं प्राप्तमेवोपलभ्यते[8] ।
[9]न चैवान्योपलब्धित्वमनवस्थानदर्शनात् ॥४२॥
[10]अस्माद्विरुध्यते सर्वं [11]छिन्ध्यज्ञानात्मकं मम ।

परमेश्वर उवाच —

[ तत्र समाधिः ]

[12]जाग्रत्पादस्थितस्यात्र[13] निमित्ता[14]न्युदितानि वै ॥४३॥
अपेक्ष्य कर्म[15]कालं च स्थानं वस्तु[16]बलाबलम् ।
समाधानाच्च [17]यत्प्राप्तं निमित्तं [18]स्वप्न एव वा ॥४४॥
[19]तद्ग्राह्यं भूतये हेतुर्नात्र कार्या विचारणा ।
प्राङ्निमित्तं दिवा ग्राह्यं [20]ग्राह्यः [21]स्वप्नोऽप्यपश्चिमः ॥४५॥

---

[1] भू . . या भोक्तरि० — ओ; भूतयो भोक्तरि० — क; भुक्तये भोक्तु० — ख, घ, ङ, छ, ज.
[2] ०मुक्ता शब्दा० — ओ, क, ङ.
[3] यदि — च.
[4] जाग्रता चैव — ओ, क.
[5] सदा सर्वं — ओ, क, ङ.
[6] न युज्यते — च.
[7] ०लब्धत्वं — ओ, क.
[8] ०लब्धये — च.
[9] तच्चै वान्योप० — ख, घ; तथैवान्योपलब्ध्यर्थमनवस्थाप्रदर्शनात् — च; तच्चोन्योपलब्धित्वमनवस्थानिदर्शनात् — छ; नच्चेरन्योप० — ज.
[10] अस्माद्विक्रुध्यते — ओ, ङ; अस्मिन्निरुध्यते — ख, घ, छ, ज.
[11] चिन्त्यज्ञानात्मकं — ओ, क, ङ; छिन्ध्यज्ञानतरं — ख, घ, छ, ज. किं य ज्ञानां कुलं मम — च.
[12] जाग्रपाद० — घ, च, जातपाद० — छ, ज.
[13] ०स्थितस्यास्य — ङ.
[14] ०न्युपधानि वै — ख, ज; ०न्युपयानि वै — घ, छ.
[15] ०कार्यत्वा स्थानं — ख; ०कार्यं वा स्थानं — घ, छ, ज; ०कार्यं च स्थानं — ङ; ०कालं वा स्थानं — च.
[16] ०बलाद्बलम् — ओ, क, ङ; ०बलान्वितम् — ख, घ पाठान्तरम्, छ, ज.
[17] यत्प्राप्ति — ख, घ, छ, ज; यत्प्रोक्तं — च.
[18] स्वप्नमेव — ओ, क, ङ, च.
[19] तद्ग्राह्य भूतये — ख, घ, छ, ज.
[20] ग्राह्य — ओ, क; ग्राह्यं — ख, घ, छ, ज.
[21] स्वप्नं तु पश्चिमः — ओ, क; स्वप्नं ह्यपश्चिमम् — ख, घ, छ, ज; स्वप्नेऽन्यपश्चिम — ङ.

[ शुभस्वप्नाः ]

[1]प्रासादारोहणं शस्तं [2]शस्तं दन्तिशिलोच्चये[3] ।
[4]श्वेतानडुत्समारूढा[5] यदा [6]बुध्यन्ति [7]साधकाः ॥४६॥
निशायां पश्चिमे यामे तदा सिद्धिर्न दूरतः ।
श्वेतपुष्प[8]सुपुष्पाढ्यं वृक्षमारोहते यदा ॥४७॥
तदा सिद्धिर्विनिर्देश्या[9] साधकानां गुरूत्तमैः ।
प्रासाद[10]शिखिचक्राह्व[11]हंसाश्वारोहणं शुभम् ॥४८॥
हिरण्यरत्नधान्यानां [12]पद्माम्बर[13]गवां तथा ।
लाभः प्रशस्यते स्वप्ने[14] फलानां च विशेषतः ॥४९॥
नरेन्द्राचार्यनारीणां [15]शुभज्योतिष्मतामपि ।
[16]दर्शनान्मुनिशार्दूल पुत्र[17]लाभश्च [18]शोभनः ॥५०॥
विमाननगरारामशङ्खयानार्णवानपि[19] ।
[20]दृष्ट्वा प्रबुध्यते स्वप्ने[21] शुभं तस्य न संशयः ॥५१॥

[ अशुभस्वप्नाः ]

खरोष्ट्राश्वतरादीनां [22]नेष्टमारोहणं मुने ।
[23]गृध्रोलूक[24]बकश्येन[25]काकाद्यैश्चावलुम्पनम्[26] ॥५२॥

---

[1] प्राक् सदारोहणं — ख, घ.
[2] शस्ते — ओ.
[3] ०शिलोच्चयौ — च.
[4] श्वेतासना समा० — ओ, क; श्वेता नरा समा० — ख, घ, छ, ज; श्वेता न समा०—ङ.
[5] ०समारूढो — च.
[6] रेस्यति — ख, घ; बध्यति — च; रेस्यनि — छ, ज.
[7] साधकः — ख, घ, ङ, च, छ, ज.
[8] सपुष्पाढ्यं — क, ङ.
[9] ०निर्दिश्य — ओ; ०निर्दिश्या — क, ख, घ, छ, ज; ०निर्दिश्यात् — ङ.
[10] ०शिखि चा बाह्य० — ओ; ०शिखरारोह्यो — क.
[11] ०हंसं श्चारोहणं — ओ; हंसस्वारोहणं — क; ०हंसाश्चारोहणं — घ, छ, ज; ०हंसमारोहणं — च.
[12] पद्मान्तरगवां तथा — ओ, क; पद्मानां . . गवान्तया — ख.
[13] ०गवं — ङ.
[14] लाभप्र . . स्वप्ने च — ओ; लाभ प्रशस्य स्वप्ने — ङ.
[15] शुभं ज्योति० — क, ख, छ, ज; शुभज्योतिषु तान्यपि — ङ.
[16] दर्शनं मुनि० — ख, च; दर्शना मुनि० — ङ.
[17] ०लाभं च — ओ, ङ; ०लम्भश्च — च.
[18] शोभनम् — ओ, क, ख, घ, ङ, छ, ज.
[19] ०वादपि — ख, घ, छ, ज.
[20] दृष्टचा — ङ.
[21] प्रबुध्य स्वप्ने तु — ओ, क, ङ.
[22] दोषमारोहणं — ओ, क, ख, घ, ङ, छ, ज.
[23] गृध्रोलोक० — छ, ज.
[24] ०कपिश्येन० — ख, घ, च, छ, ज.
[25] ०काकाश्चैवाव० — ओ, क; ०काकोधैश्चाव० — च.
[26] ०लम्पनम् — क.

[1]नेष्टः [2]क्रव्यादसंपर्कः [3]परैर्वापि विलुम्पनम् ।
पतनोद्वाहशयनं[4] [5]कलहश्चैव नेष्यते ॥५३॥

[ शुभस्वप्नाः, अशुभस्वप्नाश्च ]

[6]दधिक्षीरपयः[7]पानं मद्यपानं [8]च शस्यते ।
[9]असृक्पानं शुभं विद्याद्धृतपानं च सुव्रत ॥५४॥
रक्त[10]कृष्णाम्बरं नेष्टं पुष्पगन्धादिकं च यत् ।
[11]तैलाभ्यङ्गः प्रवासो वा गात्रभङ्गश्च[12] नेष्यते ॥५५॥
[13]ज्ञानलाभोत्तमः स्वप्ने[14] [15]भोगश्चैव महात्मनः ॥
[16]हसितं नर्तितं [17]नेष्टमिष्टं स्यादुदितं सदा ॥५६॥
अनिष्टस्यागमो नेष्ट [18]इष्टश्चेष्टसमागमः ।
अगम्या[19]गमनं शस्तं गोमांसस्य च भक्षणम् ॥५७॥
[20]अन्नस्य [21]वाप्यपक्वस्य [22]तथाप्युक्तमनुत्तमम् ।
भक्षणं तु [23]नृमांसस्य भोजनं [24]तु जुगुप्सितम् ॥५८॥
[25]दानादानमनिष्टं [26]स्याद्यच्छुभाशुभवस्तुनोः[27] ।

---

[1] 'क' मातृकायामिदमर्धं नास्ति ।; नैष्टकद्वचापि संपर्कापरै० — ख, घ; नेष्टं क्रव्यादसंपर्क — च; नेष्टकद्यापि संपर्कापरै० — छ, ज.
[2] क्रव्यादिसंपर्कपरै० — ओ, ङ.
[3] तस्करैर्वापि लुम्पनम् — च.
[4] ०शयने — च.
[5] कलहाश्चैव — ओ, ख; कलहं चैव — क, ङ.
[6] '५४, ५५' श्लोकौ 'ओ, क' मातृकयोर्न स्तः ।
[7] पानमद्य० — ङ.
[8] प्रशस्यते — ङ.
[9] अस्रुपन्नं — छ, ज.
[10] वस्त्राम्बरं — च.
[11] तैलाभ्यङ्गे — च.
[12] ०भङ्गं च — ख, ङ.
[13] ज्ञातेर्ला० — ओ; 'लाम उतमः' अत्र संधिरार्षः ।
[14] ज्ञानलाभोत्तमस्वप्ने — क; जा.. लाभोत्तमस्वप्ने — ख, जानलोभात्तमस्वप्ने — घ; ज्ञानलाभोक्तमस्वप्ने — ङ; जानलोपात्तमस्वप्ने — छ, ज.
[15] भोगं चैव — ओ; यागश्चैव — च.
[16] हसिनं — क; हसन्नर्तति — ख; हसन्नर्तित — घ, छ, ज.
[17] नेष्टं मस्याद्रात्रि ततः सदा — ओ; नेष्टमस्याद्रात्रि ततः सदा — क; नेष्टं स्याद्रातितः सदा — ख, घ, छ, ज; नेष्टं स्याद्रात्रि ततः सदा — ङ.
[18] इष्टं चैव — ख, घ, छ, ज.
[19] ०गमनस्तस्य — ङ.
[20] अन्तस्या वा — छ, ज.
[21] वाप्यभक्ष्यस्य — ओ; वाप्यभक्षस्य — क; बाह्यपक्वस्य — च.
[22] तदाप्युक्त० — छ.
[23] न मांसस्य — क, ख, छ, ज.
[24] चाजुगुप्सितम् — क, ङ, च; च जुगुप्सितम् — ख, घ, छ, ज.
[25] दाता दान० — ओ, क, घ; दानादानमभीष्टं — च.
[26] स्यादशुभाशुभ० — ओ, क, ख, घ, च; स्यामशुभाशुभ० — ङ; स्याशुभा० — छ, ज.
[27] ०वस्तुनौ — ओ, ङ; ०वस्तुनः — क, च; ०वस्तुनो — ख.

विलोमतस्तदेव[1] स्याद्विलोमफलदं ध्रुवम् ॥५९॥
तमस्यम्भसि [2]गर्ते वा पङ्ककिल्बिषकन्दरे[3] ।
[4]भयस्थाने च [5]नेष्टः [6]स्यात्प्रवेशो निर्गमः शुभः ॥६०॥
भूषणं [7]सर्वदा शस्तं श्वेतपुष्पादिकं [8]च यत् ।
[9]अभिषेकः [10]प्रहारश्च रुधिरस्राव आत्मनः[11] ॥६१॥
इष्यते [12]स्वप्नमार्गेऽस्मिन्क्षुरकर्म च नेष्यते ।
रक्ताम्बराणां नग्नानां पिशाचानां [13]च रक्षसाम् ॥६२॥
[14]विकृताननानामन्येषां दर्शनं नेष्यते मुने ।
कपालव्रतिनः[15] शस्ताः सितभस्मोज्ज्वलाः शुभाः ॥६३॥
[16]जटामकुटमूर्धानः शिवभक्ताश्च ये नराः ।
देवान्पश्यन्ति[17] स्वप्नान्ते [18]योगिनीश्चापि [19]शोभनाः ॥६४॥
[20]विद्वांसः [21]साधवो [22]वीराः [23]प्रशस्यन्ते [24]मुनीश्वर ।
एवं बुद्ध्वा यथान्यायं [25]यागः कार्यो विपश्चिता[26] ॥६५॥
शुभेषु प्रयतो भूत्वा [27]ह्यशुभेषु च सर्पिषा ।
आहुतीनां दशशतं[28] बहुरूपमनुस्मरन् ॥६६॥

---

[1] ०स्तदेवं — ओ, क, ङ, च.
[2] गर्तायां पापकिल्बिष० — ओ, क, ङ; गर्तायां वातकिल्बिष० — ख, घ, छ, ज.
[3] ०कन्धरे — क.
[4] बयस्थाने च — ओ; पयस्थाने च — क; भयस्थानेन — ख, घ, छ, ज.
[5] नेष्टं — ओ, क, घ, ङ, च, छ, ज; नष्टं — ख.
[6] स्यात्प्रवेशा निर्गमः — ओ, ङ; स्यात्प्रवेशान्निर्गमः — क, ख, घ, छ, ज.
[7] सर्वदं शस्तं — क; सर्वं ददर्शस्तं — ङ.
[8] हि तत् — ओ, क, ख, ङ; हि यत् — घ, छ, ज.
[9] अभिषे . . भारं वा — ओ; अभिषेकप्रकारं वा — क; अभिषेकप्रहारं वा — ख; अभिषेकप्रभार वा — ङ; अभिषेकं — च
[10] ०प्रभारं वा — घ, छ, ज; प्रहारं — च.
[11] ०स्रवमात्मनः — क.
[12] स्वर्गमात्रेऽस्मिन् — ख, घ, छ, ज.
[13] सरक्षसाम् — च.
[14] विकृतानानामन्येषां — क; विकृतानानुमान्येषां — ख, घ, छ, ज; विकृताननमन्येषां — ङ, च.
[15] ०वृत्तिनः — ख, घ, छ, ज.
[16] जटामुकुट० — च.
[17] पश्यति — क, ख, छ, ज.
[18] योगिन्यो द्वापि — ओ; योगिन्यो चापि — क; योगिन्यो वापि — ख, घ, ङ, छ, ज; योगिन्यो वा सुशोभनाः — च.
[19] शोद्वनाः — ओ; शोभनाम् — ख, घ, छ, ज.
[20] विद्वांसं — ओ, क; विद्वांस० — ङ.
[21] साधकं — ओ; साधको — क, ख, घ, ङ. छ, ज.
[22] धीमान् — ओ, क, ख, घ, ङ, छ, ज.
[23] प्रपश्यन्ते — च.
[24] मुनीश्वराः — ख, घ, च, छ, ज.
[25] का. . . विपश्चिताः — ओ; स्वप्नं दृष्ट्वा विपश्चितः — क; यागं — छ.
[26] विपश्चितः — ङ; विजानता — च.
[27] ०प्यशुभेषु — ख, घ, छ, ज; व्यशुभेषु — ङ.
[28] शतं होमं — ख, घ, छ; दशशतं होमं — ङ; शतं होम्यं — च, ज.

[1]स्वप्नाधिकारः [2]सकलो मयोक्तः[3]
समासतः [4]पत्युरनिन्दितेऽध्वरे ।
दीक्षाक्रमः[5] कारण[6]वक्त्रपद्मा-
द्विनिर्गतः सोऽप्यधुनोपवर्ण्यते[7] ॥६७॥

... ... ... ... ... ...

[ इति श्रीभट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ
क्रियापादे स्वप्नप्रकरणं षष्ठं समाप्तम् ]

षष्ठः पटलः

---

[1] समाधिकारः — ओ, क, ज.; स्वप्नाधिकारं च; स्वप्नाधिकार० — छ.

[2] सकलं — ओ; पटले — ख, घ, छ, ज; पटलं — च.

[3] मयोक्तं — ओ, ङ, च; मयोक्तं च, — क; यथोक्तं — ख, घ, छ, ज.

[4] प्रत्यु० — क, ङ; पत्युरमीहिताध्वरे — च.

[5] ०क्रमं — घ, छ, ज.

[6] ०वक्त्रवत्मा विनि० — क.

[7] ०नोऽप्यवस्यते — ओ, क; ०नोवप्यस्यते — ङ.

## सप्तमः पटलः

# भुवनदीक्षाप्रकरणम्

अथ [1]दीक्षाक्रमः [2]सम्यङमत्तो [3]ग्राह्योऽधुना त्वया।

( यागगृहे मण्डलकल्पनम् )

आलिखेद्भवनं[4] दिव्यं [5]पूर्ववत्सुमितं [6]समम् ॥१॥
कृत्वा सूत्रेण तच्चात्र सूत्रं कार्पासिकं [7]शुभम्।
[8]तदभावे [9]शुभं क्षौमं शाणं वापि सुवर्तितम् ॥२॥
[10]अविसर्पितवत्कार्यम[11]ग्रन्थ्यशिथिलं दृढम्।
[12]तेनाभ्रष्ट[13]करेणैव [14]पूजितेन विनिर्मितम्[15] ॥३॥
मण्डलं भूषयेत्पश्चाद्रजोभिः [16]क्रमशोदितैः।

[ तत्र चतुर्भिरावरणैः सह शिवपूजा ]

मध्ये [17]संपूजयेद्देवं साङ्गं सब्रह्म[18]पञ्चकम् ॥४॥
[19]विद्येश्वरांश्च विधिवत्[20]सर्वे [21]ते कमलासनाः।
[22]दिक्पालाः [23]स्वस्तिकावस्थाः पूज्या गन्धादिभिः शुभैः ॥५॥

---

[1] दीक्षाक्रमं — ज.
[2] सम्यगुक्तः — ओ, क, ङ; सम्यङ् मन्त्रा – च.
[3] प्रागधुना — ओ, क, ङ; ग्राह्योऽधुनो — ख; ग्राह्याधुना — च.
[4] ०द्भुवनं — ख, घ, ङ, च, छ, ज.
[5] पूर्ववत्सुसमा — ङ; पूर्ववत्सुसमं — च.
[6] शुभम् — च.
[7] तु वा — च.
[8] तदभावाच्छुभं — ख, घ, च; तदभावा शुभं — छ; तदभावाः शुभम् — ज.
[9] शुकन्दक्षौमं — ओ, क.
[10] अपसर्पत्रिवृत्कार्यें — ओ; अपसर्पत्रिवत्कार्यें — क; अपसत्पितृवत्कार्य० — ख, घ, छ, ज; अपसव्यं त्रि. . त्कार्यं० — ङ; अविसर्पितदृक् कार्येमग्रं ह्यशिथिलं — च.
[11] ०मग्रन्थिशिथिलं — ओ, क, ख.
[12] तेनाहृष्ट० — ओ, क; तेनाष्टश्र — ख; तेन हृष्ट० — ङ; तेनाभृष्ट० — छ.
[13] ०करने चैव — ङ.
[14] पूजिते नवनिर्मिते — ओ, क, ङ.
[15] विनिर्मिते — ख, घ, च, छ, ज.
[16] ०क्रमशोभितैः — ख, घ, छ, ज; क्रमशोधितैः —च; अत्र मतङ्ग० क्रिया० १.१३-५० वृत्तिर्द्रष्टव्या।; 'क्रमश उदितैः' अत्र संधिरार्षः।
[17] संपूजयन् देवं — ओ.
[18] ०वर्चसम् — ख, घ; ०वाचकम् — घ, ज.
[19] विद्येश्वराश्च — ओ, क, ङ.
[20] पूर्ववत्कमलासनात् — च.
[21] वै — ओ, क, ङ.
[22] दिग्ज्वाला — ङ.
[23] स्वस्थिकावस्थाः — ओ; स्वस्तिरूपस्थाः — ख, घ, छ, ज; स्वस्तिकावस्था — ङ; स्वस्तिकारूढाः — च.

[1]बहिर्मण्डलतः पूज्या [2]दिक्ष्वष्टास्वस्त्रनायकाः ।

[ द्वारपालपूजा ]

[3]पदेन तु निवेश्याथ द्वारेषु कुसुमादिभिः ॥६॥
द्वारपालान्समभ्यर्च्य दण्डिनस्ते महाबलाः ।
[4]पूर्वतः स्कन्दनन्दीशौ दक्षिणे काललोहितौ[5] ॥७॥
[6]भृङ्गीशश्च गणेशश्च[7] [8]पश्चिमे द्वारपालकौ ।
चण्डेश्वरो [9]विशाखश्च [10]पूज्यावुत्तरादिक्स्थितौ ॥८॥

[ अग्निकार्यं, मन्त्रतर्पणम्, शिष्यप्रवेशनादि च ]

पूर्ववत्सकलं कृत्वा [11]कर्माग्नावपि तर्पणम् ।
शिष्य[12]माहूय [13]दर्भेषु विनिवेश्य च पूर्ववत् ॥९॥
करन्यासादि[14]कं सर्वं शि[15]वं ब्रह्माङ्गसंयुतम् ।
पूजयेद् गन्धपुष्पाद्यै[16]र्दीक्षाङ्गावस्थितं [17]विभुम् ॥१०॥

[ नेत्राच्छादनं पुष्पदानं च ]

[18]सुसितेन [19]विवस्त्रेण [20]नवेन सदशेन च[21] ।

---

[1] देहि मण्डलतः — ख, घ, छ, ज.
[2] दिक्ष्वष्टस्वत्र० — ओ, क; दिक्ष्वष्टस्ववस्त्रकायाः — ङ.
[3] पथेन — ओ, क, ङ; प्रमथेन — च.
[4] पूर्ववत्स्कन्दा . . — ख; पूर्ववत्स्कन्द० — घ, छ, ज.
[5] ०लोहक — क; ०लोभकौ — ख; ०लोहकौ — ओ, घ, ङ, छ, ज.
[6] भृङ्गिलश्च — च.
[7] . . णं च गणेशं च — ओ, क; भृङ्गीशं च गणेशं च — ङ.
[8] पश्चिमद्वारं० — ख, घ, छ, ज.
[9] विशाखाश्चा० — क.
[10] उत्तरातश्च दिक्स्थितौ — ओ; वुत्तरातश्च दिक्स्थितौ — क.
[11] शिवाग्निमपि — ओ, क, ङ; जातो दो . . — ख; कर्मातो वापि तर्पणम् — घ, छ; कर्मतो वापि — ज.
[12] ०माहृतभेषु — ङ.
[13] देवेषु — ओ, क; देहेषु — ख, घ; देहेष्टे — छ, ज; मतङ्ग० क्रिया० ५.१०२–१०७ पूर्वार्धान्तिवृत्तिमनुसृत्य पाठः शोधितः ।
[14] ०कं संध्यां — ख; ०तः सर्वं — च.
[15] शिवब्रह्माङ्ग० — ङ.
[16] ०दीक्षाङ्गावास्थितं — ओ; ०दीक्षाकालस्थितं — ख, घ, ङ, छ, ज.
[17] प्रभुम् — च.
[18] सुस्थितेन — ओ; सुवितेन — ख, घ, छ, ज; सुसितो न — ङ.
[19] वितरणे — ख; वितर्कोण — घ, छ, ज; विवर्कोण — ङ; विरक्तेन — च.
[20] 'ख, घ, छ, ज' मातृकासु 'नवेन' इत्यारभ्य '१४' पूर्वार्धे 'विभोः कृत्वा' इत्यन्तं नास्ति ।;
[21] नवेन सदनेन च — ओ; न सेवनदनेन च — क; निवेदन सदनेन च — ङ.

[1]अव्यङ्गेन विशालेन मृदुनारूपमुच्चरन् ॥११॥
संयम्य [2]चक्षुषी तस्य कुसुमं देयमञ्जलौ[3] ।

[ पुष्पपातवशान्नामकरणं, होमश्च ]

उत्थाप्य शनकैर्नीत्वा प्रत्यग्द्वारं प्रवेशयेत्[4] ॥१२॥
[5]शक्त्या [6]मूर्धनि तत्पुष्पं [7]लेशतः [8]प्रक्षिपेत्ततः ।
पुष्पपातवशात्कार्यं नाम [9]मन्त्रं प्रचोदयेत् ॥१३॥
प्रदक्षिणं [10]विभोः कृत्वा दण्डवद्भुवि भक्तितः ।
[11]उत्थाप्य पतितं शिष्यं [12]वह्निस्थानमुपक्रमेत्[13] ॥१४॥

[ पूर्णाहुतिः, समयदीक्षापूर्तिः ]

[14]गुरुः शिष्यनिमित्तं तु[15] पूर्णां[16] वह्नौ [17]प्रपातयेत् ।
येनासौ [18]समयी भूत्वा [19]दीक्षासंस्कारमर्हति ॥१५॥
श्रवणेऽध्ययने [20]योग्यः पूजायां हवने तथा ।
[21]सावित्रीं तर्पयित्वाग्नौ विधिवत्कुसुमादिभिः ॥१६॥

[ भुवनदीक्षा ]

[22]शर्वशर्वपदोच्चारात्सम्यक्संहारमुद्रया[23] ।

---

[1] अव्यङ्गो विशाशेले — ङ; अध्यङ्गेन — च.
[2] चक्षुहीनस्य — ङ.
[3] ०मङ्गुलौ — ओ, क, ङ.
[4] द्वारेण वेशयेत् — ओ, क, ङ.
[5] शंभोर्मूध्नि ततः पुष्पं — च.
[6] मूर्धानि — क.
[7] लेशया — ओ, क, ङ, च.
[8] प्राक्षिवावयेत् — ओ; प्रक्षिवापयेत् — क, ङ; प्रक्षिपापयेत् — च.
[9] ०मन्त्रः प्रचोदयात् — ओ; मन्त्रप्रचोदयात् — क, ङ; तन्मन्त्रचोदनात् — च.
[10] प्रभोः कुर्यात् — च.
[11] . . . पर्येच्छिष्यं — ओ; प्रातरुत्थापयेच्छिष्यं — क; पतिते स्थापयेच्छिष्यं — ख; पतितेत्थापयेच्छिष्यं — घ; पतितोत्थापयेच्छिष्यं — ङ; पततेत्थापयेच्छिष्यं — छ, ज.
[12] अग्निस्थान० — च.
[13] ०क्रमात् — ङ.
[14] गुरुशिष्य० — क, ङ.
[15] ०समायुक्तं — ओ; ०समायुक्ताः — ङ; ०समायुक्तः — क, ख, घ, च, छ, ज; मतङ्ग० विद्या० २६.६३ तमश्लोकवृत्तावुद्धृतपाठमनुसृत्यात्र पाठः साधितः ।
[16] पूर्णं — ओ, ङ.
[17] प्रदापयेत् — ओ, क, ङ, च; प्रतापयेत् — ख, घ.
[18] समती — ओ; सुमती — क.
[19] क्रियासंस्कार० — ख, घ.
[20] योगाः — च.
[21] सावित्री तर्प्ययित्वा — च.
[22] सर्वसर्वपदो० — च; शर्वशर्वपथोच्चारात् — छ, ज.
[23] संस्कारमुद्रया — च.

**गृहीतं [1]योजयेद्गर्भे सद्योजातेन मन्त्रवित् ॥१७॥**
**कालाग्निरुद्र[2]भुवनं पुरा संकल्प्य कल्पयेत् ।**
**[3]शिवो ज्ञापयति स्वाहा [4]रुद्रागच्छ [5]पशोर्विधौ ॥१८॥**
**त्वदीये [6]भुवने कर्म कर्तव्यं [7]कारणाज्ञया ।**
**कृतकृत्यस्य शुद्धस्य निरोधेन त्वयाधुना ॥१९॥**
**स्थातव्यमिति वक्तव्यम्"**

**कल्पयेद्** इति सामर्थ्यजननमेव। कथमिति — "**शिवो ज्ञापयति स्वाहा**" इत्यादि "**स्थातव्यम्**" [9]इत्यन्तेन मन्त्रेण। अत्र चास्य पूर्वमेवोपस्थापितत्वादागमनं संमुखीभवनमेवोच्यते। ततश्चाभिमुखीभूतस्य [10]तत्पूर्वत्वप्राप्तेरभिमुखीभव[न]प्रतिपादनसमर्थत्वाच्चास्य मन्त्रस्य पूर्वं प्रयोगः —

"[11]स्वनाम च ततः पश्चाच्चतुर्थ्यन्तं प्रयोजयेत्"

इत्यधिवासश्रुतसामर्थ्यात् "कालाग्निरुद्राय स्वाहा" इति। अत एव च प्रतिस्थानमनेनैव मायागर्भाधिकार्यभिव्यक्तपाशव्युदासः। एवं च प्रतिभुवनं [12]भुवनेशमन्त्रस्य सामर्थ्यादूहः। भुवनेश्वरैरेव चात्र जननाहुतिः श्रूयते यतः। युक्तं चैतत् प्रतिभुवनं पिण्डसृष्टेस्तेषामेवाधिकारस्योक्तत्वात्; तत्त्वभुवनादिसृष्टे[13]स्त्वनन्तेशश्रीकण्ठयोरेवेति[14]। ततश्च प्रतितत्त्वमनन्तादिशिखण्डयन्ता ईश्वरा इति, तत्त्वदीक्षायां तेनैव यथाक्रममूहिततत्त्वपदमन्त्रैर्जननं कर्तव्यम्। शुद्धेऽध्वनि तु पञ्चब्रह्मात्मना सदाशिवेनेति। तच्च जननं यत्र यथाभूतेन कर्मणा यादृशेन शरीरेण यस्यां योनौ मन्त्रसामर्थ्येन संपाद्यमिति। न च तस्य सर्वत्र संयोजनादनन्तरमेव पशुतत्त्वे मायातत्त्वे वासंभवात्। शुद्धेऽध्वनि तु [15]तत्पदावधि क्रिया[16]शक्त्यभिव्यक्त्यर्थं प्रतिस्थानं विद्या[17]विद्येश्वरादिसमेन देहात्मना जननं मुख्यमेव[18]; न तु कल्पितं यथा केनाप्युक्तमित्यविरोधः॥

**[19]ततश्चाहुतयः क्रमात् ।**
**साङ्गेन देवदेवेन ब्रह्मभिश्च यथाक्रमम् ॥२०॥**

**ततः** जननादनन्तरम् **आहुतयः** इति। **साङ्गेन देवदेवेन** षड् [अङ्गैः] **ब्रह्मभिश्च** पञ्चेत्येका-

---

[1] योजयेद्गर्ते — च.
[2] भवनं — ओ, क, ङ, च.
[3] शिवा जापयति — ओ.
[4] रुद्रागश — क.
[5] पशो विधौ — ओ; यशोनिधे — च.
[6] हुयने — ख.
[7] कारणप्रिया — छ, ज.
[8] ०कृत्यस्त्रशुद्धस्य — ङ.
[9] इत्यनेन — ऊ, ऋ.
[10] तत्पूर्णं प्राप्ते० — ऊ, ऋ.
[11] मतङ्ग० क्रिया० ५.१११पू०; स्वनाम च चतुर्थ्यन्तं ततः पश्चात्प्रयोजयेत् — ऊ, ऋ.
[12] 'ऋ' मातृकायां 'भुवनेश' इत्यारभ्य 'प्रतिभुवनं' इत्यन्तं नास्ति।
[13] ०स्त्वनन्ते च — ऊ, ऋ.
[14] मतङ्ग० विद्या० १९. २–४पू० वृत्तौ।
[15] तत्पादावधि — ऊ, ऋ.
[16] ०शक्तिभिव्यक्तव्यं प्रति० — ऋ.
[17] ०विद्येश्वरा च समेन — ऋ.
[18] मतङ्ग० विद्या० ३.१-३ वृत्तौ 'मूर्तित्वेनोपचर्यते' इत्यस्य विवरणे, ३.२३-३० वृत्तौ च।
[19] तत आहुतयः — च.
[20] यथाक्रमा — छ; यथाक्रमात् — ज.

दशेत्यर्थः। **यथाक्रमम्** इति यथा दीक्षायां भुवनादेः संहारक्रमः, तथैवेति। अतश्च सद्योजातादिना ब्रह्मभिः अस्त्रादिना शिवाङ्गैः, परतः शिवेन पूर्णाहुतिरित्युक्तं भवति। **क्रमाद्** इति अध्वक्रमेण येषां यावत्यध्वनि [1]प्रगमस्तैस्तावत्येवेति न निष्कले[2] ब्रह्मभिरित्यर्थः। एताश्च भोगभोजनार्था एव, जननादनन्तरं तस्यैव सामर्थ्यसिद्धत्वात्। अनन्तरमुद्धारस्य पाशच्छेदपूर्वस्य श्रवणाच्च। प्रोक्तं च श्रीमत्**सर्वज्ञानोत्तरे** —

[3]"संयोजनं [4]संजननं भोगभोजनमेव च ।
पाशच्छेदस्तयोद्धारो दीक्षाकर्माणि[5] पञ्च तु ॥" इति ।

[6]तच्चाशुद्धेऽध्वन्यभ्यवहारात्मकमेव कर्मफलत्वात्। भोगद्वारेणैव कर्मणां क्षय [7]इत्युक्तं यतः। शुद्धे तु पालनात्मकमेव, प्रतिस्थानं तत्र क्रियाशक्त्युत्कर्षाभि[8]व्यक्तेरेव कार्यत्वात्। तन्निबन्धनत्वाच्च भोगस्येत्युक्तं **विद्यापादे**[9]। अत एव च दानक्षपणलक्षणत्वादेता [10]एवाहुतयो दीक्षाशब्दवाच्याः। यदुक्तं प्राक् **स्नानप्रकरणे**[11] —

[12]"अनयोः शासने सिद्धा दीक्षा [13]क्षपणदानयोः।" इति।

अत एव चैषां मन्त्राणां दीक्षासाधकत्वमुक्तमधिवासे — [14]"दीक्षामन्त्र[15]मथोत्तमम्" इति। दीक्षा च फलवतीत्युक्तमसकृद् [16]विद्यापादादौ। "[17]फलवत्संनिधावफलं[18] तदङ्गम्" इति न्यायेनाधिवासादीनामपि तदङ्ग[त्व]मित्यदोषः ॥२०॥

**मुञ्च मुञ्च[19]पदोच्चारा[20]दुद्धारो [21]विहितः सदा ।**
**भुवने भुवने कर्म [22]पाशच्छेदावसानिकम्[23] ॥२१॥**
**[24]कर्तव्यं [25]धूत्रयेणात्र पूर्णा [26]व्योमपदेन तु ।**

---

[1] प्रागमस्तै० — ऋ.
[2] निष्कलो — ऊ, ऋ.
[3] अयं श्लोकः उपलभ्यमानसर्वज्ञानोत्तरमातृकायां नोपलभ्यते। अयमेव श्लोकः सार्धत्रिशतिकालोत्तरवृत्तौ (८.११) 'दीक्षोत्तरे' इति निर्दिश्योद्धृतः।
[4] संजातभोग० — ऊ; संयोजननभोग० — ऋ.
[5] ०कर्मणि — ऊ, ऋ.
[6] तच्च शुद्धे० — ऊ, ऋ.
[7] मतङ्ग० विद्या० ८.१०३ पू० वृत्तौ।
[8] ०व्यक्तेनरेव — ऋ.
[9] मतङ्ग० विद्या० २.१,२पू० वृत्तौ 'सत्ताभिव्यक्तये' इत्यस्य विवरणे; ४.५३उ० वृत्तौ; ५.६ पू० वृत्तौ; ९उ०, १०पू० वृत्तौ च।
[10] ०देवाहुतयो — ऋ.
[11] मतङ्ग० क्रिया० २.३पू०.
[12] अनयोश्चासने — ऊ, ऋ.
[13] ०रूपण० — ऊ, ऋ.
[14] मतङ्ग० क्रिया० ५.५० उ०.
[15] ०रथोत्तमम् — ऋ.
[16] मतङ्ग० विद्या० ७.७२-७४; २६.६३ वृत्तौ; मतङ्ग० क्रिया० १.२,३पू० वृत्तौ, २.३, ४. वृत्तौ च।
[17] शाबरभाष्यम् ४.४.१९.
[18] ०त्संनिधानफलं — ऊ, ऋ.
[19] ०पदोच्चारो उद्धारो० — ङ.
[20] ०दुच्चारो — ख, घ; ०दुच्चारा० — च; दूच्चारो — छ.
[21] ऽभिहितः — ऊ, च; ऽभिहतः — ऋ; ऽवहितः — ज.
[22] पादच्छेदा — छ, ज.
[23] ०वसानिकः — ख, घ, छ, ज.
[24] कर्तव्या — ङ.
[25] सूत्रयेणात्र — ओ, क; सूत्रयन्त्रेण — ख, घ, छ, ज; सूत्रत्रयेण — ङ.
[26] सोम० — ओ.

एवं चात्र भोगभोजनात्मिकां दीक्षां कृत्वा, [1]स्थानान्तरदीक्षार्थं पुनस्तत्स्थानसंपादितभोगानन्तरशरीराभिव्यक्तयेऽस्मिन्नपि स्थाने पूर्वोक्तदीक्षाक्रमेणैव — [2]"शिष्यमाहूय दर्भेषु [3]विनिवेश्य", इत्यादिविहितात्म[4]संस्कारात् पदे शैथिल्याय शिवहस्तदानपर्यन्तान् महास्थानान्तरोपस्थापनेन कृत्वा, **मुञ्च मुञ्चपदे**नोद्धाराख्यं कर्म कुर्यादिति। [5]प्रागुक्तशर्वशर्वपदग्रहणस्यात्र पदस्य [6]बाधेनैव तदर्थसिद्धेः। तदिदमुक्तम् —

[7]"अर्थात्तुल्यार्थतां प्राप्य बाधो गोदोहनादिवत्।" इति।

तच्च पाशच्छेदस्यावसाने भवं **पाशच्छेदावसानिकम्**। पाशच्छेदमादौ कृत्वा कर्तव्यमित्यर्थः। यदुक्तं श्रीमद्**रौरवे**[8] — "[9]छिन्द्यात्पाशानघोरेण [10]हृदयेनाथ तत्क्षिपेत्।" इति। तच्च पाशानां प्रतिस्थानं विच्छेदनात्मकं कर्म धूकारत्रयेण कर्तव्यम्। [11]ततोऽत्र कालाग्निभुवनात् पृथिवीतत्त्वाद्वा प्रभृति प्रतिस्थानं [12]तत्त्वभूतभुवनलक्षणस्त्रिपर्वात्मकः पाशोऽसाधारणसाधारणभेदेन व्यवस्थितः। भोगपदार्थात्मकश्च भावप्रत्ययात्मकः कार्मः, मलात्मकश्च नियामकत्वेन मायागर्भाधिकार्यभिव्यक्तश्च पतिपदार्थः। अत्र भोजनजननाभ्यां कर्मेश्वरात्मनोः सर्वात्मना क्षपितत्वादवशिष्टानां दीक्षाक्रमेणैवोर्ध्वस्रोतसा भूतभुवनतत्त्वानां विच्छेदः। यतस्तत्त्वानामेव संनिवेशो भुवनानि, भौवनानि च [13]भूतानि स्थूलशरीरात्मकानीत्युक्तं [14]**विद्यापादे**। तत्रापि च भूतलक्षणस्य सर्वात्मना विच्छेदः। भुवनात्मनस्तु पर्वणोऽनन्तपुरुषभोगसाधनत्वेन साधारणतया व्यवस्थितेः सर्वथा विच्छेदासंभवात् तत्तद्भोगसाधनत्वं विच्छेत्तव्यमित्यसर्वात्मना विच्छेदः प्रोक्तः।

यद्येवं स्थूलदेहस्यापि दृष्टवददृष्टेऽपि स्थाने प्रियतमादिपुरुषान्तरभोग्यतया साधारणासाधारणत्वेन [15]**विद्यापादे** व्यव[16]स्थितेरुक्तत्वात्सर्वथा विच्छेदानुपपत्तिरेव। सत्यम्। [17]शरीरं तु तस्य यत् तं प्रत्यसाधारणं तत्तावदवश्यं विच्छेत्तव्यम्। तस्मिंस्तु विच्छिन्नेऽर्थात्पुरुषान्तरभोग्यमपि विच्छिन्नं भवति। तच्छरीरत्वेनैव तत्तेषां भोग्यं यतो नान्यथा। एवं पुरुषान्तरशरीराणामपि [18]तद्भोग्यत्वं विच्छिन्नमेव। ननु [19]"नाभुक्तं कर्म [20]नश्यति" इत्युक्तम्। सत्यम्। अत एव मन्त्र[21]शक्त्यात्राप्युभयाधिकरणकर्मभोगसिद्धिरित्यदोषः। तत्त्वात्मनस्तु सूक्ष्मदेहत्वे[22]नावस्थितेः प्रतिस्थानमंशांशिकया विच्छेदे तत्र तदूर्ध्वं वैकल्येन भोगानुपपत्तिरिति न तत्र सर्वात्मना विच्छेदः। अपि तु [23]तद्विशिष्टपापभोगदानसामर्थ्यमात्रस्यैव। त्रिपर्वपदार्थावसाने तु सर्वात्मनेति वक्ष्यामो

---

[1] स्थानान्तरं दीक्षा० — ऊ, ॠ.
[2] मतङ्ग० क्रिया० ७.९उ०.
[3] विनिवेद्य — ऊ, ॠ.
[4] संस्कारात् पदे — ऊ, ॠ.
[5] मतङ्ग० क्रिया० ७.१७.
[6] बोधेनैव — ऊ, ॠ.
[7] श्लोकवा० — २.५८उ०.
[8] रौरवे मुद्रितभागे नोपलभ्यते।
[9] छिन्द्या पा।शा नुघोरेण — ॠ.
[10] हृदयेणाथ — ऊ; हृदयेणा तथाक्षिपेत् — ॠ.
[11] तताऽत्र — ऊ; उतात्र — ॠ.
[12] मतङ्ग० विद्या० २.१६उ०-१७पू० वृत्तौ।
[13] भूतात्स्थूल० — ऊ; भूताभुवनास्थूल०—ॠ.
[14] मतङ्ग० विद्या० २.१६उ०, १७पू० वृत्तौ।
[15] मतङ्ग० विद्या० भोगपदार्थप्रकरणे।
[16] ०स्थितेन उक्त० — ॠ.
[17] शरीरं तस्य — ॠ.
[18] तद्भोग्यं — ऊ, ॠ.
[19] पौष्करे बिन्दुपटले ४५उ०.
[20] नश्यतीत्यर्थम् — ॠ.
[21] ०शक्त्य।त्राप्यतयाधि० — ॠ.
[22] ०नावस्थिते प्रति० — ऊ; ०नाप्यिवस्थिते प्रति० — ॠ.
[23] तद्विष्टपाप० — ॠ.

[1]"मायान्तं भुवनेशानाम्" इत्यत्र। मलस्य प्रतिस्थानं तत्तद्विष्टपभोगप्रदकर्मसहभावित्वं विच्छिद्यते। भोगप्रदाने [2]हि कर्मणां [3]मल: सहकारिकारणमित्युक्तं [4]**विद्यापादे**। मायातत्त्वे तु कर्मसंस्कारं दग्धबीजं विधाय, तदूर्ध्वं सर्वज्ञत्वावारकत्वं मलस्य विच्छेत्तव्यमित्युक्तं [5]तत्रैव। ततश्च शुद्धेऽध्वन्यधिकारनिबन्धनाच्छरीरादय: शुद्धविद्यात्मका: पाशा:। मलश्च क्रियाशक्त्यावारक: पतिशक्तिश्च। तेऽपि तथैव छेत्तव्या इति। प्रतिस्थानं च ततोऽनन्तरं व्योमव्यापिपदोपलक्षितेन शिवेन पूर्णाहुतिं दत्त्वा मुञ्चमुञ्चपदेनोद्धारं कुर्यादिति॥

[6]**एवमध्वाखिल:[7] शोध्यो यावद्भूपृष्ठगोचर:[8]** ॥२२॥

**एवं** संयोजनादिनोद्धारान्तेन क्रमेण कालाग्निभुवनमिव [9]नरकादि: पातालान्त: सर्व: **अध्वा शोध्य:** यावद्भूर्लोक: ॥२२॥

भूर्लोके तु विशेष इत्युच्यते —

[10]**तत: [11]पञ्चकहोमेन ब्रह्मभिर्जातय:[12] पशो:[13]** ।
**संशोध्या: [14]स्थावराद्यास्तु [15]गुरुणा [16]पशुपश्चिमा:** ॥२३॥
[17]**संकीर्णा [18]जातय: [19]शोध्या: शिवास्त्रेण [20]महौजसा** ।
[21]**वर्मणा शूद्रजातिस्तु [22]विड्जाति: शिखयाध्वरे** ॥२४॥
[23]**संशोध्या क्षत्रजातिस्तु [24]शिरसाग्नेर्विपश्चिता** ।
[25]**पञ्चाहुतिसमा[26]योगाद्भूदा जाति[27]द्विजन्मनाम्** ॥२५॥

---

[1] मतङ्ग० क्रिया० ७.३२पू०.
[2] ह कर्मणां — ऋ.
[3] मलसह० — ऋ.
[4] मतङ्ग० विद्या० ६.१०२उ०, १०३ पू० वृत्तौ।
[5] मतङ्ग० विद्या० २.१,२ पू० वृत्तौ 'सत्ताभिव्यक्तये' इत्यस्य विवरणे।
[6] एवमष्टाखिल: — ऊ, ऋ.
[7] ०मध्वाखिलं — ओ, क, ङ.
[8] ०गोचरम् — ओ, क, ङ, च; ०पृथुगोचरम् — ख, घ, छ, ज.
[9] तत्कादि: — ऋ.
[10] तदपञ्चक० — ङ.
[11] पञ्चाङ्गहोमेन — ओ, क.
[12] ०र्जायत: — ओ, क, ख, घ, ङ; ब्रह्माभिर्जायते — च; ब्रह्मभर्जयत: — छ, ज.
[13] पशौ — ख, घ, छ, ज.
[14] द्यावरा० — ओ, क.
[15] गुरूणां — ओ, क, ख, घ, ङ, छ, ज.
[16] पश्चिमेऽधुना — ओ, क; पशपश्चिम — ङ.
[17] संकीर्ण — ओ; संकीर्णजा० — छ.
[18] जायते — ओ, क.
[19] शोध्या — ओ, क.
[20] गरीयसा — ख, घ, छ, ज; महौजस: — ङ.
[21] कर्मणा शूद्र० — ऊ, ऋ; शूद्रजातिस्तु हृदिना —ओ, क.
[22] श्लो० २४ चतुर्थपाद: २५ प्रथमपादश्च न स्त: 'ऊ, ऋ' कोशयो:।
[23] संशोध्य क्षत्र० — ओ; वंश: स्यात्क्षत्र० — ख, घ, छ, ज.
[24] शिरसाग्नेर्वि० — ख, घ, छ, ज.
[25] पश्वाहुति० — ङ .
[26] ०योगाद्विप्रजाति० — ओ, क, ख, घ, छ, ज; ०योगाच्छूद्रजाति० — च.
[27] द्विजात्मनाम् — ओ, क; सुजन्मनाम् — ख, घ, छ, ज.

**ततः** भूलोक[1]संयोजनादनन्तरं ब्रह्मभिराहुतिपञ्चकेन स्थावरसरीसृपपक्षिमृगपशुलक्षणाः पञ्च जातयः सद्योजाता[दिभि]ः क्रमेण शोध्या इति। तत्तज्जातिप्रदानि कर्माणि शोध्यानीत्यर्थः। तेषां च तत्तज्जातियुक्तशरीरजननेनैव संशुद्धिः, भोगायुः[2]प्रदानां दीक्षापाशच्छेदाभ्यामेव संभवति यतः। एवं चात्र [3]प्रागुक्ताया जननाहुतेरेव[4] प्राप्ताया [5]बाधः, न तु भोगभोजनाद्याहुतेरपि। ऐश्वर्यपाशविच्छेदाहुतितया तु सा [6]प्रयोक्तव्या भेदेनैव पाशच्छेदकाले तु [7]पूर्वं हि जनन[8]प्रसङ्गेनैवानयैतदपि साध्यत इत्युक्तं यतः। ततस्तत्र दीक्षा[9]युद्धारान्तं कर्म कृत्वा, षष्ठया मनुष्यजातेरेवान्तरभेदेन [10]शुद्धिनिमित्तं प्रथमं [11]तावत् **संकीर्णाः** म्लेच्छचण्डालादि**जातयः** याः, ताः संशोध्य, उद्धारान्तं कर्म कृत्वा, तत्कवचेन शूद्रजातिं, तच्छिखया वैश्यजातिं, तच्छिरसा तु क्षत्रजातिं संशोध्य, तद्धृदयाहुतिपञ्चकेन द्विजातिसंयोजनं कर्तव्यं **समायोगाद्** इत्यत्र श्रुतेरनन्तरं गर्भाधानश्रवणाच्च[12]। अत एव संयोजनाहुतेरपि प्राप्ताया बाधः; [13]जननाहुतेरपि [14]विद्याङ्गैर्वक्ष्यमाणत्वात्[15]। अत्र च वैश्यक्षत्रिययोः स्वपदोपात्तत्वाद् द्विजन्मपदं **गोबली**[16]**वर्दन्यायेन**[17] ब्राह्मणमेवाभिधत्ते ॥२३–२५॥

**गर्भाधानादयः[18] पञ्च संस्काराः [19]शास्त्रवेदिना ।**
**प्रकर्तव्यास्तु विद्याङ्गैः [20]प्रोक्तसंख्याहुतिक्रमात्[21] ॥२६॥**
**गायत्र्याहुतयो होम्याः पञ्च [22]पञ्चसु पञ्चधा ।**
**पञ्चभिर्ब्रह्मभिर्होम्यो [23]विवाहः शिवशासने ॥२७॥**
**पाकयज्ञास्तु[24] होतव्याः[25] शक्त्या [26]ब्रह्मतरूद्भवैः ।**
**समिद्भिः सप्तसंख्यातै[27]र्हविर्यज्ञास्तिलैः शुभैः ॥२८॥**

---

[1] ०संजनना० — ऊ, ॠ.
[2] ०पदानां — ऊ, ॠ.
[3] मतङ्ग० क्रिया० ७.१७-२० पू वृत्तौ।
[4] ०हुतयेव — ऊ; हुतः व — ॠ.
[5] बोधेन — ऊ, ॠ.
[6] प्रयोजनक्या भेदेनैव — ॠ.
[7] मतङ्ग० क्रिया० ७.२० वृत्तौ।
[8] ०प्रासङ्गे० — ऊ, ॠ.
[9] ०द्युद्धारान्तकर्म — ॠ.
[10] शुद्धनि० — ऊ, ॠ.
[11] तावदसंकीर्णा — ऊ, ॠ.
[12] ०श्रवणः — ऊ, ॠ.
[13] जनाहुते० — ऊ, ॠ.
[14] विद्याङ्गे वक्ष्य० — ऊ, ॠ.
[15] मतङ्ग० क्रिया. ७.२६.
[16] ०वृन्दन्यायेन — ऊ, ॠ.
[17] लौ० न्या० साहस्री० पृ० ८५.
[18] ०दानादयः — ङ.
[19] शास्त्रचोदिताः — ओ, क, ख, घ, ङ, छ, ज; शास्त्रवेदिताः — च.
[20] प्रोक्तः — घ, छ, ज.
[21] ०हुतिः क्रमात् — ओ, ख.
[22] पञ्च च पञ्च च — ख.
[23] विवादः — च.
[24] ०यज्ञस्तु — ऊ, ॠ, क, ख, घ, ङ, छ, ज.
[25] होतव्यः — ओ, क, ख, घ, छ, ज; कर्तव्यः — ङ.
[26] ब्रती तरुद्भवैः — ओ.
[27] ०र्वीर्यज्ञैस्तिलैः — ओ; ०र्वीरयज्ञैस्तिलैः — क; ०र्हविर्यज्ञस्तिलैः — ख, घ, ज; ०र्हवियज्ञैस्त्रिशैः — ङ; ०र्हविर्यज्ञस्तिलैः — छ.

[1]चरुणा [2]सोमसंस्थास्तु[3] निर्वर्त्या[4] विधिवत्सदा ।
ततः [5]सम्यक् कल्पनीयं [6]शिशोः सोमघृतेन तु ॥२९॥
[7]शतसंपात[8]संपन्नं गायत्र्या [9]देयमादरात् ।
शेषकर्मकलापस्य बहुरूपेण सर्पिषा ॥३०॥
आहुतीनां शतं होम्यं [10]पूर्णां चान्ते [11]प्रपातयेत् ।

तस्यां च ब्राह्मणजातौ भेदेनैव **गर्भाधानादयः** संस्काराः कार्याः। न तु जात्यन्तरेष्विव संयोजनादिकर्मान्तिर्मविनेत्यर्थः। **शास्त्रवेदिना** इति शास्त्रमत्र श्रुतिस्मृत्यात्मकं [12]विविक्तम्। अन्यथा शैवशास्त्रार्थवेदित्वेनाचार्यस्य व्यभिचाराभावाद्विशेषणानुपपत्तिः। प्रोक्तं च श्रीमत्**स्वायंभुवे** —

[13]"धर्मसाधनसंवित्तिराम्नायादेव जायते।
तन्मूलत्वात्स्मृतेश्चैव[14] ताभ्यामेवापरस्य तु॥" इति।

ततश्च श्रुतिस्मृतिसिद्धा एवैतेऽष्टाचत्वारिंशत्संस्काराः केवलमिहान्यैरत्र मन्त्रैः कर्तव्या ब्राह्मणजात्यन्तरप्रदकर्मान्तिरभोगसिद्धयर्थं शिष्टस्येत्युक्तं भवति। अत एव ब्राह्मणस्यात्राचार्यकेऽधिकार इत्युक्तमन्यस्य वैदिककर्मण्यनधिकारात्। अत एव च शूद्रादीनामप्येते कर्तव्या एव। तेषामपि हि ब्राह्मणजात्यन्तरप्रदस्य कर्मणः [15]संकरजातिप्रद[16]स्येवोक्तिसंभवादिति। न तु शूद्रादेरिवात्र शिष्ट[स्य] प्रकृतशूद्रादिजातिशुद्धितो[17]द्विजात्यापादनाद्ब्राह्मणैः साम्यमिति कुलाचार्यैरिव [18]मन्तव्यमसंभवात्। अत्र ह्यारब्धकार्यस्य [19]कर्मणोऽसद्योनिर्वाण[20]दीक्षयानयानुपक्षय इति श्रुतत्वात्तस्मिञ्शरीरे मन्त्रा [न] [21]व्याप्रियन्त [22]इत्युक्तम्। श्रीमत्**किरणे**ऽपि — [23]"येनेदं [24]तद्धि भोगतः।" इति। ततश्च [25]प्रकृष्टतर[26]शरीरान्तरस्थानान्तरापादनेनाप्येतच्छरीरगतस्य कारणत्व [स्य] खञ्जनादेरिव काश्मीरत्वदाक्षिणात्यत्वादेरिव वा शूद्रत्वादिजातेरपि जात्यन्तरापादनेनानुपक्षयः।

---

[1] वरुणा — ओ, क, ख, घ, ङ, छ, ज.
[2] मे साम० — ङ.
[3] ०संस्थां तु — ख, घ, छ, ज.
[4] निर्वर्त्य — ओ, क, ख, घ, छ, ज; निर्वर्त — ङ; निवृत्त्या — च.
[5] सोमः शिशोः सम्यक् — ऊ, ॠ; सोमं शिवैः सम्यक् — ओ, क; सोमशिशोः सम्यक् — — ख, घ, छ, ज; सोमं शिष्ये तु सम्यक्–ङ.
[6] कल्पनीयं घृतेन तु — ऊ, ॠ, ओ, क, घ, छ, ज; कल्पनीया घृतेन वै — ख; कल्पनीयघृतेन तु — ङ.
[7] शतं — ख, घ, छ, ज.
[8] ०संमानो — ऊ, ॠ; ०संपातं — ओ, क, ङ; ०संपात० — ख, घ, छ, ज.
[9] देय आदरात् — ऊ, ॠ.
[10] पूर्ण पातैः — ओ; पूर्ण वातैः — क.
[11] प्रतापयेत् — ख, घ; प्रदापयेत् — ङ.
[12] विविक्तम् = पूतम् "विविक्तौ पूतविजनौ" अमरकोशे २४९९.
[13] स्वायंभुवे ३३.१९.
[14] ०त्स्मृतश्चैव — ऊ, ॠ.
[15] संस्कारजाति० — ॠ.
[16] ०स्येवोक्तसं० — ऊ, ॠ.
[17] द्विजात्या ब्राह्मणैः — ॠ.
[18] मन्तव्यसं० — ऊ, ॠ.
[19] कर्मणो पद्यो० — ऊ, ॠ.
[20] ०दीक्षायानयानुपक्षया — ऊ; ०दीक्षाया इति श्रुतत्वा० — ॠ.
[21] व्यापार्यन्त — ऊ, ॠ.
[22] मतङ्ग० विद्या० ७.६०उ०–६२ वृत्तौ।
[23] नेपोलीमुद्रिते किरणे ६.१९उ०.
[24] तद्विभागतः — ऊ, ॠ.
[25] प्रकृतशरीरान्तरास्थाना० — ॠ.
[26] ०शरीरान्तरास्थाना० — ऊ.

शरीरान्तरभोग्य[1]स्यैवोक्तकर्मणोऽत्र क्षपितत्वान्नैतच्छरीरभोग्यस्यापीत्यसंकरः[2] कौलेष्विवात्रेति चर्या-पादे वक्ष्यामः। प्रोक्तं चान्यत्र[3] —

"इति वर्णाश्रमाचारान्मनसापि न लङ्घयेत् ।
यो यस्मिन्नाश्रमे [4]तिष्ठन्दीक्षितः शिवशासने ॥
स तस्मिन्नेव संतिष्ठेच्छिवधर्मं च पालयेत् ।" इति ।

तत्र गर्भाधानपुंसवनसीमन्तकरणजातकर्मनामकर्मलक्षणाः **पञ्च संस्काराः** क्रमेण **विद्याङ्गैः** पञ्चभिः पञ्चाहुतिहोमेन कर्तव्याः। गायत्र्याहुतिभिस्तु प्रत्येकं पञ्चपञ्चभिरन्नप्राशनादयः पञ्च। यदुक्तं **श्रीपौष्करे**[5] —

"अन्नप्राशनं [6]चौडमेव च ॥
कर्णवेधोपनयनं [व्रतानि] च यथाविधि।" इति

व्रतान्तरान्तर्भावेन। यदुक्तं **यज्ञसूत्रे**[7] —

"त्रैविद्यकं चतुर्होत्रं गोदानं स्नानमित्यपि ।
वेदव्रतानि चत्वारि" इति।

ततो **विवाहः** सान्तर्विवाहो महायज्ञपञ्चकसहितश्च **ब्रह्मभिः**। यदुक्तं श्रीमत्**पौष्करे**[8] —

"वामदेवेन संस्कारः कार्यो वैवाहिकस्ततः ।
पूर्णाहुतिस्तु तेनैव महायज्ञाश्च[9] पञ्च वै ॥" इति ।

तेऽपि च पितृतर्पणादयः। यदुक्तं **यज्ञसूत्रे**[10] —

"पितृदेवमनुष्याणां भूतानां तर्पणं मुदा ।
ब्रह्मणोऽध्ययनं चेति महायज्ञास्तु[11] पञ्च वै ॥" इति ।

ततः **पाकयज्ञाः** सप्त पलाशसमित्सप्तकेन गायत्र्या। ते चाष्टकादयः। यदुक्तं तत्रैव —

"अष्टका पार्वणं श्राद्धं श्रावण्याग्रयणी[12] तथा ।
चैत्रं [13]चाश्वयुजी चेति पाकयज्ञास्तु सप्त वै ॥" इति ।

तथा तिलैः सप्ताग्न्याधेयादयो **हविर्यज्ञाः**। यदुक्तं तत्रैव —

"आग्न्याधेयं [14]चाग्निहोत्रं दर्शपौर्णमासस्तथा ।
[14]चातुर्मा[15]स्याग्रयणेष्टि[16]र्निरूढपशुबन्धनम् ॥
सौत्रामणी च सप्तैते [17]हविर्यज्ञाः प्रकीर्तिताः ॥" इति ।

---

[1] ०स्यैवोक्तं कर्मणेऽत्र — ऊ, ऋ.
[2] ०पीत्संकराः — ऋ.
[3] इदमर्धत्रयं मृगेन्द्रे विद्यापादे १.१. दीपिकायां 'श्रीमद्भार्गवे' इति निर्दिश्योद्धृतम्।
[4] तिष्ठन्प्राप्तो दीक्षां शिवात्मिकाम् — मृ० वृ० दीपिकापाठः।
[5] आकरो न लभ्यते।
[6] चोडमेव — ऊ, चूडमेव — ऋ.
[7] ग्रन्थोऽयं न लभ्यते।
[8] आकरो न लभ्यते।
[9] यज्ञश्च — ऊ, ऋ.
[10] ग्रन्थोऽयं न लभ्यते।
[11] ०यज्ञस्तु — ऊ, ऋ.
[12] ०ण्याग्रायणी — ऋ.
[13] वाशुयजी — ऊ; वाश्वयुजे — ऋ.
[14] चतुर्मा० — ऊ, ऋ.
[15] ०स्याग्रायणेष्टि० — ऋ.
[16] ०र्निरूढः पशु० — ऊ, ऋ.
[17] हविर्यज्ञः — ऊ.

**ततः** [1]**गायत्र्या** संपातहोमशतसंस्कारपरिकल्पिताज्यात्मकसोमपात[2]युक्त**चरुणा** सप्ताग्निष्टोमाद्याः **सोमसंस्थाः**। यदुक्तं तत्रैव —

"अग्नि[3]ष्टोमात्यग्निष्टोमावुक्थ्यश्चाप्यथ षोडशी ।
अतिरात्रवाजपेया[4]वप्तोर्यामश्च वै तथा ॥
सप्तैताः सोमसंस्थास्तु" इति ।

[5]एवमेभ्योऽष्टात्रिंशत्संस्कारेभ्यः [6]शिष्टस्य कर्मकलापस्य शतसंवत्सरसहस्रसंवत्सरात्मनः संस्कारस्य। यदुक्तं श्रीमत्**पौष्करे**[7] —

"सहस्रवत्सरान्तस्तु चत्वारिंशद्यथाक्रमम् ।" इति ।

आत्मविषयस्य च दयादेः संस्काराष्टकस्य संपत्त्यर्थमघोरेणाहुतिशतं दत्त्वा, शिवेन [8]पूर्णाहुतिं दद्यात्।

यदुक्तं **यज्ञसूत्रे**[9] —

दया क्षान्तिश्चानसूया [10]शौचं मङ्गल्यमस्पृहा ।
अकार्पण्यमनालस्यं संस्काराष्टकमात्मनि ॥ इति ।

त एतेऽष्टाचत्वारिंशद्वैदिकाः संस्काराः ज्ञात्वानुष्ठेयाः। यदुक्तम्[11] — "ज्ञात्वा चानुष्ठानम्" इति।

तत्त्वदीक्षायां पृथिवीतत्त्वे संयोजनादिभ्यो भेदेनाभेदेन चेत्थं गर्भाधानादयः प्राप्ता इति युगपत्करणप्राप्तिसामर्थ्यादनेकभुवनजातिप्रयुक्तेनाभेदेन [12]कर्तव्यत्वे एकब्राह्मणजातिप्रयुक्तेन भेदेनेति केचित्। तदयुक्तम्। जातिभेदेनैव तत्र प्राप्तेर्विरोधाभावात्। तत्रापि हि जातिभेदेन भोगः संपाद्यत इति भेदेनैव कर्तव्यः। एवं [13]भूलोके षष्ठ्या अपि जातेर्मनुष्यगतायास्तदवान्तरजातिभेदेन शुद्धिरुक्ता[14]॥

[15]**शेषोऽध्वा** [16]**पूर्ववच्छोध्यो** [17]**विद्यापादोक्तवर्त्मना ॥३१॥**

भूलोके तत्पर[18]स्तु **विद्यापादोक्तः** [19]भुवर्लोकादिः सर्वः **अध्वा पूर्ववद्** इति कालाग्निभुवनाद्युक्तविधिना **शोध्यः**। न तत्र भेदेन संयोजनादिभ्यो गर्भाधानादयः कार्या इत्यर्थः ॥३१॥

---

[1] गायत्री० — ऊ, ऋ.
[2] ०युक्ताः चरुणा — ऊ, ऋ.
[3] ०ष्टोमान्याग्नि० — ऊ, ऋ.
[4] ०वप्तुर्यामः — ऊ; ०वाप्तुर्यामाश्चैव — ऋ.
[5] एवमन्येभ्यो — ऊ, ऋ.
[6] शिष्यस्य — ऊ, ऋ.
[7] आकरो न लभ्यते।
[8] पूर्णाहुतिशतं — ऊ; पूर्णाहुतिं शतं — ऋ.
[9] ग्रन्थोऽयं न लभ्यते।
[10] शौचमङ्गल्य० — ऊ, ऋ.
[11] आकरो न लभ्यते।
[12] कर्तव्यत्वे क ब्राह्मण० — ऊ; कर्तव्यतेक ब्राह्मण० — ऋ.
[13] भूर्लोके — ऋ.
[14] ०रुक्ताः — ऊ, ऋ.
[15] शेषाध्वा — ओ, क, ख, घ, ङ, छ, ज; शेषोऽर्थः — च.
[16] पूर्वशोध्यन्ति — ओ, क.
[17] पादोक्तेनैव वर्त्मना — ओ, क; विद्युपादोक्त० — छ, ज.
[18] ०तरस्तु — ऊ, ऋ.
[19] भुवो लोकादि — ऊ; भुवलोकादि — ऋ.

किं सर्व एवाध्वा तथा [1]शोध्यः। नेत्युच्यते —

**मायान्तं[2] भुवनेशानां[3] पूर्ववत्परि[4]कल्पयेत् ।**

भुवनेशानां पूर्वविधिना जनने यः प्रयोग उक्तः, तस्य मायातत्त्वम् [5]**अन्तं परिकल्पयेत्**। भुवनदीक्षायामपि तदात्मनि संयोजनस्य वक्ष्यमाणत्वाद् भुवनाभावे जननाहुतेरस्याः प्रयोगो न कर्तव्य इत्यर्थः। अत एव तत्संयोजनान्यथानुपपत्त्या [6]कपालेशानां [7]तद्भुवने [8]कलातत्त्वे वा पाशच्छेदं पूर्ववत्कृत्वा तत उद्धृतानां मायायामसंयोजितानां चास्थान एव त्रिपर्व[9]पदार्थबन्धावशिष्टस्य[10] सूक्ष्मदेहलक्षणस्य तत्त्वपर्वणो दीक्षाक्रमेणैवोर्ध्वस्रोतसा सर्वात्मना विच्छित्तिरर्थ[11]सिद्धैवेत्युक्तं [12]**विद्यापादे**। प्रोक्तं च श्रीमद्**रौरवे**[13] —

"मण्डलाधिपतिभ्यो यस्तत्त्वमार्गः प्रतिष्ठितः" इति ।

मण्डलाधिपतिभ्य ऊर्ध्वमधश्च मायायास्तत्त्वमार्गो यः प्रतिष्ठितः, स दीक्षायामूर्ध्वस्रोतसा सर्वात्मना [14]विच्छेत्तव्य इति। तदानीं च प्रलयकेवलिनस्ते भवन्तीति।

यद्येवं सूक्ष्मदेहस्याभावाच्छिष्यात्मनां तदूर्ध्वमुद्धारसंयोजनयोरनुपपत्तिः। न। मायीयस्यासंभवेऽपि शुद्धविद्यात्मनः संभवात्। सोऽपि हि प्रतिपुरुषं कार्यात्मना भेदेनैव व्यवस्थित इत्युक्तं **विद्यापादे**[15]। श्रीमत्कालोत्तरेऽपि[16] —

"नादाख्यं यत्परं [17]बीजं सर्वभूतेष्ववस्थितम्"।

इत्यदोषः। ततः परंतु विद्याभुवनेषु विद्याविग्रहराज्ञीविद्याङ्गैर्जननम्। अधिकारतत्त्वभुवनेषु त्वष्टसु [18]शिखण्ड्याद्यनन्तान्तैः। नवमे तु ब्रह्मभिः। भोगतत्त्वभुवनेषु तु निवृत्याद्येष क्रमतः सद्यो[19]जातादिनैकैकेनेत्यविरोधः॥

यद्येवं मायायां भोगभोजनाहुतिजातस्याप्यसंभव इति। तदर्थमेतत् —

**गव्येन हविषा [20]सर्वं कार्यमेकादशात्मना[21] ॥३२॥**

---

[1] शोध्याः — ऋ.
[2] मायान्त० — ओ, क, च.
[3] ०शानं — क.
[4] ०कल्पितम् — ख; ०कल्पनम् — घ, च, छ, ज.
[5] अन्तः — ऊ, ऋ.
[6] कापाले० — ऊ.
[7] 'तद्भुवने' इत्यारभ्य 'योजितानां' इत्यन्तं नास्ति — ऋ.
[8] कालतत्त्वे — ऊ,
[9] ०पवर्थि० — ऋ.
[10] ०शिष्यस्य — ऊ, ऋ.
[11] ०सिद्धचै० — ऊ, ऋ.
[12] मतङ्ग० विद्या २.१,२पू० वृत्तौ 'निवृत्तये' इत्यस्य विवरणे; ८.९३ वृत्तौ च।
[13] मुद्रितरौरवे विद्यापादे, ४, २२ पू०। 'मण्डलाधिपतिभ्यो यस्तत्त्वमार्गः प्रतिष्ठितः' इतीदमर्धं तत्त्वसंग्रहे ३० तमश्लोकवृत्तौ 'रौरवे' इति निर्दिश्योद्धृतम्।
[14] विच्छेतव्या इति — ऋ.
[15] मतङ्ग० विद्या० ३.२३उ०–३० वृत्तौ; ४.५२-५३ पू० वृत्तौ च।
[16] सार्धत्रि० १.५ पू०; द्विशतिका० १.४ उ०
[17] तत्त्वं — ऊ, ऋ.
[18] शिखण्डचाद्यनन्तै० — ऊ, ऋ.
[19] ०जातादिरेकैके० — ऋ.
[20] साध्यं — ओ, क; सार्धं — ख, घ, ङ, छ, ज.
[21] ०दशात्मकम् — ख; ०दशात्मनाम् — घ, छ, ज.

शिवैकादशिकया तु यत्कार्यं प्रागुक्तं तत् **सर्वम्** अत्रापि दीक्षात्मकं **कार्यम्** एव। न तु भुवनशुद्धचैव कलादितत्त्वानामिवात्र तस्याः शुद्धिरित्यर्थः। अत एव तत्र स्वापावस्थायमिव भोग इति गुरवः ॥३२॥

किंच —

**शुद्धेऽध्वनि [1]प्रकर्तव्यं [2]शक्त्या पञ्चाहुतिक्रमात्[3] ।**
**[4]यावत्सादाशिवं [5]तावद्भुवनं साधकोत्तमः ॥३३॥**

शुद्धाध्वसंयोजनादिनिमित्तं[6] [7]**शक्त्या** इति गायत्र्या आहुतिपञ्चकेन कर्तव्यम्। किमित्याकाङ्क्षायां शुद्धाध्वसंयोजनश्रुतिसामर्थ्यादत्राशुद्धविशोधनमिति प्रतीयते। [8]तच्चात्रास्थान एव मलशुद्धिं प्राक् कृत्वा, पश्चाच्छुद्धाध्वसंयोजनं कर्तव्यमित्यर्थः। यदुक्तं श्रीमद्**रौरवे**[9] —

"प्रथमा त्वाहुतिर्या तु तया पापविशोधनम् ।" इति ।

पाप[10]शब्देनेवाशुद्धिशब्देनापि मलः प्रसिद्ध एव। यदुक्तं श्री**स्वायम्भुवे**[11] —

"यद्यशुद्धिर्न पुंसोऽस्ति [12]सक्तिर्भोगेषु किं कृता" इति ।

तच्चेतःप्रभृति **यावत्** सदाशिवभुवनं **तावत्**, प्रतिस्थानं बन्धान्तरविच्छेदाद् भेदेनैव[13] कर्तव्यम्। परतस्तु [14]प्राग्वद्धकारत्रयेणैव बन्धान्तरविच्छेदान्तर्भाविनेति भेदः। **साधकोत्तमः** इति [15]वक्ष्यमाणेन स मुच्यते ॥३३॥

न केवलमेतावदेव सदाशिवभुवने कर्तव्यम्। यावत् —

**सिद्धचर्थमिदमत्रापि[16] [17]वक्तव्यं कारणं परम् ।**
**भगवन्सर्वसिद्धीनां [18]त्वत्प्रसादाद् भवत्वयम्[19] ॥३४॥**
**[20]भोगभाङ्मन्त्रसामर्थ्यादनिवारितशासनः[21] ।**

**अपिशब्दो** भिन्नक्रमः। **इदमप्यत्र वक्तव्यम्।** **कारणं** परमं सदाशिवभट्टारकात्मकं [ प्रति ]

---

[1] प्रकर्तव्या — ओ, क, ख, घ, ङ, छ, ज.
[2] शुक्त्या — च.
[3] ०हुतिः क्रमात् — ओ.
[4] यावत्सदा० — ऊ, ॠ, क, ख, घ, ङ; यावत् सदाशिवां — छ, ज.
[5] तत्त्वं — ओ, क, ख, घ, ङ, छ, ज; तावद् भवनं — च.
[6] ०दि विनिमित्तं — ऊ, ॠ.
[7] शक्येति — ऊ, ॠ.
[8] तच्चात्र स्थान — ॠ.
[9] रौरवे मुद्रितभागे न लभ्यते।
[10] ०शुद्धनेवाशुद्धि० — ॠ.
[11] स्वायंभुवे — ३३.४पू०.
[12] शक्ति० — ऊ, ॠ.
[13] ०दाद्भेदेन — ॠ.
[14] अत्रैव पटले २१, २२ पू० वृत्तौ।; प्राग्वद्वकार० — ऊ; प्राग्वकार० — ॠ.
[15] मतङ्ग० क्रिया० ७.३५उ०—३७ वृत्तौ ॥
[16] सिध्यत्रापितमत्रापि — ओ, क, ङ.
[17] कर्तव्यं — ऊ, ॠ, ओ, क, ङ.
[18] त्वत्प्रसादो . . . — ख; त्वत्प्रसादोत्थितस्त्वयम् — घ, छ, ज.
[19] ०द्भवस्त्वयम् — ओ, क, ङ.
[20] भोगवान्मन्त्र० — च.
[21] शासनम् — छ, ज.

यथा — "अयं साधको भुवनसिद्धीनामपि [1]भूलोके एवाणिमादिसिद्धीनां **भोक्ता भवतु**" इति। सेयं साधकानामुभयमार्गगैकमार्गगात्र दीक्षोक्ता। श्रीमत्**सूक्ष्मस्वायम्भुवे** त्वेकमार्गगैव। यदुक्तम् —

[2]यो यत्राभिलषेद्भोगान्स तत्रैव नियोजितः।
सिद्धिभाङ्मन्त्रसामर्थ्यात्" इति।

मुमुक्षोस्तु —

**मुक्त्यं तदूर्ध्वमध्वानं पूर्णाहुतिचतुष्टयात् ॥३५॥**
**निवृत्त्यादौ ततः [3]शक्त्या शान्तौ शान्तेन चेतसा[4] ।**

मुक्त्यर्थं ततोऽपि **ऊर्ध्वमध्वानं** विशोधयेत्। कथमिति — **निवृत्त्यादौ** [5]भुवने चतुष्टयेन च, **ततः शान्तौ** इति शान्त्यतीते पञ्चमे बिन्दुभुवने [6]**शक्त्या** आहुतिः पञ्चमेत्यर्थः॥

परतस्तु—

**[7]शिवे पशुमथात्मानं [8]शक्तिगर्भगतं सुधीः[9] ॥३६॥**
**[10]निस्तरङ्गौजसा [11]विद्धं [12]निक्षेपोत्क्षेपकर्मणी ।**
**छित्वा [13]पाशाञ्शिवास्त्रेण वौषडन्तेन योजयेत् ॥३७॥**

**निक्षेपोत्क्षेप**निमित्तं [14]ये पाशाः, यश्च **पशुः** मलः, तमपि **वौषडन्तेन**" [15]**शिवास्त्रेण शक्तिगर्भाद् गतम्** उत्तीर्णं, ततो बिन्दुपथादुद्धृत्य [16]दीक्षया **आत्मानं निस्तरङ्गौजसा** सर्वज्ञकर्तृत्वलक्षणेन **शिवे योजयेत्** तत्र च शुद्धस्यापि सूक्ष्मदेहस्यासंभवात् तद्व्यापकात्मस्वरूपभावनमेवोद्धारसंयोजने [17]इत्यविरोधः। ततस्तत्र सर्व[ज्ञत्वसर्व]कर्तृत्वाभिव्यक्तिलक्षणजन्मपूर्वं दीक्षां कुर्यादित्युक्तं [18]प्रागेव।

[19]ततस्तान्कृतदीक्षान्मण्डलस्थस्य भगवतो निवेद्य, [ [20]प्राक्]प्रकरणोक्तनयेन विसर्जनं कृत्वा,

---

[1] भूर्लोक — ऋ.
[2] स्वायंभुवे ३९.२.
[3] पश्चाच्छक्त्या शान्तेन — ओ, क, ख, घ, ङ, छ, ज; शक्त्या कुर्याच्छान्तेन — च.
[4] तेजसा — ओ, क, ङ, छ, ज.
[5] भुवनचतुष्टयेन — ऊ, ऋ.
[6] शक्त्याहुतये पञ्चमे० — ऊ; शक्त्याहुतिपञ्चमे० — ऋ.
[7] शिवं पशुं तथात्मानं — ओ, क, घ, ङ, छ, ज; शिवं पश्यन् तथात्मानं — ख; शिवं पङ्गुं तथात्मानं — च.
[8] शक्तिर्गर्भ० — ओ, क, ख, घ.
[9] ०सुधंसुधी — ङ.
[10] विस्तरङ्गोजसा — ओ; विस्तराङ्गोजसा—क; निस्तरम्भोजसा — ख, घ, छ, ज; विस्तरम्भोजसा — ङ; निस्तरङ्गो जपा० — च.
[11] विद्धः — ओ, क, ख, घ, विद्ध० — च; ०विध्यो — छ, ज.
[12] योक्तव्यो क्षेपवर्मण — ओ, क, ङ; योक्तव्यं क्षेमवर्मणा — ख; योक्तव्य क्षेमकर्मणा — घ; ०मृत्कृष्योत्क्षेपकर्मणा – च; योक्तव्यः क्षेमकर्मणा — छ, ज.
[13] पाशं शिवा० — ओ, क; पशां — छ, ज.
[14] यं पाशा यश्च — ऊ, ऋ.
[15] शिवास्त्रेणश्छिशक्ति० — ऊ, ऋ.
[16] दीक्षात्मानं — ऊ, ऋ.
[17] इति विरोधः — ऋ.
[18] मतङ्ग० क्रिया० ७.२१, २२पू० वृत्तौ।
[19] ततस्तत्कृत० — ऊ, ऋ.
[20] मतङ्ग० क्रिया० ३.९२–१०० पू० वृत्तौ; ५. ११७–१२८ पू० वृत्तौ च।

कलशस्थापनं निर्वर्त्य, निर्माल्याप[1]नयनपूर्वं [2]वक्ष्यमाणवच्चण्डेश्वरयागं निर्वर्तयेदिति दीक्षा विधिः ॥३६–३७॥

अथ ये दीक्षायां स्वातन्त्र्येणैव स्थानविशेषव्याप्तिमनालोच्य पाशानां विमोहाद्विच्छेदं [3]विदधति। ये च सदाशिवपद एव ज्ञत्वकर्तृत्वयोरभिव्यक्तिं कथयन्तस्तदूर्ध्वविच्छेदं प्रतिपन्नाः। यदाहुः[4] —

"ज्ञानक्रियास्वरूपेण प्रवृत्तायास्तु ये शिवे।
सदाशिवत्वं जगदुर्भोगाह्वं तत्त्ववेदिनः॥" इति।

तान्प्रत्युच्यते[5] —

**[6]अनेन [7]वर्त्मना [8]यातुर्मन्त्रशक्तिबलेरणात्[9]।**
**[10]यो यत्रावयवो [11]हेतुर्निरोधस्य महामुने॥३८॥**
**[12]तत्तत्रैव लयं [13]कुर्याच्छेषं स्यात्सार[14]मद्भुतम्।**
**अविनाश्यचलं[15] तेजः[16] [17]सर्वगं स्वोचितं बलम्[18]॥**
**[19]अध्वयन्त्रविनिष्क्रान्तं [20]तिष्ठत्येकं निराकुलम्॥३९॥**

मन्त्रशक्तिबलप्रेरणावशाद् **अनेन** भुवनात्मना, तदुपलक्षितेन वा [21]तत्त्वरूपेण **वर्त्मना** [22]यो याता [23]दीक्ष्यः पुरुषः, तस्य **यो यत्र** स्थाने भुवनात्मके[24] तत्त्वरूपे वा बन्धाय वा [25]शिशोः **निरोधस्य हेतुः, तत्तत्रैव लयं कुर्यात्** नान्यत्र। संभवाभावेन तस्य तत्र विच्छेदानुपपत्तिरिति भावः। एतच्च दर्शितमत्रैव [26]पाशच्छेदे इति। यत्तु बन्धाध्व[27]विच्छेदादवशिष्टं दृक्क्रियात्मकं वस्तु भवेत्

---

[1] ०नयनं — ऊ, ऋ.
[2] मतङ्ग० क्रिया० ९. ४६–५४ वृत्तौ।
[3] विदधाति — ऊ.
[4] आकरो न लभ्यते।
[5] ०त्युच्यन्ते — ऊ, ऋ.
[6] अनेनैवात्मना — ऋ; पूतेन वर्मणा — ओ, क, ङ; पूतेन वर्त्मना — ख, घ, छ, ज.
[7] वर्मणा — च.
[8] यातु मन्त्र० — ऊ, ऋ; सा तु मन्त्र० — ओ, क, ख, घ, छ, ज; सा तु मन्त्रं — ङ; जातु मन्त्र० — च.
[9] ०बलैरणात् — क.
[10] यद्यत्रावयं — ओ; यद्यत्रावयवं — क, ख, छ, ज; यदत्राववधं — ङ; यद्यत्रावस्थितं — च.
[11] हेतुर्निबोधस्य — ऊ, ऋ; होतुं विरोधस्य — ओ, ङ; होतुं विराधस्य — क; होतुं नि० — ख, घ, ज; हेतुनिरोधस्य — च; होतुर्निरो० — छ.
[12] तत्त्रेव — ङ.
[13] याति शेषवत्सार० — ओ, क, ख, घ, ङ, च, छ, ज.
[14] ०मश्नुतः — ओ, क.
[15] ०नाशचलं — ऋ; ०नाश्यबलं — ओ, ङ; ०नाशाचलं — च.
[16] तेन — ख.
[17] सर्वतश्चोदितं — ओ, क, ङ; सर्वतस्वोदितं — ख, घ, छ, ज.
[18] फलम् — ऊ, ऋ.
[19] अध्वमन्त्र० — ओ, क, ख, घ, ङ, च, छ, ज.
[20] तिष्ठत्येकां — छ, ज.
[21] तनुरूपेण — ऋ.
[22] यो ता दीक्षाः — ऋ.
[23] दीक्षः — ऊ.
[24] ०नात्मकं — ऊ, ऋ.
[25] शिशोन्निरो० — ऊ; शिशो निरो० — ऋ.
[26] मतङ्ग० क्रिया० ७.२१, २२पू० वृत्तौ।
[27] ०विच्छेदबन्धादव० — ऊ, ऋ.

तत् **तिष्ठति** एव। न तस्य [1]विच्छेदः शक्यः कर्तुमित्युक्तं **विद्यापादे** [2]पतिपदार्थप्रसङ्गेनेति [3]नात्रान्यथाभावो मन्तव्यः ॥३८–३९॥

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य चोपक्रमाय श्लोकद्वयम् —

**दीक्षा[4]नलप्लुष्ट[5]मलस्य [6]पुंसः**
**[7]स्वाक्यं बलं व्यक्तिमुपैति योगात्।**
**[8]शक्त्या [9]विभोः [10]शुद्धित[11]हृत्प्रवेशाद्**
**नान्येन पुंसो विनिवृत्तिमेति[12] ॥४०॥**
**कर्माशया[13]पूरितभोग[14]योगा —**
**[15]दन्योऽप्युपायोऽध्वनि [16]शुद्धयोगात्।**
**[17]तत्त्वावलिं [18]प्राप्य शिशोर्वियोगः**
**[19]संक्षेपतोऽस्याप्यधुनाभिधास्ये ॥४१॥**

दीक्षाग्निना दग्धमलो यः **पुमान्**, तस्यात्मीयमेव ज्ञानक्रियात्मकं **बलं व्यक्तिम्** एति। न तु परमेश्वरात् संक्रमते। नाप्यपूर्वमेव चोत्पद्यत इत्युक्तम्। तच्च **शक्त्या विभोः** परमेश्वरस्य संबन्धिन्या दीक्षाख्यया **योगः**, ततो हेतोर्व्यक्तिमेति। यतः **शुद्धितः** सर्वात्मना समालिङ्गितो ज्ञानक्रिया[20]सद्भावात्मकहृदयप्रवेशो येन, तथाभूतोऽसौ योगः, तेन तत एव व्यक्तिमेति, [21]**नान्येन** ज्ञानादिना। ततो न तेन ज्ञानादिना **पुंसो विनिवृत्तिमेति** प्रकृतत्वान्मलः। तस्य द्रव्यत्वेन पटलादेरिव ज्ञाननिवृत्त्यसंभवात्[22]। [23]न च तन्निवृत्त्या विना तद् व्यक्तिमेतीति [24]विद्यापादप्रति-

---

[1] विच्छेदशक्त्यः — ऊ; विच्छेदशक्त्याः — ऋ
[2] प्रतिपदार्थ० — ऊ, ऋ; मतङ्ग० विद्या० ४.५६-५९ वृत्तौ।
[3] नान्यत्र वा भावो — ऋ.
[4] ०मलप्लुष्ट० — ऋ; ०नलप्यष्टमथास्य — क; ०नलाप्लुष्ट० — घ, छ; ०नलं प्लुष्ट० — ज.
[5] ०मनस्य जन्तो स्वाक्यं बलव्यक्ति० — ङ.
[6] जन्तोः — 'ऊ' पाठान्तरम्, ऋ, ओ, क, ख, घ, च, छ, ज.
[7] साक्यं — ओ; साकं — क; स्वात्यं —ज.
[8] 'च' मातृकायां ४०तमश्लोकस्योत्तरार्धं ४१तमश्लोकस्य पूर्वार्धं च न दृश्येते।
[9] विभो — ओ.
[10] चुम्बितं — ओ, क, ख, घ, ङ, छ, ज.
[11] हृत्प्रदेशं — ऊ, ख, घ, छ, ज; हृत्प्रदेशो — ऋ; हृत्प्रदेशे — ओ, क, ङ. अत्र वृत्तिमनुसृत्य 'हृत्प्रवेशाद्' इति पाठः साधितः।
[12] ०वृत्तिरेति — ख, घ; ०वृत्तिरेत — छ, ज.
[13] पूते भोग० — ख, घ.
[14] ०लाभा० — ओ, क; ०लोभा० — ख, घ, ङ, छ, ज.
[15] ०दन्येऽप्युपाये — ओ, क.
[16] शुद्धि० — घ, छ, ज.
[17] तत्त्वावलीं — ख, घ; तत्त्वावलि० — च.
[18] प्राप्तशिशोर्वियोगात् — ओ, क, ख, घ, ङ, च, छ, ज.
[19] संक्षेपतः सोऽप्यधुना विधास्ये — ओ, क, ङ; संक्षेपतस्यप्यधुनाभि० — घ; संक्षेपतः सोऽप्यधुना ० — च; संक्षेपतस्याप्यधुनाभि० छ, ज.
[20] संभावात्मक० — ऋ.
[21] नान्येव — ऋ.
[22] ०निवृत्तिसंभावात् — ऋ.
[23] तेन द तन्निवृत्त्या — ऋ.
[24] मतङ्ग० विद्या० १.५, २०-२३पू० वृत्तौ; २६-६३ वृत्तौ च।

पादितोपपत्तिसहितस्य व्याख्यातस्यार्थस्योपसंहारः। अथ व्याख्येयोपक्रमः — **कर्माशयापूरितभोग-**[1]**योगाद्** इत्यादि। तत्र तावदुपायस्य स्वरूपोपक्रमः **तत्वावलिं प्राप्य शिशोर्वियोगः** इति। पूर्वं हि भुवनपङ्क्तिसंयोजनादि प्राप्य बन्धवियोगा[2]त्मक उपायः प्रोक्तः। यतः [3]शिष्टेन तु [4]तस्यैवोपायताप्रतिपादनाय हेतुद्वयमुच्यते। यतस्तत्रापि कर्मवासनापूरितस्य भोगस्य योगो विद्यते; **अध्वनि** चाशुद्धि[5]क्षपणपूर्वं **शुद्धयोगो** [6]वक्ष्यमाणप्रकरणे। ततो हेतोर्भुवनदीक्षातः **अन्यः** तत्त्वदीक्षात्मकः **उपायः** कथ्यत इत्यर्थः। न त्वन्यथाविधित्वेन [7]तत्पदद्वयं व्याख्येयम्। अस्याप्युपायस्य भोगभोजनाद्यात्मना [8]ततोऽनन्यत्वात्। अन्यत्वे वोपायत्वायोगादिति ॥४०–४१॥

इति श्रीभट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ
क्रियापादे भुवनदीक्षाप्रकरणं [ सप्तमं समाप्तम् ]॥

**सप्तमः पटलः।**

---

[1] 'योगाद् इत्यारभ्य 'शिशोर्वि' इत्यन्तं नास्ति — ऋ.

[2] ०त्मकः प्रास उपायः — ऊ; ०त्मका प्रासूतपायः — ऋ.

[3] शिष्येण — ऊ, ऋ.

[4] तस्यै पायता — ऊ; तस्यैव पायता — ऋ.

[5] ०पक्षणपूर्वं — ऋ.

[6] अत्रैव अष्टमप्रकरणे.

[7] तत्परमीद्वयं — ऊ, ऋ.

[8] ततोऽनन्यदन्यत्वे — ऋ.

## अष्टमः पटलः

## तत्त्वदीक्षाप्रकरणम्

**अथ संक्षेपतो वक्ष्ये शिष्याणां भावितात्मनाम् ।**
**[1]निःसङ्गानां दरिद्राणां विधानमिदमुत्तमम् ॥१॥**

**अथ** इति व्याख्येयत्वेनोपक्रान्तस्योपायान्त[2]रात्मनस्तत्त्वदीक्षाभिधानस्य वक्तव्यतयाधिकारः। तच्च **विधानं** संक्षिप्तं पूर्वापेक्षया। तद्धि भुवनानां बहुत्वाद्विस्तृतमेव। यच्चोभयसंबन्ध्यपि[3] **दरिद्राणां विधानं** तदपि वक्ष्यते। तथा **भावितात्मनां** योगनिष्ठानां गुरूणां यद्विधानं तदपीति प्रतिज्ञार्थः ॥१॥

अत्र प्रतिज्ञातेभ्यः प्रथमं तावद्विधानमुच्यते —

**पृथिव्यादीनि तत्त्वानि [4]पञ्चभिर्ब्रह्मभिः क्रमात् ।**
**पञ्चाहुति[5]क्रमेणैव [6]श्लेषयित्वा तु होमयेत् ॥२॥**
**[7]यावच्छान्तपदं तावत्ततः [8]पूर्णां तु [9]पूर्ववत् ।**

अनेनात्र विद्यापादोक्तस्य तत्त्वानां सृष्टिक्रमस्य [10]बाधेन संहारक्रमं विधत्ते। पृथिवीतत्त्वादि-शान्तपदान्तं [11]दीक्षायां तत्त्वानि [12]नियोक्तव्यानीत्यर्थः। **शान्तपदं** चात्र लयतत्त्वमेवोच्यते। **पूर्वं** [13]"प्रध्वस्तावरणा [14]शान्ता" इत्यनेन शान्ततायास्तस्योक्तत्वात्। पञ्चाहुतिक्रमाद्धोमात्मकं रूप-मुच्यते। [15]प्रागुक्तस्य त्वङ्गैरप्येका[दशा]हुतिप्रयोगेणेति विशेषः। **श्लेषयित्वा** इति च पूर्वोक्त प्रकृतिप्राप्तस्य तत्त्वोपस्थापनादेरङ्गजातस्यानुवादः। तानि च तत्त्वानि भोगयोग्यानि कृत्वेमं भोगभोजनात्मकं प्रधानं दीक्षाख्यं होमं विदध्यादित्यर्थः। यत्र च तानि यथा सूक्ष्मस्थूलदेहात्मना भोगभोग्यानि भवन्ति तथा [16]दर्शितं भुवनदीक्षाप्रसङ्गेन। ततश्च प्रतितत्त्वं **ब्रह्मभिः**

---

[1] निस्वकानां — क, घ, छ, ज; निःसङ्गिनां — ङ.
[2] ०रात्मानास्वत्वदीक्षाप्रधानस्य — ऋ.
[3] ०संबन्ध्यापि — ऊ, ऋ.
[4] पतिभि० — ऊ, ऋ.
[5] ०प्रयोगेन — ओ, क, ङ; ०प्रमाणेन — ख, घ, छ, ज; ०प्रयोगेण० — च.
[6] शेषयित्वा — ओ, क, ङ; शोधयित्वा — ख, घ, छ, ज.
[7] यावच्छात्रपदं — च.
[8] पूर्णं — ओ; पूर्वां — ख.
[9] पूर्णवत् — ऋ; वैभवस् — ङ; होमयेत् — च.
[10] बोधने — ऊ; बोधेन — ऋ.
[11] दीक्षाया दीक्षायां — ऋ.
[12] योक्तव्या० — ऋ.
[13] मतङ्ग० विद्या० ३.२उ०.
[14] शान्तेत्येवनेन शान्ततया तस्यो० — ऋ.
[15] मतङ्ग ० क्रिया० ७.२० उ० वृत्तौ।
[16] मतङ्ग० क्रिया० ७.२१, २२ पू० वृत्तौ।

[1]पञ्चविंशत्याहुतिप्रयुक्तिरियं दीक्षा। [2]शान्ततत्त्वे तु तेषां [3]प्रगमाभावाच्छिवाहुतिरेवेति दर्शयति — ततः पूर्णां तु पूर्ववद् इति। यत्तु व्याख्यानं पञ्चैवात्र तत्त्वानि शोध्यानीति। तदयुक्तमेव, तथा [4]श्रुत्यभावात्। न च पञ्चभिः शुद्धैः सर्वाणि शुद्धानि भवन्ति। तदन्तर्भावेन वा सर्वं शुद्धमेव। [5]वस्तुतः किमर्थमश्रुततदन्तर्भावकल्पनयेति पूर्वैव व्याख्या युक्ता॥

अथ द्वितीयं विधानम् —

**समिद्भिर्वा [6]घृताभावात्"**

दरिद्राणा[7]मेतत्तत्त्वविषयं भुवनविषयं वा विधानमाज्याभावात् **समिद्भिः** कर्तव्यम्। **वा**-शब्दात् तिलादिभिर्वा। यदुक्तं दीक्षाप्रसङ्गे घृताभावात् "[8]"तिलैर्वान्यैः" इत्यादि, [9]तत्तेषामेव ज्ञेयम्। न त्वाढचादीनां, तेषामाज्येनैवेत्युक्तं भवति॥

अधुना तृतीयमपि विधानमुच्यते —

**"अथवा देशिकोत्तमः ॥३॥**
**योगपादोक्तविधिना [10]कृतन्यासः प्रसन्नधीः।**
**[11]स्नानोपवास[12]संपन्नं [13]शिष्यं मोक्षपरायणम्[14] ॥४॥**
**पूर्ववत्सकलीकृत्य [15]गुरुरात्मानमादरात्।**
**प्राणायामादिभिः [16]शुद्धो [17]हृद्व्योमकमले[18] स्थितम् ॥५॥**
**[19]इष्ट्वा देवं [20]परं [21]शान्तं शिष्य[22]मालोक्य यत्नतः।**
**पूर्ववद्ग्रहणं कृत्वा [23]स्वदेहेऽध्वप्रकल्पनम् ॥६॥**
**कुर्यादेकाग्रचित्तस्तु संयोजन[24]वियोजने।**

---

[1] पञ्चविंशाहुति० — ॠ.
[2] शान्ति० — ॠ.
[3] प्रागभावात् — ऊ, ॠ.
[4] श्रुतिभावात् — ॠ.
[5] वस्तु किमश्रुतं तदन्त० — ऊ, ॠ.
[6] कृताभावा० — घ, छ, ज.
[7] ०मेव तत्त्व० — ॠ.
[8] मतङ्ग० क्रिया० १.१३८उ०.
[9] तत्त्वमेषामेव — ॠ.
[10] कृतन्यासप्रसन्न० — ॠ; कृताभ्यासः — क, घ, ङ, च, ज; कृताभ्यासं — ख; कृताभ्यासुः — छ.
[11] स्नातोपवास० — छ, ज.
[12] ०संपन्नः — ख, घ, छ, ज; ०संपन्नशिष्य०—ङ.
[13] शिष्यो — ख, घ, छ, ज.
[14] ०परायणः — ख, घ, ङ.
[15] गुरुं नात्मान० — च.
[16] शुद्धैः — ओ, क, ख, घ, छ, ज; शुद्धे — ङ; शुद्धं — च.
[17] भ्राम्योम्म कलशै — ख; भ्राम्योम कलशै — घ, छ, ज.
[18] ०सकलं — ऊ, ॠ.
[19] यष्ट्वा — ओ, क, ख, घ, ङ, छ, ज.
[20] वरं — ओ, क.
[21] शान्ति — ॠ.
[22] ०मालोकयेत्ततः—ओ, क, ख, घ, ङ, च, छ, ज.
[23] स्वदेहा स्वप्रकल्पना — ओ, क; स्वदेहार्थं प्रकल्पयेत् — ख; स्वदेहार्थप्रकल्पनात् — घ, ज; स्वदेहाध्वप्रकल्पना — ङ; स्वदेवाध्वप्रकल्पनाम् — च; स्वदेहार्धप्रकल्पनात् — छ.
[24] ०वियोजनम् — ऊ; ०मयोजनम् — ॠ.

**कदम्बगोलका[1]कारं [2]शक्तिस्थं [3]शक्तिमत्स्थितम् ॥७॥**
**[4]विधृतं शक्तिसामर्थ्यात्पदात्पदमनाकुलम्[5] ।**
**समुद्धरेद् [6]गुरुः शिष्यं [7]शुद्धं तत्त्वाग्रनायकैः[8] ॥८॥**
**[9]पदे [10]समरसीभूतं ध्यात्वा योगबलेरणात् ।**
**ततः [11]स्वस्योचितं प्राप्य पदं [12]पदविनिर्गमात् ॥९॥**
**सर्वज्ञः सर्वगो भूत्वा [13]न भूयः [14]परिभूयते ।**

यो [15]**देशिकोत्तमः** भावितात्मा स **कृतन्यासः** [16]योगपादवक्ष्यमाणविधिना **पदात्पदं** [17]**समुद्धरेत् शिष्यम्** इति संबन्धः। ततश्च मनसैवासौ दीक्षां कुर्यात्। दीक्षाद्वयस्यापि प्रकारान्तरविधिः। अत एव **स्नानोप**[18]**वाससंपन्नम्** इति [19]प्रागुक्ताङ्गानुवादः। अधिवासमण्डलन्यासादिक[20]मप्यत्र मनसैव कर्तव्यमित्याह — **हृद्व्योम**[21]**कमले** इत्यादि। यदुक्तं श्रीमत्**कालोत्तरे**[22]—

"हृदयेऽर्चाविधानं तु नाभौ होमं प्रकल्पयेत्।" इति।

प्रागुक्तबाह्याग्नाविव स्वदेहा[23]ग्नावध्वोपस्थापनादि कृत्वा शिष्यात्मानं **कदम्ब**[24]**गोलकाकारम्** इति [25]अनुत्पन्नावयवविभागं सूक्ष्मदेह[26]मात्रसंबद्धं शिव**शक्तिस्थं** [27]च, सर्वस्य तया[28]धिष्ठितत्वेनोक्तेः। **शक्तिमति** च तदानीं भोगस्थाने तत्त्वात्मके भुवनरूपे वावस्थितं, **विधृतं** च तत्र भोक्तृत्वे, [29]**मन्त्रशक्तिसामर्थ्यात्** [कृत]संयोजनवियोजनं[30], **पदा**[31]**त्पदं समुद्धरेत्**। **शुद्धं तत्त्वाग्रनायकैः** इति प्रतिस्थानं जनितम्; जनन एव तेषां विनियोगस्योक्तत्वाद् [32]भुवनदीक्षायाम्। **पदे समरसीभूतम्**

---

[1] ०कार० — ओ, क, ङ.
[2] शक्तिसंशक्ति० — ओ, क.
[3] शक्तिवत्स्थितम् — च.
[4] विवृतः — ओ, ख, घ; विप्रतः — क, छ, ज; विवृत्तितः — ङ; विवृतं — च.
[5] ०नाकुलः — ऊ, ऋ.
[6] गुरुं — क.
[7] शुद्धतत्त्वाग्र० — ऋ, ख, घ, ङ, छ, ज; शुद्धतत्त्वार्थ० — च.
[8] ०नायके — ओ, क, ख, घ, ङ, छ, ज.
[9] पते — ओ, क.
[10] स परमीभूतं — ऊ, ऋ; समरिभूतां — ङ.
[11] स्वस्थोचितं — ऊ, ऋ, च; स्वरोचितं — ओ, क, ङ.
[12] पदं विनि० — ओ.
[13] न भयं — ओ; तद्भूयः — च; न हूयः — छ, ज.
[14] परिशोच्यते — ओ, क, घ, ज; परिशोध्यते — ख; परवशोच्यते — ङ. परिशोचते — च; परिचोच्यते — छ.
[15] दैशिको० — ऊ, ऋ.
[16] मतङ्ग० योग० तृतीयप्रकरणे।
[17] उद्धरेत् — ऊ, ऋ.
[18] ०वाससंपन्नम् — ऋ.
[19] मतङ्ग० क्रिया० ५.१०२–१०९ पू० वृत्तौ।
[20] ०मप्यत्रैव मनसैव — उ; ०मप्यैत्र मनसैव — ऋ.
[21] ०कल इत्यादि — ऋ.
[22] कालोत्तरे ८.५३पू०; सार्धत्रि० २.१३पू०.
[23] ०ग्नविध्वोपस्थानादि — ऋ.
[24] ०गोलाकारम् — ऊ, ऋ.
[25] अनुपपन्नावयव० — ऊ; आनुपपन्नावयव० ऋ.
[26] ०मात्रासंबन्धं — ऋ.
[27] चकारो नास्ति — ऋ.
[28] ०धिष्ठेयत्वेनोक्तेः — ऊ; ०धिष्ठेयत्वेनोक्तः — ऋ.
[29] मन्त्रसक्यसाम० — ऋ.
[30] ०योजनः — ऊ, ऋ.
[31] ०त्पदमुद्धरेत् — ऊ.
[32] मतङ्ग० क्रिया ७.१७–२०पू० वृत्तौ।

इति शिव[1]तत्त्वसदृशीभूतं येन शिवा[2]द्वस्त्वन्तरत्वेऽपि न तत्त्वान्तरमुच्यत इत्युक्तं प्रागेव[3] ॥

अधुना दर्शनान्तरप्रतिक्षेपाय मुक्ते प्रागुक्तस्वरूपानुवादः —

**[4]प्राग्धर्मनिर्गमो[5] यो हि शिवधर्मसमागमः[6] ॥१०॥**
**[7]सा मुक्तिर्मुनिशार्दूल नासद्वयक्तिमुपैति[8] हि ।**
**सतोऽपि नेष्यते नाशो [9]विचारात्पशुता पशोः[10] ॥११॥**
**[11]याति [12]मायात्मिका [13]यद्वद्गन्धाद्गन्धान्तरम्"**

पूर्वसिद्धपशुत्वनिवृत्त्या[14] या पुंसः शिवसमानस्य धर्मस्याभिव्यक्तिः **सा मुक्तिः** उच्यते। [15]न त्वसत एव तस्योत्पत्तिर्यथा [16]**कालामुखाः** प्राहुः। असदुत्पत्तेः [17]प्राक् [18]सत्कार्य[19]सिद्धिविचारेण निरस्तत्वात्। नापि सत एव तस्य शिवात् तत्र संक्रान्तिर्यथा **पाशुपताः** प्राहुः। प्राक् सत्कार्यसिद्धिविचारेण सतोऽपि [20]विनाशस्य निषिद्धत्वात्। अयमर्थः — परमेश्वरगुणसंक्रान्त्यापि[21] तत्र स्वगुणस्य प्राक् किंचिज्ज्ञत्वेन सिद्धस्य विनाशो नोपपद्यत इति। तेनासौ किंचिज्ज्ञ [22]एवेत्यमुक्तत्वाद्वयर्थः संक्रान्तिकल्पनाप्रयासस्तत्रेति। तस्मादयमेव पक्षो युक्तः, यत् [23]**पशुता पशोर्याति** तत्रेति। **मायात्मिका** रूपान्तरेण तदन्धकतया [24]परिणमते, यथा [पशु]ता पशोरजादेः [25]**गन्धाद् गन्धान्तरम्** इति। मलकर्मलक्षणा तु यथा याति तथा [26]वक्ष्यतीति नात्राव्याप्तिः ॥

---

[1] ०तत्त्वं — ऊ, ऋ.

[2] ०द्वस्त्रान्तरत्वेऽपि — ऊ; ०द्वस्त्रारन्तरेऽपि — ऋ.

[3] मतङ्ग० विद्या० २६.७२ वृत्तौ।

[4] प्राग्धर्मान्निर्गतो — ओ; प्राग्धर्मं निर्गतो — क; प्राग्धर्मो निर्गमो — घ.

[5] ०निर्गतो — ङ; ०निग्रहो — च.

[6] ०समागमात् — ओ, क, ख, घ, छ, ज; . . . क्रमात् — ङ.

[7] शोच्यते मुनि० — ओ, क, ङ, च; सेव्यते मुनि० — ख, घ, छ, ज.

[8] ०रुपैति — ऊ, ऋ.

[9] विचारा पशुता — ओ; विचारात्परतापयोः — ङ.

[10] पशौ — ख, घ, छ, ज.

[11] शिद्धा — ओ; सिद्धा — क, ख, घ, ङ, च, छ, ज.

[12] मायात्मका — ओ, ख, घ, ङ, छ, ज.

[13] यद्वद्गन्धाद्गन्धतरं — ऊ, ऋ; यावद्गन्धगन्धारं— ओ; यावद्गन्धगन्धा० — क; यद्वद्गन्धं गन्धा० —ख, घ, छ, ज; यावद्गन्धगन्धान्तर . . ङ; यद्वद्गत्वा गत्वान्तरं — च.

[14] ०त्वानिवृत्त्या — ऊ, ऋ.

[15] नत्वसत्व — ऋ.

[16] कालमुखाः — ऊ, ऋ.

[17] मतङ्ग० विद्या० ६.४६, ४७ वृत्तौ।

[18] सकार्य० — ऊ, ऋ.

[19] ०सिद्धिः विचारे नेतिरस्तत्वात् — ऋ.

[20] विचारस्य — ऊ, ऋ.

[21] ०संक्रान्त्यपि — ऋ.

[22] एवेत्य. . मुक्त्वात्वाद्वयर्थः — ऊ; एवेति मुक्त्वा त्वाद्वयर्थः — ऋ.

[23] पशुपता — ऊ, ऋ.

[24] परिणमेते — ऋ.

[25] 'गन्धाद्' इति नास्ति — ऋ.

[26] वक्ष्यतेति नात्र व्याप्ति तथा — ऋ.

"तथा[1] ।
[2]अनादिवासनाविद्धा[3] [4]पशोः पाशवशात्स्फुटम् ॥१२॥
[5]निमज्जत्यभिलाषेण [6]चितिर्या [7]चाध्वनि स्थिता[8] ।
सा तस्य [9]शक्तिसंस्पर्शात्[10]कर्मणोः [11]समतां परम् ॥१३॥
[12]प्राप्याभिव्यक्तिमायाति यया युक्तोऽणुर्मार्गते[13] ।
गुरोरनुग्रहं[14] सोऽपि [15]नियुक्तः [16]परमेष्ठिना ॥१४॥
[17]गुरुस्तं [18]प्रत्यनायासं शक्त्याविष्टः[19] [20]प्रवर्तते ।
उभयोरपि सामर्थ्याद्व्यक्तं[21] पत्युरथोदितम्[22] ॥१५॥

**तथा** इति तथैव **अनादिकर्मवासनाविद्धा** [23]**पाशवशात्** मललक्षणपाशसहकारिवशात् संसारे **निमज्जति चितिः**। तत्रस्थापि [24]च सूक्ष्मदेहनिविष्टरागादिसहकारिवशात् [25]**कर्मणोः समतां** [26]**परं** वा विरोधं **प्राप्य** मलशक्तेर्यः **स्पर्शः** परिपाकवशात् काठिन्यपरित्यागेन कोमलतालक्षणः, तस्माद्धेतोः **व्यक्तिमायाति** इत्युक्तं प्राक्[27] —

"संसारात्स विरज्येत प्रध्वस्तकलुषः सदा"। इति।

तथाभूता च चितिः **सा** व्यक्तिमायाति। **यया युक्तोऽणुः गुरोरनुग्रहं** प्रार्थयते। **गुरु**रपि परमेश्वरशक्त्यधिष्ठितोऽनायासेन तदनुग्रहाय **प्रवर्तते** इति। **उभयोरपि** गुरुशिष्ययोः **पत्युः** सं-

---

[1] शुभम् — ऊ, ॠ; यथा — ओ, क, ङ.
[2] अनाधि० — ऊ, ॠ.
[3] ०विद्धः — ओ, क, घ, च, छ, ज; ०सिद्धः — ख; . . ०जनाविद्ध० — ङ.
[4] पशुः पाशवशात्पुनः — ओ, क; पशुपाशवशात्पुनः — ख, घ, ङ, छ, ज. पशुपाशवशात्स्फुटम् — च.
[5] निर्मज्य साभि० — च.
[6] तिथिर्या — ऊ, ॠ; वासना — ओ, क, ख, घ, ङ, च, छ, ज.
[7] चाध्वनस्थिताः — ङ.
[8] स्थितिः — ओ, क.
[9] शक्तिः सं० — ॠ.
[10] कर्मणा समतान्तरम् — ओ, क, ख, घ, ङ, च, छ, ज.
[11] समतान्त. . . म — ऊ; सततां परम् — ॠ.
[12] प्राप्या हि व्यक्ति० — ऊ, ॠ.
[13] युक्तो न मार्गते — ऊ, ॠ; यथायुक्तोऽनुमार्गन्ते — ओ, क, च, छ; युक्तोऽनुमार्गते — ख, घ, ङ, ज.
[14] ०रनुगहात् — ओ, ०रनुग्रहः — क; ०रग्रहणं — ख, घ, छ, ज. ०रनुग्रहणं — ङ.
[15] नियक्त० — ॠ; नियुक्तं — ख; प्रयुक्तः — ज.
[16] परमेष्ठिनः — ओ, क, ङ.
[17] गुरुस्थ० — ओ, क; गुरुस्थः — ङ.
[18] प्रति नायासं — ॠ; प्रत्यनायासः — क, ङ; प्रयत्नायासात् — च.
[19] ०विष्ट — ऊ, ॠ, ङ, विष्टं — ओ, क.
[20] प्रपद्यते — ओ, क, ख, घ, ङ, च, छ, ज.
[21] ०द्व्यक्ति — ओ, क, ङ; सामर्थ्यं व्यक्तं — च; ०द्युक्तं — छ, ज.
[22] ०रथोचितम् — ओ, क, ख, घ, ङ, च, छ, ज.
[23] पाशान् मे लक्षण० — ऊ, ॠ.
[24] द सूक्ष्मदेह० — ॠ.
[25] कर्मणः — ऊ, ॠ.
[26] विरोधमन्तरं वा विरोधं — ऊ, ॠ.
[27] मतङ्ग० विद्या० १०.२५उ०.

बन्धिनो योग्यतालक्षणात् **सामर्थ्याद्व्यक्तम्** एतत्पदमित्युक्तं [1]पतिपदार्थप्रकरणादौ प्रागेवेति बन्धनिवृत्त्या शिवत्वाभिव्यक्तिपक्ष[2] एव मोक्षे युक्तः । एतत्सकलापेक्षयोक्तम्[3] ॥१२–१५॥

अधुना प्रलयकेवलं, विज्ञानकेवलं चापेक्ष्योच्यते —

**न [4]कर्मणः [5]क्षयोऽनादेर्न [6]मलस्याशयात्मनः ।**
**न भवेत्कालसामर्थ्यात्स्वतो[7] [8]वापि [9]द्विजोत्तम ॥१६॥**
**यस्मिन्निरभिलाषी[10] स्यात् [11]समयेऽणुर्विभोर्बलम्[12] ।**
**[13]बलाच्छक्ति[14]कराद्व्यक्तं क्षणाद्भोगाद्वियुज्यते ॥१७॥**

[15]"सतोऽपि नेष्यते नाशः" इति प्रागुक्तयैव युक्त्या **न कर्मणः, मलस्य** वा **स्वतः** [16]**क्षयो भवेत्** । **नापि कालादेः** सहकारिणः **सामर्थ्यात्** । किं तु **यस्मिन्** मलपाकवति काले **अणुर्निरभिलाषी** भवेत्, तस्मिन् **समये विभोः** आत्मनो यद् **बलं** तत्, **बलात्** [17]**शक्तिकर**लक्षणात् परमेश्वरसंबन्धिनो **व्यक्तं** भवेत् । तदानीं च क्षणमात्रेणैव भुज्यतेऽनेनेति [18]**भोगः** मलकर्म तस्माद्वियुक्त इति । अत्रापि बन्धनिवृत्तिः[19], सर्वज्ञ[20]त्वादिव्यक्तिश्च मोक्ष इति [21]नाव्याप्तिः ॥१६–१७॥

[22]ननु पशोर्दीक्षितस्यापि [23]चितिर्निमज्जत्यभिलाषेण[24] भोजनशिवपूजादिविषयेण । तत्कथं पशोरेवोक्तेति । तत्रोच्यते —

**स्थित्यर्थं योऽभिलाषोऽस्य मुमुक्षोर्भावितात्मनः[25] ।**

---

[1] मतङ्ग० विद्या० ४.४४–४८ वृत्तौ ।
[2] ०व्यक्तपक्ष — ऊ, ऋ.
[3] ०त्सकलपेक्षायोक्तम् — ऊ; ०त्सकलपेक्षायुक्तम् — ऋ.
[4] कर्मणा — ओ, क; कर्मणोः — ख, घ; कर्मणोऽक्षयो — छ, ज.
[5] क्षयोर्नादे० — ऋ.
[6] मलान्याश आत्मनः — ओ; मलान्नाश आत्मनः — क; मलस्य शयात्मनः — ङ.
[7] ०त्कालमहात्म्यास्वतो — ओ, क, घ, ङ; ०त्कार्मंमाहात्म्यात्स्वतो — ख; ०त्कालमाहात्म्यात्स्वतो — च, छ.
[8] नापि — छ, ज.
[9] द्विजोत्तमः — क.
[10] ०रभिलाषे — ऋ; ०रभिमानी — च; ०रभिलाषि — छ, ज.
[11] समयेनाविभो० — ऋ; समयेन विभो० — ओ; समये तु विभो० — क.
[12] ०र्वलात् — ओ, क, ख, घ, ङ, छ, ज. ङ.
[13] बालाच्छक्ति० — ओ, क; बलाशक्ति० — ङ.
[14] ०कलाद्व्यक्त० — ऊ, ऋ; ०करादत्त० — ओ, क; ०करा दत्तः — ख, घ, छ, ज. ०करादन्तः — ङ; ०करादत्र — च.
[15] मतङ्ग० क्रिया० ८.११.
[16] क्षयोद्भवेत् — ऋ.
[17] शक्तिकरणलक्षणात् — ऊ, ऋ.
[18] भोगमलकर्म० — ऋ.
[19] ०निवृत्तं — ऋ.
[20] ०त्वादिमरलव्यक्तिः — ऊ, ऋ.
[21] न व्याप्तिः — ऋ.
[22] नन्वपशो० — ऋ.
[23] चितिन्नमज्यत्यभि० — ऋ.
[24] ०लाषेऽस्य — ऊ, ऋ.
[25] ०र्भवितात्मनः — क, ङ; ०र्भावानात्मनः — घ; भावनात्मनः — छ, ज.

[1]बन्धहेतुर्न [2]बोद्धव्यः [3]शिव[4]प्रीत्यात्मकस्तु सः ॥१८॥

**सः अभिलाषोऽस्य** शरीर[5]वृत्त्यर्थमात्रत्वेन शिवपूजादिविषयत्वे[न] च [6]भवन् शुद्धरागयुक्तत्वाद् **न बन्धहेतुः** इत्युक्तं [7]**रागतत्त्वप्रकरणे** [8]इत्यविरोधः ॥१८॥

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य चोपक्रमाय श्लोकः —

इति खलु [9]तत्त्ववियोगा[10]च्छिवयोगे निर्मितः क्रियायोगः[11] ।
[12]स च मुख्योऽध्वरपूर्वो[13] [14]नवपद[15]पीठक्रमात्प्राप्तः[16] ॥१९॥

**इति** एवं [17]**खलु** अन्यप्रकारकाणि बन्धभूतानि यानि तत्त्वानि, तैर्यो **वियोगः** पुंसः तस्माद्धेतोः **शिवयोगः** तन्निमित्तं **निर्मितः** कथितः **क्रियायोगः** इति व्याख्यातार्थोपसंहारः। **स च** क्रियायोगो दीक्षात्मको **मुख्यः** [18]प्रागुक्तक्रियायोगद्वयात्, यो [19]वक्ष्यमाण**नवपदपीठ**क्रमेण [20]प्रागुक्त-नवनाभमण्डलात्मका**ध्वरपूर्वः** इति स एव वक्तव्यतया प्राप्त इति व्याख्येयोपक्रमः ॥१९॥

[ इति श्री ] भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ
[क्रियापादे ] तत्त्वदीक्षाप्रकरणम् [ अष्टमं समाप्तम् ]
**अष्टमः पटलः ।**

---

[1] बलहेतुर्नि० — ओ; बन्धहेतुन्नि० — क; बद्धहेतुर्न० — ख, घ, छ, ज.
[2] बोधव्यः — ऋ; बोद्धव्याः — ओ.
[3] शिवं — ओ.
[4] प्रीत्यात्मनस्तु — ओ, क, ङ; प्रीत्यां तु नस्तु — ख, घ, छ, ज.
[5] वृत्त्युक्तमात्र० — ऊ, ऋ.
[6] भवच्छुद्ध० — ऊ, ऋ.
[7] मतङ्ग० विद्या० ११.३०पू०–३३पू० वृत्तौ।
[8] इति विरोधः — ऋ.
[9] तत्त्वनियोगा० — ऊ, ऋ; बलावियोगा० — क; बद्धवियोगा० — ख, घ, छ, ज; बहु-वियोगा० —ङ; बन्धवियोगा० — च.
[10] . . शिवेन प्रवां निमित्ता — ओ; ०च्छिवेन न प्रयां निमित्तां — क; ०च्छिवेन प्राङ नि-र्मित० — ख, घ; ०च्छिवेन प्रायाङ निमित्ता — ङ. ०च्छिवेन प्राङ निर्मितः — च; ०च्छिगेन — छ, ज.
[11] ०योगात् — ख, घ, छ, ज.
[12] न च मुख्यो — ज.
[13] द्वारपूर्वो — ख, छ, ज.
[14] न च पद० — ख; न पद हि क्रियाप्राप्तः — छ; न पदविक्रिया प्राप्तः — ज.
[15] ०पीतक्रमा० — ऊ, ऋ; ०विलक्रिया० – क; ०पीठक्रिया० — ख, घ, ङ.
[16] प्राप्ताः — ऋ; प्राप्ता — ङ.
[17] खलान्यप्रकारकानि — ऊ; खलन्यापकार-कानि — ऋ.
[18] प्रागुक्तः क्रिया० — ऊ, ऋ; अत्रैव पटले २. १० पू०.
[19] मतङ्ग० क्रिया० ९.१२उ०–२४पू०.
[20] मतङ्ग० क्रिया० १.५१–५६.

## नवमः पटलः

## नवतत्त्वपीठदीक्षाप्रकरणम्

**अथातः सर्वमन्त्रादेर्विभोः [1]शक्तिर्विनिःसृता ।**
**[2]या साशेषं जगद्व्याप्य[3] [4]संस्थिता स्वेन तेजसा ॥१॥**

**अथ** इति नवपदपीठक्रमेणाध्वरपूर्वतया [5]वक्तव्यत्वेन प्रतिज्ञातस्य क्रियायोगस्याधिकारः, यतः स एव मुख्यः [6]प्रागुक्तस्तत इति। तत्र [7]तमेव क्रियायोगं दर्शयितुं [8]नवपीठपदानि [9]तावद्यस्य संबन्धीनि [10]तस्य प्राक् [11]**शुद्धविद्याप्रकरणो**क्तस्य वस्तुनो, मन्त्रोद्धारस्य चानुवादेनाह — **सर्वमन्त्राणाम् आदेः** [12]कारणात् शिवभट्टारकात् **शक्तिः विनिःसृता** क्षुब्धा। किं शक्तिपदार्थत्वेन [13]संगृहीता मायासौ। नेत्युच्यते[14] — **या सा** [15]**अशेषं** शुद्धाशुद्धात्मकं जगद् **व्याप्य** स्थिता; न च प्रकाशात्मको भेदः ॥१॥

अथ किमसौ शिवस्य समवायिनी। सापि नेत्युच्यते —

**शुद्धेऽध्वनि [16]प्रपत्तव्या रुद्राणूनां महात्मनाम् ।**
**[17]नियोगबलमाहा[18]त्म्यव्यञ्जिकामितविक्रमा[19] ॥२॥**

या मायोर्ध्वं मन्त्रमन्त्रेश्वराणां यो **नियोगः** यस्य यथा यावत्यधिकारः, यच्च **बलं** सर्वज्ञत्वेऽपि क्रियाशक्तेरन्योन्यमुत्कर्षापकर्षलक्षणम्, **माहात्म्यम्** अङ्गपरिवारादिभेदयोगः, तस्य **व्यञ्जिका**

---

[1] शक्तिर्विस्सृता — ऊ, ॠ; शक्तिरनिन्दिता — ओ, क, ख, घ, च, छ, ज; शक्तिरनिन्दितः — ङ.

[2] या साशेषजग० — ओ, क, ङ; यासौ सर्वजग० — ख; या सा सर्वजग० — घ, छ, ज.

[3] ०द्व्याप्त्या — ओ; ०द्व्याप्या — क.

[4] संस्थिरस्वेन — ङ.

[5] व्यक्तव्य० — ॠ.

[6] मतङ्ग० क्रिया० ८.१९.

[7] त एव — ऊ, ॠ.

[8] नवपदपीठभावानि — ॠ.

[9] भावाद्यस्य — ॠ.

[10] तत्प्राक् — ऊ, ॠ.

[11] मतङ्ग० विद्या० ७.३१–३३.

[12] करणात् — ॠ.

[13] मतङ्ग० विद्या० २.१५, १६पू० वृत्तौ।

[14] मौनीत्युच्यते — ॠ.

[15] अशेषे — ऊ, ॠ.

[16] प्रकर्तव्या — ॠ, ओ, क, ङ, छ, ज; प्रवर्तव्या — ख, घ.

[17] नियोगबन्ध० — क; नियोगलय० — ख, घ, छ; निघयो बन्ध० — ङ; निर्योगलय० — ज.

[18] ०त्म्यव्यञ्जिकामृत० — ऊ; ०त्म्या व्यञ्जितामित० — ओ, क; ०त्म्याद् विजितामित० — ख, छ, ज; ०त्म्याद् व्यञ्जितामित० घ; ०त्म्याद्व्यञ्जिकामलविक्रमा — च.

[19] ०विक्रमाः — ओ, क, ख, घ, छ, ज; ०विक्रमः — ङ.

शास्त्रात्मना अस्मदादेः प्रकाशिका। अन्यथा तया विनेश्वरस्य शास्त्रकर्तृत्वायोगादित्युक्तम्। ततः शुद्धविद्येयं [1]प्राक् शक्तिपदार्थत्वेन [2]संगृहीतेत्युक्तं भवति ॥२॥

अत एव —

**योगयोगेश्वरस्यैषा[3] पञ्चमन्त्रतनोः सदा ।**
**[4]मूर्तिः [5]संक्रीडनार्थं च व्यक्ता [6]साध्वन्यनेकधा[7] ॥३॥**

परस्य सदाशिवभट्टारकस्य **एषा** एव **मूर्तिः** सम्यक् [8]क्रीडनायाधिष्ठेयत्वेनोक्ता, तत्प्रसादाद् **व्यक्ता च अध्वन्यनेकधा** इति। यदुक्तं श्रीमत्**किरणे** — [9]"शुद्धेऽध्वनि शिवः कर्ता" इति ॥३॥

[10]इतश्च सा परिग्रहवर्तिनी, न तु समवेतेत्युच्यते —

**[11]शुद्धा विद्या यतस्तस्या [12]मायाञ्जनविवर्जिताः[13] ।**
**भुवनेषु विचित्रेषु क्रीडन्त्यक्लिष्टशक्तयः[14] ॥४॥**

**यतः** [15]**तस्याः** संबन्धीनि यानि **भुवनानि** तेषु **मायाञ्जनविवर्जिताः शुद्धाः विद्याः** भानुमत्याद्याः क्रीडन्ति इत्युक्तम्[16] ततो नासौ समवेता, तस्याः परिणामासंभवादिति ॥४॥

अथ पञ्चमन्त्रतनोः क्रीडा, यदर्थं सा मूर्तिरुक्तेति तदर्थमेतत् —

**[17]पुंभावो यः समस्तस्य पशुसंघस्य [18]निश्चितः ।**
**[19]कलादितत्त्वमार्गेण [20]नियत्यन्तेन वासितः ॥५॥**

---

[1] मतङ्ग० विद्या० २.१५, १६पू०.
[2] संगृहीती० — ऋ.
[3] ०स्यैषां — ख, घ, छ, ज.
[4] शक्तेः — ऊ, ऋ; मूर्तयः — ओ, क, ख, घ, ङ, च, छ, ज.
[5] क्रीडनार्थं तु — ओ, क, ख, घ, ङ, च, छ, ज.
[6] ०श्चाध्वन्य० — ओ, क, ख, घ, ङ, च, छ, ज.
[7] ०नेकदा — ऋ; ०नेकथा — क.
[8] क्रीडयाधिष्ठीयते नोक्ता — ऋ.
[9] किरणे विद्या० ३.२७उ०.
[10] यतश्च सा ग्रहवर्तिनी — ऋ.
[11] शुद्धा शक्तिमतः सर्वा — ओ, क, ङ; शुद्धाः शक्तिमताः शुद्ध० — ख; शुद्धाः शक्तिमतः शुद्ध० – घ, छ, ज; . . शक्तिमन्तः सर्वा — च.
[12] मायाजन० — ओ, च; मायाज्ञान० — ख, घ, छ, ज.
[13] ०विवर्जिता — ऊ, ऋ; ०विनिर्मिता — ख; ०विनिर्मिताः — घ, छ, ज.
[14] ०शक्तिः — ङ.
[15] तस्यासंबन्धीनि — ऋ.
[16] मतङ्ग० विद्या० ७.१९उ०–२३.
[17] पुङ्भावोऽथ — ङ.
[18] निश्चिताः — ऋ; निश्चयः — च.
[19] कालादि० — ऊ, ऋ.
[20] नियत्यन्ते निवासितः — ऊ, ऋ; नियत्यन्तो न वापिनः — ओ; नियत्यन्तो न पापिनः — क; नियम्यन्ते निवासिताः — ख; नियम्यन्ते न वासिताः — घ, ङ, छ, ज; नियत्यन्ते निवासिनः — च.

[1]भोक्तृत्व[2]भावमापन्नो [3]भोगाश्चास्य [4]गुणात्मकाः ।
[5]योऽधिकारो [6]विधावुक्तो [7]रुद्राणां शुद्धवर्त्मनि ॥६॥
[8]सा क्रीडात्र [9]परस्योक्ता [10]विशुद्धे पथि [11]संस्थिता ।

**यः समस्तस्य** विज्ञानकेवलादेः **पशुसंघस्य पुंभावः** मलयोगः। तथा [12]**कलादितत्त्वमार्गेण नियत्यन्तेन** इति [13]नियतिशब्देनात्र स्थित्यर्थं लक्षणया पृथिवी कथ्यते, तदन्तेन सूक्ष्मदेहमात्रसंबद्धस्य, प्राप्तबाह्यशरीरस्य वा [14]यो युक्तः पुंभावः। यश्च **भोक्तृत्वस्य भावः** समुत्पादः, तम् **आपन्नः** बाह्यशरीरसंबद्धस्य पशुसंघस्य पुंभावः। ये चास्य शरीर[15]संबद्धस्य [16]**भोगाः** भावप्रत्ययात्मका बुद्धिगुणाः। **यश्च** मायोर्ध्वं विद्याविद्येश्वराणां निमित्तं तस्य **अधिकारः** प्रोक्तः। **सा** क्रीडेव **क्रीडात्र** भगवतः कथ्यते। तदिच्छामात्रेण तावत्कार्यजातस्य संपत्तेरित्युक्तम् —

[17]"स्वभावस्यापरो भावः सा क्रीडेत्युपचर्यते" ॥ इति ॥

अत एव —

पुद्गलानां [18]**विमुक्त्यर्थं** [19]**भूत्यर्थं चाभिलाषिणाम्** ॥७॥
[20]**स्वतन्त्राचारमार्गस्था** [21]**रुद्राश्चातिबलोत्कटाः** ।
**शिवशक्ति**[22]**पदोद्भूता मन्त्राश्चामोघशक्तयः** ॥८॥

ये **रुद्राः मन्त्राश्च** स्वस्मिन्स्वस्मिन्ना[23]राधनोपायभूते **तन्त्रे** समाचारे **मार्गे** अवस्थिताः सन्तः, केषांचित् मुक्त्यर्थमन्येषां च सिद्ध्यर्थं प्रागुक्ताः[24], ते तस्मिन् **शिवशक्तिपदे** [25]शुद्धविद्यात्मनि **उद्भूताः** तदात्मकाः। तेषां भुवनशरीरादीत्यर्थः ॥७–८॥

---

[1] भोक्तृमापत्वमापन्नो — ओ; भोक्तृत्वं तु समापन्नो — क.
[2] ०भोगमापन्नो — ख.
[3] भोगश्चास्य — ओ, क, ख, घ, ङ, छ, ज; भोगश्चास्या — च.
[4] गुणात्मनः — ओ, क, ख; घ, ङ, छ, ज; गुणात्मकः — च.
[5] योऽधिकारा — ओ; योऽधिकार० – च, छ, ज.
[6] विधायुक्तौ — ओ, ङ; विधौ युक्तो — क; विधायुक्तो — ख, घ, छ, ज.
[7] शूद्राणां — ङ.
[8] सा क्रीडया — ओ, क, ङ; सो क्रीडया — ख, घ, छ, ज; सा क्रीडा या — च.
[9] वरा प्रोक्ता — ओ, क, ङ; परा प्रोक्ता — ख, घ, छ, ज; पुरा प्रोक्ता — च.
[10] विशुद्धाध्वनि — ओ, क, ख, घ, ङ, छ, ज.
[11] संस्थितः — ओ; संस्थिताः – ख, घ, ङ, छ, ज.
[12] कालादि० — ऊ, ॠ.
[13] नियत्यशब्दे० — ॠ.
[14] योक्तुं पुंभावः — ॠ.
[15] ०संबन्धस्य — ॠ.
[16] भोगभाव० — ॠ.
[17] मतङ्ग० विद्या० ४.२९उ०.
[18] विशुद्ध्यर्थं — ओ, क, ङ; च भुक्त्यत्वं —ख.
[19] भूत्यर्थं — ॠ, ओ, क, ङ; सक्त्यर्थाभि० — ख; भुक्त्यर्थं — घ, छ, ज.
[20] स्वतन्त्राचारुमार्ग० — ॠ; मन्त्रावतार० — ओ, क, ख, घ, ङ, छ, ज; तन्त्रावारेण मार्ग० — च.
[21] रुद्राश्चादि० — ङ.
[22] ०पतोद्भूता० — ओ, क, ख.
[23] ०रोधनोपाय० — ऊ, ॠ.
[24] मतङ्गे विद्यापादे.
[25] शुद्धाविद्या० — ऊ.

अथ प्रकृते किमुच्यते —

[1]त्राणधर्म[2]समृद्धानां [3]पदानां भूरिवर्चसाम् ।
नियोगाय स्मृता संख्या [4]ह्येकाशीतिर्मिता ततः[5] ॥९॥

ततः तस्याः [6]शुद्धविद्यालक्षणायाः शक्तेः सकाशाद् यानि पशुपरित्राणादिसामर्थ्ययुक्तानि परमेश्वराभिधायकत्वेन चातिदीप्तिमन्ति पदानि, तेषां परमेश्वराराधनकर्मविनियोगार्थम् एकाशीतिः संख्या [7]स्मृता मन्त्रोद्धारे। यदुक्तम् —

[8]"एकाशीतिपदोपेता विद्यापादे मयोदिता।" इति।

सा च मिता [9]परिमिता संख्या। श्रीमत्स्वायंभुवे[10] तु तदवान्तरभेदेन चतुर्नवतिसंख्या तेषामधिका स्मृता यतः ॥९॥

यथैव च शुद्धविद्या तथैव —

[11]शक्तिर्देहात्मिका [12]तन्त्रे गीयतेऽध्वरकर्मणि[13] ।
मुमुक्षो[14]र्विनिवृत्त्यर्थं [15]भोगं प्रत्यनिवारिता[16] ॥१०॥

साप्येकाशीतिपदसंख्या[17] यागादिकर्मनिमित्तं भगवतः शक्तिः देहात्मिका शास्त्रे कथ्यते। यदुक्तं शुद्धविद्याप्रकरणे —

[18]"एकाशीतिपदा देवी [19]या सा शक्तिः शिवात्मिका"। इति।

अत एव [20]सा मुमुक्षोर्विनिवृत्त्यर्थं मोक्षं प्रति, साधकस्य च भोगं प्रति अनिवारिता सेति ॥१०॥

अतश्चात्रानिवारिता —

सह[21]सोन्मील्य [22]चैतन्यं चेतसः शक्तिरैश्वरी[23] ।

---

[1] त्राणाद्धर्म० — घ, छ, ज.
[2] ०समिद्धानां — ओ, क, ङ; ०समित्राणां — ख, घ, छ, ज; ०मसिद्धानां — च.
[3] पादानां — ओ, क.
[4] ह्येताशीति० — ऋ; एकाशीत्युदिता सदा — ओ, क, ख, घ, छ, ज; एकाशीत्युत्तरासदा — ङ.
[5] ०शीत्युदिता सदा — च.
[6] शुद्धिविद्या० — ऋ.
[7] स्मृत्वा — ऋ.
[8] मतङ्ग० क्रिया० १.५९उ०.
[9] परमिता — ऊ, ऋ.
[10] स्वायंभुवे मन्त्रोद्धारपटले.
[11] शक्तिदेहात्मिका — ख, घ, ङ; शक्तिदेहात्मकां — छ, ज.
[12] तत्र — च.
[13] ०ऽध्वनि कर्मणि — च.
[14] ०र्विनिवृत्तस्य — ओ, क, ख, घ, ङ, च, छ, ज.
[15] भोगन् — ओ; भोगान् — क, ख, ङ; भोगात् — घ, ज; भोगात्पत्यनि० — छ.
[16] ०वारितः — ओ, क, ख, घ, ङ, छ, ज.
[17] ०पदा संख्या — ऊ.
[18] मतङ्ग० विद्या० ७.३१पू०.
[19] मायाशक्तिः — ऋ.
[20] स मुमु० — ऊ, ऋ.
[21] ०सोन्मूल्य० — घ, छ, ज.
[22] चेतना — घ, ङ, छ, ज.
[23] ०रीश्वरी — ओ, क, ख.

**प्रकाशयत्यनायासं[1] वीर्येण परमं पदम् ॥११॥**
**[2]नवगर्भपुरे [3]याज्या [4]शक्तिर्गन्धादिभिः शुभैः[5] ।**

यैः **शक्तिर्नियमेन**[6] व्योम[7]व्याप्यादिकैः **चेतसः** इति आत्मनः **चैतन्यं** [8]**सहसा** एव श्रवण[9]मात्राद् **उन्मील्य** अक्लिष्टेन स्वसामर्थ्येन **पदं** निष्कलशिवस्वरूपमभिधेयत्वेन **प्रकाशयतीति**। अत एव च नवनाभलक्षणेऽध्वरे यजनीया सैवेत्युक्तं [10]प्रागङ्गषट्[क]प्रकरणे[11]॥

कथं तत्र [12]यजनीयेत्युच्यते[13] —

---

[1] ०त्यनायासा — ऊ, ऋ; ०न्त्यनायासं — ङ; ०त्यनायासो — च.
[2] नवगर्भे पुरे — ओ, क, ङ, च; नवगर्भे परो — ख; नवगर्भे परे — घ; नवगर्भो परे — छ, ज.
[3] योज्या — ओ, क, ख, घ, ङ, च, छ, ज.
[4] शक्तिगन्धा० — ओ, क, ख, घ, ङ, छ, ज.
[5] शुभाः — ओ, क.
[6] शक्तिनियमेव — ऊ, ऋ.
[7] ०व्याप्यादिक० — ऊ; ०व्याप्याधिक० — ऋ.
[8] सहस्यैव — ऋ.
[9] ०मत्वात् — ऋ.
[10] प्रासङ्ग० — ऋ.
[11] मतङ्ग० क्रिया० १.५१–५३ .
[12] यजनीत्युच्यते — ऋ.

### [13]नवनाभमण्डलपद्मेषु पूज्यानि तत्त्वानि व्योमव्यापिपदमन्त्राश्च

#### १. मध्यपद्मे — शिवतत्त्वम्

कर्णिकायाम् — ओम् (१)

पूर्वादिदिग्दलेषु — व्योमव्यापिने (२) व्योमरूपाय (३) सर्वव्यापिने (४) शिवाय (५) अनन्ताय (६) अनाथाय (७) अनाश्रिताय (८) ध्रुवाय (९).

#### २. प्राक्पद्मे — सदाशिवतत्त्वम्

कर्णिकायाम् — शाश्वताय (१०)

पूर्वादिदिग्दलेषु — योगपीठसंस्थिताय (११) नित्यं योगिने (१२) ध्यानाहाराय (१३) ओं नमः शिवाय (१४) सर्वप्रभवे (१५) शिवाय (१६) ईशानमूर्धाय (१७) तत्पुरुषवक्त्राय (१८).

#### ३. आग्नेयपद्मे — ईश्वरतत्त्वम्

कर्णिकायाम् — अघोरहृदयाय (१९)

पूर्वादिदिग्दलेषु — वामदेवगुह्याय (२०) सद्योजातमूर्तये (२१) ओं नमो नमः (२२) गुह्यातिगुह्याय (२३) गोप्त्रे (२४) निधनाय (२५) सर्वविद्याधिपाय (२६) ज्योतीरूपाय (२७).

### ४. याम्यपद्मे — विद्यातत्त्वम्

कर्णिकायाम् — परमेश्वरपराय (२८)

पूर्वादिदिग्दलेषु — अचेतन अचेतन (२९) व्योमिन् व्योमिन् (३०) व्यापिन् व्यापिन् (३१) अरूपिन् अरूपिन् (३२) प्रथम प्रथम (३३) तेजस्तेजः (३४) ज्योतिर्ज्योतिः (३५) अरूप (३६).

### ५. नैर्ऋतपद्मे— मायातत्त्वम्

कर्णिकायाम् — अनग्ने (३७)

पूर्वादिदिग्दलेषु — अधूम (३८) अभस्म (३९) अनादे (४०) ना ना ना (४१) धू धू धू (४२) ओं भूः (४३) ओं भुवः (४४) ओं स्वः (४५).

### ६. वारुणपद्मे — कालतत्त्वम्

कर्णिकायाम् — अनिधन (४६)

पूर्वादिदिग्दलेषु — निधन (४७) निधनोद्भव (४८) शिव (४९) सर्व (५०) परमात्मन् (५१) महेश्वर (५२) महादेव (५३) सद्भावेश्वर (५४)

### ७. वायव्यपद्मे — नियतितत्त्वम्

कर्णिकायाम् — महातेजः (५५)

पूर्वादिदिग्दलेषु — योगाधिपते (५६) मुञ्च मुञ्च (५७) प्रथम प्रथम (५८) शर्व शर्व (५९) भव भव (६०) भवोद्भव (६१) सर्वभूतसुखप्रद (६२) सर्वसांनिध्यकर (६३)

### ८. कौबेरपद्मे — पुरुषतत्त्वम्

कर्णिकायाम् — ब्रह्मविष्णुरुद्रपर (६४)

पूर्वादिदिग्दलेषु — अनर्चित अनर्चित (६५) असंस्तुत असंस्तुत (६६) पूर्वस्थित पूर्वस्थित (६७) साक्षिन् साक्षिन् (६८) तुरु तुरु (६९) पतङ्ग पतङ्ग (७०) पिङ्ग पिङ्ग (७१) ज्ञान ज्ञान (७२).

### ९. ऐशानपद्मे — प्रकृतितत्त्वम्

कर्णिकायाम् — शब्द शब्द (७३)

पूर्वादिदिग्दलेषु — सूक्ष्म सूक्ष्म (७४) शिव (७५) शर्व (७६) सर्वद (७७) ओं नमो नमः (७८) ओं शिवाय (७९) नमो नमः (८०) ओम् (८१).

प्राक्पदं[1] कर्णिकामध्ये प्रणवाख्यं [2]महात्मनः ॥१२॥
[3]शेषाण्यत्र दलस्थानि [4]पूज्यान्यष्टौ विधानतः ।
एवं मध्ये प्रपूज्यादौ भक्त्या [5]तु परया मुने ॥१३॥
[6]प्राक्पीठकर्णिकासंस्थं[7] शाश्वतं पदमव्ययम् ।
[8]पूजये[9]त्तत्पराण्यष्टौ [10]प्राग्दलादौ यथाक्रमम् ॥१४॥
[11]एवमाग्नेय[12]पीठेऽपि [13]ह्यघोरहृदयं [14]पदम् ।
कर्णिकायां समभ्यर्च्य [15]तत्पराण्यपि पूर्ववत् ॥१५॥
[16]अष्टाविंशतिमं [17]याम्ये [18]पदं पीठे निवेशयेत्[19] ।
कर्णिकायां ततः पश्चात्पूर्ववन्निखिलो[20] विधिः ॥१६॥
[21]कर्तव्यः पदवर्गस्य शक्ति[22]गर्भोद्भवस्य तु ।
नैर्ऋते कर्णिकामध्ये सप्तत्रिंशत्ततः[23] पदम्[24] ॥१७॥
एवं [25]स्यान्निखिलो [26]न्यासः शक्तेः कार्यो विजानता ।
[27]यावद्दिक्शांकरीं[28] तावदेकैकस्य पदस्य तु ॥१८॥
पूर्ववद्भक्ष्य[29]भोज्याद्यैर्गन्धधूप[30]पवित्रकैः ।

अत्रास्मिन्नेव गर्भे मध्यपीठकर्णिकायां प्रथमं प्रणवपदं संपूज्य, पूर्वादीशानान्तेषु दलेष्वष्टौ व्योमव्याप्यादीनि पदानि पूजयेत्। ततस्तथैव पूर्वादीशानान्तेषु[31] पीठेषु शाश्वतादीनि सर्वाणीति ॥

---

[1] हृत्पद्म० — ङ.
[2] महात्मनाम् — च.
[3] शेषान्यत्र — ओ, क, ङ.
[4] पूज्यानष्टौ — ङ, च.
[5] परमया मुने — च; नु परयं मुने — छ, ज.
[6] प्राक्पीठं कर्णि० — च.
[7] ०संस्थां — छ, ज.
[8] पूजय० — ओ, क.
[9] ०त्तत्पदान्यष्टौ — ऊ, ॠ; ०त्यपरानष्टौ — ओ; ०त्यपरान्यष्टौ क; ०त्तत्पराद्यष्टौ — ख, घ, छ, ज; ०त्परान्यष्टौ — ङ; ०त पराण्यष्टौ — च.
[10] प्राग्दवोदौ — ओ; प्राग्देवादौ — क; प्रागलादौ — ख.
[11] एवमाग्नीय० — ॠ.
[12] ०पीठाद्यमघोर० — ऊ, ॠ; ०पिनमघोर० — छ, ज.
[13] अघोर० — ओ, क, घ, ङ, च.
[14] परम् — छ, ज.
[15] तत्परान्यपि — ॠ, ओ, क, ङ.
[16] 'अष्टाविंशतितमम्' इत्यत्र वृत्तार्थम् 'अष्टाविंशतिमम्' इति प्रयोगो दृश्यते ।
[17] याम्यपदं — ऊ, ॠ.
[18] 'परमेश्वरपराय' इति पदम्.
[19] निवेदयेत् — ॠ.
[20] ०न्निखिला — ओ, क, घ; पूर्वस्मिन्निखिलो — च.
[21] कर्तव्या — ओ, क, ङ.
[22] ०र्भोगगतस्य — ओ, क.
[23] ०त्रिंशतितमं — ओ, क, ख, घ, ङ, च, छ, ज.
[24] 'अनग्ने' इत्येतत्सप्तत्रिंशं पदम् ।; परम् — ॠ.
[25] स्यादखिलो — ओ, क.
[26] न्यायः — ख, घ, छ; न्यासशक्तेः — ङ; न्यायत् शक्तेः — ज.
[27] यावद्दीक्षाकरी — ओ, क, ख, घ, ङ, छ, ज.
[28] शांकरी — ऊ, ॠ.
[29] ०भोज्यादेर्गन्ध० — ख, घ, छ, ज.
[30] ०विचित्रकैः — ख.
[31] ०दीशान्तेषु — ॠ.

अत्र च नवपीठपददीक्षायाः प्रकृतत्वात्, [1]"पीठे पीठेन दातव्यम्" इति वाक्येन [2]तस्या एव वक्ष्यमाणत्वात्, पीठानां पदानां च स्वतो बन्धकत्वाभावाद् दीक्षार्थानुपपत्तिरेव।

अथ पीठपदपूज्यस्य बन्धकत्वाद्युपपद्यत इत्युच्यते। यद्येवं तस्यैकत्वादेकतत्त्वैवेयं दीक्षेति नवपीठसंयोजनाद्यनुपपत्तिः।

अथैकत्वेऽपि तस्य लयभोगाधिकारतत्त्वानामिवावस्थाभेद[3]कल्पनयेयमपि नवसंख्या संयोजनादिभेदे भविष्यतीत्युच्यते।

[4]यद्येवं तद्वदेव तेषामप्यवस्थान्तराणां तत्त्वप्रसक्त्या तत्त्वातिरेकप्रसङ्गः। अन्यथा भेदेन तत्रापि संयोजनादिकल्पनया चावस्था[भेदः] प्रसज्यत इति [5]दीक्षार्थानुपपत्तिरेवेत्यवश्यं तदुपपत्त्यन्यथानुपपत्त्यात्र नवतत्त्वन्यासः कर्तव्य इति प्रतीयते। तत एव वक्ष्यत्युपसंहारे — [6]"तत्त्वाध्वावस्थितेयम्" इत्यादि। ततः कानि तानि नवतत्त्वानि, कथं [7]च न्यस्यानीत्याकाङ्क्षायां श्रीमत्**पौष्करा**दपेक्षणीयम्। यदुक्तम् —

[8]"नवैव तत्त्वान्यादाय शासनानि स्थितानि तु।
शिवतत्त्वं च परमं ततोऽधस्तात्सदाशिवम्॥
ईश्वरं तु ततस्तत्त्वं विद्यातत्त्वमतः परम्।
माया कालोऽथ नियतिः पुरुषः प्रकृतिस्तथा॥
एतानि नवतत्त्वानि प्रपञ्चः प्राकृतोऽपरः।
पीठेषु मध्यपूर्वादिशर्वान्तं क्रमतो न्यसेत्॥"

इत्यविरोधः।

एष एव चार्थो[9]ऽत्राभियुक्तैर्मुनिपादै रचितश्रीमत्**पौष्करीयपददीक्षासंग्रहकारिका**भिरेवं[10] संहिताभेदेन मन्त्रभेदानुसारतो विशेषं प्रक्षिप्योक्तः —

"प्रणवाद्ध्रुवपर्यन्तं शिवपदपीठं [11]तु नवमध्ये।
[12]शाश्वतात्तत्पुरुषान्तं पीठं[13] [14]सादाशिवं प्राक्स्थम्॥
ईश्वरपीठमघोराज्ज्योतीरूपावधेर्ज्वलनदिक्स्थम्।
[15]परमेशात्त्वारूपं विद्यापीठं स्थितं [16]यमाशायाम्॥
मायापीठमनग्नेः [17]स्वरितिपदान्तं निशाचराशास्थम्[18]।
[अनिधनात् सद्भावेत्यन्तं पीठं कालस्य वारिपाशायाम्।]

---

[1] मतङ्ग० क्रिया० ९.२२पू०; पीठपीठे प्रदातव्यं — ऊ, ॠ.
[2] तस्यात एव — ऊ. ॠ.
[3] कल्पनयायमपि — ऊ, ॠ.
[4] यद्येव — ऊ, ॠ.
[5] 'दीक्षार्थां' इत्यारभ्य 'इत्यादि' इत्यन्तं 'ॠ' मातृकायां नास्ति।
[6] मतङ्ग० क्रिया० ९.५५पू०.
[7] चान्यस्यानी० — ऊ, ॠ.
[8] आकरो नोपलभ्यते।
[9] अत्र पाठोऽशुद्धभूयिष्ठः। ग्रन्थकर्तृनाम न ज्ञायते। ग्रन्थोऽप्ययं नोपलभ्यते।
[10] ०भिरेव — ऊ, ॠ.
[11] भुवनमध्ये — ऊ.
[12] शाश्वततत्पुरु०—ऊ; शाश्वता तत्पुरु०—ॠ.
[13] 'पीठम्' इत्यस्यानन्तरं 'प्राक्स्थं' इत्यधिकम् 'ऊ' मातृकायाम्।
[14] सादाशिवप्रा० — ऊ, ॠ.
[15] परमेशतत्त्वरूपं — ऊ, ॠ.
[16] यमाश्रायाम् — ॠ.
[17] स्वरितपदा० — ऊ, ॠ.
[18] इतः परं वरुणदिक्स्थकालतत्त्वपीठविषयकमर्धमेवं भवितव्यमिति भाति।

महतः सांनिध्यान्तं पवनाशासंस्थितं [1]नियतिपीठम् ॥
ब्रह्मादेर्ज्ञानान्तं पुंपीठं सौम्यदिक्संस्थम्[2] ।
शब्दा[3]न्मुक्तिपदान्तं पीठं [4]प्रकृतेः स्थितं [5]दिशीशान्याम् ॥
इति पदतत्त्वन्यासो नवनाभे श्रीमतङ्गोक्तः ॥" इति ॥

न केवलं मण्डल एव यावत्—

**[6]वह्नावपि निवेश्यादौ पीठानां [7]नवकं [8]गुरुः ॥१९॥**
**संतर्पयेद्विशुद्धेन सर्पिषाहुतिभिः क्रमात् ।**

अग्नावपि **आदौ** मण्डलतर्पणार्थमनेनैव सृष्टिक्रमेण पदानां **नवकं** निवेद्य तर्पणं कुर्यात्[9]। न तु पश्चाद् दीक्षार्थतया प्रकृतितः प्राप्तेन संहारक्रमेण, नापि महामण्डलवद्युगपदित्यर्थः। तदियतास्मिन् वक्तव्यतयाधिकृते क्रियायोगे दीक्षाख्येऽङ्गभूतो नवपदपीठात्मकोऽध्वरक्रमः प्रति[10]पादितः ॥

अधुना प्रकृतिप्राप्ताङ्गान्तरानुवाद एवोच्यते—

**[11]पूर्ववच्छिष्यमाहूय [12]यद्बीजमपि तस्य तत् ॥२०॥**

[13]प्राक् प्रकृत्युक्तसंहारक्रमेणाग्नौ प्रकृतितत्त्व[14]पीठाद्युपस्थापनपूर्वं [15]शिष्याह्वानादि शिव[16]हस्तदानान्तं कर्म कृत्वा, यस्य संयोजनादेः [17]प्राग् **यद्बीजं** मन्त्रात्मकमुक्तं, **तस्य तत्** प्रतिपीठं कुर्यादिति प्रकृतिप्राप्तानुवादः ॥२०॥

अथ विशेषविधिः—

**[18]पदेनाद्येन [19]शक्तेस्तु पुटीकृत्य शनैः शनैः ।**

---

[1] नियत० — ऋ.
[2] ०दिक्संस्थितम् — ऋ.
[3] मुक्तिपदेनात्रान्त्यं प्रणवपदमभिधीयते ।
[4] प्रकृते स्थितं— ऊ, ऋ.
[5] दिगीशान्याम् — ऊ, ऋ.
[6] वाह्नावपि — ऊ, ऋ.
[7] नवमं — ऊ, ऋ; नावकं — छ. ज.
[8] गुरुम् — ओ, ङ.
[9] कृत्वा — ऋ.
[10] ०पादिताधुना — ऊ; ०पादिताध्वना — ऋ.
[11] पूर्ववच्छिवमा० — ख, घ, छ, ज.
[12] तद्बीजमोमिति स्मृतः — ओ, क; तव बीजस्मृतम् — ख; तव बीजमिति स्मृतम् — घ, छ, ज; तव बीजमिति स्मृतः — ङ; तद्बीजममिति स्मृतम् — च.
[13] मतङ्ग० क्रिया० ७.२०–२२ पू०; ८.२, ३पू० वृत्तौ ।
[14] ०पीठापद्युप० — ऋ.
[15] शिष्यावाहनादि — ऊ, ऋ.
[16] ०हस्तादानान्तं — ऊ, ऋ.
[17] मतङ्ग० क्रिया० ७.१७–२२ पू० वृत्तौ ।
[18] पादेनान्येन — ओ, क, ङ; पदेनान्येन — ख, घ, ज; पदेनान्तेन — च; पदेनान्येन — छ.
[19] शक्त्या तु — ओ, क, ख, घ, ङ, छ, ज; शक्त्यास्तु — च.

[1]श्लेषवत्क्रमशो [2]नीत्वा [3]चाहुतीनां त्रयं त्रयम् ॥२१॥
[4]पीठे [5]पीठेन दातव्यं [6]पूर्णा पूर्णेन चेतसा ।
[7]यावन्मध्यपदं [8]तावत्कुरु तत्त्वे परे शिवे ॥२२॥
योजयेत्पूर्ववद्ध्यात्वा निखिलां शक्तिमुच्चरन् ।
[9]यस्मिन्संयोजितस्याणोः कारणत्वेन[10] कारणम् ॥२३॥
न [11]भवेत्सोऽपि कार्यत्वादतीतः[12] पशुगोचरात्[13] ।

**शक्तेः** व्योमव्यापिलक्षणायाः संबन्धिना **पदेन आद्येन** संपुटीकृत्य देवदत्ताद्यभिधानं शिष्यमुपस्थापितपीठतत्त्वं नयेत्। **शनैः शनैः** इति यथा नास्य शरीरस्योपघातो जायत इति। ततश्चायमाद्यस्यैव शिवहस्त[14]संयोजने [15]प्रकृतिप्राप्तस्य शर्वशर्वपदस्यापवादः, न तु प्र[ति]स्थानमुद्धारार्थत्वेनोक्तस्य[16] मुञ्चमुञ्चपदस्येति भेदः। तथा **श्लेषवत्** इति श्लेषः आलिङ्गनं समस्तभोगाङ्गसंपत्तिरित्युक्तं [17]तत्त्वदीक्षायां, तद्वन्नयेत्। यथा प्राग्जननं संयोजनादिक्रमेणोक्तं तथा नयेत्। जननमस्य संपादयेदित्यर्थः। **नीत्वा च** यस्मिंस्तत्त्व**पीठे** जनितस्तस्मिन् **आहुतीनां त्रयं त्रयं पीठेन** इति पीठमन्त्रैः प्रदातव्यम्। तेनैव च पूर्णाहुतिरिति। [18]सेयं प्रतिपीठं पीठपदेनैव[19] प्रकृतत्वात्[20] संहारक्रमेणाष्टाविंशत्याहुतिभिर्दीक्षा प्रधानकर्म। शिवतत्त्वे त्वधिका व्योमव्यापिना पूर्णाहुतिः। यदाह — **यावन्मध्यपदम्** इति। **श्रीपौष्करे** तु सृष्टिक्रमेणापि। यदुक्तम् —

[21]"प्रतिपीठं पीठशिवैरनुलोमतः पददीक्षात्र कर्तव्या" इति ।

एवं शिवेनैवेयं प्रधानकर्मभूता पददीक्षा, तत्त्वदीक्षा तु ब्रह्मशिवैः, भुवनदीक्षा तु पुनरङ्गब्रह्मशिवैरिति त्रिप्रकार एवात्र दीक्षाविधिरिति॥

अत्र प्रसङ्गाद् ज्ञानमेतदज्ञानप्रतिपक्षत्वान्मोक्षकारणं युक्तं, न तु कर्म दीक्षाख्यमिति मतङ्गमुनिः —

---

[1] शेषवत्क्र० — ओ, क, ख, घ, ङ; शेषवक्त्रमसौ नीत्वा — च; शेषवत्क्रमशो नत्वा — छ, ज.
[2] नीत्वाहुतीभिस्त्रिभिस्त्रिभिः — ओ.
[3] आहुतीभिस्त्रिभिस्त्रिभिः — क, ङ.; आहुतीभिस्तिसृभिः — ख, घ; ह्याहुतीभिस्तु तिसृभिः — च; आहुतीभिः स तिसृभिः — छ, ज.
[4] पीठं — ऊ, ऋ.
[5] पीठे प्रदातव्यो — ओ, क; पीठे प्रदातव्या — ख, घ, ङ, च, छ, ज.
[6] पूर्णां — ऊ, ऋ, ज.
[7] यावन्मध्ये — क.
[8] तावत्ततस्तत्त्वपदे — ओ; तावत्ततस्तत्त्वे पदे — क; तावत्ततस्तत्त्वे परे — ख, घ, च, छ, ज; तावदस्तत्त्वे च पदे — ङ.
[9] तस्मिन् — च.
[10] कारणत्वे हि — ख, घ, छ, ज.
[11] भवेत्सापि — ख; भवेत्सोप० — ङ.
[12] ०दतीव — ओ, क, ङ; ०दनीतः — च; ०दतितः — छ, ज.
[13] ०गोचरा — ख, घ, छ, ज.
[14] ०संयोजनप्रकृति० — ऊ, ऋ.
[15] मतङ्ग० क्रिया० ७.१७.
[16] मतङ्ग० क्रिया० ७.२१, २२ पू० वृत्तौ।
[17] मतङ्ग० क्रिया० ८.२,३ पू०
[18] सोऽयं — ऊ, ऋ.
[19] ०पदेनेव — ऊ, ऋ.
[20] ०प्रकृततत्त्वात् — ऊ.
[21] आकरो नोपलभ्यते ।

**मतङ्ग उवाच —**

[1]पशुत्ववासनाविद्धो नित्यमज्ञानमोहितः ॥२४॥
अज्ञानोच्छित्तये[2] [3]ज्ञानं न कर्म परिकीर्तितम्[4] ।
[5]अत्रोक्ता कर्मणा [6]मुक्तिर्भवताध्वरपूर्विका[7] ॥२५॥
वक्तव्यं युक्तितः किंचिद्[8]भ्रान्त्युच्छित्तिकरं [9]विभो ।

ननु पूर्वं [10]शुद्धविद्याप्रकरणे परिहृत एवायं प्रश्नः। सत्यम्। अत एव ज्ञानस्यात्र किं कथंचिदुपयोगोऽस्ति, न वेत्येवंपरत्वादस्य अन्य एवायं [11]प्रश्न इत्यविरोधः॥

सिद्धान्तोऽपि प्रागुक्तार्थानुवादेन ज्ञानस्यात्रोपयोगप्रदर्शनतात्पर्येणैव [इत्या]ह —

**परमेश्वर उवाच —**

[12]सत्यमज्ञान[13]मत्रोक्तं [14]हेतुर्बन्धस्य [15]सर्वदा ॥२६॥
[16]किंत्वणोरी[17]श्वरेच्छातस्तदन्तर्गतचेतसा[18] ।
[19]संस्पृष्टस्य [20]बुभुत्सा स्या[21]दस्त्यस्मात्कलुषात्मकात्[22] ॥२७॥
[23]संसारदुःख[24]संपूर्णात्परं [25]नैःश्रेयसं पदम् ।

---

[1] पशुत्वं वासना० — ओ, क.
[2] ०नोच्छित्तयो — ओ, क; ०नोच्छक्तये — छ, ज.
[3] ज्ञाननकर्म० — ज.
[4] ०कीर्तितः — ओ.
[5] अत्रोक्तकर्मणा — ओ, क; अत्रोक्ता वर्मणा — च.
[6] मूर्तिर्भवता० — ङ.
[7] ०पूर्विकः — छ, ज.
[8] भ्रान्तश्चित्तकरं — ऋ; ग्रन्थ्युच्छित्तिकरं — ओ, ङ; ग्रन्थिः शक्तिकरं — क; ग्रन्थिच्छित्तिकरं — ख, घ; ग्रन्थिछक्तिकरं — छ, ज.
[9] विभोः — ऋ, क, ङ, छ.
[10] मतङ्ग० विद्या० ७.६४–७१.
[11] प्रश्नविरोधः — ऊ, ऋ.
[12] सद्य० — ङ.
[13] ०मन्त्रोक्तं — क, ङ; ०मात्रोक्तं — ख, घ छ, ज.
[14] हेतुबन्धस्य — ऊ, ऋ; भोक्तुर्ब० — ओ, क, ख, घ, ङ, छ, ज.
[15] सर्वधा — क.
[16] किं त्वनो० — ऋ; कंत्वणो० — छ, ज.
[17] ०श्वरेच्छा तु तद० — ऋ; श्वरे जातः तद० — घ; श्वरेच्छादाः तद० — ङ.
[18] ०चेतसः — ऊ, ऋ, घ, च, छ.
[19] संपृष्टस्य — ऋ, क, घ; संसृष्टस्य — ओ; संस्पृष्टास्य — ङ.
[20] बुभुक्तस्या० — ओ; सुभुक्तः स्या० — क; बुभुक्षाभ्या — ख; बुभुक्षाद्या— घ, ङ; बहृक्षाद्या — छ, ज.
[21] ०दस्त्यस्यास्मा० — ऊ; ०त्तस्माच्च कलु० — ओ, क; अस्त्यस्मा० — ङ, छ, ज.
[22] ०षात्मका — ओ; ०षात्मिका — क, ङ; ०षात्मिकाम् — ख, घ; ०षात्मकाम् — छ, ज.
[23] साराद्दुःखदसं० — ऊ, ऋ; संसाराद्दुःखसंपूर्णा० — च.
[24] ०संपूर्णा परं — ओ, क.
[25] निःश्रेयसं — ङ.

[१]एवं [२]मार्गं [३]ततस्तस्य [४]कश्चित्कारण[५]चोदनात् ॥२८॥
निवेदयति [६]हृष्टात्मा [७]स्वतो [८]वा व्यज्यते मतिः ।
सप्ता[९]वयवकांस्त्यक्त्वा ज्ञानेनैवात्मवर्तिना[१०] ॥२९॥
[११]तज्ज्ञानमभिला[१२]षाख्य[१३]दज्ञानात्पुद्गलं [१४]सकृत् ।
[१५]संचोदयति [१६]निष्कृष्य [१७]देशिकं [१८]प्रत्यनिन्दितम् ॥३०॥
[१९]मुमुक्षाविष्टमूर्तेस्तु [२०]यियासा चोपजायते ।
[२१]यातस्याचार्य[२२]निलयं [२३]गुरुर्ज्ञान[२४]बलान्वितः ॥३१॥
[२५]प्रकरोति शिशोर्दीक्षां [२६]यया [२७]याति परं पदम् ।
[२८]तदैव हि [२९]स मुक्तात्मा [३०]यदाघ्रातः शिवेच्छया ॥३२॥
[३१]शक्तेर्धर्मो[३२]ऽप्ययं स्पष्टः पुंसो [३३]दीक्षावसानिकः[३४] ।

---

[१] एव — ऊ.
[२] मार्गा तत० — ऊ; मार्गस्तत० — ॠ; मार्गयतस्तस्य — च, छ.
[३] यतस्तस्य — ओ, क, ख, घ, ङ, ज.
[४] काश्चित् — ओ, क; किंचित् — ख, घ, च, छ, ज; कंचित् — ङ.
[५] ओदनात् — ऊ, ॠ; ०चोदितम् — ङ.
[६] दुष्टात्मा — ख.
[७] सतोऽपि — च.
[८] वाप्यद्यते — घ; वा व्यञ्जते — ङ; वाद्यप्यते — छ, ज.
[९] ०वयव मे त्यक्ता — ऊ; ०वय एमेत्यर्था — ॠ; ०वयवसाध्यत्वाद् — ओ, घ; ०वयवान् सत्यत्वात् — क; ०वयवसान्त्यक्त्वा — ख; ०वयवसांत्यक्त्वा — ङ; वयवसंत्यक्ता —च; ०वयवसांत्यत्वा० — छ, ज.
[१०] ०वर्तिनः — छ, ज.
[११] तज्ज्ञानमखि० — ओ; अज्ञान० — ख, घ, छ, ज.
[१२] ०क्षाख्या ज्ञानात्पुद्गलः — ओ; ०षाख्या विज्ञानात्पुद्गलः — क.
[१३] ०दज्ञान्तात्पुद्गलं — ऊ, ॠ; ०दज्ञान्तात्पुद्गलः — ङ.
[१४] कृतम् — ख, घ, छ, ज.
[१५] यच्छोदयति — ख, छ, ज.
[१६] निष्क्रम्य — ओ, क, ख, घ, ङ, च, छ, ज.
[१७] दैशिकं — ऊ, ॠ; देशिकः — ख.
[१८] प्रतिनिन्दितम् – ॠ; पत्यनिन्दितम् — ख, घ.
[१९] बभुत्साविष्ट० — ऊ, ॠ, च; मुक्षाविष्टमूर्तेस्तु — छ; मुष्टाविष्टममूर्तेस्तु — ज.
[२०] यियासोश्चोप० — ऊ, ॠ; धिया सा चोप० — ओ, ख, ङ; पिपासा चोप० — च; विधासा चोप० — छ, ज.
[२१] तया स्याचार्य० — ख, घ, ङ, छ, ज.
[२२] ०निलयगुरुज्ञान० — ओ, क, ख, ङ.
[२३] गुरुज्ञान० — छ, ज.
[२४] ०बलान्वितम् — ख, घ, च, छ, ज.
[२५] प्रकरोदिति शिशो० — ङ.
[२६] यदा — ओ, क, ङ; यथा — ज.
[२७] यात्यं परं — ख, घ, ज; यात्या परं — छ.
[२८] तदा एव — ओ, क, घ, छ, ज; तदैवं तु — ख; तदा एवं स — च.
[२९] संयुक्तात्मा — ऊ; स युक्तात्मा — ॠ.
[३०] यदाघ्राता — ॠ.
[३१] शक्ते धर्मे — ओ; शक्तेर्धर्मे — क; शक्तेति धर्मो — ङ; शक्तेर्वर्मा — च; शक्ते धर्मो — छ, ज.
[३२] ह्यसंसृष्टः — ऊ, ॠ; ०प्ययस्पष्टः — ओ; व्ययः स्पष्टः — क; ०प्यथ स्पष्टः — ङ; ह्ययं स्पष्टं — च; ०प्ययं स्पष्टं — ज.
[३३] दीक्षोऽवसानकः — क; दीर्घावसानिकः — ङ; दीक्षा च सानकम् — छ, ज.
[३४] ०वसानकः — ओ, ख, घ; ०वसानकम् — च.

[1]तदेव ज्ञान[2]मज्ञानप्रतिद्वन्द्वि[3] शिवात्मकम् ॥३३॥
[4]यो विरागोऽपि दुस्तारात्संसाराद्व्रज्यते[5] परे[6] ।
सर्वानुग्राहकस्योक्तः[7] पत्यु[8]र्धर्मोऽनिवारितः ॥३४॥
ब्रह्मादिस्थावरान्तस्य भूतवर्गस्य [9]कृत्स्नशः ।
[10]निरपेक्षः करोत्याशु [11]त्वणोरात्मसमं बलम् ॥३५॥

**सत्य**[12]**मज्ञानं बन्धहेतुः**। तत्तु द्विविधं [13]मतम्। तत्र यावत् **सर्वदा** प्रलयकेवलाद्यवस्थायामपि बन्धहेतुस्तदेकं मललक्षणमत्रोक्तं [14]**पुंपाशेश्वरप्रकरणे**। द्वितीयं तु प्राकृतं बौद्धमेव, तच्च दीक्षया न निवर्त्यम्। **किं तु** तेन मलेन युक्तस्यैव **अणोः** तत्पाकवशाद् ईश्वरेच्छास्पृष्टस्य संसारवैतृष्ण्यादिपूर्विका परं श्रेय इत्येवमात्मिका बोद्धुमिच्छा भवतीत्युक्तम् —

[15]"संसारात् स विरज्येत प्रध्वस्तकलुषः सदा।" इति।

**ततः बुभुत्सा**योगाद्[16] ईश्वरचोदनावशेन तच्छ्रेयः [17]**कश्चित्** कल्याण[18]मित्रादिः **निवेदयति**। स्वयमेव वा धर्मादिगुणसप्तकत्यागेन **मतिः** बुद्धिः केवलेन ज्ञानलक्षणेन गुणेन सिद्धचात्मना तस्य [19]**व्यज्यते** इत्युक्तं [20]**बुद्धितत्त्व**प्रकरणे। सांख्यैरपि[21] —

[22]"ऊहः शब्दो[23]ऽध्ययनं दुःखविघातास्त्रयः[24] सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ" इति ।

तदेतद्बौद्धं **ज्ञानं** व्यज्यमानं द्वितीयस्माद् **अभिलाषाख्यात्** [25]प्राकृताद् **अज्ञानाद्** [26]**निष्कृष्य** पुरुषं **गुरुं प्रति** दीक्षार्थं [27]चोदयतीत्यस्य साक्षान्निवर्तकम्। पूर्वस्य त्वज्ञानस्य पारम्पर्येणेत्यविरोधः।

---

[1] तदेतज्ज्ञान० — ओ, क.
[2] ०मज्ञानं प्रति० — ओ, क, ख, घ, ङ, छ, ज.
[3] ०द्वन्द्व० — ओ, क, ङ; ०बन्धि — ख, घ, छ, ज.
[4] यद्विरागोऽतिविस्तारा० — ओ, क, ख, घ, ङ, छ, ज; यद्विरागोऽति० — च.
[5] ०राद्वचज्यते — ऊ, ऋ; ०राद्दृश्यते — ओ, क, ङ; ०राद्रक्ष्यते पदे — च; ०रदृज्यते — छ, ज.
[6] पदे — ओ, क, ख, घ, ङ, छ, ज; पदम् — ख (पाठभेदः).
[7] ०कः सोक्ता — ओ; ०कः सोक्तो — क; ०कस्योक्ता — ख, घ, ङ, छ, ज; ०कस्यान्तः — च.
[8] ०र्धर्मे — ऊ, ऋ, क; धर्मैनिवा — ओ; ०र्वर्मानिवारकः — च.
[9] नित्यशः — ख.
[10] निरपेक्ष्य — ओ; निरपेक्षकरे० — ङ.
[11] अणोरात्म० — ओ, क, ख, घ, ङ, छ, ज; ०रणोरात्म० — च.
[12] ०मज्ञानबन्ध० — ऊ, ऋ.
[13] 'ऊ' मातृकायाम् 'मतम्' इति नास्ति।
[14] मतङ्ग० विद्या० ६.६४उ०–९०.
[15] मतङ्ग० विद्या० १०.२५उ०.
[16] ०यागाद् — ऊ, ऋ.
[17] किंचित् — ऋ.
[18] मित्वादि० — ऋ.
[19] विज्यते — ऋ.
[20] मतङ्ग० विद्या० १७.५२पू०, ६५पू०.
[21] 'सांख्यैरपि' इति नास्ति 'ऊ' मातृकायाम्; 'अपि' इति नास्ति — 'ऋ' मातृकायाम्.
[22] सांख्यका० ५१; नाप्यूहः — ऊ; नाप्यूनः — ऋ.
[23] ०ऽध्ययनदुःख० — ऊ, ऋ.
[24] ०घातत्रयं — ऊ, ऋ.
[25] प्रकृत्वादज्ञानाद् — ऋ.
[26] निकृष्य — ऊ, ऋ.
[27] चोदयती तस्य — ऋ.

**ब्रह्मादिस्थावरान्तस्य** इति "**तदैव हि स** [1]**मुक्तात्मा**" इत्युपक्रमादेतदत्र शक्तिपाताघ्रातपुरुषोपलक्षणार्थं द्रष्टव्यम्; न तु स्थावरादीनां मनुष्याचार्यकर्तृका शक्तिपातानिश्चयाद्दीक्षोपपद्यते यतः ॥२६-३५॥

अत्र प्रसङ्गान्तरेण पुनर्मतङ्गमुनिः —

**मतङ्ग उवाच —**

[2]**कर्मणोरन्तरं प्राप्य** [3]**निपातः** [4]**प्राग्विपाकजम् ।**
[5]**तदपेक्ष्य न** [6]**युक्तार्था स्वामिनो** [7]**निरपेक्षता ॥३६॥**

पूर्वं हि **विद्यापादे**[8] **कर्मणोः** द्वयोरपि तीव्रवेगतया [9]परिपाकसामर्थ्येन वोपस्थितयोर्विरोधलक्षणं, मल**विपाकजं** वा **अन्तरं प्राप्य निपातः** [10]शक्तेर्भवेदित्युक्त इत्यध्याहारः । [11]ततश्चैतदन्तरम् [12]**अपेक्ष्य** अवस्थितस्य भगवतो **निरपेक्षता** प्रागुक्ता न उपपद्यत इति [13]पूर्वपक्षः ॥३६॥

सिद्धान्तस्तु —

**परमेश्वर उवाच —**

**स्वामिनः** [14]**शक्तयोऽप्युक्ताः**[15] **सृष्टिसंहारवर्त्मनि ।**
[16]**निःश्रेयसेऽपि** [17]**जन्तूनां** [18]**निरपेक्षाः स्वभावतः ॥३७॥**
[19]**जलजेषु यथार्कस्य** [20]**कुमुदेष्वनिवारिताः**[21] **।**
**रश्मयो** [22]**नाशकत्वेन विकासा**[23]**कुञ्चनादिषु ॥३८॥**

---

[1] मुक्तमेतत्युप० — ऋ.
[2] कर्मणोऽनन्तरं — ऊ, ऋ, ङ; कर्मणोरन्तरमप्राप्य — ज.
[3] निवातः — क; निपानः — च.
[4] प्राग्विपक्षयोः — ओ, क, ङ, च; पाश्वपक्वयोः — ख; पार्श्वपक्षयोः — घ, छ, ज.
[5] तदपेक्षुण्णगुक्त्यर्धा — ऋ; तदपेक्ष्या — च; तदपेक्षन — छ, ज.
[6] युक्त्युत्था — ऊ, च; युक्त्यर्था — ओ, क, ङ; युक्तात्मा — छ, ज.
[7] निरपेक्षितः — ओ, ङ; निरपेक्षिताः — क.
[8] मतङ्ग० विद्या० १३.१५-२२पू०.
[9] प्रतिपाक० — ऊ, ऋ.
[10] शक्त भक्त इत्यव्याहारः — ऊ, ऋ.
[11] ततश्चेदनन्तरम् — ऊ, ऋ.
[12] अपीह — ऋ
[13] पूर्वः पक्षः — ऊ.
[14] शक्तयश्चोक्ता — ख, घ, छ, ज.
[15] व्यक्ताः — ऊ, च; व्यक्ता — ऋ, ङ.
[16] नैःश्रेयसे च — ऊ, ऋ; निश्रेयसेऽपि — क; निश्रेयसे च — ख, घ, च, छ, ज; निश्रेयसेव — ङ.
[17] ज ज्ञानं — क; जन्तुना — ख.
[18] निरपेक्षा स्व० — ऊ, ख, घ, च, छ, ज; निरपेक्षस्व० — ओ, क, ङ.
[19] जयजेषु — छ, ज.
[20] कुसुमेषु निवारितः — ओ, क, घ; कुसुमेष्वनिवारितः — ख, ङ, छ, ज; कुसुमेष्वनिवारिताः — च.
[21] ०वारितः — ऋ.
[22] न समस्तानां — ऊ, ऋ; नासमत्वेन — ख, घ, ङ, छ, ज; न समत्वेन — च.
[23] ०कुञ्जरादिषु — ऊ, ऋ; ०कुञ्जनादिकान् — ओ, क, ख, घ, ङ; ०कुञ्चनात्मिका — च; ०कुञ्चनादिकान् — छ, ज.

[1]नापेक्षन्ते [2]परं [3]कंचित्स्वामिनं[4] परमेश्वरः[5] ।
निरपेक्षस्ततः [6]प्रोक्तः स्वतन्त्रत्वाच्च कारणात् ॥३९॥
न पशोर्योग्यता[7] काचिदस्वतन्त्रो यतः सदा ।

इह तावत् [8]पशोरस्वतन्त्रत्वादिना बन्धमोक्षयोरन्यथानुपपत्त्यावश्यमीश्वरः परः [9]प्रयोजककर्ताभ्युपगन्तव्य इत्युक्तं [10]प्राक् शक्तीश्वरसिद्धिभ्याम्। ततश्च कर्तृत्वादेव तस्येश्वरान्तराप्रयुक्तत्वाच्च स्वातन्त्र्यं सिद्धमेवेति न संस्कार्यगतयोग्यतालक्षणनिमित्तापेक्षा भगवतः सवितुरिव स्वातन्त्र्यं विहन्तुं [11]क्षमेतेत्यर्थः ॥

यदन्तरं स्वभावस्य[12] कर्मणो[13] भोक्तुरीप्सितम्[14] ॥४०॥
तदन्तरमनुप्राप्ता[15] [16]स्वभावेनैव निर्मला[17] ।
[18]प्रध्वंसिका [19]स्वतन्त्रोक्ता [20]कर्मणः पशुसंततेः[21] ॥४१॥
[22]शक्तिर्नपेक्षते [23]यद्वद्भानोर्दिन[24]मथादिनम् ।
[25]तद्वत्स्वभावतः[26] पत्युः [27]शक्तिर्मोक्षाय चेष्टते ॥४२॥
[28]निम्नगायाः [29]प्रवाहेण निरपेक्षेण नित्यशः ।

---

[1] नापेक्षते — ऊ, ॠ, ख, घ, ङ, छ, ज; सापेक्षते — ओ, क; नापेक्षेत — च.
[2] परां — ख, घ, छ, ज.
[3] किंचित् — ओ, क, ख, घ, ङ, च, छ, ज.
[4] स्वामिनः — च.
[5] परमेश्वरम् — ओ, क, ख, घ, ङ, छ, ज; परमेश्वर — च.
[6] प्रोक्तस्व० — क, ख, घ, ङ.
[7] ०र्योगिता — ॠ; त . . शय्योन्यता — ओ; तत्त्वांशे योन्यता — क; तत्त्वशौर्यो गता — ख, घ, छ, ज; तत्त्वं शौर्या यथा — ङ.
[8] पशो स्वतन्त्र० — ॠ.
[9] प्रयोजकः कर्ता — ऊ, ॠ.
[10] मतङ्ग० विद्या० ३.१२–१६ वृत्तौ।; प्रागीश्वर० — ऊ, ॠ.
[11] क्षमेत्यत्रार्थः — ऊ, ॠ.
[12] यदन्तरस्वभावः स्यात् — ओ, क, घ, ङ, छ, ज; यदन्ता स्वभा . . ख; स्वभावः स्यात् – च.
[13] कर्मणोः — ऊ.
[14] ०रीप्सिता — ओ; ०रीप्सितः — ङ.
[15] ०प्राप्तं — ऊ, ॠ, ङ; ०प्राप्तां — ख, घ, छ, ज.
[16] प्रभावे० — ओ, क, ङ.
[17] निर्मलम् — ऊ, ॠ; निर्मलाः — ख, घ; निर्मलः — छ, ज.
[18] प्रध्वंसिकस्वतन्त्रोत्था — ऊ; प्रध्वंसिकस्वत० — ॠ; प्रध्वंसितास्ततन्त्रोत्था — ओ; प्रध्वंसिताः सतन्त्रोत्था — क; प्रध्वंसकास्वतन्त्रोक्ताः — ख.
[19] स्वतन्त्रोत्था — ङ.
[20] कर्मणं — क; कर्मणां — ङ.
[21] ०संतते — ओ, क, ङ, ०संततौ — ख, घ, छ, ज; ०संहृतेः — च.
[22] शक्तिर्नपेक्ष्य — ॠ.
[23] यद्वाणोर्दिन० — ॠ; यद्वद्भावेनोचितमथोदितम् — ओ, ङ; यद्वद्भावोचितमथोदितम् — क; य . . चेतनम् — ख; यद्वद्भानोर्दिनं चेतनम् — घ.
[24] ०मचेतनम् — छ, ज.
[25] यद्वत्स्व० — ख.
[26] ०भावता — ओ, क.
[27] शक्तिर्मक्षया — ङ; शक्ति मो० — च.
[28] निम्नगाया — क; निम्नगायां — ख, घ, च.
[29] प्रवाहेन — ओ, क, ख, घ, ङ, च, छ, ज.

[1]तृणादयोऽ[2]प्यथोह्यन्ते [3]न स्वयं ते प्रयान्ति हि ॥४३॥
[4]नोदयास्तमने[5] पत्युः किं तु [6]कर्मोपधानतः ।

**यदन्तरम्** इति **यद् भोक्तुः** [7]संबन्धिनः **स्वभावस्य** [8]अवार्यत्वलक्षणस्य **अन्तरं** मल[9]परिपाकः, **कर्मणः** वा विरोधः **तद्** अपेक्षमाणा भगवतः शक्तिः [10]तस्य [11]भोक्तुः [12]कर्मणः मलसन्ततेश्च [13]**प्रध्वंसिका** तथास्वभावत्वेन निरस्तापेक्षा **उक्ता** ॥

न [14]पुमान्प्रेक्षते[15] [16]वीर्यं ज्योतिः [17]शक्तिसमुद्भवम् ॥४४॥
[18]बलं येन क्षणाद्भोगाद्विरक्तः शिवतां व्रजेत् ।

**न पुमान्प्रेक्षते**[19] [20]इति पुरुषस्तु बद्धत्वादात्मीयं तेजः शाक्तं द्रष्टुं, शिवसमतां च कर्तुमशक्त इति सापेक्षः प्रोक्तः ॥

[21]अधुना प्रश्नान्तरोपक्रमः —

**मतङ्ग उवाच —**

[22]शक्ति[23]यागावसाने तु [24]यागोऽन्यस्तत्र [25]नेति वा ॥४५॥
[26]चण्डेशस्योद्धृता मन्त्राः किमर्थं [27]परमेश्वर ।

---

[1] तृणौघो या — ओ, क, ङ.
[2] व्यपोह्यन्ते — ओ, ङ; व्यपोज्यन्ते — क; ०ऽप्यपोह्यैव — ख; ०ऽप्यपोह्य — घ; ऽप्यपोह्यान — छ; ०ऽप्यपोहान — ज.
[3] न स्वयान्ति — ओ; न च यान्ति — क.
[4] नेयदास्तमनो — ओ, क; नोदास्तमने — ङ.
[5] ०स्तमयो — ऊ, ॠ.
[6] कर्मो प्रधानतः — ॠ; धर्मेव धातवः — ओ, क; धर्मोऽवधानतः — ख, घ, ङ, छ, ज; कर्मोपभोगतः — च.
[7] संबन्धिना — ॠ.
[8] अवार्यलक्षणस्य — ॠ.
[9] ०परिपाककर्मणोर्वा — ॠ.
[10] तस्याः — ऊ, ॠ.
[11] भोक्यत्वं कर्मणोः — ॠ.
[12] कर्मणोः — ऊ.
[13] पुंसिका — ऊ, ॠ.
[14] पुनर्जायते — ओ, क, ङ.
[15] पश्यते — ख, घ, च, छ, ज.
[16] वीर्यज्योतिः — क.
[17] शक्तिः समुद्भवम् — छ.
[18] मण्डलं यत्क्षणा० — ओ, क; मण्डलं यत्सूक्षणा० — ङ.
[19] प्रेक्ष्यते — ऊ, ॠ.
[20] 'ॠ' मातृकायां 'इति' इत्यारभ्य 'कर्तुमशक्त' इत्यन्तं नास्ति ।
[21] अध्वना प्रश्नोपक्रमे — ऊ, ॠ.
[22] शक्तेर्योगाव० — च.
[23] ०योगाव० — ओ, क, ख, घ, ङ, छ, ज.
[24] योगान्यप्यत्र एव वा — ओ; यागोऽन्यप्यतृणेव वा — क; योगोऽन्यस्तत्र — घ, छ, ज; योगान् यस्यात्र एव वा — ङ; यागोऽन्योऽस्त्यत्र — च.
[25] नेरिता — ख; नेतिता – घ, छ; नेतितः–ज.
[26] चण्डीश० — ऊ, ॠ.
[27] परमेश्वरः — ङ, छ, ज.

परमेश्वर उवाच —

[1]न केवलं [2]पुरा [3]मन्त्राश्चण्डेशस्योद्धृता मुने ॥४६॥
[4]पूर्णेन्दु[5]संनिभं चास्य मण्डलं परिभावितम् ।
[6]साङ्गं तत्र निवेश्यादौ [7]चण्डेशं [8]टङ्कधारिणम् ॥४७॥
[9]सर्वयज्ञोपचारेण यागान्ते पूजयेत्सदा ।
[10]शोभास्य [11]शक्तितः कार्या विभवस्यानुरूपतः ॥४८॥
[12]भक्त्याविष्टस्य भगवांश्चण्डेशः परमेश्वरः[13] ।
प्रसन्नः सर्वकार्याणि साधकस्यामितद्युतेः ॥४९॥
प्रददाति [14]मनःस्थानि स्तोत्रेणाकृष्टमूर्तिमान् ।
नमस्ते भूतभव्येश शिवकायात्मने[15] नमः ॥५०॥
[16]महोग्ररूपिणे[17] विश्वनाथाय परमात्मने ।
रुद्रायामितवीर्याय पार्वत्यात्मभवाय च ॥५१॥
शक्तिगर्भाय [18]चण्डाय विशोकाय [19]महात्मने ।
[20]ज्वलत्परशुहस्ताय दण्डिने सुकपर्दिने ॥५२॥
नमस्ते विश्वरूपाय नम[21]स्तेऽग्निवपुष्मते ।
नमस्ते [22]शर्वशर्वाय जगतः कारणाय [23]च ॥५३॥
[24]स्तुत्वैवं [25]वरदं [26]नाथं [27]चण्डेशं [28]चण्डरूपिणम् ।

---

[1] 'ऋ' मातृकायां 'न केवलं' इत्यारभ्य 'साङ्गं' इत्यन्तभागस्य स्थाने 'न केवलाङ्गं' इत्येव दृश्यते।; 'ङ' मातृकायां '४६' उत्तरार्धं, ४७, ४८ श्लोकौ ४९ पूर्वार्धं च न सन्ति।

[2] परा — च.

[3] मन्त्राश्चण्डीश० — ऊ.

[4] पूर्णे तु सहितं — छ, ज.

[5] ०सहितं — ख, घ.

[6] साङ्गत्वा विनिवे० — ओ; साङ्गत्वाद्विनिवेश्याद — क.

[7] चण्डीशं — ऊ, ऋ.

[8] खड्गधा० — ख, घ, छ, ज.

[9] सर्वश्वेतोप० — ऊ, ऋ, च.

[10] भोस्य शक्ति ततः — ख, घ; भोस्य शक्तितः — छ, ज.

[11] भक्तितः — ओ, क, च.

[12] 'ऊ, ऋ' मातृकयोरिदमर्धं नास्ति।; भक्ताविष्टस्य — ओ, ख; शक्त्याविष्टस्य — च.

[13] चण्डेशपरमेश्वरः — छ, ज.

[14] मम स्थानि — ओ, क, ख; मनस्थानि — घ, ङ.

[15] ०कार्यात्मने — ख; ०गायात्मने — ङ.

[16] नमोग्र० — ख, घ, छ, ज.

[17] ०रूपिणं — ऊ, ऋ.

[18] दण्डाय — ऋ.

[19] महामुने — घ.

[20] ज्वलत्पुरुष० — ऊ, ऋ.

[21] ०स्ते त्रिव ... — ओ; ०स्ते त्रिपुरान्विषे — क; ०स्ते त्रिवपुष्मते — ख, ङ; ०स्तेऽति वपुष्मते — घ, छ, ज.

[22] सर्व सर्वाय — च.

[23] तु — ऊ, ऋ.

[24] नत्वैवं — ओ, क, ख, घ, ङ, छ, ज; स्तुत्वेदं — च.

[25] परमं — ख.

[26] नाथ — छ, ज.

[27] चण्डीशं — ऊ, ऋ, च.

[28] टङ्करूपिणं — ओ, ङ; टङ्कधारिणं — क; खड्गरूपिणं — ख, घ, छ, ज.

अष्टाङ्गप्रणिपातेन[1] [2]प्रणिपत्य विसर्जयेत् ॥५४॥

दीक्षालक्षणशक्तियागा[3]वसाने चण्डेश्वरस्य यागविधिः। अत एव ये [4]मोहात् "चण्डेष्टि-पर्यन्ता दीक्षा" इत्याहुः, ते प्रतिक्षिप्ताः ॥४६–५४॥

अथ व्याख्यातं प्रकरणार्थमुपसंहर्तुं व्याख्येयं चोपक्षेप्तुं तस्य विशिष्टविषयः, अधिकारः, अधिकारावधिः, फलं च स्रग्धराद्वयेनोच्यते —

[5]तत्त्वाध्वाव[6]स्थितेयं [7]भुवनपदकला[8]शक्तिमूर्तेर्विचित्रा
दीक्षा [9]क्ष्मादेः [10]क्षयित्री क्षपितमल[11]तनोर्या [12]शिवत्वप्रदात्री ।
[13]प्रोक्ता [14]संक्षेपयुक्त्या गुरुपदविभवः[15] प्रोच्यते ते[16] मुनीन्द्र[17]
[18]येनाऽऽविष्ट[19]शक्तिः प्रगलिततमसं[20] पुद्गलं[21] मन्त्रशक्त्या ॥५५॥

प्रोद्धृत्योत्कृष्ट[22]वीर्यं शिवपदमतुलं [23]शाश्वतं प्रापयेत्तं[24]
[25]निर्वर्त्योऽयं शिवाज्ञा[26]पथगतमनसा [27]स्वाधिकारो [28]नु यावत् ।

---

[1] ०प्रणिधानेन — ओ, क.

[2] संतर्प्याग्नौ क्षमापयेत् — ओ, क, ख, घ, ङ, च, छ, ज.

[3] ०वसाने चण्डी० — ऊ; ०वसानी चण्डी० — ॠ.

[4] मोहादन्तेष्टिर्यन्ता — ऊ, ॠ.

[5] तत्वाध्व० — छ, ज.

[6] . . यं — ऊ, ॠ; स्थितोऽयं — ओ, क, ख, घ, ङ, छ, ज.

[7] भवनवदकला — ओ, क.

[8] शक्तिसूत्रे विचित्रा — ऊ; शक्तिमूर्ते विच . . . ओ; शक्तिमूर्ते वि . . क; शक्ति-मुक्तेर्विचित्रा — ख, घ, छ, ज; शक्तिमूर्ते विचित्रा — ङ.

[9] स्मादेः — ओ; स्नादेः — च.

[10] क्षयित्रि० — ओ, घ, छ, ज; दीक्षयित्री — ख.

[11] ०तनोर्यः — ओ; तन्नोर्यः – क; ०ततो या – ख, घ, ज; ०तनो याः — ङ; ततो य — छ.

[12] शित्वं प्रणीति — ओ; शिवत्वं प्रणोति — क; शिवत्वे प्रणेत्री — ख; शिवत्वप्रणेत्री — घ, च; शिवत्वं प्रणोत्री — ङ; शिवत्र प्रणेत्री — छ, ज.

[13] सोक्ता — ओ, क, ख, घ, ङ, च, छ, ज.

[14] संक्षेपतोक्त्या — ओ, क, ङ, च; संक्षेपतोक्ता — ख, घ, छ, ज.

[15] ०विभवा — ओ, क, ङ; ०विभवं — च.

[16] प्रोच्यतेऽतो — च.

[17] मुनीन्द्रा — ओ; मुनीन्द्राः — ङ.

[18] येनाविष्टस्य शक्तिप्रग० — ख; येनाविष्ट-शक्तिप्रग० — घ, छ, ज; येनाविष्टशक्तिः प्रग० — ङ; येनाशाविष्ट० — च.

[19] शक्तिप्रगलित० — ओ, क.

[20] ०गलितसमं — ऊ, ॠ.

[21] पुल्कलं — ङ.

[22] ०वीर्या — ओ, क, ख, घ, छ, ज.

[23] शाश्वतीं — घ; शाश्वतिं — छ, ज.

[24] प्रापयीत — ओ, क, च; प्रापयित्रीम् — ख, घ; प्रापयित्री — ङ; प्रापयित्रिम् — छ, ज.

[25] निर्वर्त्येयं — ऊ, ॠ, घ, च, छ, ज; निर्वर्त्यैवं — ख.

[26] ०पतिगत० — घ, ङ, छ, ज; ०पथिगत० — च.

[27] साधिकारेण यावत् — ओ, क, घ, ङ; स्वान्ध-कारो न यावत् — च.

[28] न यावत् — ख, छ, ज.

[1]**दत्तोऽन्यस्मै [2]न तावत्क्षणमपि गुरुणा शक्यते त्यक्तुमाद्यः[3]**
**[4]स्वं स्वं निर्वर्त्य धीराः पशुपतिनिलयं यान्ति [5]सिद्धाः [6]स्वतन्त्राः ॥५६॥**

**इयम्** अपि पददीक्षा **तत्वाध्वा[7]वस्थिता** नवतत्त्वविषयत्वेन [8]प्रागुक्ता यतः। तथा **भुवनानि** [9]प्राग्भुवनदीक्षायामुक्तानि[10], **पदानि** पददीक्षायां, [11]तत्त्वानि तत्त्वदीक्षायाम्। **कला** इति चर्यामाह[12]। [13]ता एवाधिष्ठेयत्वेन प्रतिग्रहशक्तिरूपत्वेन **मूर्तिः** यस्य भगवतः, तस्य संबन्धिनी **दीक्षा** इयं [14]सर्वैव। अस्याः [15]प्रणेत्रा नान्यत्रैव समासो व्यासो वा दीक्षान्त[16]रस्य कृत इत्यर्थः। तथेयमपि **क्ष्मादेः क्षयित्री** प्रकृतितत्त्वपीठान्तर्भाविनेत्युक्तो[17] विशेषः। दानात् क्षपणान्ताद् **दीक्षा** इति व्याख्यातस्यार्थस्योपसंहारः।

अथ व्याख्येयस्योपक्रमः — **गुरोः पदं** येन गुरुः संपद्यते, तस्य [18]**विभवः** [19]प्रभवो जन्म यस्मादसौ **गुरुपदविभवः** आचार्याभिषेकविधिरित्यर्थः। अथास्यैवाधिकारः — **येन** गुरुपदविभवेनानुष्ठितेन सता **आविष्टा** निविष्टा **शक्तिः** यस्यासौ गुरुर्विशिष्टशक्तिः, प्राप्ताधिकार इत्यर्थः। तथाभूतः [20]सन् **मन्त्रशक्त्या** दीक्षा[व्या]ख्यानरूपया **प्रगलित**मलं परिणतमलं **प्रोद्धृत्य** प्रकृतत्वान्मलादिलक्षणेभ्यः पाशेभ्यः समुत्तेजितबलं च **तम्** एव कृत्वा **शिवपदं प्रापयेत्** स **प्रोच्यते** इति। एवं दीक्षाव्याख्यानयोराचार्यस्याधिकार इत्यर्थः। अथास्यैवाधिकारस्यावधिः — **निर्वर्त्योऽयमाद्यः** अधिकारस्तावद् गुरुणा शिवाज्ञयैव न तु लोभादिना; यावद् **अन्यस्मै** स्वशिष्याय आचार्याय **न** समर्पित इति। अथास्यैव फलम् — **स्वं स्वम्** अधिकारमेवं **निर्वर्त्य** गुरवः परां मुक्तिं **यान्ति**। अन्यथा तु —

[21]आज्ञाविलङ्घनात्प्रोक्तं क्रव्यादत्वं शतं समाः।" इति।

---

[1] दत्तोऽन्यस्तेन — ओ, क; दत्तान्यस्मै न–ख.
[2] 'ङ' मातृकायां नकारो नास्ति।
[3] ०माद्यं० — ओ, क, ख, ङ, च, छ, ज.
[4] स्वस्वं निर्वृत्य — ङ; स्वस्वं निर्वर्त्य — छ.
[5] विद्धा स्वतन्त्रम् — क; सिद्धा स्वतन्त्रम् — ख, ङ.
[6] स्वतन्त्रम् — ओ, घ, च, छ, ज.
[7] ०वस्थितनव० — ऋ.
[8] मतङ्ग० क्रिया० ९.१२ उ०—१९ पू० वृत्तौ।
[9] मतङ्ग० क्रिया० सप्तमपटले।
[10] ०दीक्षायामपि उक्तानि — ऋ.
[11],[12] संख्यान्तर्गतो भागोऽर्थानुसारेण शोधितः। मातृकायामुपलभ्यमानो भागोऽत्र यथावस्थितो लिख्यते — 'कलेति कलामाह — चर्यातत्त्वानि पददीक्षायाम्'
[13] त एवा० — ऊ, ऋ.
[14] सर्वे एव — ऊ, ऋ.
[15] प्रणेता नान्येन समासो — ऊ; प्रणेता नान्येव समासो — ऋ.
[16] ०स्य व कृत — ऊ, ऋ.
[17] ०नेत्युक्ते — ऋ.
[18] विभवाः — ऋ.
[19] प्रभावो — ऊ, ऋ.
[20] सन्म. . . शक्त्या — ऊ; सन् मुनिशक्त्या — ऋ.
[21] १. 'समयोल्लङ्घनात्प्रोक्तं क्रव्यादत्वं शतं समाः' (सार्धत्रि० २५.२उ०.)

केषुचित्तु पुस्तकेषु —

[1]"यस्मान्मोक्षाय[2] धात्रा[3] क्षितितलवसता[4]वस्थितानामजस्रं
[5]पाल्योऽवच्छिन्नमूर्तिः [6]शिवकविकिरणाविष्टसंतानमार्गे ।"

[7]इत्येवं स्रग्धरार्धमधिकं दृश्यते। तत्त्वयुक्तं पूर्वेणैव गतार्थत्वादर्धमात्रेण व्यवहाराभावाच्चेति ॥५५–५६॥

[इति श्री]भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ
क्रियापादे नवतत्त्वपीठदीक्षाप्रकरणं [नवमं समाप्तम्]

नवमः पटलः

---

[1] इदमर्धं ५६ तमश्लोकस्य तृतीयचतुर्थपादयोर्मध्ये 'ओ, क, ख, घ, ङ, च छ, ज' मातृकासु अधिकतया दृश्यते।

[2] तस्मान्मोक्षावधात्रा — ङ.

[3] यात्रा — ओ, क.

[4] ०वसिता० — ज.

[5] वल्येवच्छित्तमूर्तिः — ओ, क; पाल्यो विच्छित्तिमूर्तिः — ख, घ, छ; वाल्ये विच्छित्तमूर्ती — ङ; पाल्या विच्छिन्नमूर्तिः — च; पाल्यो विच्छिक्तिमूर्तिः — ज.

[6] शिवकविकिराविष्ट० — ओ, क; शिव . . कराविष्ट० — ख; शिवकराविष्ट० — घ, छ, ज; शिवकरविकिराविष्ट० — च.

[7] इत्याद्यत्र — ऊ, ॠ.

## दशमः पटलः

### अभिषेकप्रकरणम्

[1]अथातः परमेशान[2]वक्त्रपद्मात्सुशोभनात् ।
[3]नियोगार्थमिहायातो [4]ह्यभिषेकात्मको विधिः ॥१॥
[5]वक्तव्यः स यथातत्त्वं[6] शृण्वेकाग्रमना मुने[7] ।

**अथ** इति दीक्षातोऽनन्तरं, यतः [8]चतुष्पादार्थकुशलत्वादिना आचार्यकनियोगाय नियोज्यः[9], ततस्तस्य वि[शेष]निष्पादकोऽभिषेकविधिरुच्यते । न दीक्षितमात्रस्येत्यर्थः । यदि वात्राधिकारिणां[10] मध्यात् [11]समयिपुत्रयोः संस्कारविधिरुक्तो वा । अनन्तरमाचार्यसाधकयोरुच्यते । दीक्षितत्वसिद्धिश्च तयोरस्मिन्नपि पक्षे हेतु[12]त्वेनोपात्त[13]चतुष्पादार्थकुशलत्वादिनार्थसिद्धैवेत्यदोषः[14] ॥

स एवात्राचार्यकहेतुरुच्यते —

[15]चतुष्पादार्थकुशलं[16] महोत्साहं [17]ह्यनिन्दितम् ॥२॥
षट्पदार्थ[18]प्रणीतार्थं सर्वभूतहिते रतम्[19] ।
गुरुस्तमभिषिञ्चेत्तु[20] [21]चीर्ण[22]विद्याव्रतं नरम् ॥३॥

---

[1] अतः परं परेशान० — ओ, क, ङ.
[2] पद्म . . नात् — ओ; पत्मप० . . भनात् — क; पद्मपत्रात्सुशोभनात् — ङ.
[3] नियोगार्थं महायातो — छ; नियोगार्थं महाभागो — ज.
[4] ह्यभिषेको विधिः शुभः — ऊ, ॠ; ऽप्यभिषेकात्मको — ओ, क, ख, घ, छ, ज; ऽप्यभिषेकायात्मको — ङ.
[5] वक्तव्यं स्वयथा० — ओ, क; वक्तव्य स्व यथा० — घ; वक्तव्यसुयथातत्त्वाः — छ, ज.
[6] वक्तव्यस्तु . . हित्वा — ङ.
[7] श्रृणुकाग्रमहामुने — ॠ; श्रृणुष्वेकमनाधुना — ओ, ङ; श्रृणेष्वेकमनाधुना — क; श्रृणुष्वैकमनाधुना — ख, घ, च, छ, ज.
[8] मतङ्ग० क्रिया० ५.३,४; १०. २३०, ३; चतुष्पदार्था० — ऊ, चतुष्पादार्था — ॠ.
[9] नियोग्यः — ऊ; ०यानियोग्यः — ॠ.
[10] ०कारिणं — ऊ, ॠ.
[11] समयपुत्र० — ॠ.
[12] ०त्वेनापात्त० — ॠ.
[13] ०चतुष्पदार्थ० — ऊ, ॠ.
[14] ०वेत्येष दोषः — ऊ, ॠ.
[15] चतुष्पदार्थ० — ख, ङ.
[16] ०कुशलान् — ङ.
[17] अनिन्दितम् — ओ, क, ख, घ, ङ, च, छ, ज.
[18] ०प्रणेतार्थं — ऊ; ०प्रणेतारं — ॠ; ०प्रणीतार्थ० — च.
[19] रतः — च.
[20] ०मभिषिञ्चादौ — ओ; ०मभिषिच्यादौ — क, ख, घ, ङ, च, छ, ज.
[21] तीर्णविद्याव्रतं रतम् — ओ; तीर्णविद्यावृतं रतम् — क; तीर्णविद्यौ व्रतं रतम् — ङ.
[22] ०विद्याप्रतारतम् — ख, घ; ०प्रदारतम् — छ, ज.

परिपूर्णसमस्तसंहिताध्येतारं, न तु [1]कल्पतत्स्कन्धमात्रज्ञमभिषेचयेदित्यर्थः। **महोत्साहम्** इति अनलसं [2]यथाविहित[3]नित्यादिकर्मानुष्ठाननिष्ठमित्यर्थः। **अनिन्दितम्** इति हीनेन दुष्टेन वा कर्मणा, हीनेनाधिकेन व्याधितेन च शरीरेण, [4]निषिद्धकर्मानुष्ठानेन [5]यो न जुगुप्सितः, तमित्यर्थः। **सर्वभूतहिते रतम्** इति [6]दयाद्यात्मगुणयुक्तम्। **चीर्णविद्याव्रतं नरम्** इति स्त्रीनपुंसकयोर्व्युदासः ॥२–३॥

अथ किं तद्विद्याव्रतं, यत्तेन चीर्णमित्युच्यते —

**विद्याशक्ति[7]रिहोपात्ता जप्तव्या प्राक्छिवालये ।**
**[8]संनियम्येन्द्रिय[9]ग्राममब्दमेकं [10]शुचिष्मता ॥४॥**
**नित्यं [11]चरुभुजा [12]भूम्यां कुश[13]प्रस्तरशायिना[14] ।**
**पूजा[15]ग्निभवने युक्तचेतसा[16] भावितात्मना ॥५॥**
**[17]विद्याङ्गकृत[18]रक्षेण [19]समाप्त्यै मण्डलं गुरोः ।**
**नव[20]पद्मकृताटोपं [21]यजनीयं [22]च पूर्ववत् ॥६॥**

[ **विद्याशक्तिः** ] व्योमव्यापिलक्षणा ॥४–६॥

**ततोऽभि[23]षेक[24]योग्यः स्यान्नान्यथा युज्यते [25]यतः ।**
**[26]शापानुग्रहसामर्थ्यं [27]गुरोस्तेन प्रशस्यते ॥७॥**

---

[1] कल्पस्तत्स्कन्धमात्राज्ञा० — ॠ.
[2] यथावहित० — ऊ, ॠ.
[3] नित्य . . . ाधिकेन व्याधितेन — ॠ.
[4] निषिद्धरु. त्मानुष्ठानेन — ऊ; निषिद्धरु. र्मानुष्ठानेन — ॠ.
[5] योऽजुगुप्सितः — ॠ.
[6] यद्यात्म० — ऊ, ॠ.
[7] ०महोत्पाता — ओ, क; ०रिहोपान्ता — च, छ, ज.
[8] यन्नियम्ये० — छ, ज.
[9] ०ग्रामषष्ठमेकं — ओ; ०ग्रामशब्दमेकं — क, ख; ग्रामं शब्दमेकं — घ, ङ, छ, ज.
[10] शुचिष्मिता — ओ.
[11] चारुभुजा — ओ, क, ख, घ, ङ.
[12] ग्राम्यां — ख; भ्राम्यां — घ, ङ, छ, ज.
[13] ०प्रस्तार० — घ, छ, ज.
[14] ०साधिना — ङ.
[15] ०ग्निहवने युक्त० — ऊ, ॠ; ०ग्निभवनोद्युक्तं — ओ, क; ०ग्निर्हवनोद्युक्त० — ख, घ; ०ग्निभुवनेद्युक्त० — ङ; ०ग्निहवनोद्युक्ता — च; ०ग्निहवनोद्युक्त० — छ, ज.
[16] ०तेजसा — ओ, क.
[17] विद्यां कृततर० — ङ.
[18] ०रक्षेणु — छ, ज.
[19] समाप्तं मण्डले — ओ, क; समाप्ते मण्डले — ख, घ, ङ, च, छ, ज.
[20] ०पूर्वकृताटोपं — ओ, क; ०पर्वकृताटोप० — ख, घ, छ, ज; ०पर्वकृताटोपं — ङ, च.
[21] योजनीय तु — ओ; यजनीय तु — क.
[22] तु — ख, घ, ङ, च, छ, ज.
[23] ०षेकं — ऊ, ॠ.
[24] ०योग्य स्या० – ख, घ; ०योग्या स्या नान्यथा — ङ; ०योगः स्या० — छ.
[25] यता — ङ.
[26] यथोक्तग्रह० — च.
[27] गुरुस्तेन — च.

**ततः** विद्याव्रतान्नियमेन[1] संवत्सर[2]मनुष्ठितान्नवनाभमण्डलपूजापर्यन्ताद् **अभिषेकयोग्यः**। [3]अभिषिक्तश्च **शापानुग्रहकृदाचार्यो** भवति, **नान्यथा** इति ॥७॥

[4]व्रतमेतत्परं [5]पुण्यं [6]सिद्धावपि नियोजयेत् ।
[7]साधकस्यात्म[8]सिद्ध्यर्थमिदानीं [9]स विधीयते ॥८॥

**सिद्धावपि** हि **साधकस्य** एतदेव पूजाव्रतं योग्यतोत्पादनेन फलसाधकमिति साधकेनाप्यनुष्ठेयमिति। **इदानीम्** एतद्व्रतानुष्ठानोत्तरकालं **सः** अभिषेकविधिः **विधीयते** इति ॥८॥

मूलार्क[10]योगादिन्दोर्वा श्रवणेन [11]सहैकतः ।
ज्ञात्वा प्रोष्ठपदायां वा [12]लोहिताङ्ग[13]दिनं शुभम् ॥९॥
कृत्तिका[14]स्वथ बुद्ध्वा तु [15]दिनं विप्र बुधस्य [16]वा ।
गुरोर्वा [17]दिवसो [18]भद्रः [19]पुनर्वस्वृक्षसंगमात्[20] ॥१०॥
[21]फल्गुन्यां [22]शुक्रवारो वा [23]स्वात्यृक्षे वा शनैश्चरः[24] ।

---

[1] ०व्रतानियमेन — ऋ.
[2] ०मनुष्ठिता नव० — ऋ.
[3] अभिषक्तश्च — ऋ.
[4] 'छ, ज' मातृकयोरस्मिन् श्लोके 'परं' इत्यारभ्य 'इदानीं स वि' इत्यन्तो भागो लुप्तः।
[5] पूर्णं — ङ.
[6] सिद्धानामपि योजयेत् — ओ, क, ख, घ; सिद्धवानपि योजयेत् — ङ.
[7] साधकः स्वात्म० — ओ, क, ख, घ; साधक स्वात्म० — ङ, साधकस्त्वात्म० — च.
[8] ०शुद्ध्यर्थमितीदानीं — च.
[9] तद्विधास्यते — ओ, क, ख, घ, ङ; विधास्यते — च; . . . यास्यते — छ, ज.
[10] ०योगमिन्दोर्वा – ऊ; ०मिन्दयोगो वा – ऋ; वा — मीनयोगे — ओ; ०मीनयौगैर्वा — क, ङ; ०योगमीनोर्वा — ख, घ, छ, ज.
[11] सहैकता — ओ, क, ख, घ, ङ, छ, ज.
[12] मोहिताङ्गनिभं — ख, घ, छ, ज; लोहिताङ्गतिनवशुभम् — ङ; लोहिताङ्गादिनं — च.
[13] ०मिदं — ऊ, ऋ.
[14] ०स्थानभुक्त्वा तु — ओ; ०स्थानभक्त्या तु — क; ०स्थापनं बुद्ध्वा — ख; ०स्थानमं बुद्ध्वा — घ; स्थानमबुद्ध्वा तु — ङ; ०स्थानमावध्वा — छ; स्थानमं बध्वा—ज.
[15] तुटिनः प्रबलस्य वै — ख, घ, छ; तटिनः प्रबलस्य वै — ज.
[16] वै — ओ, क, ङ.
[17] दिवसे — ओ, क, ख, घ, ङ, च, छ, ज.
[18] भद्रे — ओ, क, ख, घ, ङ, च; रुद्रे – छ, ज.
[19] पुनर्विस्वृक्ष० — ऊ, ऋ; पुनर्वस्व समागतः — ओ, ङ; पुनर्वसु समागतः — क; पुनर्वस्व समागमम् — ख; पुनर्वस्व समागमः — घ, छ, ज.
[20] ०संगमे — च.
[21] फाल्गुण्यां — ऊ, ऋ; फाल्गुन्यां — ओ, क, ख, ङ, च, छ, ज.
[22] शुक्रवारे — ऊ, ऋ, ख; शुक्रवारं — ओ; घ, ङ, छ, ज; शुक्रवारां — क; गुरुवारे — च.
[23] स्वात्ये वाथ शनै० — ऊ, ऋ; स्वात्यक्षे पाशनै० — क; स्वात्यर्क्षे वायनै० — ख; स्वात्यर्क्षे वा — घ; स्वात्यक्षे वा — छ, ज.
[24] शनैश्चरे — च.

## आनन्दादियोगप्रदर्शनपट्टिका

(ज्योतिस्तत्त्वे पृ० ३२३–३२५)

भानौ दास्रभतः सोमे सौम्याद्भौमेऽहिभाद्बुधे ।
हस्तान्मैत्राद्गुरौ गण्याः सिते वैश्वाच्छताच्छनौ ॥४०॥
अथानन्दाभिधः कालदण्डो धूम्रः प्रजापतिः ।
सौम्यो ध्वांक्षो ध्वजश्चैते योगाः श्रीवत्सवज्रके ॥४१॥
मुद्गरच्छत्रमित्राणि क्रमान्मानसपद्मकौ ।
लुम्बोत्पातौ तथा मृत्युः काणः सिद्धिस्ततः शुभः ॥४२॥
अमृतं मुसलं चाथ गदमातङ्गराक्षसाः ।
चरः स्थिरो वर्धमानः स्वनाम्ना फलदा मताः ॥४३॥

| | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
|---|---|---|---|---|---|---|---|---|---|---|
| **योगाः** | आनन्दः | कालदं० | धूम्रः | प्रजाप० | सौम्यः | ध्वांक्षः | ध्वजः | श्रीवत्सः | वज्रम् | मुद्गरम् |
| **रविः** | अश्वि० | भर० | कृत्ति० | रोहि० | मृगः | आर्द्रा | पुन० | तिष्यः | आश्ले | मघा |
| **चन्द्रः** | मृगः | आर्द्रा | पुन० | तिष्यः | आश्ले० | मघा | पू०फा० | उ०फा० | हस्तः | चित्रा |
| **भौमः** | आश्ले० | मघा | पू०फा० | उ०फा० | हस्तः | चित्रा | स्वा० | विशा० | अनु० | ज्ये० |
| **बुधः** | हस्तः | चित्रा | स्वा० | विशा० | अनु० | ज्ये० | मू० | पू०षा० | उ०षा० | अभि० |
| **गुरुः** | अनु० | ज्ये० | मू० | पू०षा० | उ०षा० | अभि० | श्रव० | धनि० | शत० | पू०भा० |
| **शुक्रः** | उ०षा० | अभि० | श्रव० | धनि० | शत० | पू०भा० | उ०भा० | रेव० | अश्वि० | भर० |
| **शनिः** | शत० | पू०भा० | उ०भा० | रेव | अश्वि० | भर० | कृत्ति० | रोहि० | मृगः | आर्द्रा |

| | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० |
|---|---|---|---|---|---|---|---|---|---|---|
| **योगाः** | छत्रम् | मित्रम् | मानसम् | पद्मः | लुम्बः | उत्पातः | मृत्युः | काणः | **सिद्धिः** | शुभः |
| **रविः** | पू०फा० | उ०फा० | हस्तः | चित्रा | स्वा० | विशा० | अनु० | ज्ये० | मू० | पू०षा० |
| **चन्द्रः** | स्वा० | विशा० | अनु० | ज्ये० | मू० | पू०षा० | उ०षा० | अभि० | श्रव० | धनि० |
| **भौमः** | मू० | पू०षा० | उ०षा० | अभि० | श्रव० | धनि० | शत० | पू०भा० | उ०भा० | रेव० |
| **बुधः** | श्रव० | धनि० | शत० | पू०भा० | उ०भा० | रेव० | अश्वि० | भर० | कृत्ति० | रोहि० |
| **गुरुः** | उ०भा० | रेव० | अश्वि० | भर० | कृत्ति० | रोहि० | मृगः | आर्द्रा | पुन० | तिष्यः |
| **शुक्रः** | कृत्ति० | रोहि० | मृगः | आर्द्रा | पुन० | तिष्यः | आश्ले | मघा | पू०फा | उ०फा० |
| **शनिः** | पुन० | तिष्यः | आश्ले० | मघा | पू०फा० | उ०फा० | हस्तः | चित्रा | स्वा० | विशा० |

| | २१ | २२ | २३ | २४ | २५ | २६ | २७ | २८ |
|---|---|---|---|---|---|---|---|---|
| **योगाः** | अमृतम् | मुसलम् | गदः | मातङ्गः | राक्षसः | चरः | स्थिरः | वर्धमा० |
| **रविः** | उ०षा० | अभि | श्रव० | धनि० | शत० | पू०भा | उ०भा० | रेव० |
| **चन्द्रः** | शत० | पू०भा० | उ०भा० | रेव | अश्वि० | भर० | कृत्ति० | रोहि० |
| **भौमः** | अश्वि | भर० | कृत्ति० | रोहि० | मृगः | आर्द्रा | पुन० | तिष्यः |
| **बुधः** | मृगः | आर्द्रा | पुन० | तिष्यः | आश्ले० | मघा | पू०फा० | उ०फा० |
| **गुरुः** | आश्ले | मघा | पू०फा० | उ०फा० | हस्तः | चित्रा | स्वा० | विशा० |
| **शुक्रः** | हस्तः | चित्रा | स्वा० | विशा० | अनु० | ज्ये० | मू० | पू०षा० |
| **शनिः** | अनु० | ज्ये० | मू० | पू०षा० | उ०षा० | अभि० | श्रव० | धनि० |

[1]आनन्दादियोगेभ्यो मध्यादयमेकोनविंशतितमः [2]सिद्धाख्यो योगः कथ्यते। एवम् **इन्दोः श्रवणेन,** भौमस्योत्तरभद्र[3]पदया, **बुधस्य** [4]कृत्तिकया, बृहस्पतेः पुनर्वसुना, शुक्रस्य पूर्वफल्गुन्या[5], शनेः स्वात्या च योग उत्तराषाढानन्तरमभिजिद्गणनया स एवैकोनविंशतितमः सिद्धयोगोऽत्र विनियुक्तः, नान्यः। दीक्षादौ तु अन्येऽप्यविरुद्धाः। यदुक्तं श्रीमत्**स्वायंभुवे**[6] —

[7]"नाम्नैवावेदितायोगानेकादश परित्यजेत् ।
[8]शिष्टैः कार्याणि कुर्वीत" इति ॥

**शुक्लपक्षे [9]च [10]सुतिथौ [11]सम्यक्प्राप्योत्तरायणम्[12] ॥११॥**
**महामण्डलवत्सर्वं कर्तव्यमनुपूर्वशः ।**
**स्वच्छपानीय[13]संपूर्णान् रत्नगर्भान्सुशोभनान्[14] ॥१२॥**
**[15]सर्वौषधियुतान्कृत्वा चन्दनेन [16]सुर्चचितान् ।**
**[17]स्रग्दाम[18]कण्ठान् [19]सुदृढाञ्श्वेतवस्त्रावकुण्ठितान्[20] ॥१३॥**
**[21]यथालाभं चितान्भद्रा[22]नष्टावित्यधिवासयेत् ।**
**[23]कलशान्यागभूमौ तु [24]तदभावात्सुशोभनम् ॥१४॥**
**[25]एकं वाप्यथवा [26]शङ्खं [27]निर्व्रणं [28]शुभलक्षणम् ।**

---

[1] आनन्दादियोगाश्चात्र निवेशितपट्टिकायां द्रष्टव्याः।
[2] अयं सिद्धाख्यो योगः ज्योतिस्तत्त्वे 'सिद्धिः' इति निर्दिष्टः।
[3] ०पदाया — ऋ.
[4] कृत्तिकाया — ऋ.
[5] ०फल्गुण्या — ऊ; ०फाल्गुण्या — ऋ.
[6] स्वायंभुवे १६.२०.
[7] राम्नैव वेदिकायोगादेकादश — स्वायम्भुवमातृकापाठः।
[8] 'शिष्टैः कार्याणि कुर्वीत' इत्येतत्स्वायम्भुवमातृकायां न लभ्यते।
[9] तु — ओ, क, ङ; वसुतिथौ — च.
[10] संदिधौ — ङ.
[11] प्रदातव्योत्तरायणे — ओ, क.
[12] ०रायणे — ख, घ, ङ, छ, ज.
[13] ०संपूर्णरक्तगर्भं — ओ; ०संपूर्ण रक्तगर्भं — क; ०संपूर्ण रत्नगर्भं – ख, घ, छ, ज; ०संपूर्णं रत्नं गर्भं — ङ; ०संपूर्णां रत्नगर्भां — च.
[14] सुशोभनम् — ओ, क, ख, घ, ङ, छ, ज; सुशोभनाम् — च.
[15] सर्वोषधि० — ऊ, ऋ; सर्वविधिपुरस्कृत्वा — ओ; सर्वौ विधिपुरस्कृत्वा — क; सर्वौषधी पुरस्कृत्य — ख; सर्वौषधीः पुरस्कृत्य — घ, छ, ज; सर्वौधपुरकक्रत्वा — ङ; सर्वौषधियुतां — च.
[16] सुर्चचिताम् — ऋ, च; सुतर्पितान् — क; तु चर्चितान् — ख, घ; तु चर्चितात् — छ, ज.
[17] स्रुगाम० — छ, ज.
[18] ०कर्णान् — ख, छ, ज; ०कण्ठात् — ङ; ०कण्ठां — च.
[19] सुदृढां — च.
[20] शुभवस्त्रावगुण्ठितान् — ऊ, ऋ; ०गुण्ठिताम् — च.
[21] 'ऊ, ऋ' मातृकयोरिदमर्धं नास्ति। यथालाभोचितां भद्रां — च; यथालाभोचितान् – छ, ज.
[22] ०नष्टविद्या० — ओ, क; नष्टौ विद्या० — ख, घ, ङ, छ, ज.
[23] कलशानष्ट भूमौ — ओ; कलशान्यष्ट भूमौ — क, ङ.
[24] तेभ्योऽभावात्सुशोभनम् — ओ, क, ख, घ, ङ, छ, ज; तेभ्योऽभावात्सुशोभनाम् — च.
[25] एवं वाप्यथवा — ख, घ, छ, ज.
[26] भङ्गशङ्ख० — ख; शङ्खा — ङ.
[27] निर्वाणं — ओ, क; निर्वृणं — ख, घ, छ, ज.
[28] गुरुलक्षणम् — ओ, क, ख, घ, ङ, छ, ज.

रिक्ततिथिनिषेधः। यदुक्तं श्रीमत्पौष्करे[1] —

[2]"नन्दा भद्रा जया रिक्ता पूर्णा च [3]तिथयो मताः।
प्रतिपत्क्रमेण ताभ्यो रिक्तां श्रेयो विसर्जयेत्॥" इति।

**महामण्डलवत् सर्वम्** इति महामण्डलं विद्यते यस्य तन्महामण्डलवत् **सर्वं** साधकस्याप्यभिषेकविधानं कर्तव्यं महामण्डलं संपूज्येत्यर्थः। [4]यदाह — **यागभूमौ** इति। **यथालाभं चितान्** इति लाभानुसारेण संचितानित्यर्थः। यदुक्तं [5]श्रीमत्पौष्करे[6] —

"काञ्चनान्राजतांस्ताम्रान्मृण्मयान्वा सुशोभनान्।" इति।

**तदभावात्** इति तेषामभावाच्छोभनम् **एकं वा** इति। अभावविकल्पोऽयमेकस्य कलशस्य शङ्खेन सह॥

**[7]यागभूमेर्बहिः [8]कार्यं पीठमुत्तरतः [9]शुभम्॥१५॥**
**द्विहस्तं सुसमं [10]भद्रमुच्छ्रायेण [11]तदर्धतः।**
**[12]सुसितेन वितानेन [13]प्रविसारितखेतलम्॥१६॥**
**पताकाभिर्विचित्राभिर्ध्वजैश्च धवलैः शुभैः।**
**[14]दिग्विदिक्संस्थितैश्चोच्चैस्तोरणै[15]श्चाप्यनिन्दितैः॥१७॥**
**तन्मध्ये कमलं [16]शुभ्रं पूर्ववत्परिकल्पयेत्।**
**कल्पयित्वा [17]ततः शिष्यं [18]शङ्खवादित्रनिःस्वनैः[19]॥१८॥**
**[20]माङ्गल्यैर्वि[21]विधैः [22]स्नातं [23]निर्मर्च्य च पुनः पुनः।**
**सारदारुमये पीठे [24]श्रीपर्णितरुसंभवे॥१९॥**
**श्वेतवस्त्र[25]कृताटोपं संनिवेश्य पुरा ततः।**

---

[1] आकरो न लभ्यते।
[2] नन्द्रा — ऊ, ऋ.
[3] तिथयोत्तमाः — ऋ.
[4] यदाहुः — ऋ.
[5] श्रीपौष्करे — ऊ.
[6] आकरो न लभ्यते।
[7] यागभूमौ बहिः — ख, घ, ङ; यागभूमौ बलिः — छ, ज.
[8] कार्यपीठ० — ङ.
[9] शुभाम् — घ, छ, ज.
[10] विप्र उंच्छ्रायेण — ऊ; विप्र उच्छ्रायेन — ऋ.
[11] तदर्धतम् — ख.
[12] स्वंसितेन विना तेन — ऋ; सुधितेन विधानेन — ओ, क, ङ.
[13] प्रवितानित० — ऊ, ऋ.
[14] दिग्वेदिसं० — ऊ; दिग्वेदिसंस्थिते चैव स्तोरणैश्चापि निन्दितैः — ऋ; दिशिदिक्संस्थि० — ङ; दग्निदिक्संस्थि० — छ, ज.
[15] ०छाप्यनिन्दितैः — छ; छाप्यनिन्दिते — ज.
[16] शुक्लं — ऊ, ऋ, च.
[17] तु तं — ऊ, ऋ; तु तच्छिष्यं — च.
[18] शङ्खैर्वादित्र० — क.
[19] ०निस्वनैः — क, ख, छ, ज.
[20] मङ्गलैर्वि० — उ, ऋ, ख, च, छ, ज; मङ्गल्यैर्वि० — घ.
[21] ०विधैस्तेन — ओ, क, ङ.
[22] स्नानं — ऋ, ख, घ, च, छ, ज.
[23] निर्भर्त्स्य च — ऊ, ऋ; निर्वर्त्य च — ख, घ, च, छ, ज.
[24] श्रीपर्णीतरु — ऊ, घ, च; श्रीपर्णतरु० — ऋ; श्रीपर्णतरु० — ओ, क.
[25] ०कृताटोपे सं — ऊ, ऋ, ख, घ, ङ, च, छ, ज; ०कृताटोपसं० — ओ.

[1]दूर्वामृता यवा [2]लाजाः [3]सिद्धार्थाः [4]सशमीदलाः ॥२०॥
[5]निर्मर्चनादिमाङ्गल्यैः[6] संयोज्य[7] प्रयतात्मना ।
[8]सम्यगुद्वर्तितं[9] [10]विप्र [11]चन्दनादिभिरादरात् ॥२१॥
[12]सुसिते [13]वाससी पश्चा[14]त्परिधाप्याभिमन्त्रयेत्[15] ।
मन्त्रैः सर्वैर्यथान्यायं ततः पीठे [16]निवेशयेत् ॥२२॥
[17]प्रागेव [18]कल्पिते गन्धधूपपुष्पादिभिः क्रमात् ।
एकैकं कलशं मन्त्रैः पूर्वमेवाभिमन्त्रितम्[19] ॥२३॥
[20]विद्येश्वराणां [21]क्रमशस्ततः शक्तिमुदीरयन्[22] ।
[23]सौम्याननो गुरुः [24]प्राच्यां तं शिष्यमभिषेचयेत्[25] ॥२४॥
[26]सेचितं भूषयेत्सम्यक्श्वेतवस्त्रादिभिः[27] क्रमात् ।
[28]रत्नैश्च विविधै[29]श्चित्रैर्यथा[30]संभवतोऽपि वा ॥२५॥

अयमत्रानुष्ठानक्रमः — **शिष्यं शङ्खवादित्रनिःस्वनैः** [ विविधैर्माङ्गल्यैः ] **स्नातं**[31] **चन्दना[दि]भिः** विलेपितं [32]प्रावृतश्वेतवस्त्रं **सारदारुमये पीठे** निवेश्य, दूर्वादिमङ्गलैः असकृद् [33]**निर्मर्च्य सर्वमन्त्रैः** [34]शिखाभेदेनाभिमन्त्र्य, **यागभूमेर्बहिः** उत्तरस्यां दिशि [35]द्विहस्तोच्छ्रितसुश्वेतकमलमध्यस्थ-

---

[1] दूर्वाम्रता — क; दूर्वामृताथवा — ख.
[2] लाजा — ओ; लार्ताः — ज.
[3] सिद्धार्था — ओ, क, ङ; सिद्धार्थः — ख.
[4] स मषीदलाः — ऊ, ॠ; सशमीदला — ओ; सशमीतिला — क; शशमीदला — ख; ०श्च शमीदला — घ; च शदीदलः — ङ; शिशिमीदलाः — छ; शिशिमीदला— ज.
[5] निर्मत्सरादि० — ऊ, ॠ, ख, घ, छ, ज; निर्मत्सनादि० — क, ङ; निर्मन्थनादिं—च.
[6] ०मङ्गलैः — ऊ, ॠ; ०मङ्गल्ये — ख; ०मङ्गल्यैः — घ, छ, ज, मङ्गल्यै — ङ.
[7] संयोज्याः — च.
[8] संयहुर्वर्त्यनं — ज.
[9] ०द्वर्तितां — ऊ, ॠ; ०र्वर्तितं — क; ०द्वर्तनं — ख, घ, छ; ०र्वक्तितं — ङ.
[10] स्नानं — ओ, क, ख, घ, ङ, च, छ, ज.
[11] चन्दनाभिरा० – उ; चन्दनाभिश्च आद०–ॠ.
[12] स्वसिते — ॠ; सिते तु — ओ, क, ख, घ, ङ, छ, ज.
[13] वासिते — ॠ.
[14] ०त्परिधायापि — ओ, क; ०त्परिधायाभि० — ख, घ, ङ, च, छ, ज.
[15] ०मन्त्रिते — च.
[16] निवेश्य तु — ओ, क, ख, घ, ङ, च, छ, ज.
[17] प्रागोवकल्पिते — छ; प्रागोपकल्पिते — ज.
[18] कल्पितैर्गन्धपुष्पधूपादिभिः क्रमात् —ओ, क, ङ.
[19] ०भिमन्त्रयेत् — ओ, क.
[20] विद्येश्वरैस्तु — ओ, क, ख, घ, ङ, छ, ज.
[21] कलशं कम्शक्ति० – ओ; – कलशं क्रमशक्ति० — क, ख, घ; कलशं क्रमः शक्ति० — ङ.
[22] ०मुदीरयेत् — ख, घ, ङ, च, छ, ज.
[23] सौम्यानां गुरु० — ओ; सौम्याननं — क, ख, घ, च, छ, ज; सौम्याननं गुरु० — ङ.
[24] प्राज्ञस्तं — ऊ, ॠ; ०प्राच्यान्तं — ओ; ०प्राच्या तं — ङ.
[25] ०भिषिञ्चयेत् — ओ, घ.
[26] सेवितं — ऊ, ॠ, ख, ङ, छ, ज.
[27] शतवस्त्रादिभिः — च.
[28] अनैश्च — ख, घ, ज; अन्यैश्च — छ.
[29] ०श्छत्रै० — घ.
[30] ०विभवतो० — ओ, क.
[31] स्नानं — ऊ, ॠ.
[32] प्रावृत्त० — ॠ.
[33] निर्मर्त्स्य — ऊ, ॠ.
[34] शिखभे० — ऊ.
[35] द्विहस्तोच्छ्रिते सु — ॠ.

पीठे ध्वजतोरणपताकाद्युपशोभितेऽष्टाभिर्विद्येश्वरजप्तैः कलशैः [1]क्रमेण पूर्वाभिमुखमुत्तराभिमुखो गुरुः व्योमव्यापिनमुच्चारयन् **अभिषेचयेत्**। ततः प्रावृतानार्द्रशुक्लवासोऽन्तरं भूषणैः **भूषयेत्** इति ॥१५–२५॥

**[2]ततः शिवतनुं कृत्वा प्रणम्य च सदाशिवम् ।**
**पीठोष्णी[3]षातपत्रादि ज्ञानं चैव शिवात्मकम् ॥२६॥**
**[4]देयमुत्थापयेत्पश्चात्पाणिना[5] दक्षिणेन तु ।**
**प्रभोः [6]प्रपातये[7]त्पादे शिष्यमाचार्यसत्तमः[8] ॥२७॥**
**आमन्त्र्य परमेशानं [9]भगवन्गुरुसंततौ ।**
**[10]नियुक्तोऽयं मया नाथ [11]तवाज्ञानुविधायिना[12] ॥२८॥**
**[13]वक्तव्यः सोऽप्यथैवं[14] [15]स्याद्वत्स [16]त्वयि तु संस्थितः ।**
**पाल्यो नु [17]संततावाप्तः [18]सोऽधिकारः शिवाज्ञया ॥२९॥**
**ततोऽग्नौ [19]तर्पयेत्सम्यङ्मन्त्रग्राममनिन्दितम्[20] ।**
**सुसुगन्धेन हविषा[21] यथाशक्त्या समाहितः ॥३०॥**
**[22]ततः प्रभृति लोकेऽस्मि[23]ञ्शिववच्छिव[24]संमतः ।**
**[25]शापानुग्रहकृद्धीरः[26] कारणेच्छानुवर्तकः[27] ॥३१॥**

---

[1] मन्त्रेण — ऋ.
[2] शिववच्छिवतां कृत्वा — ओ, क, ङ; शिववच्छिवरूपत्वात् — ख, घ, छ, ज; शिवतनुर्भूत्वा — च.
[3] ०षं च पात्रादीन् — ओ, क, ख; ०षातपत्रादीन् — घ, ङ, च, छ, ज.
[4] देवमु० — ओ, क, ङ.
[5] ०त्प्राणिना — ख.
[6] प्रदापयेत्पाद्यं — ओ, ङ; प्रतापयेत्पाद्यं–क, ख.
[7] ०त्पदभ्यां — ऊ, ऋ, च; ०त्पाद्यं – घ, छ, ज.
[8] ०सत्तम — ऊ, ऋ; ०सत्तमम्—ख, घ, छ, ज.
[9] भगवान् — ख, घ, च, छ, ज.
[10] निरुक्तोऽयं — ख.
[11] तवाज्ञान० — ऋ.
[12] ०विधायिनम् — च.
[13] वक्तव्यं — च.
[14] ०प्यथैव — ख.
[15] स्याद्वत्म तु त्स्वयि स्थितः — ऊ; स्यात्त्वत्समस्तं त्वयि स्थितम् — ओ; स्यात्त्वत्समस्तत्वधि स्थितम् — क; स्यात्तत्समस्त्वत्ववित् स्थित — ख; स्यात्तत्समस्तत्त्वविित्स्थित — घ, छ; स्यात्वत्समस्तत्ववस्थितः — ङ; स्यां त्वत्समन्त्र्य त्वयि स्थितः — च; स्यात्तत् समस्तत्त्ववित्स्थितः — ज.
[16] तस्थयि संस्थितः — ऋ.
[17] सन्तता व्याप्ताः — ऊ; सन्ततावाप्ता — ऋ; सन्ततावाप्त० — ओ, क, ङ; सन्ततां वाप्त० — ख, छ, ज; सन्ततां व्याप्त०—घ.
[18] स्वोधिकारः — ऊ; सोऽधिकार० — ऋ; साधिकारः — ओ, क; स्वाधिकारे — ख, घ, छ, ज; स्वाधिकार० — ङ, च.
[19] तर्पयेत्सम्यक् स तु ग्राम० — च.
[20] ०मनिन्दिताम् — ऋ; ०मनिन्दितः — क, ख, घ, ङ, ज.
[21] सुसगन्धे विषयायाथ – ओ; सुसगन्धे विषयाथ — क; स तु गन्धे हविषा० — ङ.
[22] अद्य प्र० — ओ.
[23] ०ञ्शिववाञ्छिव० — छ, ज.
[24] ०संमितम् — ओ; ०सत्तमः — ख, घ, छ, ज; ०वर्मतः — ङ.
[25] पाशानु० — ऊ.
[26] ०कृद्वीरः — ऊ, ऋ, च.
[27] कारणेशश्चानुवर्तिकः — ङ.

कृतपूर्वशिवतनुरप्यसावत्युच्चपीठस्थोऽभिषेकजलेनोपहतजङ्घादिरिति तच्छौच[1] पूर्वं पुनः **शिवतनुं कृत्वा,** मण्डलस्थं भगवन्तं **प्रणम्य,** प्रभुत्वचिह्नं **पीठोष्णीष**च्छत्रपादुकं[2] तस्य समर्पयेत्। शिवज्ञानं च पुस्तकात्मकमेव। ततस्तं परमेश्वरपादयोर्विनिपात्य[3], "[4]गुरुत्वे **अयं मया तव** आज्ञया **नियुक्तः**" इति परमेश्वरं विज्ञाप्य, **अथ** अनन्तरं **सोऽपि** शिष्यः **एवं वक्तव्यः** भवेत्। यथा — "पुत्रक योऽयं मत्तः सकाशात् प्राप्तः अधिकारः, [5]**सः त्वयि** स्थित इति कृत्वा **शिवाज्ञया** शास्त्रविहितेन क्रमेण **पाल्यः**, न तु लोभादिना" इति। **ततोऽग्नौ** मन्त्रान् **तर्पयेत्** इत्याचार्यस्याभिषेकः ॥२६–३१॥

**[6]साधकस्याप्ययं [7]प्रोक्तो विधिः शास्त्रे शिवोदिते[8] ।**
**छत्रोष्णीषोज्झितं[9] किं तु [10]स्वमन्त्रेणाभिषेचयेत् ॥३२॥**
**[11]तदर्थमप्यथेशानं प्रणम्य शिरसा भवम् ।**
**विज्ञापयेद्गुरुः[12] [13]प्राज्ञः साधकोऽयं [14]तवाज्ञया ॥**
**मयाभिषिक्तो[15] देवेश सिद्धिर्भवतु[16] शाश्वती ॥३३॥**

**साधकस्याप्ययम्** एवाभिषेक**विधिः**। **किं तु स्वमन्त्रेण** इति व्योमव्यापिनः प्राप्तस्य बाधः, न तु कलशाभिमन्त्रणविद्येशमन्त्राणाम्। अस्य च प्रभुचिह्नं छत्रमुष्णीषं च न समर्पयेदिति ॥३२–३३॥

अथ व्याख्यातस्य प्रकरणस्योपसंहाराय व्याख्येयस्य चोपक्रमाय श्लोकः —

**[17]उक्तोऽभिषेको[18] गुरुसाधकानां**
**समासतः शास्त्र[19]विधाविदानीम् ।**
**व्यावर्ण्यते [20]सिद्धिविधान[21]मित्थं**
**[22]शिवाननाब्जाद्विसृतं[23] पुराणम् ॥३४॥**

[इति श्री]भट्टनारायणकण्ठात्मजभट्टरामकण्ठविरचितायां मतङ्गवृत्तौ क्रियापादे
अभिषेकप्रकरणं [दशमं समाप्तम्]
**दशमः पटलः ।**

---

[1] ०पूर्वे — ऊ, ऋ.
[2] ०पादुकौ — ऊ.
[3] ०विन्यपात्य — ऋ.
[4] गुरुस्तेऽयं — ऋ.
[5] सत्त्वयस्थितः — ऊ; स त्वयस्थितः — ऋ.
[6] आचार्यस्या० — ऊ, ऋ.
[7] प्रोक्तो शिवशास्त्रे — ओ; प्रोक्तविधिः — ख; प्रोक्तं — च; प्रोक्तः शिवशास्त्रे — छ; प्रोक्तः शिवशास्त्र० — ज.
[8] शिवोदये — ओ, क.
[9] ०षोञ्चितं — क; ०षोझ्रितः — च.
[10] समन्त्रे० — ङ.
[11] तदर्थ० — ख, घ, छ, ज.
[12] ०द्गुरुं — ख, घ, छ, ज; ०द्गुरु० — ङ.
[13] प्राज्ञ — क, ख.
[14] सवाज्ञया — छ.
[15] ०भिशक्तो — ऋ; ०भिषक्ते — ङ.
[16] ०र्भवति — ओ, क, ख, घ, ङ, छ, ज.
[17] युक्तो — च.
[18] ०भिषेके — ङ; ०भिषक्तो — च.
[19] ०विधान . . . ओ, क.
[20] सिद्धवि० — ङ; सिद्धिविदान० — छ, ज.
[21] ०भूमि — ऋ.
[22] शिवाननाज्जातु विनिःसृतं पुरा — च.
[23] ०द्विसृता — क.

## एकादशः पटलः

## सिद्धिप्रकरणम्

अथ भक्तित्रया[1]विष्टः साधकः शास्त्रवित्तमः[2]।
गुरोर्गृहीतमन्त्रस्तु [3]सत्त्ववान्कृतनिश्चयः ॥१॥
गत्वा [4]वनवरं[5] मन्त्री [6]सुसहायः [7]शुचिस्तथा[8]।

**अथ** इति साधकाभिषेकादनन्तरं प्राप्ताधिकारः **साधकः** [9]येनोपायेन सिद्धिं प्राप्नोति, तमाह — **भक्तित्रयाविष्टः** इति शिवमन्त्रगुरुविषयेण भक्तित्रयेण। **शास्त्रवित्तमः** इति नोऽविदुषः सिद्धावधिकार इत्यर्थः ॥

[ वने गृहकल्पनम् ]

[10]तत्र कृत्वा शुभं [11]गुप्तं सुविचित्रमनातुरम् ॥२॥
स्थानमासाद्य मेधावी [12]गृहं रक्षाविधानतः।
[13]खादिरैः [14]कीलकैस्तीक्ष्णैरष्टभिः[15] सुसमैर्दृढैः[16] ॥३॥
पञ्च[17]रङ्गिकसूत्रेण [18]विद्याङ्गपरिवेष्टितैः[19]।

---

[1] ०विष्टिसाधकः — छ, ज.

[2] ०वित्तमम् — ख.

[3] सत्यवाक्कृत० — ओ, ङ; सत्त्ववाक्कृत० — च; सत्यवान् — छ, ज.

[4] येन परं — ओ, क, ख, घ, छ, ज; येन पुनर्म .. — ङ; वनं परं — च.

[5] 'पुण्यक्षेत्रं नदीतीरं गुहापर्वतमस्तकम्।
तीर्थप्रदेशः सिन्धूनां संगमः पावनं वनम् ॥
उद्यानानि विविक्तानि बिल्वमूलं तटं गिरेः।
देवतायतनं कूलं समुद्रस्य निजं गृहम् ॥
साधनेषु प्रशस्तानि स्थानान्येतानि मन्त्रिणाम्।'
(कुलार्णवे १५.२२–२४ पू०.)

[6] सुसहायशिशुः — ओ, ङ; द्वितीयश्लोकस्य द्वितीयतृतीयचतुर्थपादाः 'छ', 'ज' मातृकयोर्लुप्ताः।

[7] शिशुस्तथा — क.

[8] 'ख, घ' मातृकयोः द्वितीयश्लोकस्य द्वितीयपादो लुप्तः।

[9] येनापायेन — ऋ.

[10] 'ख' मातृकायामिदमर्धं नास्ति।

[11] गुप्तमनश्चायमन .. — ओ, घ; गुप्तमनश्चायमनातुरम् — क; गुप्तमनश्चायमनाधुनम् — ङ; गुप्तमनावाधमनातुरम् — च.

[12] ग्रहरक्षा० — ओ, क; गृहरक्षा० – ख, घ, ङ, छ, ज.

[13] ख्यातिरैकलकै — ङ.

[14] खलकै० — ओ, क.

[15] श्लक्ष्णैरष्टभि० — ऊ, ऋ.

[16] सुसमैर्वणम् — ओ, क; सुसमृद्धिदम् — ख, घ, छ, ज; सुसमैर्व्रणम् — ङ.

[17] ०रङ्गित० — ख.

[18] विद्याङ्गं — ङ.

[19] ०वन्दितैः — ओ.

बहिरावसथाद्दिक्षु[1] ज्ञात्वा [2]संक्रमणं क्षितिम्[3] ॥४॥
निखनेद्धस्तमात्रेण[4] [5]गृणन्पाशुपतं मनुम्।

प्रोक्तं शुभादिविशेषणं स्थानमासाद्य तत्र गृहं कृत्वा, तस्माच्च बहिः संक्रमणस्थानं परिगृह्य पाशुपतास्त्रमुच्चारयन् हस्तमात्रं परिखात्वेन क्षितिं निखनेद् इति।

[ मन्त्रसिद्धये साधकाचाराः[6] ]

फलमूलादिभिः [7]पूतैर्वर्तयेज्जपमाचरेत्[8] ॥५॥
[9]भस्मशय्यासमारूढो [10]भस्मधारी च नित्यशः।
[11]संहितामेकचित्तस्तु [12]षण्मासं कृतनिश्चयः[13] ॥६॥
प्रातर्मध्यंदिनं सायमर्धरात्रं च नित्यशः।
पूजाग्निहवने[14] [15]सक्तः [16]क्षिपेत्सिद्धयुत्तमे स्थितः[17] ॥७॥

---

[1] ०रावसदादिषु — ऋ; ०थादिक्षु — क, ख, घ, ङ, छ, ज.
[2] संक्रमणे — ऊ, ऋ; चक्रमणं — ओ, क, ङ; चक्रमक्षितिम् — ख, घ, छ, ज; च क्रमशः — च.
[3] क्षितिः — ओ.
[4] ०मात्रां तु — ऊ, ऋ; ०द्वस्त्रमात्रांस्तान् — च.
[5] गृण पाशु० — ऊ, ऋ; ग्रहणं पाशु० — ओ, ङ; गृहं पाशु० — क; गृणान् पाशु० — ख; तान् गृणान् पाशु० — घ; गृह्णन् — छ, ज.
[6] 'कुर्याद्विंशतिकर्माणि जपसिद्धिकराणि च'।
'मन्त्रो निरोधो मन्त्रार्थचिन्तनं नित्यकर्म च।
नैमित्तिकं श्रौतमौने परसङ्गस्य वर्जनम्।
भूमिशय्या त्रिषवणस्नानं प्रात्यहिकार्चनम्।
नित्यदानं गुरोः पादपूजाहारनिमन्त्रणे।
स्नानं च पञ्चगव्येन पवित्रकरधारणम्।
त्रिसंध्यं वन्दनं पञ्चयज्ञास्तर्पणमेव च।'
(मेरुतन्त्रे ६.३९९पू०; ४०२-४०४)
[7] पूतैर्वर्तते जप० — ऊ, ऋ; पूतैर्वृत्तयेज्जाप० — क, ङ; पूतैर्मन्त्रयेज्जप० — ख, घ, छ, ज.
[8] ०ज्जापमाचरेत् — ओ; ०ज्जपमाचरन् — च.
[9] स तस्म चर्या० — ङ; भस्मशय्यां — च; भस्मचर्य० — छ, ज.
[10] भस्मस्नायी — ऊ, ऋ; भस्मशायी — ख, घ, च, छ, ज.
[11] षष्ठश्लोकस्योत्तरार्धं सप्तमश्लोकस्य पूर्वार्धं च न स्तः 'ऊ, ऋ' मातृकयोः।
[12] षण्मासेषु — च.
[13] ०निश्चयाः — ङ. 'कृतनिश्चयः' इत्यारभ्य अष्टमश्लोकस्य पूर्वार्धे 'चाक्षैः' इत्यन्तो भागः 'च' मातृकायां न दृश्यते।
[14] ०भवने — ओ, क, ख, ङ.
[15] शक्तं — ऊ; सक्त० — ऋ.
[16] क्षिपेत्सिद्धयुद्धमे — ऊ. क्षिपित्सिद्धिद्धमे — ऋ, जपेत्सिद्युत्तमे — ओ; क्षपेत्सिद्धयुत्तमे — घ, ङ.
[17] स्थितिः — ऊ, ऋ; स्थित — ओ.

[१] [ अक्षमाला ]

अक्षमालार्पितकरो [२] मालां चाक्षैः सुशोभनैः ।
[३] रुद्राक्षैः कारयेन्मन्त्री [४] शतेनाष्टोत्तरेण [५] तु ॥८॥
दिव्यसिद्धौ [६] [७] प्रसक्तात्मा पुत्र [८] जीवाक्षनिर्मिता [९] ।
[१०] धार्या वा साधकेन्द्रेण [११] मर्त्यसिद्धयुद्यतात्मना ॥९॥
पद्माक्षनिर्मिता माला [१२] प्रशस्ता [१३] ब्रह्मणो मुने ।
सर्वकाम [१४] प्रदा [१५] दिव्या [१६] स्फटिकैर्या प्रकल्पिता [१७] ॥१०॥

---

[१] 'अङ्गुल्या जपसंख्या तु तुल्या एकफलं तथा ।
पर्वणाष्टगुणं प्रोक्तं दीपे शतगुणाधिकम् ।
शतसंख्या कुशग्रन्थिप्रवालैस्तु सहस्रकम् ।
मणिभिर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ।
पद्माक्षैः कोटिगुणितं रुद्राक्षैस्तु न विद्यते' ।
(सुप्रभेदे योगपादे ३.३३ — ३५ पू० )
'अष्टोत्तरशतेनैव अक्षमाला समेरुका ।
रुद्राक्षशङ्खपद्माक्षपुत्रजीवकमौक्तिकैः ।
स्फाटिकी मणिरत्नोत्था सौवर्णी वैद्रुमी तथा ।
दशाक्षमाला देवेशि गृहस्थानां प्रकीर्तिताः ।'
'तस्मात्तु स्फाटिकी माला जप्तव्या साधकोत्तमैः ।'
(स्वच्छन्दतन्त्रे २.१४७पू०–१४९पू०, २.१५३ उ० );
'अङ्गुल्या जपसंख्यानमेकमेवमुदाहृतम् ।
रेखयाष्टगुणं विद्यात्पुत्रजीवैर्दशाधिकम् ।
शतं स्याच्छङ्खमणिभिः प्रवालैस्तु सहस्रकम् ।
स्फाटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ।
पद्माक्षैर्दशलक्षं तु सौवर्णैः कोटिरुच्यते ।
कुशग्रन्थ्या च रुद्राक्षैरनन्तगुणितं भवेत् ।
त्रिंशदक्षैः कृता माला धनदा जपकर्मणि ।
सप्तविंशतिसंख्यातैरक्षैः पुष्टिप्रदा भवेत् ।
पञ्चविंशतिसंख्यातैः कृता मुक्तिं प्रयच्छति ।
अक्षैस्तु पञ्चदशभिरभिचारफलप्रदा ।
अङ्गुष्ठं मोक्षदं विद्यात्तर्जनीं शत्रुनाशिनीम् ।
मध्यमां धनदां शान्तिं करोत्येषा ह्यनामिका ।
अष्टोत्तरशतं माला तत्र स्यादुत्तमोत्तमा ।
शतसंख्योत्तमा माला पञ्चाशद्भिस्तु मध्यमा ।
चतुःपञ्चाशदक्षैस्तु हृच्छेष्ठा हि प्रकीर्तिता ।
इत्येवं मालया कुर्याज्जपं कस्मै न दर्शयेत् ।'
(शिवमहापुराणे वायुसंहितायामुत्तरभागे १४.३४–४१)

[२] मालांश्चाक्षः — ऋ; मालाच्चाक्षाः — ओ; मालाश्चाक्षः — क; माला चाक्षैः — ख, घ, छ, ज; मालाश्चाक्षैः — ङ.

[३] रुद्राक्षः — ङ.

[४] शतैराष्टो० — ख; शतेरष्टो० — ङ; गतेनाष्टोत्त० — च.

[५] वा — ओ, क, ङ.

[६] ..न्यविद्धौ — ओ.

[७] प्रसक्तानां — ख, घ, ङ छ, ज.; प्रसन्नात्मा पुत्रं — च.

[८] ०जीवाक्षि० — ऊ, ऋ.

[९] ०तिर्मिता — ऋ; ०निर्मिताः — ओ, क, ङ.

[१०] धार्यावि० — ऊ, ऋ; यथा ध्या वा — ओ, क; कार्या वा — च.

[११] मन्त्यसिद्धयुद्यता० — ऊ; मन्त्यसिद्धिचता० ऋ; मध्यः सिद्धाद्यतात्मनाः — ओ, क; सद्यः सिद्धयुद्यतात्मना — ख, घ, छ, ज; मर्त्यसिद्धचद्यतात्मनः — ङ.

[१२] प्रशस्तं — क; प्रशास्ता — घ; मुने शस्ता द्विजन्मनः — च.

[१३] ब्रह्मणा — ओ, क, ख, घ, ङ, छ, ज.

[१४] ०प्रददिव्या — क.

[१५] दिव्यस्फाटिकैर्वा० — ङ.

[१६] स्फाटिकैर्वा — ओ, क; स्फटिकैर्वा — ख, घ, छ, ज.

[१७] प्रकल्पयेत् — ओ, क, ख, घ, ङ, छ, ज; प्रकल्प्यते — च.

[1]शङ्खाक्ष[2]माला [3]सुकृता [4]वादयोर्दिष्टदायिका[5]।
[6]विद्याङ्गैः [7]सततं [8]मन्त्र्य [9]स्थाप्या प्रणवसंपुटे[10] ॥११॥
[11]अनादिपदसंयुक्ता[12] [13]ग्राह्या मन्त्रजपे सदा[14]।

एवमेतत्षाण्मासिकं ब्रह्मत्वाक्षमालादि[15]सिद्धिसर्वसाधकः [16]स्वमन्त्रमाराधयेदित्यर्थः। **प्रशस्ता** [17]**ब्रह्मणः** इति ब्रह्मपदप्राप्तेः [18]साधनमित्यर्थः ॥

[ जपकाले आसनम्[19] ]

**जपश्चात्र प्रकर्तव्यो दर्भासनसमाश्रयात्[20] ॥१२॥**
**दत्त्वोपरि सितं वस्त्रं व्याघ्र[21]चर्मोपशोभितम्।**
**मार्गं वा [22]लिखितं सम्यक्सुधौतं[23] [24]क्षौममेव वा[25] ॥१३॥**

---

[1] शङ्खक्षमाला — ओ, ख, ङ.
[2] ०मालां त कृत० — छ, ज.
[3] न कृता — ख; न्नकृता — घ.
[4] पातालोत्तिष्ठ० — ऊ, ऋ, च; वादयोद्दिष्ट० — क; पातालोद्दिष्ट० — ख, घ, छ, ज; वातयोर्दिष्ट० — ङ.
[5] ०नायिका — ख, घ, छ, ज.
[6] विद्याङ्गी — ङ.
[7] सकलं — च.
[8] मन्त्रं — ओ, क; मन्त्रा — ख, ङ; मन्त्राः — घ, छ, ज; मन्त्र्याः — च.
[9] स्थाप्य — ओ, क; स्थाप्याः — ख, घ, च, छ, ज.
[10] ०संपुटा — ओ; ०संपुटम् — क; ०संपुटाः — ख, घ, च, छ, ज; ०संपुट — ङ.
[11] अनादिपट० — ख.
[12] ०संयुक्त० — ओ.
[13] ग्राह्यमन्त्रं — ओ, च; ग्राह्यमन्त्र० — ङ.
[14] ०जपेत्सदा – ऋ, ओ, क, च; ०जपत्सदा – ङ.
[15] ०सिद्धि . . . साधकः — ऊ; ०सिद्धित्रसर्वसाधकः — ऋ.
[16] सुमन्त्र० — ऋ.
[17] ब्राह्म.. इति — ऊ; ब्रह्मा इति — ऋ.
[18] साधकसाधन० — ऋ.
[19] 'वंशासने दरिद्रः स्यात्पाषाणे व्याधिपीडितः। तृणासने यशोहानिः पल्लवे चित्तविभ्रमः। धरण्यां दुःखसंभूतं सौभाग्यं दारवासने। वस्त्रासने व्याधिनाशः कम्बले दुःखमोचनम्। कृष्णाजिने ज्ञानवृद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि'।
(अंशुमदागमः ५८.१८ उ०–२०);
'सुचैलं काम्बलं कौशं सिंहव्याघ्रमृगाजिनम्। एतेषामासनं शुद्धं सिद्धये वै फलाय च। काम्यार्थं कम्बलं चैव श्रेष्ठं च रक्तकम्बलम्। कृष्णाजिने ज्ञानसिद्धिर्मोक्षः स्याद्व्याघ्रचर्मणि। कुशासने भवेदायुश्चैलं व्याधिविनाशनम्। योगसिद्धिप्रदाने तु चैलाजिनकुशोत्तरम्। धरण्यां दुःखसंभूतिर्दौर्भाग्यं दारुजासने। वंशासने दरिद्रः स्यात्पाषाणे व्याधिपीडनम्। तृणासने यशोहानिः पल्लवे चित्तविभ्रमः। जपध्यानतपोहानिर्वसनासनतो भवेत्'।
(मन्त्रयोगसंहिता ३९. १–५)
[20] ०समाश्रियात् — ऋ.
[21] ०चर्माथि शोभितम् — ऊ, ऋ; ०चर्मोपशोभनम् — ओ, क; ०चर्माभिशोभितम् — ङ; ०चर्म च शोभनम् — च.
[22] ललितं — ओ, क, ङ; निखिलं — ख, च.
[23] सुयूतं — ओ; सुधूतं — क.
[24] क्षीरमेव — ऊ; क्षरमेवह — ऋ; क्षम एव — ओ, क; क्षौम एव — ङ.
[25] च — ख.

**मार्गं वा लिखितम्** इति मृगसंबन्धि चर्म वा [1]चित्रितानेकवर्णम्[2] ॥१२–१३॥

[ मन्त्रसिद्धयुपायः[3] ]

**तत्रासनं दृढं बद्ध्वा [4]कृत्वा च करणं शनैः ।**
**योगपादविधानोक्तं[5] हृद्व्योमकमलोदरे ॥१४॥**
**[6]मन्त्रं कृत्वा जपेद्विद्वान्मन्त्रस्थोऽहमिति [7]स्फुटम् ।**
**[8]यश्च मन्त्रः स एवाहं [9]योऽहं मन्त्रः स एव हि[10] ॥१५॥**
**यद्येवं[11] स्या[12]च्छिवं तत्त्वममृतस्यन्दि [13]निर्मलम् ।**
**[14]मन्त्रोपरि [15]स्थितं ध्याये[16]त्तदा सिद्धयति [17]नान्यथा ॥१६॥**
**[18]त्रिः[19]परिसृततोयेन तेज[20]स्तेजःपदेन [21]हि ।**
**सर्वकार्याणि कुर्वीत साधको विधिमाचरन्[22] ॥१७॥**
**द्रव्याणां शोधने योज्यं सदा पिङ्गपदं बुधैः ।**
**[23]निविशेत् साक्षि[24]शब्देन तुरुशब्देन [25]चङक्रमेत् ॥१८॥**

---

[1] चित्रोतानेक० — ऊ, ऋ.
[2] एतावत्पर्यन्तमेव वृत्तिरुपलभ्यते ।
[3] 'यागं कृत्वा तु पूर्वोक्तं मन्त्रस्यार्घ्यं च दापयेत् ।
अर्घ्यं दत्त्वा तु मन्त्रस्य जपं कुर्याद्विचक्षणः ॥
देवस्य दक्षिणे भागे पञ्चलक्षं स्थितो जपेत् ।
जपान्ते घृतहोमस्तु दशसाहस्रिको भवेत् ॥
एवमाप्यायितो मन्त्रः कर्मयोग्यो भवेत्ततः ।
उक्तानुक्तानि कर्माणि सिद्धिं यान्ति न संशयः ॥'
(सार्धत्रि० १६.८-१०);
'प्राणायामैर्विशुद्धात्मा यद्यत्कर्म करोति हि ।
तत्तत्फलत्यसंदेहस्त्वप्रयत्नेन वा कृतम् ॥
आगमोक्तेन मार्गेणाभ्यासं नित्यं करोति यः ।
देवताभावमाप्नोति मन्त्रसिद्धिः प्रजायते ॥'
(कुलार्णवतन्त्रे — १५.४४,४५);
'सर्वे मन्त्राः प्रसिद्धयन्ति जीवन्ति च पुनन्ति च ।
प्राणन्ति च महाभागे सत्यं सत्यं वदाम्यहम् ।
सोऽहंभावेन भावेन भावनं भावनं मतम् ।
सोऽहंभावेन भावं तु उक्तलक्षणलक्षितम् ।
कृत्वाहंभावमुत्सृज्य सोऽहंभावे स्थिरीभवेत् ।
शंभुभावे स्थिरीभूते बिन्दुं शंभौ विभावयेत् ।'
(गन्धर्वतन्त्रे ३०.१३–१५)
[4] कृतावक्ररणं — ङ, छत्वा च कारणं — च.
[5] मतङ्ग० योग० २.२२उ० – २९; विधानोक्ता — ङ.
[6] मन्त्रान् — ङ.
[7] स्फुटः — घ, छ, ज.
[8] या च मन्त्रः — ऋ; योऽयं मन्त्रः — ओ, क, घ, ङ, च, छ, ज; यो यन्मन्त्रः — ख.
[9] पादोऽयं न दृश्यते – ओ, क; योऽयं मन्त्रः – ङ.
[10] तु — ख.
[11] यद्येव — ङ.
[12] ०च्छिवत्वमामृत० — ओ, क, ङ.
[13] निर्मितम् — घ, छ, ज.
[14] मन्त्रैः परि० — ऋ; मन्त्रे परि० — ओ.
[15] स्थितां — छ, ज.
[16] ०त्सदा सिद्धयन्ति — ख, घ.
[17] नान्यशः — ओ, घ, ङ; रन्यथा — क.
[18] त्रिपरिश्रुत० — ऊ, ऋ.
[19] ०परिसृतोयेद — ओ; ०परिसृतो . . – क.
[20] ०स्तेजपदेन — ओ, क; ०स्तेजपरेन — ङ.
[21] तु — ऊ, ऋ.
[22] ०माचरेत् — ओ, क, ङ.
[23] १८ श्लोकस्योत्तरार्धं १९ श्लोकस्य पूर्वार्धोत्तरार्धे आहत्य अर्धत्रयं 'ख, घ, छ, ज' मातृकासु न दृश्यते ।; निवेशः साक्षि० — ऊ, ऋ; न विशेत्साक्षि — ओ, क, ङ.
[24] ०शब्दा न — ओ; ०शब्दानां — क.
[25] च क्रमेत् — ऋ; च; च क्रमात् – ओ, क, ङ.

व्योमशब्देन चोत्तिष्ठेत्साधकः साधने स्थितः ।
[1]भूःपदेनासनं शोध्यं [2]दिशः शोध्याश्च सर्वदा ॥१९॥
ज्योतिर्ज्योतिःपदेनैव[3] रक्षा कार्या विपश्चिता ।
[4]गुह्यातिगुह्यशब्देन [5]भुञ्जीयाच्छर्वमुच्चरन् ॥२०॥
निधने[6]नाम्भसः पानं कर्तव्यं सर्वदा विधौ[7] ।
[8]शयनीयमथास्त्रेण [9]शोध्यं [10]मन्त्रविदा सदा ॥२१॥
एवं वै [11]चरतस्तस्य साधकस्य महात्मनः ।
सर्वे विघ्नाः प्रणश्यन्ति नात्र कार्या विचारणा[12] ॥२२॥
[13]तस्माद्वनाद्विनिष्क्रम्य देवदेवं सदाशिवम् ।
[14]यष्ट्वा पूर्वोक्तविधिना तर्पयित्वा च भक्तितः[15] ॥२३॥
एकैकाहुतिदानं तु[16] [17]महिषाक्षस्य [18]गुग्गुलोः ।
[19]ततः संतर्पिता मन्त्राः साधकस्य वरप्रदाः[20] ॥२४॥
भवन्ति मुनिशार्दूल [21]चीर्णविद्याव्रतस्य तु[22] ।

[ ब्रह्माङ्गमन्त्रसिद्धिदं व्रतान्तरम् ]

[23]व्रतमन्यत्परं तस्य [24]सिद्धिदं कथयामि ते ॥२५॥
सद्यो[25]जातं गवां [26]गोष्ठे [27]भैक्षभुङ्नियतात्मवान् ।

---

[1] भूपतेन सनं — ङ.
[2] दिगिमाद्यस्त सर्वदा — ओ, दिगिमाद्यस्तु सर्वदा — क; दिशि माद्यास्तु सर्वदा — ङ; देव्यः सोध्यास्तु — च.
[3] ०ज्योतिःपदेनेति — ओ; ०ज्योतिपदेनेति — क; ०ज्य तिपदेनैव — ङ.
[4] गुह्यादिभिर्गुह्यजशब्देन — ङ.
[5] भूञ्जीयात्सर्व० — ऋ; वाच्छयाधम-मुच्चरन् — ओ; वाच्छयाद्धवममुच्चरन् — क; भुञ्जीयाद्धर्म० — ख, घ, ङ, छ, ज; भूञ्जीयात्कूर्चमु० — च.
[6] ०नास्य सा पानं — ऋ; ०नाम्भसां पानं — क, घ, छ, ज; नाम्भसा पानं — ङ.
[7] बुधैः — क, ख, घ, छ, ज.
[8] शायन्नियमथास्त्रेण — छ, ज.
[9] शोध्य — ओ, ङ, छ, ज; शोध्यमन्त्रे — क.
[10] मध्यविदा — ख.
[11] वचतस्तस्य — ओ; वदतस्तस्य — क; रोचतस्तस्य — ङ.
[12] एतावत्पर्यन्तमेव 'ऊ, ऋ' कोशयोर्मूलश्लोका उपलभ्यन्ते ।
[13] अथ तस्माद्विनि० — ख, घ.
[14] यथापूर्वोक्त० — ङ; इष्टापूर्वोक्त० — च; यच्च पूर्वोक्त० — ज.
[15] भक्षितः — ङ; तु भक्तितः — च.
[16] एकेनाहुतिना दाग्नि० — ओ; एकोनाहुति-नादग्नि० — क; एकेनाहुतिना दग्ने — ङ; ऐहिकाहुतिदानं तु — च.
[17] ०मभिलाषस्य गुद्गुलोः — ओ, क.
[18] गुल्गुलोः — ख; गुद्गुलोः — घ, ङ, छ, ज.
[19] तस्मात्तत्सर्पिषा मन्त्रा — ख.
[20] वरप्रदा — छ, ज.
[21] वर्णविद्या० — ओ, क, ङ.
[22] च — ओ, क, ङ.
[23] वृतमन्यपरं — क.
[24] सिद्धितं — छ, ज.
[25] ०जातगवां — ङ.
[26] भोष्वे — छ, ज.
[27] भिक्षाभुङ — ख, घ, छ, ज; भक्षमुङ — च.

जपेदक्षरलक्षं तु वामदेवं जलाश्रये ॥२६॥
क्षीरभुग्बहुरूपं तु[1] [2]पञ्चाग्निविधिमाचरन्[3] ।
[4]चरुभुङ नियतात्मा च [5]वक्त्रमन्त्रं तु चत्वरे ॥२७॥
घृतं प्राश्य जपेद्विद्वान्खेतले[6] च सदाशिवम्[7] ।
अयाचितान्नं[8] भुञ्जानो विधिज्ञः साधकोत्तमः ॥२८॥
[9]जपेद्वन्योदकं पीत्वा [10]दशाहं हृदयं [11]बुधः ।
[12]सुशिवं पञ्चगव्याशी[13] [14]शिखां वै बिल्वपत्रभुक् ॥२९॥
जपे[15]द्वर्म प्रयुञ्जानः [16]कापिलं मूत्रमादरात् ।
[17]श्मशाने तिलभुङमन्त्री जपे[18]दस्त्रं महौजसः ॥३०॥
[19]दशरात्राणि सर्वाणि शिव[20]स्याङ्गान्यनुक्रमात् ।

[ शक्ति-शिवाङ्ग-विद्याङ्गमन्त्रसिद्धिदं व्रतम् ]

[21]जपेच्छक्ति द्वादशाहं [22]फलमश्नंस्ततः सुधीः ॥३१॥

---

[1] बहुरूपं च — ओ, क; ०रूपं च — ङ.
[2] पञ्चाग्नि मार्गेण विधि० — ओ, क.
[3] ०माचरेत् — ख, घ, ङ, छ, ज.
[4] चरुभुक्तिर्यथात्मा — ओ; चरुभुक्तियथात्मा — क; चारुभुङ — ङ; चरुभिर्नियतात्मा वै — च.
[5] वक्त्रमन्त्रस्तु — च.
[6] ०द्वान्वेतले — ओ, क.
[7] ०शिवः — ख, घ, छ, ज.
[8] अयाचितानां — ओ, क, छ; मायाञ्चितानां — ङ; अयाचितान्न० — च. अयाचितानं — ज.
[9] जपेद्वर्णोदकं — क; जपेद्भस्मोदकं — ख, घ, ङ, च, छ, ज.
[10] दशाभं — ओ, क.
[11] पुनः — ओ, क, ङ; ०प्रभोः — च.
[12] सशिवं — ओ, क; स शिवः — च; सुशिवम् इत्यनेन शिरोमन्त्रो बोध्यः 'सुशिवाख्यं शिरः प्रभोः' मतङ्ग० विद्या० ७.२७; क्रिया० १.६३उ०, ६४पू०.
[13] ०गव्यानि — ओ, क, ङ; ०गव्यादि — ख, घ, छ, ज.
[14] शिवां — ओ, ङ; शिवाङ्गैर्बिल्व० — क; शिखावान् बिल्व० — च.
[15] ०द्वर्मोपयुञ्जानः — ओ, क; ०द्वर्मोपभुञ्जान — ङ.
[16] कपिलामूत्र० — ख, घ; कपिलं मन्त्र० — च; कपिलामत्र — छ; कपिलामन्त्र० — ज.
[17] श्मसाने तु विभुर्मन्त्री — ओ; श्मशानेति विभुर्मन्त्री — क; श्मशानेऽनिलभुङमन्त्री — च.
[18] ०दस्त्रं महौजसम् — ओ, क; ०द्रस्त्र भुगौजसः — ख, घ, ज; ०दस्त्रमहौजसम् — ङ, च; ०द्रस्त्र भुगौजसः — छ.
[19] दशधात्राणि — ङ; दशवाराणि — च.
[20] ०स्याङ्गाननु० — च.
[21] जपेच्छक्तिद्वा० — ओ, क, ख, ङ, छ, ज; शक्तिपदेन मन्त्रप्रस्तावादत्र 'व्योमव्यापि' मन्त्रो बोध्यः। मतङ्ग० क्रिया० ५.१३४; ९.२१ वृत्तिर्द्रष्टव्या।
[22] फलमग्नं ततः — क, छ; फलं मग्नं ततः — ङ.

वैयाघ्रेणोत्तरीयेण मार्गेणाथ[१] सुशोभिना[२] ।
कटकेन विचित्रेण [३]शिवाङ्के[४]नातिवर्चसा ॥३२॥
[५]चरेन्मासं [६]स युक्तात्मा [७]होमं [८]मानं तु [९]गुग्गुलोः ।
सहस्राणि [१०]शते द्वे च[११] [१२]घृतमिश्रस्य वाग्यमी ॥३३॥
पर्वताग्रे; ततो विद्वान् गत्वा तु लवणार्णवम् ।
मासमेकं [१३]जलं पीत्वा जपेद्विद्याङ्गपञ्चकम् ॥३४॥

[ [१४]रक्षा ]

स्थानात्स्थानं पर्यटतो [१५]रक्षेयं विहिता मुने ।
हृद्व्योमकमले [१६]मन्त्रो [१७]न्यस्तव्यः सर्वसंपुटः[१८] ॥३५॥
[१९]तुरु[२०]शब्दः प्रदातव्यः पादयो[२१]स्तलदेशतः[२२] ।
तयोरुपरि [२३]विन्यस्यं [२४]भवयुग्मपदं विभोः ॥३६॥
योगपीठ[२५]पदं [२६]चोर्वोर्भूःपदं जानुमण्डले[२७] ।
[२८]गुह्ये [२९]गोप्तृपदं कट्यां [३०]सान्निध्यपद[३१]संयुतम् ॥३७॥

---

[१] मार्गेणाति — ओ, क, ङ.
[२] सुशोभनम् — ओ, क; सुशोभना — ङ.
[३] साङ्गेना० — ख; शिवाङ्के० — च.
[४] ०नामितवर्चसा — ओ, ख, घ, ङ; ०नामिवर्चसा — छ; नापि वर्चसा — ज.
[५] चरेन्मासि — ओ; चरे मासं — छ, ज.
[६] सुसंयुक्तो — ख; सुसंयुक्तान् — घ, छ, ज; सुंयुक्तात्मा — च.
[७] हेमां — क; माहोन्मानं — ख, छ, ज; होममानं — ङ; होम्यमानस्तु — च.
[८] तु गुग्गुलोपमाः — ओ; तु गुद्गुलोपमाः – क.
[९] गुल्गुलोः — ख; गुद्गुलोः — घ, ङ, छ, ज.
[१०] शतेनैव — ओ; शते चैव — क; शतं द्वे च — ख, घ, छ, ज; दश द्वे च — च.
[११] सहस्रशतद्वे च — ङ.
[१२] घृतयुक्तस्य — च.
[१३] जपः — क, ङ; पयः — ख, घ, च, छ, ज.
[१४] 'अरुणामरुणाकल्पवसनाक्षित्रयान्विताम् ।
आत्मभेदेन संचिन्त्य शुद्धज्ञानस्वभाविनीम् ॥
केवलानुभवानन्दमात्मानं परिचिन्तयेत् ।
ओं ह्रीं हंसस्ततः सोऽहं स्वाहेति मनुना शिवे ॥
बालाबीजत्रयस्यान्ते महात्रिपुरसुन्दरि ।
आत्मानं रक्ष रक्षेति कुर्याद्रक्षां हृदि स्पृशन् ॥'
(गन्धर्वतन्त्रे ८.१०६–१०८.)
[१५] रक्षोऽयं — क; रक्षये — ख, घ, छं, ज.
[१६] मन्त्रं — ओ, क, घ; मन्त्र० — ङ, छ, ज.
[१७] न्यस्तव्यं — ओ, क, घ, ङ, छ, ज.
[१८] ०संपुटम् — ओ, क, घ, ङ, च, छ, ज.
[१९] गुरु० — ख.
[२०] ०शब्दप्रदा० — ङ.
[२१] ०स्तिल० — ओ, क.
[२२] ०देशिकः — घ, छ, ज.
[२३] विन्यस्य — ओ, क, ख, घ, ङ, च, छ, ज.
[२४] भवं युगपदं — ओ, क; पदयुग्मपदं — ख, छ, ज; भवं — ङ.
[२५] भवं चर्वो भूपदं – ख; भवं चोर्वो भूपदं – घ; भवें चोर्वो भूपदं — छ, ज.
[२६] चोर्वा भूपदं — ओ, क; चार्वो भूपदं — ङ; चैव भूपदं — च.
[२७] ०मण्डलम् — च.
[२८] गुह्यो — क, ङ.
[२९] गात्रपदं — ओ; गत्रपदं — क; गोत्रपदं – ङ.
[३०] शान्तैर्घ्यापद० — ओ; सान्तैद्धचापद० — क; पदं सांसिध्यकारकम् — च.
[३१] ०संयुताम् — क, ङ.

पृष्ठेऽरूप[1]पदं [2]देयं [3]ज्योतिः[4]शब्दस्तु मूर्धनि ।
नेत्रत्रयेष्वथेशस्य[5] वक्त्रे [6]वक्त्रपदं न्यसेत् ॥३८॥
हृदि देयं विधौ सम्यक्पदं [7]वै [8]नात्रयात्मकम् ।
[9]धूत्रयं नाभिदेशे तु ततो विद्याङ्गपञ्चकम्[10] ॥३९॥
शक्तयः परमेशस्य [11]विन्यस्ताः [12]साधकस्य तु ।
[13]रक्षन्त्युदितवीर्येण शरीराणि विधौ [14]सदा ॥४०॥

[ संदिग्धव्रतम् ]

ततः पश्चा[15]त्समस्तेऽस्मिन्नतीते [16]विधिवर्त्मनि ।
[17]एतद्व्रतं च संदिग्धं [18]चरेत्सिद्धयै [19]महायशाः ॥४१॥
[20]भ्रूभङ्गसहितोक्त्या तु सालंकार[:] सुर्चचितः[21] ।
[22]पुष्पा[23]युधविकारैस्तु [24]चेष्टमानोऽजुगुप्सितः[25] ॥४२॥
[26]मोहयन्बाह्यवृत्तेन [27]योगशुद्धेन चेतसा[28] ।
[29]आहूया[30]वयवैर्भद्रै[31]र्लक्षणैः सुशुभैर्युताम्[32] ॥४३॥

---

[1] ०पदे — ङ.
[2] योज्या — ओ, क; योज्यं — ङ; तेयं — छ, ज.
[3] ज्योतिशब्दस्य — क, ङ.
[4] ०शब्दस्य—ओ, ख, घ, छ, ज; ०शब्दश्च—च.
[5] ०ष्वथेशश्च — क, ङ; ०ष्वथेशं च — ख, घ, छ, ज; ०ष्वतश्चैव — च.
[6] पत्रपदं — ख.
[7] वैन्यत्रयात्मकम् — ख, घ, छ, ज; नेत्रत्रयात्मकम् — च.
[8] नात्र वर्त्मकम् — ङ.
[9] यत्र यन्नाभि० — क; सूत्रयन्नाभि० — ख, घ; धूमयन्नाभि० – ङ; सूत्रायं नाभि०—छ, ज.
[10] ०पञ्चकः — ख, छ, ज.
[11] विन्यस्य — ओ; विन्यस्ता — ङ; विन्यस्तं — छ, ज.
[12] साधकात्मसु — च.
[13] रक्षन्त्यतीत० — ओ, क; रक्षन्त्युदित० — ख; रक्ष्यन्तु तीर० — ङ; रक्ष्यंत्युचित०—च.
[14] तदा — ओ, क, ख, घ, ङ, छ, ज.
[15] ०त्समाप्तेऽस्मि० — ओ, क, ख, घ, ङ, छ, ज.
[16] ०ऽपि हि वर्त्मनि — ओ, क; वीतवत्मनि — ख; विहितवत्मनि — घ; वहि वर्त्मनि — ङ.
[17] एतद्व्रतमसंदिग्धं — ख, घ, ङ, च, छ, ज.
[18] चरेत्सिद्धो — ओ, क; चरेत्सिद्धै — ख; शरेत्सिद्धो — ङ; चरेत्सिद्धे — छ.
[19] महाशयः — ओ, क, ङ.
[20] भ्रूभङ्गनाहितोक्त्या — ख; भ्रूभङ्गनाभितोक्त्या — घ, छ, ज.
[21] सुवर्चितम् — ओ, क, ख, ङ; सुर्चचितम् — घ, छ, ज.
[22] पृष्ट्वा यध — छ; पृष्टायुध — ज.
[23] ०युधाग्निकारेस्तु — ओ; ०युधाग्निकारैस्तु — क.
[24] वेष्टमानो० — ख, घ, छ, ज.
[25] ०गुप्सितम् — ओ.
[26] होमवद्बाह्य० — ओ, क, ख, घ, ङ, छ, ज.
[27] लोकशुद्धेन — ख, छ, ज; लोकांश्छुद्धेन —च.
[28] तेजसा — ओ, क, घ, ङ.
[29] आपूर्या — ओ; आपूया० — क.
[30] ०वयवैर्गद्रै०— क; ०वयवैः शुद्धै० — ख, घ, छ, ज; ०वयवे भद्रे — ङ.
[31] ०र्लक्षणैश्च शुभै० — ओ, क, ख, घ, ङ, छ, ज.
[32] ०र्युतः — ओ, क, ख, घ, ङ, छ, ज; ०र्युतम् — च.

[1]सुभगां यौवनोद्दामगर्वेण[2] परमन्थराम्[3] ।
सदाचारकुलोत्पन्नां लालसां[4] प्रियवादिनीम्[5] ॥४४॥
[6]अप्रसूतां [7]सदा कान्तां [8]भर्तुः शासनतत्पराम् ।
शुक्लाम्बरधरां [9]साध्वीं [10]कामशास्त्रसुपेशलाम्[11] ॥४५॥
[12]विद्याङ्गकृत[13]रक्षां तु शृङ्गारकृतभूषणाम्[14] ।
[15]सर्वशुक्लोपचारेण [16]यष्ट्वा देवं त्रिलोचनम् ॥४६॥
[17]चरुभुक्साधकेन्द्रस्तु[18] [19]तस्यास्तेजः[20]पदं हृदि ।
[21]साध्यमन्त्रं समुच्चार्य मन्त्रमेवानुचिन्तयेत्[22] ॥४७॥
न्यस्तमन्त्रः स्त्रियं[23] विद्वा[24]नाश्लिष्याङ्गानि संस्मरेत् ।
[25]स्वमन्त्रं कर्णिका[26]संस्थं योऽयं [27]सोऽहमिति स्फुटम् ॥४८॥
एव[28]मभ्यस्यतस्तस्य निश्चि[29]तस्य कृतात्मनः ।
मासार्धेन [30]भवेत्सिद्धिरिति शास्त्रे प्रभाषितम् ॥४९॥
अभीष्टमाप्नुयान्मन्त्री [31]फलं मन्त्र[32]बलेरणात् ।
कृतकृत्येन मोक्तव्या यदि [33]तस्या न रोचते ॥५०॥

---

[1] सुभगं — ख, घ, ङ, छ, ज.
[2] ०द्धामगर्वेण — ओ; ०द्दान्तं गर्वेण — ख, घ; यवनोद्दान्तं गर्वेण — छ, ज.
[3] परमं धराम् — ओ, क; परिपन्थिनम् — ख, घ, छ, ज; परमन्थरम् — ङ; परिमन्थराम् — च.
[4] . . . लसां — ओ, क; कलासां — ख, घ; कलसां — छ, ज.
[5] प्रियवादिनम् — छ.
[6] अप्रसूनां — ख, घ; प्रसूतासदा० — ङ; अधमनां – –च; आप्रसारं — छ, ज.
[7] सती — च; सदा क्रान्तां — ज.
[8] भक्तुः — क; भत्तः — ख.
[9] साध्वं — छ, ज.
[10] कामाग्रस्त० — ख, घ, छ, ज; नीतिशास्त्र० — ङ.
[11] ० सुपेशिलाम् — छ, ज.
[12] विद्याशकृत० — ङ.
[13] ०लक्षात्तु — ओ, क, ङ.
[14] ०भूषणम् — छ, ज.
[15] सर्वं — ओ; सर्वां — ङ.
[16] इष्ट्वा — च.
[17] गुरु० — ख, घ, छ, ज.
[18] ०केन्द्रं तु — ओ, ङ.
[19] तस्मात् — ख, घ, छ, ज; तस्या तेजः — ङ; तस्यां — ओ, क, ङ.
[20] पटं — छ, ज.
[21] साध्यमन्तसमु० — ख.
[22] ०चिन्तयन् — च.
[23] ०मन्त्रप्रियो — ओ, क, ख, घ, ङ, छ, ज; ०मन्त्रस्त्रियं — च.
[24] ०नशिष्टाङ्गानि — क.
[25] स्वमन्त्रकर्णका० — ओ, क; स्वमन्त्रकर्णिकां — ङ; स्वमन्त्रकणिका० — छ, ज.
[26] ०संस्थो — ओ, क; स्वस्थो — ङ.
[27] सोहदिति — छ, ज.
[28] ०मभ्यस्तस्तस्य — क; ०मभ्यसतसस्तस्य–च.
[29] ०तस्याकृतात्मनः – ख, घ, च, छ, ज; ०तस्तस्य कृतात्मनः — ङ.
[30] कृता सिद्धि० — ओ, क, ख, घ, ङ. ज; गता सिद्धि० — छ.
[31] फलमन्त्र० — ख, घ, ङ, छ, ज.
[32] ०समीरणात् — ख, घ, छ, ज; ०बलोरणात् — ङ.
[33] तस्यां त रोचते — ओ, क; तस्यन्न — ङ; तस्य न — च; तस्यां न रोचते — छ, ज.

[1]रोचते [2]चेत्ततः सिद्धि[3]स्तया सार्धं [4]नरोत्तमः ।
क्रीडते सुचिरं कालमप्रक्षीणबलः[5] सदा ॥५१॥
कर्मणा मनसा वाचा [6]सिद्धः साधयते जगत् ।
[7]शापानुग्रहसामर्थ्यमतुलं[8] साधकात्मनः[9] ॥५२॥
अथवा [10]लौकिकीं [11]सिद्धिमाकाङ्क्षेत्साधकोत्तमः[12] ।
पूर्व[13]वच्चाखिलं [14]कार्यमसिधारोत्थितं[15] मुने ॥५३॥

[ उक्तार्थोपसंहारः, वक्ष्यमाणोपक्रमश्च ]

[16]इत्यत्रोत्तरसिद्धिमार्ग[17]चरितं गीतं मया [18]पुष्कलं
[19]नानाभोगविवेष्टनाय विधिवद्रागानु[20]विद्धात्मनाम् ।
[21]शक्तेः सांप्रतमीप्सितार्थमनसः कर्माणि [22]वक्त्रोक्तया
[23]युक्त्या तत्पद[24]भाजितेन [25]विधिना वक्ष्यामि संक्षेपतः ॥५४॥

इति श्रीमतङ्गपारमेश्वरे क्रियापादे [26]सिद्धिपटल एकादशः ।

एकादशः पटलः

---

[1] शोचते — ङ.
[2] चेत्तु तत्सिद्धिः — ओ, क, ङ; चेत्ततः सिद्धः — च.
[3] ०स्तथा — ओ.
[4] . . . त्तुमम् — ओ; नरोत्तम — ख.
[5] कालं प्रक्षीणबलवः — ओ; कालः प्रक्षीणबलवत् — क; कालं प्रदक्षिणबलः — ङ.
[6] सिद्धिं — ओ, क, ख, घ, ङ, छ, ज.
[7] पाशानुग्रह० — ख, घ, ङ, छ, ज.
[8] ०सामर्थ्यामितुलं — ओ.
[9] साधकोत्तमः — ख, घ, छ, ज.
[10] लोकिकं सिद्धि० — छ, ज.
[11] विद्धिम आकाङ्क्षेत् — ङ.
[12] ०कोत्तम — ङ.
[13] ०वद्वाखिलं — ख.
[14] कार्यं विधारोज्झितं — ङ; कार्यमसिद्धरोचितं — छ; कार्यं सिद्धरोचितं — ज.
[15] ०धारोज्झितम् — ख, च.
[16] इत्यत्रोक्तं सिद्धि० — ओ; इत्यत्रोक्तमसिद्धि० — क, ङ; इत्युत्तरोत्तरसिद्धि० — ख, घ; इत्यत्रोत्तमसिद्धि० — च; इत्युत्तरोत्तसिद्धि० — छ; इत्युत्तरोक्तसिद्धि०— ज.
[17] ०चरिते व्यावर्णितं पुष्कलम् — च.
[18] पुष्कलजानभोग० — ओ, क.
[19] नानारोग० — छ.
[20] ०सिद्धात्मनाम् — छ, ज.
[21] श तेः — ओ; स तेः — क
[22] व्यक्तो वा — ओ, क, ङ; न व्यक्तोक्तयवद्योक्तया — ख; व्यक्तोक्तया —घ, छ, ज.
[23] मुक्त्यत्पद० — ङ;
[24] ०भाजिते नावेक्ष्यामि — छ, ज.
[25] 'विधिना' इति 'ख, घ' मातृकयोर्नास्ति ।
[26] उत्तरसिद्धि० — ख, घ, छ, ज; उत्तमसिद्धिफलं पटलम् — च.

# द्वादशः पटलः

## कर्मसंतानविधिः

[ उच्चाटनम्[१] ]

[२]अथातः [३]कर्मसंतान[४]विधिरत्रोच्यते स्फुटम् ।
[५]स्वमन्त्रः प्रणवाधारो विद्याङ्गोपचितो[६] विभोः[७] ॥१॥
[८]याम्यदिङ्नाथमभ्यर्च्य संतर्प्य बलिशङ्कया[९] ।
[१०]बस्तमांसाहुतीनां तु [११]दातव्यमयुतं मुने ॥२॥
[१२]परिप्लाव्य घृतेनादौ ततः [१३]कर्मणि योजयेत् ।
[१४]तुरुसंपुटमध्येन[१५] साध्यमन्त्रेण साधकः ॥३॥
उच्चाटये[१६]द्बलात्सर्वान् [१७]रिपून् स्थानात्स्वकाद् ध्रुवम् ।
[१८]व्रतसिद्धस्य शास्त्रेऽस्मिञ्शक्तिर्वै पारमेश्वरी ॥४॥

---

[१] दीर्घस्तूच्चाटयेत्क्षिप्रं फट्कारेण न संशयः ।
(सार्धत्रि०—१६.४ पू०)
मन्त्रस्यान्ते भवेन्नाम योगः प्रोच्चाटने मतः ।
(शारदातिलकम् २३.१४१ पू०)
फडन्तं वायुबीजं स्यात्त्रिरभ्यासं शिवादिकम् ॥
काकोलूकदलैर्होमादुच्चाटनकरं परम् ।
(किरण० चर्या० २०.२३ उ०, २४ पू०)

[२] प्रथमश्लोकादारभ्य द्वाविंशत्यन्तो भागो लुप्तः 'घ' मातृकायाम् ।

[३] 'ओ, क' मातृकयोः 'कर्म' इति नास्ति ।

[४] ०विधिरुच्यते . . स्फुटम् — ओ, क; ०विधिरित्युच्यत स्फुटम् — ङ.

[५] स्वमन्त्रप्रण० — ओ, क; समन्त्रप्रण० —ख, छ, ज; स्वमन्त्रप्रणवोच्चारं — च.

[६] ०पतितो — ख०; ०पचितं — च.

[७] विधिः — क.

[८] याम्यदिग्भ्यः सदाभ्यर्च्य — ख, छ, ज; याम्यदिग्भ्यः समभ्यर्च्य — ङ; याम्यदिक्स्थं सदाभ्यर्च्य — च.

[९] ०तर्प्यश्चापि शंकया — ख, छ, ज; ०तर्प्याश्च विशंशया — ङ; ०तर्प्य चाविशंकया — च.

[१०] बहुस्तामाहुतीनां — ओ, क; दस्तमांसा० — च.

[११] दातव्या० — ओ, क.

[१२] परव्याप्यग्रतो नादौ — ओ; परिव्याप्य — क; परिप्लाव्यं — ख, छ, ज; परिपाव्य – ङ.

[१३] कर्माणि — ओ, क, ङ; कार्याणि — च.

[१४] तरुत्संपुट० — ओ, क; गुरुसंपुट० — ख, छ, ज; तरुसंपुट० — ङ; तुकसंपुट० — च.

[१५] ०मध्ये तु — ख, ङ, च.

[१६] ०द्बलं सर्वं — ओ, क, ख, ङ, छ, ज.

[१७] रिपुस्थान . . स्वकम् — ओ; रिपुस्थानात्स्वकं स्वकम् — क; रिपुस्थानात्स्वकावृतम् — ख; रिपुं स्थानात्स्वकावृतम् — ङ, छ, ज.

[१८] तं सिद्ध० — ओ; तं तु सिद्ध० — क; वृतसिद्ध० — ख .

[1][ मारणम् ]

[2]स्वपदैः सर्वकर्माणि साधयेत्साधकोत्तमः[3] ।
तेजःसंपुटमध्यस्थो[4] मन्त्रः प्राणहरः स्मृतः[5] ॥५॥
[6]स्वसंपुटसमायोगा[7]त्प्रोच्चारयति मन्त्रराट् ।

[ विद्वेषः[8] ]

विद्वेषं कुरुते [9]युक्तः संपुटे नात्रयात्मके ॥६॥

[ स्तम्भनम्[10] ]

[11]गोप्तृसंपुट[12]मध्यस्थः [13]स्तम्भने शस्यते सदा ।

---

[1] 'आदावन्ते च ह्लस्वस्य फट्कारो मारणे स्मृतः ।'
(सार्धत्रि० १६.४ उ०);
'हुं फट् पुटान्तगो देव शत्रुनामसमन्वितः ॥
कृत्वा प्रेतवने क्रुद्धः क्रूरदृक्कुण्डसंस्थितः ।
अस्थ्यसृङ्‌निम्बहोमेन कृष्णध्यानाभिसंस्थितः ॥
कपीन्द्रगुप्तं तच्छत्रुं यमवेश्म नयेत्क्षणात् ।'
(किरण० चर्या० २०.१८ उ०–२० पू०);
'अन्ते नाम्नो भवेन्मन्त्रः पल्लवो मारणे मतः ।'
(शारदातिलकम् — २३.४१ उ०)

[2] स्वपादैः — ओ, ख; सपदेः सर्वकर्माणि — छ, ज.

[3] ०कोत्तम — ङ.

[4] ०मध्यस्तो — ओ, ङ; ०मध्यस्थं — ख; ०मध्यस्था — छ; ०मध्याय — ज.

[5] मन्त्रप्रहाणहरस्मृतः — ओ; 'ख, छ, ज' मातृकासु पञ्चमश्लोकस्य चतुर्थपादप्रभृति सप्तमश्लोकस्य प्रथमपादपर्यन्तं नास्ति ।; 'ङ' मातृकायां पञ्चमश्लोकस्य चतुर्थपादो न दृश्यते ।

[6] घुसंपुटमहायोगात् — ङ; घूसंपुट० — च.

[7] ०त्प्राच्चारयति मन्त्री . . . — ओ; ०त्प्रोत्सादयति — च.

[8] 'हुंफट्द्वयस्य मध्यस्थः क्रुद्धो द्वेष्यसमन्वितः ।
द्वेषकृत्सिद्धिरभ्यासाद्विरुद्धं जातरोमभिः ।
मोहाद्वह्निगते कुण्डे क्रुद्धश्चोत्कुटिकासनात् ॥
कामदेवमपि स्त्रीणां तत्क्षणाद् द्वेषतां नयेत् ।'
(किरण० चर्या० २०.२० उ०–२२ पू०)
'नाम्न आद्यन्तमध्येषु मन्त्रः स्याद्रोधनं मतम् ।
विद्वेषणविधानेषु प्रशस्तमिदमीरितम् ॥'
(शारदातिलकम् २३.१४०)

[9] युक्तसंपुटेन त्रयात्मके — ङ; युक्तः संपुटो — च.

[10] 'आदावन्ते च मन्त्रः स्यान्नाम्नोऽसौ संपुटं मतम् ।
एष संस्तम्भने शस्त इत्युक्तो मन्त्रवेदिभिः ॥'
(शारदातिलकम् २३. १३९);
'हुंकाराद्यन्तसंक्रुद्धः साध्यगोत्रसमन्वितः ॥
स्थाणुं स्तम्भयते शीघ्रं श्येनं वै पक्षिसंचयान् ।'
(किरण० चर्या० २०. २२ उ०, २३ पू०)
'तामेव धूलिं संगृह्य लोहचूर्णविमिश्रिताम् ॥
श्मशानचीरके बद्ध्वा सप्तजप्तां चतुष्पथे ।
निखन्याष्टाङ्गुलं भूमौ रिपुनामसमन्विताम् ॥
निक्षिपेद्यस्य नाम्ना तां स क्षणात्स्तम्भितो भवेत्
(स्वच्छन्द० पटल १२ श्लो. ३४उ० – ३६पू०)

[11] गोप्ते संपुट ० — ओ, क, ख, ङ.

[12] ०मध्यस्थं — ङ.

[13] स्वहने — ख, छ. ज.

[1][ शान्तिः ]

[2]सर्वभूतसुखस्थेन शान्ति कुर्यात्सदा [3]बुधः ॥७॥

[ पुष्टिः [4]]

[5]ध्यानाहारपुटस्थेन [6]पुष्टिः संजायते नृणाम् ।

---

[1] कथयाम्यद्य लोकानां हिताय सर्वशान्तिकम् ।
विधानं यत्समादिष्टं तन्त्रराजे मयोत्तरे ॥
शुद्धस्फटिकसंकाशं देवदेवं त्रिलोचनम् ।
चन्द्रमण्डलमध्यस्थं चन्द्रचूडं जटाधरम् ॥
चतुर्भुजं वृषारूढं भैरवं तुम्बुरुं विभुम् ।
शूलमालाधरं दक्षे वामे पुस्तं सुधाघटम् ॥
सर्वावयवसंयुक्तं सर्वाभरणभूषितम् ।
सितवस्त्रपरीधानं नागहारविराजितम् ॥
मानसे भावयेदेवं सर्वशान्तिकरं शिवम् ।
अस्य मन्त्रं प्रवक्ष्यामि देवानामपि दुर्लभम् ॥
येन विज्ञानमात्रेण जायन्ते सर्वसिद्धयः ।
आदौ तारं समुद्धृत्य ततस्तुम्बुरुभैरव ॥
पदं दत्त्वा शिवं बीजम् अमुकस्य पदं वदेत् ।
सर्वशान्तिपदं दत्त्वा पदं देयं कुरुद्वयम् ॥
ईशानं वह्निमारूढं द्वितीयस्वरभूषितम् ।
नादबिन्दुसमायुक्तं वह्निं मायामनन्तरम् ॥
अनेन बलिमादद्यादन्नादिकसमन्वितम् ।
अत्र मन्त्रः —
'ओं तुम्बुरुभैरव ह्रौं अमुकस्य सर्वशान्तिं कुरु कुरु
ह्रां रं ह्रीम्' इति ।
पूजयेत् श्वेतदूर्वाभिर्नानापुष्पैर्विशेषतः ।
धूपदीपादिसंयुक्तैः सहस्रं प्रजपेन्मनुम् ॥
यस्य नाम्ना भवेत्तस्य सर्वशान्तिरनुत्तमा ।
साध्यमौलौ सुधाधारं तस्य मूर्ध्नि प्रवर्षिणम् ॥
अहर्निशं स्मरेदेवं शान्तिपुष्टिकरं शिवम् ।
होमं वा कारयेदेभिर्दूर्वापुष्पाक्षतादिभिः ॥
तिलजीरसमायुक्तैर्द्रव्यैश्च घृतसंयुतैः ।
त्रिकोणके ततः कुण्डे वह्निं प्रज्वाल्य होमयेत् ॥
दशाङ्ककस्य होमेन ततः शान्तिर्भवेदिति ।'
('षट्कर्मदीपिकायाम्' इति इन्द्रजालविद्यासंग्रहे
पृ० २०२–२०३)
'मन्त्रार्णान्तरितान्कुर्यान्नामवर्णान् यथाविधि ।
ग्रथनं तद्विजानीयात् प्रशस्तं शान्तिकर्मणि ॥'
(शारदातिलकम् २३.२३७.)

[2] सर्वहृत्सुखहस्तेन — ख; सर्वभृत्सुखहस्तेन — च, छ.

[3] बुधैः — च.

[4] 'ध्यायेत्सूर्यसहस्राभमघोरास्त्रमरिंदमम् ॥
प्रदीप्तदशनप्रान्तं प्रकाशमुखकन्दरम् ।
त्र्यक्षं तटिल्लताजिह्वं दीप्तभ्रूश्मश्रुमूर्धजम् ॥
सर्पोपवीतं शूलासिशक्तिमुद्गरधारिणम् ।
चतुर्भुजं चतुर्वक्त्रं स्फुरच्चन्द्रार्धशेखरम् ॥
नृत्यमानं महाकायं नागाभरणभूषितम् ।
देवदानवदैत्यानां दर्पितानां विमर्दकम् ॥
प्रस्फुर स्फुर इत्येवं हृदयं परिकीर्तितम् ।
घोरघोरतरेत्येतत्तच्छिरः संप्रकीर्तितम् ॥
ततश्च तनुरूपेति शिखामन्त्रः प्रकीर्तितः ।
चटप्रचटशब्दं तु वीप्सितं कवचं भवेत् ॥
ततः कह कहेत्युक्त्वा वम मन्दयेति स्मरेत् ।
घातयेति द्विरुच्चार्य पञ्चमाङ्गं प्रकीर्तितम् ॥
प्रान्ते स्याद्धुं फडित्येवं चतुर्थ्यन्तं हृदादिकम् ।
नमस्कारादिसंयुक्तमादौ प्रणवसंयुतम् ॥
परचक्रप्रमथने महाव्याधिप्रकोपने ।
शान्तिके पौष्टिके वश्ये प्रायश्चित्ते विचिन्तयेत् ॥'
(कामिके उत्तरभागे ३३.३६–४४)

[5] ध्यानहार० — ख.

[6] पुष्टि — ओ.

[ आकर्षणम्[1] ]

[2]आकृष्टौ [3]योजयेन्नित्यं यत्पदं [4]च भवात्मकम् ॥८॥

[ वश्यम्[5], प्रीतिश्च[6] ]

शाश्वतेन वशीकारः [7]प्रीतौ पूर्वस्थितं पदम् ।
उच्चार्य पदसंतानं[8] नाम ग्राह्यमनन्तरम् ॥९॥

[ रक्षा, [9]उत्कीलनं च ]

[10]रक्षायै सिद्धवस्तूनां[11] [12]ज्योतिर्ज्योतिरनिन्दितम् ।
[13]पदं पदविधौ योज्यं[14] शिवमुत्कीलने [15]हितम्[16] ॥१०॥

---

[1] 'आदावन्ते च हृदययोग आकर्षणे स्मृतः ।
आकर्षयेद् ध्रुवं युक्तो योजनानां शते स्थितम् ।
एवमाकर्षयेत्साध्यं नाम विज्ञाय तत्त्वतः ।
साधकस्य भवेद्बह्वी न्यूना साध्यस्य कीर्तिता ।
एवं विदित्वा मेधावी आकर्षं कुरुते ध्रुवम् ।'
(सार्धत्रि० १६.५–७ पू०);
कुण्डे वायव्यसंज्ञे च धूम्रध्यानाच्छरासनात् ।
प्रेर्यगोत्रसमायुक्तं योजनानां शतं नयेत् ॥
ओं नमो मध्यमो देव साध्यत(म)न्त्रोक्त-
वर्णधृत् ॥
आकर्षणे द्विरभ्यासाद्ध्रीङ्काराङ्कुशयोजनात् ।
(किरण० चर्या० २०.२४ उ०–२६ पू०)

[2] आकृष्टे — ओ, क, ङ.

[3] पूजये० — ख, छ, ज.

[4] प्रभवात्मकम् — ओ, क, ख, ङ, च, छ, ज.

[5] 'दशलक्षाणि जपतो जनाः स्वस्थानवासिनः ।
वशमायान्ति ते क्षिप्रमिति शास्त्रस्य निश्चयः ।
त्रिपञ्चलक्षं जपतो दशग्रामनिवासिनः ।
ते जना वशमायान्ति आत्मना च धनेन च ।
एवं विंशतिभिर्लक्षैः प्रासादस्य षडानन ।
देशदेशाधिपान्मन्त्री नियतं वशमानयेत् ।'
(सार्धत्रि० १६.११–१३);
'मन्त्रार्णद्वन्द्वमध्यस्थं साध्यनामाक्षरं लिखेत् ।
विदर्भ एष विज्ञेयो मन्त्रिभिर्वश्यकर्मणि ।'
(शारदातिलकम् २३.१३८)

[6] प्रीतिः — आप्यायनम्
'आप्यायने प्लुतश्चैव बिन्दुना मूर्ध्नि भूषितः ।'
(सार्धत्रि० १६, २ उ०)

[7] प्रीतो — ओ, क, ङ.

[8] ०संतान — ओ, क.

[9] शिवेन कलिता विद्या तदुत्कीलनमुच्यते ।
मायातारपुटां मन्त्री जप्यादष्टोतरं शतम् ।
मन्त्रस्यादौ तथैवान्ते भवेत्सिद्धिप्रदा तु सा ।
एष नूनं विधिर्गोप्यः सिद्धिकामेन मन्त्रिणा ।
(मन्त्रमहार्णवे पत्र० १४)

[10] रक्षये — ओ; रक्षणे — ख, च, छ, ज;
रक्षयेत् — ङ.

[11] ०वस्थाणा—ओ; ०वस्थाणां — क; ०वस्त्रा-
नां — ख, ज; सिद्धिवस्त्राणां — ङ.

[12] ज्योतिर्निन्दितं पदम् — ओ, क; ज्योतिर्ज्योति-
रत्विदम् — ज.

[13] पदापदविधौ — छ, ज.

[14] पदं विधौ च योज्यं स्यात् — ओ, क.

[15] पुनः — च.

[16] शिवमुद्गलतेऽपि तम् — ओ, क, ङ.; शिव-
मुत्कलने हितम् — ख, छ, ज.

[ विघ्ननिवृत्तिः ]

[1]विध्नानां निग्रहे[2] साक्षि [3]पतङ्गं पातने हितम् ।

[[4]मन्त्रदीपनम् ]

[5]दीपने सर्वमन्त्राणां शब्दशब्दपदं [6]हितम् ॥११॥

[ ताडनम्[7] ]

[8]ताडने [9]निर्मितं धात्रा यत्पदं निधनोद्भवम्[10] ।

[[11]निर्मलीकरणम् ]

निर्मलीकरणेऽभस्म पदमत्रोदितं[12] शुभम् ॥१२॥

[13][ अग्निसंधानम्, निर्बीजकरणं च ]

अनग्निरग्निसंधाने[14] निर्बीजकरणे तथा ।

---

[1] विघ्नां च निग्रहे — ओ; विघ्नांश्च निग्रहे — क; विघ्ना न निग्रहे — ङ.

[2] निग्रहेत् — ख.

[3] पतङ्गपतने–ओ, क, ख, ङ, छ, ज; पतन्तं–च.

[4] 'जपो हंसपुटस्यास्य सहस्रं दीपनं स्मृतम्' (मन्त्रमहोदधौ पत्र० २२५; मन्त्रमहार्णवे पत्र० १४)

[5] दीपेन — छ, ज.

[6] हि तत् — ओ, क, ङ.

[7] मन्त्रवर्णान् समालिख्य ताडयेच्चन्दनाम्भसा ।
प्रत्येकं वायुना मन्त्री ताडनं तदुदाहृतम् ॥
(शारदातिलकम् २.११६)
सहस्रं प्रजपेदत्र पुटितं ताडनं हि तत् ।
(मन्त्रमहार्णवे पत्र० १४)
(मन्त्रमहोदधौ पत्र० २२५)

[8] ताडनो — क; तासनो — छ, ज.

[9] निर्वितद्राता — ओ, ख; निर्मलो त्रायन् — क, छ, ज; निर्वृतद्रात्रा — ङ.

[10] ०नोत्पदम् — ओ, क.

[11] 'संचिन्त्य मनसा मन्त्रं ज्योतिर्मन्त्रण निर्दहेत् ।
मन्त्रे मलत्रयं मन्त्री विमलीकरणं त्विदम् ॥"
(शारदातिलकम् २.११९).
हरिवल्लचन्वितस्तारो वषडन्तो ध्रुवादिकः ।
सहस्रं तत्पुटो जप्यो विमलीकरणे मनुः ॥
मन्त्रमहार्णवे पत्र० १४.
मन्त्रमहोदधौ पत्र० २२५.

[12] ०मन्त्रोदितं — ओ, क.

[13] 'प्रणवेनाग्निमध्यस्थो हकारो ह्रीं तथैव च ।
आदिरों च नमश्चान्ते अनग्निज्वलने हितम् ॥
अग्नि स्रोतसि संयोज्य सहस्रोद्घातसंयुतम् ।
पञ्चाक्षरप्रयोगेण ज्वलत्येव न संशयः ॥'
'यथाग्निज्वलने दृष्टो निर्बीजकरणे तथा ।
शतैः पञ्चभिरुद्घातैर्विशेषोऽत्र विधीयते ॥'
(सार्धत्रि० २१.४, ५, १८ उ०, १९ पू०)

[14] ०संधानि — ङ.

[1][ ज्वरग्रहादिशासनम् ]

[2]ज्योतीरूपपदं [3]सिद्धं [4]निर्बीजकरणे तु तत्[5] ॥१३॥
ज्वरग्रहपिशाचानां भूतानां चैव [6]शासने ।

[ दुष्टसत्त्वनिग्रहः ]

[7]निग्रहे दुष्टसत्त्वानां [8]सद्भावेशपदं [9]स्मृतम् ॥१४॥

[ [10]अमृतीकरणम् ]

[11]सूक्ष्मसूक्ष्मपदं योज्यममृतीकरणे[12] सदा ।

---

[1] 'ओंकारमादितः कृत्वा ह्रूंकारं तदनन्तरम्
ह्रों ह्रूं च फण्णमश्चान्ते ग्रहाणां नाशने मतः ।
प्रयोगे वारुणे मार्गे उद्घाताष्टशतेन तु ।
प्रणवादि ततो हुं फट् हुं फट् हुं फट् तथैव च ।
फट् फट् फट् फट् फडेवं स्याद्वारुणेन तु बुद्धिमान् ।
उद्घाताष्टशतेनैव क्षिप्रं नाशयति ज्वरम् ।
(सार्धत्रि० २१. १९ उ०—२१)

[2] ज्योतिरूपंपदं — ओ, क, ख, ङ, ज; ज्योतिरूपिपदं — छ.

[3] सिद्धिः — ओ; सिद्धि — क; सिद्ध० — ङ.

[4] निवीक्षीकर० — ओ; निर्वीक्षीकर० — क; निर्विषी० — ङ; निर्विशी० — च.

[5] ०करणेन तु — ओ, ङ, छ, ज; करणेऽत्र तु — च.

[6] साधने — ख, छ, ज.

[7] विग्रहे सत्व . . . ष्टानां — ख; विग्रहे सत्त्वदुष्टानां — छ; विग्रहसत्त्वदुष्टानां — ज.

[8] सद्भावेन पदं — ओ, क; स्वभावेशपदं — ख, छ, ज.

[9] स्मृतः — छ, ज.

[10] 'ओं जुं स' इति मन्त्रोऽयं देवो मृत्युंजिदाह्वयः ॥
एष एवामृतेशः स्यादादौ कूटयुतो न वा ।
रसादिशुक्लपर्यन्तधातुसप्ताक्षरान्वितम् ॥
हकारेण शरीरं तु रसमित्यादितः पठेत् ।
अन्ते च रक्ष रक्षेति वीप्सितं च पदं पठेत् ॥
आदौ स्याद्देवदेवेशेति (पदं) समुद्धरेत् ।
प्राणं च देवदत्तस्य मूलमन्त्रे नियोजयेत् ॥
पीठं जुंकारक्लृप्तं स्यान्मूर्तिरों जुंसतो भवेत् ।
मध्ये निवेशयेत्कूटं प्रासादं वा नवात्मकम् ॥
कण्ठोष्ठ्यं वा हकाराद्यं ब्रह्माण्यङ्गानि कल्पयेत्
अनेन सदृशो नास्ति मन्त्रो मृत्युंजयो द्विजाः ॥
सुधाकलशमध्यस्थः श्वेतपद्मासनास्थितः ।
चतुर्भुजस्त्रिणेत्रश्च जटाखण्डेन्दुमण्डितः ॥
व्याघ्रचर्मपरीधानो नागेन्द्रोरोविभूषणः ।
त्रिशूलं चाभयं चोर्ध्वे सुधाकलशमध्ययोः ॥
दधानःषड्भुजश्चेत्स त्रिशूलं चाक्षमालिकाम् ।
कपालं कुण्डिकां वामे योगमुद्रां करद्वये ॥
अनेन सदृशो मन्त्रो नास्ति प्राणादिरक्षणे ।
न भविष्यति भूतश्च सत्यमेतदुदाहृतम् ॥
भोजनं चापि कर्तव्यं त्र्यक्षरेणामृतीकृतम् ।
तेनामृतं भवत्याशु खादितं मृत्युजिद्भवेत् ॥
अमृतेशेन देवेन जलं संग्राह्य यत्नतः ।
शतजप्तं पिबेत्तोयममृतीभवति ध्रुवम् ॥
क्षीरेण सह संपृक्तदूर्वाकाण्डमखण्डितम् ।
ब्रह्मवृक्षेन्धनैर्दीप्ते वह्नौ जुह्वन्न मृत्युभाक् ॥
देवं तूपासते यस्तु नित्यं मृत्युंजयात्मकम् ।
नाचिरेणैव कालेन मृत्युस्तस्य भविष्यति ॥
(कामिके उत्तरभागे ३३.११उ०–२४)

[11] सूक्ष्मं सूक्ष्म० — ङ.

[12] ०मामृतिं करणे — छ, ज.

[ अरूपादिपञ्चपदसाध्यानि ]

[1]अरूपपदपूर्वाणि पञ्चोक्तानि विशेषतः ॥१५॥
[2]न्यासेऽमृतप्रसिद्ध्यर्थमायुष्कामस्य[3] नित्यशः ।
जपतः सर्वदा तस्य[4] न मृत्युरुपसर्पति[5] ॥१६॥
[6]सिद्धिलिङ्गानि सिद्धस्य सौभाग्यमविषादता[7] ।
[8]विधिः [9]संबुध्यते [10]बुद्धिर्ज्ञानोत्कर्षश्च जायते ॥१७॥
सुगन्धिगन्धैर्देहस्य[11] [12]दिव्यैश्च सह संगमः[13] ॥
[14]न म्लायति सदा माला [15]धृता मूर्धनि [16]राजते ॥१८॥
[17]म्लाना वाप्यथ सा माला [18]क्षणाद्विकसते धृता ।
[19]दुर्गन्धान्यपि द्रव्याणि [20]संस्पृष्टानि महात्मना ॥१९॥
[21]क्षणात्सुगन्धिगन्धानि[22] भवन्ति मुनिसत्तम ।
[23]मृत्योर्वियोजयत्याशु प्राप्तकालमपि क्षणात् ॥२०॥
न केवल[24]मपि ध्यानात्प्रकरोत्यजरामरम्[25] ।
[26]संक्रुद्धो वा [27]क्षणाच्छत्रू[28]न्प्रेषयेद्यमसादनम् ॥२१॥

---

[1] आरूपदरूपाणि — ओ, क; आरूपपद० — ख; अरूपवति पूर्वाणि — ङ.

[2] न्यासेन मृत्प्र० — ओ, क, ङ; न्यासेऽमृति० — ज.

[3] ०मायुःकामस्य — च.

[4] सर्वदातव्य — ख; जपतश्च सदा तस्य — च.

[5] न मृत्युमुपसर्पति — ङ; ०सर्पितः — छ, ज.

[6] सिद्धलि० — ओ, क, ङ.

[7] ०मभिलाषिता — ओ, क, ङ; ०मविषतदता — च; ०मपिषा तदा — छ, ज.

[8] विधिसं० — क, ङ; विधिसंबुद्धिज्ञानो० — छ, ज.

[9] संपद्यते वृद्धि ज्ञानोत्कर्ष च — च.

[10] बुद्धिज्ञानो० — ओ, क, ङ.

[11] सुगन्धदेहदिव्यैश्च — ओ, क; सुगन्धगन्धो देहस्य — ख; सुगन्धगन्धैर्देहस्य — ङ; सुगन्धगन्धदेहस्य — च; सुगन्धो गन्धदेहस्य — छ, ज.

[12] सह संगमनं शुभम् — ओ, क.

[13] संगमेः — ख.

[14] नम्यायति — क; ..ते — ख; न म्लायते — छ, ज.

[15] कृतमूर्धनि — ओ, क, ख, ङ; कृतासूवनि — च; कृतमूर्धानि जायते — छ, ज.

[16] रञ्जते — ओ, क; जायते — ख.

[17] स्वानाद्वावप्यसा — ओ; स्वानाद्वावप्यसां — क; म्लानावप्यथ सृङमाला — ख, छ, ज; म्लानाद्वावप्यसं माला — ङ; म्लानावाप्यथ स्रङमाला — च.

[18] क्षणा विरसते — ओ; क्षणा विरसतेद् — क; क्षणाद्विकसने — ख; क्षणा विकसते–ङ.

[19] दुर्गन्धीन्यपि — ङ, च.

[20] संपृष्टानि — ङ.

[21] 'ओ, क' मातृकयोरिदमर्धं न दृश्यते ।

[22] सुगन्धगन्धीनि — ख, च, छ, ज; सुगन्धिगन्धीनि — ङ.

[23] मृत्योर्विजयो जय० — ओ, क.

[24] ०मभी .. — ख; ०मभिध्यानात् — च; ०मभिध्यानाप्र० — छ, ज.

[25] ०परम् — ख.

[26] संक्रुद्धाद्वा — ओ, क, ख, ङ, छ, ज.

[27] क्षणछत्रूत्प्रेक्षये० — छ, ज.

[28] ०न्प्रेक्षयेद्यम०—ओ, क; ०न्प्रेषये मम — ख.

कल्पायुष[1]मधीच्छातः किं [2]पुनर्मानवं भुवि ।
बहुनात्र किमुक्तेन यद्यदीप्सति[3] साधकः ॥
तत्तत्सर्वमवाप्नोति नात्र कार्या विचारणा ॥२२॥

(उक्तार्थोपसंहारो वक्ष्यमाणोपक्रमश्च)

कर्माणि [4]शक्तेर्विविधानि युक्त्या
प्रोक्तानि सम्यक्प्रविभज्य [5]विप्र ।
संस्थापनं मन्त्रपदक्रमेण
स्वरूप[6]तश्चापि [7]शृणु त्वमेतत् ॥२३॥

इति श्रीमतङ्गपारमेश्वरे क्रियापादे [8]कर्मसंतान-
विधिपटलो द्वादशः ॥
द्वादशः पटलः

---

[1] ०मधीच्छानः — ओ, क; विविच्छातः — ख; ०मधीच्छातः — ङ; . . विच्छातः — छ, ज.
[2] पुनर्मनवं — ख.
[3] ०दीप्सित० — ख; यद्यदिच्छति — च; यदि दीप्सति — ज.
[4] शक्त्योर्विधानि — ओ; शक्त्यैर्विविधानि — क; शक्ये विविधानि — ङ.
[5] विप्रः — छ, ज.
[6] ०तं चापि — ङ; ०तश्चाप्यधुनोपवर्ण्यते — च.
[7] शृणुष्वमेतत् — ओ; शृणुष्व चैतत् — ख, घ, छ, ज.
[8] कर्मपटलो — ओ, क, ख, घ, ङ; कर्मपटलम् — च.

# त्रयोदशः पटलः

## लिङ्गस्थापनम्

[ [1]लिङ्गस्थापनफलम् ]

अथातः सर्व[2]मन्त्रादौ [3]लिङ्गस्य स्थापनं शुभम् ।
यस्मिन्सं[4]निहितः क्षिप्रं [5]सिद्धिं [6]यच्छत्यनिन्दिताम् ॥१॥
[7]भगवान्परमेशानो मन्त्राश्चामोघशक्तयः ।
स्वरूपाराध[8]नाविष्टसाधकस्य वरप्रदाः ॥२॥

[ [9]शिलासंग्रहणं, तदधिवासश्च ]

[10]भवन्ति; मुनिशार्दूल तद्विधानमिहोच्यते ।
निम्नगान्तर्गता ग्राह्या [11]शिला स्निग्धा गरीयसी ॥३॥

---

[1] 'अथ वक्ष्ये विशेषेण लिङ्गस्थापनमुत्तमम् ।
धन्यं यशस्करं चायुर्वर्धनं पुत्रवृद्धिदम् ।
भुक्तिदं मुक्तिदं सर्वदानयज्ञफलप्रदम् ।'
(कारणे पूर्वभागे ५९. १, २पू०) ;
'एवं प्रकल्प्य तल्लिङ्गं घटी(नी)भूतं प्रकल्पयेत् ॥'
'तत्र राष्ट्रे सुभिक्षं स्यान्न क्षयो न च तस्करः ।
राजा विजयमाप्नोति वनिता सुप्रजावती ॥
स्थापकस्य सदा सिद्धिर्दोषाः शान्ताः प्रयोगतः ।
(किरणे चर्यापादे २६. ५१उ०, ५५, ५६पू०) ;
'अथातः संप्रवक्ष्यामि लिङ्गसंस्थापनं परम् ।
सर्वसिद्धिकरं पुण्यं सर्वयज्ञफलप्रदम् ॥'
(सुप्रभेदे क्रिया० ३६.१) ;
(अजिते क्रिया० १८.२८८उ०–२९२) ;
(रौरवे क्रिया० २८.१, २; ८९उ०, ९०)

[2] ०मन्त्रादेर्लि० — ओ, क, च.

[3] लिङ्गाः संस्था० — ओ; लिङ्गं संस्था० — क; लिङ्गसंस्था० — ङ, च.

[4] ०निहिता क्षिप्रं — ओ, क; ०निहिता सा क्षिप्रः — ङ.

[5] फलं — ओ, क, ख, घ, ङ, छ, ज.

[6] यच्छद्यनिन्दितम् — ओ, क; सवच्छत्यनुज्झितम् — ख; स्वच्छत्यनुच्छितम् — घ, यच्छत्यनिन्दितम् — ङ; स्वच्छतयनूच्छितम् — छ; स्वच्छत्यकुच्छितम् — ज.

[7] भगवन् — ओ,

[8] ०नाविष्टाः साध०–ओ, क, ख, घ, च, छ, ज.

[9] एतद्विषयतुलनार्थं अजितागमीयः पञ्चमः पटलो द्रष्टव्यः.

[10] भगवन् — ओ, ख, घ, ङ; भगवान् — क.

[11] 'गिरौ गिरिसमीपे वा वनेषूपवनेषु च ।
नदीतीरे द्रुमे शैले लिङ्गार्थं द्रव्यमाहरेत् ॥
याः सुवर्णा घनाः स्निग्धा निमग्ना नगसन्धिषु ।
सरित्सलिलनिर्धूतपवित्रान्तर्जलोषिताः ।
वृक्षच्छायोपगूढाश्च तीर्थाश्रमसमाश्रयाः ॥
आयामव्यासनाहाढ्या रक्ताः पीताः सितासिताः।
मनोरमाः शिला ग्राह्या यौवनाः श्रेयसे मताः ॥'
(कामिके पूर्वभागे ६२.६–९पू०)
'शिलां गृह्णीत देशिकः ॥
सरित्सलिलनिर्धूतां पवित्रान्तर्जले स्थिताम् ।
द्रुमच्छायोपगूढां च तीर्थाश्रमनिषेविताम् ॥
आयामपरिणाहाढ्यां सर्वदोषविवर्जिताम् ।'
(कारणे पूर्वभागे ९.४०उ०–४२पू०)

[१]निबिडा [२]निर्व्रणा [३]भद्रा ह्येकवर्णाथवा गिरेः[४] ।
प्रख्यातयशसा[५] [६]ग्राह्या [७]चरुं कृत्वा [८]विधानतः ॥४॥
सर्वभूतसुखेनादौ[९] गायत्र्या [१०]प्राश्य [११]वाग्यमी ।
[१२]सुनिमित्ते शुभे [१३]स्वप्ने [१४]योगे चैव पुरोदिते[१५] ॥५॥
गत्वा शिलासमीपे तु [१६]पूर्ववद्विपचेच्चरुन् ।
[१७]यष्ट्वा देवं शिवं [१८]भक्त्या वह्नावपि [१९]घृताहुतिम् ॥६॥
[२०]पातयेच्छक्तितो [२१]मन्त्री [२२]शिलां चैवाधिवासयेत् ।
स्वपेत्तत्रैव[२३] युक्तात्मा[२४] [२५]स्मरन्ब्रह्माण्यतन्द्रितः[२६] ॥७॥

---

[१] शिबिडा — ङ.

[२] निघ्रणा — ओ; निवृणा — क; निघृणा — ङ, छ; निर्गुणा — च; निर्घृणा — ज.

[३] भद्राप्येक० — ख, घ, छ, ज.

[४] गिरौ — ओ, क; गिरे — ङ; गिरम् — च.

[५] ०यशसो — ओ, क, ख, घ, ङ, च, छ, ज.

[६] ग्राह्याः — ख, घ, छ, ज; ग्राह्य — ङ; ग्रास्वा — च.

[७] शङ्कुं — ओ; शङ्कुः — क.

[८] प्रयत्नतः — ओ, क, ङ.

[९] ०सुखे दाने — ओ, क; सुखे दानो — ङ.

[१०] प्राग्य — ओ, ङ, प्रात्य — क.

[११] चाप्यमी — च.

[१२] सुनिर्मिते — क, घ, छ; सुनच्छित्ते — ङ; विनिर्मिते — ज;
'यथावास्थानकाले तु निमित्तान्युपलक्षयेत् ।
दिव्यान्तरिक्षभौमानि अशुभानि शुभानि च ॥
सव्ये त्वागमनं वामाद्वायसस्य स्वरस्तथा ।
समांसश्येनकस्त्वग्रे दक्षिणाद्वाममार्गतः ॥
कन्यानां दर्शनं चैव गवारं हणमेव च ।
दधि वै पूर्णकुम्भं च ब्राह्मणं पुष्पसंयुतम् ॥
पावकं ज्वलमानं च मांसभारं तथैव च ।
वेश्यासंदर्शनं चैव वराहं हयमेव च ॥
शुभान्येतानि सर्वाणि दर्शयित्वा व्रजेद्बुधः ।'
(सुप्रभेदे क्रिया० ३३.४४–४८पू०);

[१३] 'एकरात्रं वसेत्तत्र स्वप्नमाणवकं जपेत् । . . .
दृष्टं स्वप्नं द्विजश्रेष्ठो ब्राह्मणेभ्यो निवेदयेत् ।
दुःस्वप्नं चेज्जपेद्धीमान् पाशुपतं सहस्रकम् ॥'
(कारणे पूर्वभागे ९.९५पू०, ९८);
'शुभे स्वप्ने तु चेद्धीमान् तदा छेदनमारभेत् ।'
(सुप्रभेदे क्रिया० ३३.६४पू०)

[१४] यागे — ख, घ.

[१५] आनन्दादियोगे सिद्धयोगः । मतङ्ग० क्रिया० १०.९–११ पू० वृत्तौ ।

[१६] पूर्ववद्वापचेचरुम् — ख, घ, छ, ज; 'चरुपाकः' मतङ्ग० क्रिया० ५.८२ उ०–९३पू०

[१७] इष्ट्वा — च.

[१८] शक्त्या — ओ, क, ख, घ, ङ, छ, ज.

[१९] घृताहुतिः — च.

[२०] पादये० — ङ.

[२१] मन्त्रैः — ओ, क.

[२२] 'शोधयित्वा भुवं पश्चात्तत्समीपप्रदेशकम् ।
पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयन् ॥
गन्धं पुष्पं तथा धूपं दीपं नैवेद्यमेव च ।
सद्यादिब्रह्मभिर्दत्त्वा शिलां वस्त्रेण वेष्टयेत् ॥
तस्यैव पूर्वभागे तु होमकर्म समारभेत् ।
समिदाज्येन चरुणा प्रत्येकं तु शताहुतिः ॥
हृदयेन समिद्धोमं सर्पिरीशानमन्त्रतः ।
अघोरेण शतं हुत्वा प्रत्येकं व्याहृतीर्हुनेत् ॥
ततः स्विष्टकृतं हुत्वा परिषेचान्तमाचरेत् ।'
(कारणे पूर्वभागे ९.९०–९४पू०).

[२३] ०त्तत्र च — ओ, ख, ङ; त्तन्त्रेव — क.

[२४] यत्तात्मा — ओ.

[२५] स्मरेद्ब्रह्मण्य०—ओ, क, ङ; . . स्मन् ब्रह्माण्डतन्त्रितः — छ; तस्मन् ब्रह्माण्डतन्त्रितः — ज.

[२६] ब्रह्माण्डतन्त्रतः — ख; ब्रह्माण्डतन्त्रितः —घ.

[1]शिल्पिनं पूजयित्वा तु शनैः [2]पाषाणमुद्धरेत् ।
[3]पृष्ठमूर्ध्वविभागं स्यान्मुखं वै [4]कल्पयेदधः ॥८॥
याम्यभागस्थितं[5] [6]लाञ्छच [7]शिरश्चास्य यथाक्रमम् ।

[ लिङ्गलक्षणम्[8] ]

[9]त्रिहस्तं सर्वसिद्धीनां [10]शस्तं लिङ्गमनुत्तमम्[11] ॥९॥
[12]तत्त्रिभागं कृतं [13]चादौ कर्तव्यं चतुरश्रकम् ।
[14]अधोभागे [15]तथाष्टाश्रं [16]मध्यभागे सुवर्तितम् ॥१०॥
[17]कार्यमत्राग्रिमं चापि [18]त्रिभागमतिशोभनम् ।

---

[2] पारण० — ङ.

[3] पृष्ठमूर्ध्निविभागस्य — ओ; पृष्ठमूर्ध्नि-विभागस्यां — क; पृष्ठमूर्ध्नि विभावं स्यान् — ङ; पृष्ठमूर्धविभागे स्यात् — च.

[4] कल्पयेद्यथा — ओ, क, ख; कल्पयेद्बुधः — घ, छ, ज.

[5] ०स्थिता — ओ, क, ङ.

[6] लाञ्छचा — क; शालाहचुश्चा . . स्य – ख; लाञ्छचं — च; शाला . . म्युश्चास्य — छ, ज.

[7] शिवेश्चास्य — ओ, घ; शिवे चास्य — क; 'अधोभागं मुखं तस्य पृष्ठं मूर्ध्नि प्रकल्पयेत्। पार्श्वयोः पार्श्वमेवं तु मूलं याम्यां परे विदुः ॥ पूर्वे चोत्तरपार्श्वे वा शिरः संकल्प्य बुद्धिमान्। लाञ्छयित्वा' (सुप्रभेदे क्रिया० ३३.६५उ० — ६७पू०).

[8] कृत्वायामं चतुर्भागं प्रमाणे निश्चितां शिलाम्।
भागमेकं तु विष्कम्भं कृत्वा भागं त्रिधा पुनः ॥
अधोभागं भवेद्ब्राह्मं मध्यमं वैष्णवं भवेत्।
ऊर्ध्वभागं भवेच्छैवमेवं संकल्पयेत् त्रिधा ॥
चतुरश्रं भवेद् ब्राह्मम् अष्टाश्रं वैष्णवं भवेत्।
कुर्याच्चैवं ततो वृत्तं क्रमेणैव यतस्ततः ॥
एतत्सर्वं समं लिङ्गं सर्वसिद्धिकरं शुभम्।
(स्वायंभुवे ५३.५८–६१पू०);
(अजिते क्रिया० ४.२३–३८);
(रौरवे क्रिया० २८ ३–१३पू०).

[9] 'हस्तमानमथ श्रृणु।
एकादिनवहस्तान्तं षडङ्गुलविवर्धनात् ॥'
(कारणे पूर्वभागे ९.१०२उ०, १०३पू०).

[10] शस्तलिङ्ग० — ङ.

[11] सर्वमनुत्तमम् – ओ, क; लिङ्गचतुःसमम् – च.

[12] तत्र भागकृतं — ख, घ; तत्त्रिभागकृतं — ङ, च, छ, ज.

[13] त्वादौ — च.

[14] अङ्कभागे —— च.

[15] तथाष्टाग्रं — क.

[16] मध्ये भागे — क, ङ.

[17] कार्यमुद्धल्यमत्रापि — ओ, क, ङ; कार्य-मथाख्यमत्रापि — च; कार्यमन्त्राग्निमन्त्रापि — छ, ज.

[18] त्रिभागैकस्त्रिशोधनम् — ओ, क; विभाग० — ख, घ, च, छ, ज; त्रिभागैकत्रिशोभनम् — ङ.

[19] शिल्पिनः — च.

[ [1]शिरोवर्तनम् ]

[2]छत्राकारं [3]शिरः श्रेष्ठं [4]मयूराण्डकमेव वा ॥११॥
[5]वर्तुलं वा समं भद्रं सर्वकामफलप्रदम् ।

[ [6]ग्राह्या अग्राह्याः शिलाः ]

[7]संघृष्टं शाणकोटचा तु पञ्चगव्येन क्षालयेत् ॥१२॥
[8]गोवाल[9]रज्ज्वा [10]संघृष्यन्वारिणा च मुहुर्मुहुः ।
[11]घृष्यमाणस्य लिङ्गस्य [12]रेखा [13]तद्वर्णवर्णिनी ॥१३॥
[14]शस्त्र[15]प्रभानिभा [16]शस्ता शुभ[17]द्रव्या च शस्यते ।
[18]वर्णाधमा विपर्यस्ता [19]रूपेणातिजुगुप्सिता ॥१४॥

---

[1] 'शिरसो वर्तनं कुर्यात् तच्चतुर्विधमुच्यते ।
प्रथमं त्रपुषाकारं ब्राह्मणानां प्रशस्यते ॥
अर्धचन्द्रनिभाकारं राज्ञां चैव द्वितीयकम् ।
छत्राकारं तृतीयं स्याद्वैश्यानां वर्तनं तथा ॥
कुक्कुटाण्डं भवेच्चैव शूद्राणां च चतुर्थकम् ।
कृत्वा तारं तु षड्भागं लिङ्गस्य शिरसस्तथा ॥
सार्धेन तु द्विभागेन वर्णिता त्रपुषाकृतिः ॥
विस्तारं तु त्रिधा कृत्वा द्विभागेन प्रवर्तनम् ॥
अर्धचन्द्रमिति प्रोक्तं छत्रं स्यात्समवर्तितम् ।
कुक्कुटाण्डं भवेत्तत्र विस्तारार्धेन विस्तृतम् ॥'
(स्वायंभुवे ५३.६३–६७) ;
(अजिते क्रिया ४.३९–४७) ;
(रौरवे क्रिया० २८.१३उ०–१५पू०).

[2] 'ङ' मातृकायाम् ११ श्लोकस्योत्तरार्धं १२ श्लोकश्च न स्तः.

[3] शिरश्श्रेष्ठ० — छ, ज.

[4] मायूराण्डक० — ख, घ, छ; मयूराण्डाकृतिस्तथा — च; मायूरांधक० — ज.

[5] वर्तुला वा — च.

[6] एतद्विषयतुलनार्थं अजितागमे क्रियापादे ५.२५ — ५७ श्लोकान् पश्यत ।

[7] संघृष्टशाण० — ओ; सुघृष्टशाण० — क; सुकृष्टं शतकोटचां तु — ख, घ, छ, ज; सुघृष्टं — च.

[8] गोबालरजसंघृष्य वारणा च — छ; गोपालरजसंघृष्य वारणा च — ज.

[9] ०रज्वसंघृष्यन् — क; ०रजसंघृष्य वा० — ख, घ.

[10] संपृष्य — ङ; संघृष्य वारिशौचं मुहु० — च.

[11] पुष्य० — ओ, क.

[12] मुखं तद्वर्ण० — ओ; मुखात्तद्वर्ण० — क; मुखातद्वर्ण० — ङ; पश्चात्तद्वर्णवर्णिनीम् — च.

[13] ०त्रयविवर्णिणी — ख; ०त्रयविवर्णितम् — 'ख' पाठान्तरम् ।; तव वर्णितम् — घ, छ, ज; तव वर्णिनी — 'घ' पाठान्तरम् ।

[14] शस्त० — घ, च, छ, ज.

[15] ०प्राणिनिभाः — ओ; ०पाणिनिभाः — क, ङ; ०प्रभानिभाः — ख; ०प्राणिनिभा — च.

[16] शस्ताः — क; स्निग्धाः — ख; शास्ता स्निग्धा — घ; स्निग्धा — च; शास्ता — छ, ज.

[17] ०द्रव्याणि शस्यते — ओ, क, घ, ङ.

[18] वर्णार्याविव पर्यस्ता — ओ, घ; वर्णार्याविव पर्यस्त० — क; वर्णायामा — ख; वर्णधामा — ङ, ज; वर्णयामा — छ.

[19] रूपेणात्रि० — क; रूपेणापि — च.

[१]वर्णोत्कृष्टा [२]प्रशस्तेन [३]रूपेण [४]शुभदा मता ।
[५]सुवर्णबिन्दु[६]रचितं रेखाभिश्च [७]सुशोभितम् ॥१५॥
मस्तका[८]वर्तकं लिङ्गं प्रशस्तं सर्वकर्मणि ।
[९]मध्यावर्तं त्यजेल्लिङ्गं [१०]पृष्ठावर्तमनिन्दितम्[११] ॥१६॥
[१२]कीलकाविद्धमशुभं [१३]वक्रं [१४]चापि जुगुप्सितम् ।
[१५]घृष्यमाणस्य लिङ्गस्य [१६]न्यग्भूतानि शनैः शनैः ॥१७॥
आविर्भवन्ति रूपाणि मण्डला[१७]नां यदा तदा ।
सगर्भं तद्विजानीयात्त्याज्यं [१८]यत्नाद्विपश्चिता ॥१८॥
[१९]पृथङ्मण्डलसारूप्याद्गर्भाणामप्यनेकता[२०] ।
[२१]संसिद्धा दोषवर्गस्य [२२]विभिन्नान्तरता मुने ॥१९॥
[२३]वर्ण्यते नोप[२४]योगार्थं [२५]यस्मात्त्याज्या[२६] प्रयत्नतः ।
प्रायश्चित्तेषु सर्वेषु [२७]बहुरूपेण सर्पिषा ॥२०॥
आहुतीनां शतं होम्यं [२८]शान्तये [२९]नियतात्मना ।

---

१ वर्णोत्तटा — क; वर्णोत्कटा — ख, घ, ङ, च, छ, ज.

२ प्रशस्ते शुभदा मता — घ, छ, ज.

३ रूपेणाशुभदा — च.

४ शुभता — ओ, क, ङ.

५ स्वर्णबिन्दुश्च — ओ, क.

६ ०निचरं — ख, घ, छ, ज; ०निचिता — च.

७ सुशोभनम् — ओ, क, घ, ङ; सुशोभना — च.

८ ०वर्तितं — ख, घ, छ, ज.

९ 'ओ, क' मातृकयोरिदमर्धं नास्ति ।; वध्यावर्तं — ङ.

१० प्रशस्तं सर्वकर्मणि — घ; ब्रह्मावर्त० — ङ.

११ 'घ' मातृकायां '१७' श्लोकप्रभृति पञ्चदशपटले '१३' श्लोकान्तो भागो लुप्तः ।

१२ कालकाविद्ध० — ओ; किलकाविड० — ङ; कीलकादि शुभं वक्त्रं — च; कीलकापीड० — ज.

१३ वक्त्रं — ओ, वक्त्र० — ङ.

१४ जाति० — क, ङ; चाति० — च.

१५ वृषमाणस्य — ङ.

१६ . . . शनकैः शनैः — ओ; दूतानि शनकैः शनैः — क; न्यग्भूतोनि — क; द्रुतानि शनकैः शनैः — ङ; न्यद्भूतोनि — छ, ज.

१७ ०ना धदा तदा — ङ; ०नि यदा तदा — च.

१८ यत्तद्वि० — ख; यत्नाद्विचक्षणैः — च.

१९ '१९' श्लोकः '२०' पूर्वार्धं च 'ओ, क' मातृकयोर्न स्तः ।

२० ०मप्यनेकधा — ख, ङ, छ, ज.

२१ संसिद्धा देषवर्तस्य — ख; संसिद्धा देववर्गस्य — ङ.

२२ विभिन्ना तेन — ख, च; विभिन्नान्तरसामने — ङ; विभिन्ना तेन संमुने — छ, ज.

२३ वणुते — ङ, वणिते — छ, ज.

२४ ०योगाढ्यं — ज .

२५ यस्ता — ङ.

२६ ०त्याज्याः — ङ, छ, ज.

२७ पयसा मधुसर्पिषा – ओ, क, ङ.

२८ शान्तस्य — च.

२९ नियतात्मनाम् — ख, छ, ज; नियतात्मनः — च.

[ [1]ब्रह्मशिला, [2]पिण्डिका च ]

[3]स्वायामवर्तुला[4] [5]कार्या [6]लिङ्ग[7]स्य स्यात्सुशोभना[8] ॥२१॥
अधोभागसमा भद्रा [9]मध्ये खातसमन्विता ।
[10]बहिरङ्गुलनिष्क्रान्ता[11] चतुरश्रा [12]समन्ततः ॥२२॥
[13]कार्या ब्रह्मशिला, भद्रा सर्वदोषविवर्जिता ।
पिण्डिकापि हि[14] कर्तव्या चतुरश्रा महामुने ॥२३॥
चतुर्दिक्षु [15]करायामा समच्छिद्रोन्नता[16] शुभा[17] ।

---

[1] 'अथवा लिङ्गविष्कम्भाच्छ्रेष्ठा स्याद् द्विगुणा घना(त्) ।
विस्ताराध्यर्धतो नीचा भवेद् ब्रह्मशिला क्वचित् ॥
खातं ब्रह्मशिलामध्ये ब्रह्मभागोपमं भवेत् ।
प्रविशेद् ब्रह्मभागं तु नीरन्ध्रं च यथा भवेत् ॥'
(शिल्परत्ने उत्तरभागे २७.६५, ६६);
(अजिते० क्रिया० १८.१७२–१७९)

[2] 'यावद्दैर्घ्यं भवेल्लिङ्गं तावत्पीठस्य विस्तरम् ।
उत्सेधस्य त्रिभागेन तच्च षोडशधा कुरु ।
एकं भूमिगतं कृत्वा जगतीं चतुरङ्गिकाम् ।
भागत्रयेण वृत्तं स्यादेकांशे वृत्तपट्टिका ॥
कुर्यात्कण्ठं त्रिभिर्भागैः कार्यांशैर्हयूर्ध्वपट्टिका ।
द्वाभ्यां तदूर्ध्वपट्टिः स्याद् भवेदंशेन पट्टिका ॥
भागं भागं त्यजेत्तावज्जगत्यंशात्कलाधिकम् ।
कण्ठस्थानाच्च निष्क्रामः कार्यो यावत्तदन्तिकम् ॥
स्याज्जलाश्रयबाहुल्यं लिङ्गस्यार्धात्त्रिभागतः ।
मेखला तत्त्रिभागा स्यात्खातं तद्द्व्यंशहीनकम् ॥
त्रिधा पीठे कृते मध्ये नालः स्यादुत्तरायतः ।
जलमार्गं त्रिभागेन ह्रासः कार्यस्त्रिभागतः ॥
सामान्यलक्षणं प्रोक्तं विशेषं शृणु लक्षणम् ।'
'चतुरश्रा भवेद्भद्रा मेखलाद्वयभूषिता ॥'
(किरणे चर्यापादे २३. १२–१८पू० १९उ०);
(अजिते क्रिया० १६. १०–१३);
(रौरवे क्रिया० २८. ७२०–७९)

[3] सायाम० — ज.
[4] यामवर्तुलया — ओ, क.
[5] कार्य — ङ.
[6] लिङ्गं — क; लिङ्गेऽर्चा — च.
[7] . . .स्य।च्चाणुशोभना — ओ; स्याच्चाणुशोभनम् — क;
[8] ०स्योच्चा सुशोभना — ख; ०स्याच्चस्तशोभना — ङ; स्या सुशोभना — च; ०स्या च सुशोभना — छ, ज.
[9] मध्यरेखासमन्विता — ख; मध्यखात० — च.
[10] बहिरङ्गुलि०—ओ, क, ङ; बहु. . ङ्गुल०— ख; बहुरङ्गुल० — छ, ज.
[11] निष्क्रम्य — ओ, क, ङ.
[12] समन्वितः — ङ.
[13] कार्य ब्रह्म० — ओ.
[14] पिण्डिका बहि० — ङ.
[15] कारयामास सम० — ङ; करायाम्ना — छ, ज.
[16] ०च्छिद्रोन्नचा — ज.
[17] गुहा — च.

[ [१]लिङ्गस्य प्रासादानयनं, लक्षणोद्धारश्च ]

ततो रथे समारोप्य [२]श्वेताश्वपरिकल्पिते[३] ॥२४॥
[४]श्वेतानडुद्युते वाथ पृष्ठे वा राजहस्तिनः[५] ।
[६]मङ्गलैर्विविधैर्भद्रैः शनैरानीय [७]चादरात् ॥२५॥
[८]प्राङनिमित्ते शुभे क्षेत्रे [९]प्रागुदग्याम्य[१०]पर्वते ।

---

[१] 'देशिकस्तक्षकैः सार्धं विशेत्कर्मकुटीं ततः ।
वस्त्रहेमाङ्गुलीयैश्च देशिकं तक्षकं यजेत् ॥
शाणाभिकर्षणं कृत्वा लिङ्गं च पिण्डिकां ततः ।
अष्टमृत्सलिलेनैव स्नापयेद् गन्धतोयकैः ॥
लिङ्गं च पिण्डिकां चैव वस्त्रकाशैश्च वेष्टयेत् ।
स्यन्दने तु समारोप्य नयेदुत्तरमण्टपे ॥
वेद्यूर्ध्वे स्थण्डिलं कुर्याच्छाल्यष्टद्रोणकैः सुधीः ।
अलङ्कुर्यात्स्थण्डिलं च लाजपुष्पतिलैः कुशैः ॥
स्थण्डिलं पूजयेत्पश्चाद्गन्धपुष्पादिभिर्हृदा ।
लिङ्गं तु शाययेत्तस्मिन् प्राक्शिरस्कं सपीठकम् ॥
रक्तवस्त्रेण संवेष्टच गन्धपुष्पादिभिर्यजेत् ।
वेद्याश्चोत्तरभागे तु स्थण्डिले होममाचरेत् ॥
अग्न्याधानादिकं सर्वमग्निकार्योक्त ाचरेत् ।
पलाशसमिधः सद्यमन्त्रेण जुहुयात्ततः ॥
आज्यं मूलेन हुत्वा तु देवस्य त्वा चरुं हुनेत् ।
शतमर्धं तदर्धं वा द्रव्यान्ते व्याहृतिं हुनेत् ॥
ब्रह्मजज्ञानमन्त्रेण घृतेन जुहुयाच्छतम् ।
पूर्णाहुतिं च शिरसा स्विष्टमग्ने हुनेत्ततः ॥
कौतुकं हृदयेनैव रुद्रभागे तु बन्धयेत् ।
प्रभाते सुमुहूर्ते तु लक्षणोद्धारमारभेत् ॥
रुद्रभागसमायामं षण्णवत्यंशकं भजेत् ।
अङ्गुलं तेषु भागैकमुत्तमोत्तमकस्य तु ॥
सूत्रकस्य तु विस्तारं पञ्चाङ्गुलमिति स्मृतम् ।
ह्रासयेदर्धमर्धं तु अङ्गुलान्तं क्रमेण तु ॥
अष्टानां चैव लिङ्गानां सूत्रविस्तारमुच्यते ।
तन्मानं कारयेद्धीमान् न्यासं सूत्रस्य चावधि ॥
मस्तके मध्यमं ज्ञात्वा हेमसूचिं तु विन्यसेत् ।
भ्रामयेन्मस्तकान्तं तु तस्यैव शिरसि क्रमात् ॥
मस्तके च महाशासु गैरिकेणाङ्कयेत्क्रमात् ।
अजभागस्य तारस्य मध्यमं त्वङ्कयेत्तथा ॥
तन्मस्तकं समारभ्य मस्तके मध्यमान्तकम् ।
गैरिकाक्तेन सूत्रेण स्फालयेन्मध्यमं दृढम् ॥
वस्वश्रं मध्यमं ज्ञात्वा गैरिकाक्तेन तन्तुना ।
सूत्रमास्फालयेद्धीमानष्टादशाङ्गुलान्तकम् ॥
ज्ञात्वा पतनपार्श्वं तु नालं तन्मध्यमे कुरु ।
गुणाङ्गुलं तु तत्तारं नालस्यैव द्विपार्श्वयोः ॥
तस्य सीमावधेश्चैव ध्रुवसूत्रे समालिखेत् ।'
(कारणे पूर्वभागे ५९.४४–६२ पू०);
(अजिते क्रिया० १८.५० उ०–८९);
(रौरवे क्रियापादे २८.१५–२२ पू०)

[२] श्वेताश्च परि० — ओ, क.

[३] ०कुर्दिते — ओ, क; ०कुन्दिते — ख, छ; ०कुद्दिते — ङ; ०कुंटिते — ज.

[४] श्वेता नाम प्रयुक्तेन — ओ; श्वेतानभप्रयुक्तेन — क; श्वेतानडुहयुक्तेन — ख; वेताना सुद्युते नाथ — ङ; श्वेतानसुहयुते नाथ — छ; श्वेतासनयुते नाथ — ज.

[५] ०हस्तिभिः — क; ०हस्तिना — ख; ०हस्ति सः — ङ; ०हस्ततः — छ, ज.

[६] मांसलैर्वि० — ओ, क; समांसलैर्वि० — ङ.

[७] ०मादरात् — ओ, ख, ङ, छ, ज; सादरात् — च.

[८] प्रश्निमात्रे — ओ; प्रश्निमन्त्रे — क; २६ तमश्लोको 'ज' मातृकायां न दृश्यते ।

[९] प्रगुद० — ओ; प्रागुदगाम्य० — ख.

[१०] ०पार्वते — क; ०पूर्वमे — ख; ०पूर्वते — 'ख' पाठान्तरम्; ०पूर्वकैः — ङ; ०पूर्वके — छ

[1]प्रत्यग्वने [2]तथोदक्स्थकुश[3]दूर्वावने शुभे ॥२६॥
[4]समभूपृष्ठरचिते [5]प्रासादे नवहस्तके ।
[6]प्रत्यग्द्वारे दृढे रम्ये[7] [8]पञ्चार्धार्धप्रविस्तृते ॥२७॥
[9]स्थाप्यं [10]तदधिवास्यादौ [11]मण्डपे मण्डलान्विते ।
[12]स्थापयित्वा तु गायत्र्या [13]चर्चितं [14]चन्दनादिभिः ॥२८॥
रक्तवस्त्रकृताटोपं[15] शय्यायां संनिवेशयेत् ।
[16]त्रिकालं च [17]बलिर्देयः [18]सर्वसंभारसंयुतम्[19] ॥२९॥
कृत्वाग्निकार्यं [20]विद्येशैर्दिक्ष्वष्टास्वथ[21] मूर्तिपैः ।
लक्षणं चाप्यधोभागे[22] तृतीये परिलेखयेत् ॥३०॥
हेमसूच्या[23] विधौ मन्त्री ततः [24]शस्त्रेण चोत्किरेत् ।
[25]पूरयेन्मधुमिश्रेण[26] सर्पिषा [27]तत्क्षणं [28]विभोः ॥३१॥

---

[1] प्रत्यश्वने — क, छ; प्रत्यग्दले — च.

[2] ततोऽद्रिस्थः कुल० — ओ, ङ; तथोदिस्थः कुल० — क; तथोदक्स्थः — च; ततोदक्स्थ० — छ.

[3] ०पूर्वावृते — ओ, क, ङ; दूर्वामृते — च; पूर्वावने — छ.

[4] संभूय पृष्ठ० — ओ, क; समे भूपृष्ठ०—च.

[5] प्रासादनव० — ख, छ, ज.

[6] प्रत्ययारे — ख; प्रत्यग्द्वारदृढे — ङ; प्रत्यातो दृढे — छ, ज.

[7] प्रत्यग्द्वारकृतोढो—ओ; प्रत्यग्द्वारकृते दृढे—क.

[8] चार्धार्धप्र . . पि स्मृते — ओ; चार्धार्धप्रविस्मृते — क; पश्चार्धार्ध० — ङ; पञ्चावयवविस्तृते — च; पञ्चार्धार्धप्रविस्मृते — ज.

[9] स्थाप्य — च.

[10] तद्विधिना स्थादौ — ओ, क; तद्विधिना स्यादौ — ङ; तदधिवासादौ — च.

[11] मण्डले — ओ, क; 'ङ' मातृकायां 'मण्डपे' इति नास्ति ।; मण्डलं — छ, ज.

[12] स्नापयित्वा — च, छ, ज.

[13] चर्चित० — ङ.

[14] चन्दनादिना — ख, छ, ज.

[15] ०कृताटोप० — ओ, क.

[16] त्रिःकालं च – च; इदमर्धम् उपलब्धासु मातृकासु २५ श्लोकात्परं पठ्यते। परं तत्रानन्वितत्वात् २९ श्लोकस्योत्तरार्धतया संघटितम्।

[17] बहिर्देवाः — ओ; बहिर्देवा — क; बलिर्देया — ख, छ, ज; बहिर्देया — ङ;

[18] सर्वालङ्कार० — ओ, क; सर्वसंहार० — ङ; सर्वसंस्कार० — च.

[19] ०संयुताः — ओ; ०संयुता — क, ख, ङ, छ, ज; ०संयुतः — च.

[20] अत्र लक्षणोद्धारे 'विद्येशैर्दिक्ष्वष्टासु' इत्येतद्ग्रन्थेन कुम्भस्थापनपूजादिप्रतिपादकग्रन्थो भवितव्य इति भाति। परं त्वत्र तादृशग्रन्थो न दृश्यते। एतद्विषये अजिते क्रियापादे (१८. ५३उ०, ५४पू०); तत्रैव १३८ तमपृष्टे टिप्पण्यां निर्दिष्टदीप्तागमश्लोकाः द्रष्टव्याः।

[21] ०ष्टाप्यथ — ओ, क, ङ; ०ष्टाष्वथ—ख.

[22] 'नवधा सूत्रविस्तारः सर्वलिङ्गेषु कीर्तितः।
कुङ्कुमाक्तेन सूत्रेण नवधा च विभज्य च ॥
षड्भिस्तु लक्षणोद्धारस्त्वधोभागे यथा भवेत्।
मुखनासाललाटानां भेदो ग्रीवोर्ध्वतो भवेत् ॥
तत्र नेष्टस्तु यस्तस्मादधोलक्ष्म विलक्षयेत्।'
(कामिकागमे पूर्वभागे ६४.३०उ०–३२)

[23] हेमसूद्धा — ङ; हेमसूर्या० — छ.

[24] शस्तेन — ओ, क;

[25] 'निष्पाद्यैवं यथा वा स्यात्पूरयेन्मधुसर्पिषा'
(किरणे चर्यापादे २६.२३उ०.)

[26] मधुमन्त्रेण — छ, ज.

[27] तत्कृतं — च.

[28] विभो — ज.

[ [१]लिङ्गशुद्धिः, [२]शयनाधिवासः ]

**[३]ततः समुप[४]चारैस्तु [५]निर्मर्च्य विविधैः शुभैः ।**
**शब्दैश्च शङ्ख[६]तूर्याद्यै[७]रभिनन्द्य निवेशयेत् ॥३२॥**
**शय्यायां शिवमुच्चार्य [८]प्रसृतायां गुरूत्तमः ।**

[ [९]लिङ्गस्थापनकालः ]

**विषुवे [१०]स्थापनं शस्तं [११]मीनसंक्रमणे [१२]रवेः ॥३३॥**

[ [१३]ब्रह्मशिलान्यासः तत्र रत्नन्यासश्च ]

**काञ्चनं [१४]कूर्ममादौ तु [१५]शिलायां विनिवेश्य तु ।**
**गायत्र्या वाथ सावित्र्या [१६]न्यसेद् ब्रह्मशिलां विभोः ॥३४॥**

---

[१] एतद्विषयतुलनार्थं अजिते क्रियापादे १८.९०–९४ श्लोका द्रष्टव्याः ।; रौरवे क्रियापादे २८.२२,२३ श्लोकौ द्रष्टव्यौ ।

[२] एतद्विषयतुलनार्थं अजिते क्रियापादे १८.१३२–१३७ श्लोका द्रष्टव्याः ।; रौरवे क्रियापादे २८.३६–४१ श्लोका द्रष्टव्याः ।

[३] 'ङ' मातृकायाम् ३२–३४ श्लोकाः न सन्ति ।

[४] ततस्तमुप० — ओ, क, छ, ज.

[५] निर्मथ्य — ओ; निर्मर्थ्या — क; निर्ममे — ख; निर्मत्स्य — च; निर्ममेवविधैः — छ, ज.

[६] ०भे. द्यैरभि० — ख; ०तुर्यादिनभि० — च; ०भेर्याद्यैरभि० — छ, ज.

[७] ०रभिवंमनिवेश० — ओ; ०रभिवेश निवेश० — क.

[८] प्रस्तुतायां — च, छ, ज.

[९] एतद्विषयतुलनार्थं अजिते क्रियापादे १८.१४ — ३१पू० श्लोका द्रष्टव्याः ।

[१०] स्थापितं — क, छ, ज.

[११] दिनं सं० — ओ; दिनसं० — क; अपिसं० — ख, छ, ज.

[१२] रवौ — ओ, क, च.

[१३] 'पञ्चगव्येन संप्रोक्ष्य शिलां मध्ये तु विन्यसेत् ।
एकविंशतिभागे तु द्वारतारे तु मध्यमे ॥
भागे षोढा कृते ब्रह्मसूत्रमध्यमसूत्रकम् ।
ब्रह्मवामैकभागार्धं शिवसूत्रमिति स्मृतम् ॥
शिवस्य ब्रह्मणो मध्ये हरेरिन्द्रस्य मध्यमम् ।
शिवसूत्रप्रमाणं तु सौम्यसूत्रस्य पूर्वतः ॥
न्यस्त्वा तत्सन्धिमध्ये तु विन्यसेत्कशिलां गुरुः ।
प्रणवं प्रणतिं चोक्त्वा व्यापिनीति स्थिरेति च ॥
अचलेति ध्रुवेत्युच्चैर्मायागर्भं धराक्षरम् ।
स्वाहेत्यन्तं पदं चोक्त्वा स्थैर्यं सर्वगतं स्मरन् ॥
पद्मासनं तदारूढं सावष्टम्भं निरुध्य च ।
न्यसेद्रत्नौषधी लोहधातुबीजानि पूर्ववत् ॥
कूर्मं वा वृषभं वाथ हैमं तत्र विनिक्षिपेत् ।
विलिख्य वायसेनाथ श्वभ्रं कृत्वा पटावृतम् ॥'
(कामिकागमे पूर्वभागे ६४.१४०–१४६);
(अजिते क्रियापादे १८.१८२–१९९);
(रौरवे क्रियापादे २८.६८–७०पू०; ३०.३८–४६).

[१४] कूर्मनादौ तु — ओ, क; कुङ्कुमं मादौ — छ, ज.

[१५] शिलादो — ओ; शिलादे — क; शिलादौ — च; शिलाद्यौ — छ, ज.

[१६] न्यसेत्प्रभुशिलां विभोः — ख, छ, ज.

रत्नानि च यथालाभं विन्यसेद्दिक्ष्वनिन्दितम्[1] ।
धातवश्च यथान्याय[2]मोषध्यश्चाप्यनुत्तमाः[3] ॥३५॥
प्रणवेन यथालाभं[4] [5]प्रकर्तव्यो विधिः सदा ।

[ लिङ्गस्थापनम्[6] ]

एवं कृत्वा सितैर्वस्त्रैर्लिङ्गं प्रच्छाद्य यत्नतः ॥३६॥
[7]सुयन्त्रितं [8]संनिवेश्यं न च मध्यात्प्रचालयेत् ।
सिद्धार्थमात्रं प्रागेव [9]पीठयेदीशगोचरे[10] ॥३७॥
सुविचित्रैर्ध्वजैश्चोच्चैः[11] प्रविलम्बैश्च सादरम् ।
यथालाभोचितैर्द्रव्यैः शोभां कुर्वीत सुव्रत ॥३८॥
[12]निष्कम्पमुच्चरेच्छक्ति[13] लिङ्गं[14] ब्रह्मशिलोपरि ।
सुसमं स्थापयेद्विद्वान्सर्वकामार्थसाधकम्[15] ॥३९॥
मन्त्रैः सर्वैर्यथान्यायं [16]तदालभ्य प्रपूजयेत् ।

---

[1] ०क्ष्वनिन्दितः — ओ, क, ख, ङ, छ, ज.
[2] ०मौषध्या० — ओ; ०मौषध्य० — क, च.
[3] ०प्यनुत्तमम् — ङ; ०प्यनिन्दिताः — च.
[4] यथाभङ्ग — छ, ज.
[5] कर्तव्यो विधिवत्सदा — ख, ङ, छ, ज; कर्तव्योऽयं विधिः — च.
[6] 'वेद्यन्ते स्थाप्य तल्लिङ्गं वेदिं मातृकया न्यसेत् ।
पञ्चमेन न्यसेल्लिङ्गं पीठमीशदिगात्मना ॥
सर्वेषां सुखदं चैव तथाप्यन्यमुखस्थितिः ।
पूर्वां वा दक्षिणां वापि पश्चिमां चोत्तरामपि ॥
द्विजादीनामनन्ता हि पुष्टिवृद्धिर्ध्रुवं भवेत् ।
वह्निनैर्ऋतवायव्यदिशमाक्रम्य संस्थितम् ॥
लोभकृन्मध्यतोऽन्नत्या जीवितं सुखदं क्रमात् ।
तस्मात्सुखावहं नित्यमीशान्यां दिशि कल्पयेत् ॥
एवं प्रकल्प्य तल्लिङ्गं घनीभूतं प्रकल्पयेत् ।
सकलीकृत्य तच्छक्तिं तत्रस्थां विनिवेशयेत् ।
तस्यावयवकान् पञ्च न्यसेदङ्गाननुक्रमात् ।
आवाहनक्रमं सम्यग् हृदा कृत्वाखिलं क्रमात् ॥
पुनः संस्थाप्य सद्याद्यैः शिवं गन्धादिभिर्यजेत् ॥
(किरणे चर्यापादे २६.४७उ०–५३);
(अजिते क्रियापादे १८.२०४–२१२पू०);
(रौरवे क्रियापादे २८.७०उ०, ७१; ३०.४७–५४).
[7] सर्वतितं — ख; स्वतितं — छ, ज.
[8] संनिवेश्य — ओ, क, ङ, च.
[9] पीडयेदीश० — ओ, क, ख.
[10] ०गोचरम् — च.
[11] ०श्चोच्चः — क; ०श्चाच्चैः — ख; ०र्ध्वजैरुच्चैः — च.
[12] निष्कम्पा० — च.
[13] ०मुच्चरं शक्ति — ख, छ; ०मुच्चरं श्छक्ति — च; ०मुछरं शक्ति — ज.
[14] लिङ्ग० — क.
[15] ०कामार्थसाधकः — ख; ०कामससाधकम् — ङ.
[16] तथालभ्य — ओ, क, ङ; तदारभ्य — ख, छ, ज.

[ [1]पिण्डिकायोजनं, [2]दक्षिणादानं च ]

**पिण्डिकां चैव [3]गायत्र्या [4]शुक्लवस्त्रावकुण्ठिताम्[5] ॥४०॥**
**योजयेच्छिल्पिभिः सार्धं; [6]शिल्पिनश्च प्रपूजयेत् ।**
**[7]दक्षिणा च [8]यथाशक्त्या [9]प्रदेया [10]साधकेन तु ॥४१॥**
**सर्वेषां शिवभक्ताना[11]मन्येषामपि युक्तितः ।**
**एवं वै स्थापिते लिङ्गे सिद्धिर्भवति [12]शाश्वती ॥**
**[13]प्रजाश्च नन्दिता नित्यं सर्वोपद्रववर्जिताः[14] ॥४२॥**

[ उक्तार्थोपसंहारः, वक्ष्यमाणोपक्रमश्च ]

**प्रोक्तं यथावत्फलदं विधानं**
**[15]लिङ्गस्य [16]शम्भोर्भुवि [17]साधकानाम् ।**
**[18]रूपाण्यथोपात्तविधानयुक्त्या**
**वक्ष्यामि सम्यक्प्रतिमासु तेऽद्य[19] ॥४३॥**

इति श्रीमतङ्गपारमेश्वरे क्रियापादे लिङ्गस्थापनपटलस्त्रयोदशः ॥
**त्रयोदशः पटलः**

---

[1] एतद्विषयतुलनार्थं अजितागमे क्रियापादे १८. २१२उ०–२१९. श्लोका द्रष्टव्याः। तथा रौरवे क्रियापादे २८.८१; २९.२८–३१; ३०.५५,५६पू० श्लोकाश्च द्रष्टव्याः।

[2] 'आचार्यं पूजयेत्तत्र यथाविभवसंयुतम् ॥
उष्णीषमुत्तरीयं च परिधानं तथैव च ।
हेमाङ्गुलीयकैश्चैव गन्धपुष्पं तथैव च ॥
मकुटं कुण्डलं चैव हारकेयूरकं तथा ।
कटकं कटिसूत्रं च आचार्यस्य प्रदापयेत् ॥
आचार्यदक्षिणा हेमकन्यसं दशनिष्ककम् ।
मध्यमं द्विगुणं तस्य उत्तमे त्रिगुणं भवेत् ॥
एवं संपूज्य विधिवत्सवत्सां गां च दापयेत् ।
आचार्यमनसस्तुष्टिर्देवस्य प्रीतिकारणम् ॥
मूर्तिपानां पृथग्वस्त्रैर्हेमनिष्कं च दापयेत् ।'
(सुप्रभेदे क्रियापादे ३६.१०९उ०–११४पू०).

[3] गायत्री — ओ, ङ; गायत्रीं — क.

[4] शुभवस्त्राव० — च.

[5] ०कुण्ठितान् — ओ, क; ०गुण्ठितान् — च.

[6] शिल्पिनं च — ओ, क, ख, ङ, छ, ज.

[7] दक्षिणाश्च — च.

[8] यथालाभं — ख, छ, ज.

[9] प्रदो वा — ङ; प्रदद्यात् — च.

[10] साधकोत्तमः — ज.

[11] ०मन्यथा मयि युक्तितः — च.

[12] शाश्वति — छ, ज.

[13] पूजाश्चन्दनतै नित्यं — ओ; पूजाश्चन्दनकैर्नित्यं — क; प्रभाश्चन्दनतो नित्यं — ख, छ, ज; पूजाश्चन्दनतैर्नित्यं — ङ; प्रजाश्च निन्दते नित्यं — च.

[14] ०वर्तितः — ओ, क, ङ; ०वर्जिता — ख; सर्वोभिद्रविवर्जिता — छ, ज.

[15] मतङ्ग० — ओ, क, ख, ङ, छ, ज.

[16] शंभो भुवि — ओ, ङ, छ, ज.

[17] नाथ नानात् — ख, छ; नाथ नाथात्—ज.

[18] कार्या यथोपात्त० — ओ, क; कार्या यथा वक्तु० — ख; कार्यं यथावत्तु — ङ; कार्यं यथावक्तु — छ, ज.

[19] प्रतिमा मुने याम् — ओ; प्रतिमा मुने याः — क; प्रतिमं दिनेयम् — ख; प्रतिमा मुनेयम् — ङ; प्रतिमादुनेयम् —छ, ज.

# चतुर्दशः पटलः

## प्रतिमालक्षणम्

**[1]अतः परं प्रवक्ष्यामि मन्त्राणाममितात्मनाम् ।**
**रूपकाणि विचित्राणि सिद्धिदान्यनुपूर्वशः ॥१॥**

[ [2]पञ्चब्रह्माणि, हृदयादिपञ्चाङ्गानि च ]

**[3]ईशानः [4]स्फाटिकः [5]कार्यः [6]सौवर्णः पुरुषस्तथा ।**

---

[1] अथातः संप्र० — च.

[2] 'शुद्धस्फटिकमीशानं पुरुषं कुङ्कुमाकृतिम् ।
अघोरमञ्जनाभासं रक्ताभं वामदेवकम् ॥
सद्योजातं तु गोक्षीरं पञ्चवक्त्रेषु भावयेत् ।
सद्योजातं स्थितं देवं वामदेवं सुखासनम् ॥
अघोरं धनुराकारं पुरुषं वामरूपकम् ।
ईशानं नृत्तरूपं तु पञ्चमन्त्रात्मकं परम् ॥
शूलं पाशं तथा सव्ये वामे परशुमङ्कुशम् ।
अघोरं खड्गबाणं च पुरुषं वज्रनागकम् ॥
अभयं वरदं चैव त्वीशानाकृतिरुच्यते ।'
'शुक्लं पीतारुणं चैव रक्तं श्यामं च कृष्णकम् ॥
वर्णानि च षडङ्गानि (नां) त्रिणेत्राश्च चतुर्भुजाः । सव्ये शूलाभयं चैव वामे वरकपालकम् ॥'
(कारणे पूर्वभागे ३०.२८२उ०–२८६, २८८उ०, २८९).
'ऐशान्यां पूर्वतो याम्याम् उत्तराप्यावसानकम् ।
विन्यसेत्पञ्चवक्त्राणि पञ्चवक्त्रयुतानि च ।
बाहुभिर्दशभिश्चैव शशाङ्कमुकुटैः सह ॥
ध्यातव्यानि स्वरूपाणि *वराभयकराणि तु ।
अग्नीशरक्षोवायव्यचतुर्दिक्षु च तं न्यसेत् ॥
हृच्छिरश्च शिखा वर्म अस्त्रं च प्रविभागशः ।
हृदयं रक्तवर्णाभं शिरो गोरोचनप्रभम् ॥
तडिद्वलयसंकाशां शिखां देवीं विचिन्तयेत् ।
आधूम्रं कवचं विद्यात्कपिशं चास्त्रमेव च ॥
ज्योतीरूपप्रतीकाशं नेत्रं मध्ये च संस्थितम् ।
पञ्चवक्त्राः स्मृताः सर्वे दशबाह्विन्दुभूषिताः ॥
नानाभरणसंयुक्ता नानास्रग्गन्धलेपनाः ।
नानावस्त्रपरीधाना मुकुटैरुज्ज्वलैः शुभैः ॥
रत्नमालावनद्धाश्च हारकेयूरभूषिताः ।'
(स्वच्छन्दे २.१०६उ०–११३पू०).
*वराभयकरत्वं खड्गखेटकपाशाङ्कुशशरपिनाकमुण्डखट्वाङ्गोपलक्षणपरम्' इति क्षेमराजविवरणम् ।
'प्रदीपविद्युत्कनकावभासो
विद्यावराभीतिकुठारपाणिः ।
चतुर्मुखस्तत्पुरुषस्त्रिणेत्रः
प्राच्यां स्थितो रक्षतु मामजस्रम् ॥
कुठारवेदाङ्कुशपाशशूल-
कपालढक्काक्षगुणान् दधानः ।
चतुर्मुखो नीलरुचिस्त्रिणेत्रः
पायादघोरो दिशि दक्षिणस्याम् ॥
कुन्देन्दुशङ्खस्फटिकावभासो
वेदाक्षमालावरदाभयाङ्कः ।
त्र्यक्षश्चतुर्वक्त्र उरुप्रभावः
सद्योऽधिजातोऽवतु मां प्रतीच्याम् ॥
वराक्षमालाभयटङ्कहस्तः
सरोजकिञ्जल्कसमानवर्णः ।
त्रिलोचनश्चारुचतुर्मुखो मां
पायादुदीच्यां दिशि वामदेवः ॥
वेदाभयेष्टाङ्कुशशङ्खपाश-
कपालढक्काक्षकशूलपाणिः ।
सितद्युतिः पञ्चमुखोऽवतान्मा-
मीशान ऊर्ध्वं परमप्रकाशः ॥'
(स्कान्दे ब्रह्मोत्तरखण्डे १२.९–१३).

[3] ईशानस्फटिकं–क; ईशानस्फटिका–ख, ङ, छ, ज.

[4] स्फटिकं — ओ.

[5] कार्यं — क; कार्या — ख, छ, ज.

[6] सौवर्णं — ख.

राजा[1]वर्तमयोऽघोरो वामदेवोऽथ वैद्रुमः ॥२॥
[2]कार्यस्तारमयः सद्यः संपूर्णावयवाः शुभाः[3] ।
[4]मुक्ताश्मघटितः पूज्यः [5]सर्वात्मा साधकोत्तमैः[6] ॥३॥
[7]शिरः शङ्ख[8]मयं कार्यं [9]वैद्रुमी ज्वालिनी शिखा[10] ।
[11]पुष्परागमयं वर्म [12]शस्तं वा पद्मरागजम् ॥४॥
इन्द्रनील[13]मयं चास्त्रं फलदं मन्त्रवादिनाम्[14] ।
वैतस्तिक[15]प्रमाणाः स्युश्चतुर्वक्त्रा महौजसः ॥५॥
सर्वे चाष्टभुजाः[16] कार्या लक्षणज्ञेन शिल्पिना ।

[ [17]अघोरे विशेषः ]

[18]ईषद्दंष्ट्राकरालास्यं[19] [20]प्रलम्बोदरसंयुतम् ॥६॥
[21]लम्बोष्ठचिबुकघ्राणं [22]वृत्तनेत्रं त्रिलोचनम् ।
शूलपाशाङ्कुशकरं[23] बहु[24]रूपमयोज्ज्वलम् ॥७॥

---

[1] ०वर्तुमघोघोरे — ङ.
[2] कार्यस्तरुमयः — ङ; कार्यस्तारमधः—छ, ज.
[3] ०वयवः शुभः — ख, च, छ, ज.
[4] मुक्ता हृदिश्च पूज्यस्य — ओ, क; मुक्ता त्मवदितः पूज्यः — ख; मुक्ताशुघटितः पूज्य — ङ; मुक्तात्मवटितः पूज्यः — छ, ज.
[5] 'सर्वात्मा' हृदयमन्त्रः (मतङ्ग० विद्या० ७.२७; क्रिया० १.६३).
[6] ०कोत्तमः — ख.
[7] शरः — छ, ज.
[8] ०मयः कार्यो — ओ, ख, छ, ज; ०मधः कार्यो — क, ङ.
[9] वैद्रुमि — छ, ज.
[10] शुभा — ओ, क, ख, ङ, छ, ज; शिखः — च.
[11] पुष्परागमयं चर्म — च.
[12] शस्त्रं — ख, ङ, छ, ज.
[13] ०निभं — ख, छ, ज.
[14] ०वादिना — ओ, क.
[15] प्रमाण स्युः — ज.
[16] चेष्टा भुजं — ङ.
[17] सर्वे मन्त्राः समर्थाः स्युः सर्वे चेष्टफलप्रदाः ।
तेष्वघोराणुरत्यन्तदोषघ्नः कृष्णवर्णभाक् ॥
व्यालबद्धजटाजूटः कपालदलमण्डितः ।
सुरपिङ्गेक्षणोऽत्यन्तं श्वेतदंष्ट्रासमन्वितः ॥
चन्द्रचूडो विशालास्यो नागयज्ञोपवीतवान् ।
महाकायो महादंष्ट्री किङ्किणीरवसंयुतः ॥
महाशूलाग्रसंप्रोतमहासुरविनाशनः ।
खड्गखेटधनुर्बाणमुण्डकः कालशक्तिधृत् ॥
वराभयकपालाहिपाशप्रासगदाकरः ।
दंष्ट्रे द्वे कीलनिर्याते वक्त्राग्रे भीषणे सिते ॥
स्वसेनारक्षको नित्यं परसेनाभयंकरः ।
वैरिप्रयुक्तकर्मघ्नः सर्वव्याधिनिवारकः ॥
सर्वदोषविनाशे तु समर्थो भक्तवत्सलः ।'
(कामिके उत्तरभागे ३३.२–८पू०).
[18] ईशं दृष्ट्वा करा० — च.
[19] ०दंष्ट्रा . . मं — ख; ०दंष्ट्राकरालाढ्यं — ङ.
[20] लम्बोष्ठदर० — 'ख' पाठान्तरम् ।
[21] लम्बोष्ठं चुबुकघ्राण० — ओ; लम्बोष्ठं बिम्बवद् घ्राणं — ख; लम्बोष्ठबिम्बसघ्राण० — ङ; लम्बोष्ठं चिपिटघ्राणं — च; लम्बोष्ट्रं बिम्बवघ्राणं — छ, ज.
[22] बृहन्नेत्रं त्रि० — च.
[23] ०करो — ओ; ०धरं — ख, छ, ज; त्रिशूलाङ्कुशधरं — च.
[24] ०रूपं महोज्वलम् — ख, ज; ०रूपं महाज्वलम् — छ.

कपालहस्तं श्रीमन्तं [1]बृहत्स्कन्धं [2]महाननम् ।
विस्तीर्णशिरसं [3]भद्रं [4]सर्वदुष्टभयंकरम् ॥८॥

[ अस्त्रशिखाकवचेषु विशेषः ]

[5]अस्त्रमस्यानुरूपेण बहुरूपोक्तशोभिना ।
किं तु [6]तस्य शिरः [7]स्थूलं [8]निष्क्रुष्टदशनं [9]मुखम् ॥९॥
[10]वामनश्चोग्रनेत्रश्च [11]कार्यो वास्त्रेन्द्रनायकः ।
[12]दशाङ्गुला शिखा [13]देवी शेषाः पूर्वोक्तलक्षणाः[14] ॥१०॥
बृह[15]त्कुक्षि भवेद्वर्म[16]

[ विद्येश्वराः[17] ]

त्रिशूलासिकरोद्यताः[18] ।
विद्येश्वराः शङ्खनिभा व्यालयज्ञोपवीतिनः ॥११॥
शशाङ्कमौलयः कार्याः [19]पूर्ववल्लक्षणान्विताः ।

---

[1] बृहत्स्कन्दं — ओ, क; बृहत्स्कन्द० — ङ.
[2] महात्मनाम् — ओ, क; महात्मनः — ख, ङ, छ, ज.
[3] रुद्रं — च.
[4] सर्वदुष्टं — छ, ज.
[5] अस्त्रमप्यनु० — ओ, क, ख, ङ, छ, ज.
[6] शस्त्र० — ङ.
[7] स्थूलनिकृष्ट० — ङ.
[8] निष्क्रुष्टं दर्शनं — ओ; निकृष्टं दर्शनं — क; निकृष्टदर्शनं — ख, ङ.
[9] परम् — ओ, क; पदम् — ङ.
[10] वामं चोग्रं च नेत्रं च — ओ, क; वामनं चोग्रनेत्रं च — ख, ङ, छ, ज.
[11] कार्यं स्तोत्रैन्द्रनायकः–ओ; कार्यस्तेत्रैन्द्रनायकम् — क; कार्यो वै स्त्यन्द्रनायकः— ख; कार्योऽस्त्रो स्तोत्रैन्द्रनायकः — ङ; कार्योऽस्त्रेन्द्र–च; कार्योस्तैन्द्र — छ; कार्यो स्त्यैन्द्र० — ज.
[12] दशाङ्गुलशिखां— ओ; दशाङ्गुलानिशिखा–ङ.
[13] देवीं — ओ.
[14] पञ्चब्रह्मणां हृदयाद्यङ्गानां च रूपवर्णनम् (मतङ्ग० क्रिया० ३.८३उ०–९१).
[15] ०त्कुक्षिर्भवेद्वर्म — क, ङ; ०त्कुक्षिर्भवेत्पूर्ण० — ख.
[16] भवेवर्म — ओ; ०र्भवेद्धर्मः — च; भवेत्पूर्णं — छ, ज.
[17] अनन्तेशश्च सूक्ष्मश्च शिवोत्तमैकनेत्रकौ ।
एकरुद्रस्त्रिमूर्तिश्च श्रीकण्ठश्च शिखण्डिकः ॥
एते देवाश्चतुर्वक्त्रा हरवद्दशबाहवः ।
खण्डेन्दुमौलयः सौम्याः पद्मस्था विविधायुधाः ।
खड्गखेटधनुर्बाणकमण्डल्वक्षसूत्रिणः ।
वराभयकरोपेताः शूलपङ्कजपाणयः ॥
युगान्तादित्यसंकाशाः संसृष्टौ शिवचोदिताः ।
(कामिकागमे पूर्वभागे ४.४६१उ०–४६४पू०); (अजिते क्रियापादे ३६.३४४).
[18] ०करोद्यता — ओ, क, ङ; ०करोद्यतः — ख, च; ०करोद्यतम् — छ, ज.
[19] विद्येश्वररूपवर्णनम् (मतङ्ग० क्रिया० ५.५५ उ०–५६)

[ [1]दिक्पालाः ]

दिक्पालाश्चापि कर्तव्या हस्तमात्राश्चतुर्भुजाः ॥१२॥
सर्वाभरणसंपन्ना [2]विभक्ताङ्गा मनोहराः ।
[3]यागोक्तवर्णकैः [4]स्वैः स्वैः [5]प्रशस्त[6]तरुसंभवाः[7] ॥१३॥

[ निर्ऋतौ विशेषः ]

[8]निर्ऋतेर्यातु[9]धानस्याकृतिः कार्या [10]भयानका ।
मानुषास्थि[11]मयी क्रूरा [12]लौहा वा क्रूरकर्मणि ॥१४॥

[ [13]वज्राद्यायुधानि ]

[14]वज्रादीनां तु रूपाणि प्रकुर्वीत शिवास्त्रवित्[15] ।

---

[1] कुर्यादिन्द्रं नृपं यद्वद्वज्रिणं बहुलोचनम् ।
ऐरावतगजारूढं भद्रमप्सरसावृतम् ॥
वह्निं कुर्यादजारूढं पिङ्गलं पिङ्गलोचनम् ।
वीरासनं सप्तजिह्वं साक्षसूत्रं सशक्तिकम् ॥
यमं कुर्यात्सदण्डं तु सकोपं महिषासनम् ।
तत्समानैर्वृतं वीरैः क्रुद्धं लोकभयंकरम् ॥
तथैव निर्ऋतिं कुर्यात्खड्गहस्तं गदाधरम् ।
वरुणं पाशहस्तं तु श्वेताङ्गं मेघवाहनम् ॥
कुर्यात्पीताम्बरं वायुं धूम्रं ध्वजकरं चलम् ।
मृगासनं च रक्ताक्षं कुबेरं भूषणान्वितम् ॥
नरारूढं गदाहस्तम् ईशानस्तु सितो भवेत् ।
शूलहस्तो वृषारूढो जटामकुटमण्डितः ॥
(किरणे चर्यापादे २२.५३ — ५८);
(अजिते क्रिया० ३६.३२७ — ३३१पू०)

[2] विभक्तांविमनोद्भवाः — ख; वीतभक्ताङ्गा — ङ; विभक्ताङ्गमनोद्भवाः — छ, ज.

[3] योगोक्त० — ओ, क; 'यागोक्तवर्णकैः' इत्यस्य स्थाने 'गोवर्णकैः' इति दृश्यते 'ङ' मातृकायाम् ।; दिक्पालानां रूपवर्णनम् (मतङ्ग० क्रिया० ५.५७ उ०–६३)

[4] स्वैस्तैः — ओ, क.

[5] प्रशस्तै तरुसं० — ख; प्रसक्तगुरुसं० — ङ.

[6] ०गुरुसं० — ओ; गुणसं० — क.

[7] ०संभवैः — छ,; संभवोः — ज.

[8] नृपतेर्यातु० — ओ, क, ङ.

[9] ०धानस्य कृतिः — ओ, क, च; ०धाघस्य कृतिकार्या — ङ.

[10] भयानना — ङ; भयाननाः — छ, ज.

[11] ०मतिक्रूरा — क, छ, ज.

[12] लोहा वा — ओ, क, छ, ज; लोभा वा — ख; लोका वा — ङ.

[13] 'वज्रं शक्तिश्च दण्डं च खड्गं पाशं तथाङ्कुशम् ॥
गदा त्रिशूलं पद्मं च चक्रं चेति दशायुधम् ।
एकवक्त्रं द्विनेत्रं च करण्डमकुटान्वितम् ॥
कृताञ्जलिपुटोपेतं द्विबाहुं सर्वलक्षणम् ।
प्रतिमालक्षणप्रोक्तमानेनैव समाचरेत् ॥
जाये शक्तिगदे ज्ञेये चक्रपद्मे नपुंसके ।
शेषाः पुमांसो विज्ञेयास्त्वष्टतालविनिर्मिताः ॥
स्वमूर्ध्न्यायुधसंयुक्ताः स्वकीयादेकतालतः ।'
(कामिके उत्तरभागे ६८.१उ०–५पू०);
(किरणे क्रियापादे नवमः पटलो द्रष्टव्यः)

[14] प्रज्ञादीनां — ख; प्रज्ञादिनां — छ, ज.

[15] शिवास्त्रवत् — ख, छ, ज.

स्वास्त्रोर्ध्वशिरसः[1] सर्वे [2]कर्तव्याश्चास्त्रनायकाः[3] ॥१५॥
[4]वज्रं दारुमयं [5]कार्यमारकूटमथापि वा ।
शक्तिश्चौदुम्बरी[6] कार्या [7]दण्डमप्यायसं शिवम्[8] ॥१६॥
खड्गं च [9]कारये[10]त्पाशं जतुलोहमयं[11] शुभम्[12] ।
[13]नागेन वा [14]प्रकर्तव्यं [15]त्रपुषा ध्वजमुज्ज्वलम् ॥१७॥
[16]गदा [17]तारमयी शुभ्रा कार्या सर्वार्थसिद्धिदा ।
पुष्पलोहमयं [18]शूलं [19]कार्यं वा काञ्चनं शुभम् ॥१८॥

[ [20]गायत्री ]

शुभलक्षणसंपूर्णा गायत्री काञ्चना मुने ।

---

[1] स्वशास्त्रोर्ध्वशिरः — ओ, क, ङ; स्वास्त्रार्धशिरसः — ख, छ, ज; स्वास्त्रोत्थशिरसः — च.
[2] कर्तव्या अस्त्रनायकाः — ओ, क; प्रकर्तव्यास्त्र० — ख, छ, ज.
[3] स्वात्रनायका — ङ; दिक्पालास्त्राणां रूपवर्णनम् (मतङ्ग० क्रिया० ५.६८उ०–७१)
[4] वज्रदारु० — क.
[5] कुर्याद्यावत्कूट० — च.
[6] ०श्चोदम्बरी — ओ, क, ङ; ०श्चादम्बरी — छ, ज.
[7] दण्डमप्यामयं — ङ.
[8] शिव — ओ; शिखम् — ख, छ, ज; सुखम् — ङ; शुभम् — च.
[9] धारये० — ख, छ, ज.
[10] ०त्पाशजतु० — ङ; ०त्पाशं वृत्तं — च.
[11] ०लोभमयं — ख; ०शोभमयं — ङ; चतुर्लोहमयं — छ, ज.
[12] एतदनन्तरम् 'अङ्कुशायुध'प्रतिपादकग्रन्थो भवितव्य इति भाति ।
[13] भगेन वा — ओ, क; नाभेनना — ख; भागे वा — ङ.
[14] प्रकर्तव्या — ओ, क, ख, छ, ज; प्रतिकर्तव्या — ङ.
[15] तृपुषा — ओ, क, ख; मन्त्रपूषा — ङ; त्रपुणा — च.
[16] गता — ङ.
[17] दारुमयी — ख, छ, ज.
[18] शूरं — छ.
[19] कायं — ङ.
[20] मन्दाराह्वयरोचनाञ्जनजपा-
खाभैर्मुखैरिन्दुमद्-
रत्नोद्यन्मकुटाङ्गसंततचतु-
र्विंशार्णचित्रा तनुः ।
अम्भोजेऽरिगदाह्वयौ गुणकपा-
लाख्यौ च पाशाङ्कुशे-
ष्टाभीतीर्दधती भवेद्भवदभी-
ष्टोत्तारिणी तारिणी ॥
(शिल्परत्ने उत्तरभागे २४.७०).
मुक्ताविद्रुमहेमनीलधवल-
च्छायैर्मुखैस्त्रीक्षणै-
र्युक्तामिन्दुनिबद्धरत्नमकुटां
तत्त्वार्थवर्णात्मिकाम् ।
गायत्रीं वरदाभयाङ्कुशकशाः
शुभ्रं कपालं गुणं
शङ्खं चक्रमथारविन्दयुगलं
हस्तैर्वहन्तीं भजे ॥
(देवीभागवते १२.३.१०).

[[1]गौरी]

[2]गौरी चैवं प्रकर्तव्या पद्म[3]हस्ता शुभेक्षणा ॥१९॥
चतुर्भुजा महाभागा[4] [5]प्रोत्फुल्लकमलेक्षणी[6]।
[7]प्रसन्नवदना साध्वी सर्वालंकारमण्डिता[8] ॥२०॥

[[9]सावित्री, [10]दुर्गा च]

नीलोत्पलदलप्रख्या[11] सावित्री लक्षणान्विता।
कार्या [12]दुर्गेति [13]संसिद्धा पूज्या [14]सर्वार्थदायिका ॥२१॥

[अनुक्तमन्त्राणां देवानां मन्त्रविधानम्]

[15]येषां [16]मन्त्रो न शास्त्रेऽस्मिन् [17]प्रागुक्तः पारमेश्वरे।
तेषां [18]शक्तेः पदं [19]ग्राह्यं [20]यस्मात्सा जगतोऽव्यया ॥२२॥
[21]योनिर्मन्त्रसमूहस्य कृत्स्न[22]स्याप्यनिवारिता[23]।

---

[1] द्विनेत्रा द्विभुजा श्यामा गौरी दक्षकरोत्पला।
करण्डमकुटोपेता सर्वाभरणभूषिता॥
(कारणे पूर्वभागे ९०.२);
अक्षसूत्राभयपद्मं तदधश्च कमण्डलुः।
गौर्या मूर्तिस्तथा चैव कर्तव्या शिवशासनी॥
(अपराजितपृच्छा २२२.१०).
(अजिते क्रियापादे ३६.२१३–२१५पू०)
(रौरवे क्रियापादे ३१.५–८).

[2] गौरी यैव — ओ, ङ; गोरसैश्च — ख; गौरी चैव — च; गोरथैश्च — छ, ज.

[3] ०हस्तशुभे० — ङ, छ, ज.

[4] ०भोगा — ख, छ, ज.

[5] 'ख, छ' मातृकयोः द्वितीयतृतीयपादौ न स्तः।

[6] कमलेक्षणा — च; प्रबुद्धकमलेक्षणा — ज.

[7] 'ज' मातृकायां २० श्लोकस्योत्तरार्धं न दृश्यते

[8] मण्डितम् — क.

[9] 'अक्षसूत्रं पुस्तकाब्जे तदधश्च कमण्डलुः।
चतुर्वक्त्रा तु सावित्री श्रोत्रियाणां गृहे स्थिता॥
(अपराजितपृच्छा २२२.१६);
'अक्षसूत्रं पुस्तकं च धत्ते चैव कमण्डलुम्।
चतुर्वक्त्रा तु सावित्री श्रोत्रियाणां गृहे हिता॥'
(रूपमण्डनम् २.८).

[10] 'चतुर्भुजा त्रिणेत्रा च सा तु श्यामनिभा परा।
सौम्या पीताम्बरोपेता पीनोरुजघनस्तना॥
करण्डमकुटोपेता सर्वाभरणभूषिता।
अभयं दक्षिणे हस्ते कटकं वामहस्तके॥
परहस्ते तु सव्ये तु चक्रं वामे तु शङ्खकम्।
वहन्ती समपादस्था पद्मपीठोपरि स्थिता॥
नागत्वक्स्तनबन्धा च रक्तकञ्चुकधारिणी।
एवं दुर्गा समाख्याता'
(अंशुमत्काश्यपे ४८.५५–५८);
(अजिते क्रियापादे ३६.३११उ०–३१४).

[11] ०प्रख्याः — छ, ज.

[12] दुर्गतिसं० — ख, छ, ज.

[13] संसिद्धौ — च.

[14] सर्वार्थिसाधका — ख, छ, ज.

[15] एषा — ओ; एषां — क, ख, ङ, छ, ज.

[16] मन्त्रोऽत्र शास्त्रे — ख, छ, ज.

[17] प्रागुक्तपार० — क; प्रागुक्तं पर० — ङ.

[18] शान्त्रैः — ङ; शाक्तं — च.

[19] ग्राह्या — ओ; ग्राह्य — ख, ङ, छ, ज.

[20] यत्स्मात्सातोव्यया — ओ.

[21] योनिमन्त्र० — ओ, ङ, या निर्मन्त्र० — च.

[22] ०स्य विनिवारिता–ख; ०स्य निवारिता–छ, ज.

[23] ०वारिताः — ङ.

[ [1]विष्णुः ]

[2]कार्योऽश्वत्थतरोर्विष्णुश्चतुर्बाहुर्महाबलः ॥२३॥
[3]बृहन्नासोत्तमाङ्गेन [4]श्रीवत्सेन च शोभिना।
शङ्खचक्र[5]गदाहस्तः क्षौमपुष्पसमप्रभः ॥२४॥

[ [6]सूर्यः ]

रक्तचन्दन[7]सारोत्थैर्निम्बस्याथ महाद्युतिः।
[8]कार्योऽर्कः साधकेन्द्रेण [9]स्वारोग्याय [10]महात्मना ॥२५॥

[ [11]कार्तिकेयः ]

भूतये च सदा [12]पूज्यः [13]कार्तिकेयश्च [14]वैद्रुमः।

---

[1] विष्णुश्चतुर्भुजो मौली शङ्खचक्रगदाब्जधृक्।
नीलाम्बुजप्रतीकाशो गरुडासनसंस्थितः॥
(कारणे पूर्वभागे ३०.३५०);
विष्णुं चतुर्भुजं कुर्याच्छङ्खचक्रगदाधरम्।
किरणे चर्या० २२.४४; (रौरवे क्रिया० ३६.३-उ०-७; अजिते क्रिया० ३६.२८९-२९३)

[2] कार्या तु मातरो वि० — ओ; कार्ये तु मातरो वि० — क; कार्यश्विवत्थ० — ख, ङ, छ, ज; कार्यश्चिद्गुत्थितो — च.

[3] बृहन्नांसो० — ख; बृहन्नासोक्त० — छ, ज.

[4] श्रीवत्सेनैव — ओ.

[5] गदाहस्तो क्षौमपुष्प० — ओ, क; गदाहस्त क्षौमपुष्प० — ङ; गदाहस्तः क्षोमपुष्प० — च; गदाहस्तक्षौमहस्तसमप्रभः — ख, छ, ज; "शङ्खचक्रगदापुष्पहस्तः क्षौमसमप्रभः" इति भाव्यम्।

[6] 'द्विभुजं चैकवक्त्रं तु द्विनेत्रं पद्मधृक्करम्।
वर्तुलं देवबिम्बस्य मध्यस्थं रक्तवाससम्॥
रक्तवर्णं महात्मानं मम रूपं महेश्वरम्।
सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम्॥
अष्टबाहुं चतुर्वक्त्रं ध्यायेद्दिवसनायकम्।
त्रिणेत्रं चतुर्भुजं ध्यात्वा कृतघ्नघ्नं दिवाकरम्॥
सप्ताश्वरथमध्ये तु स्थापयेत्तु प्रभाकरम्।
उषावरणसंयुक्तं प्रभासंध्यासमन्वितम्॥
मेधया प्रज्ञया युक्तं सोमादिग्रहसंयुतम्।'
(कारणे पूर्वभागे ५५.१०–१४पू०);
(अजिते क्रिया० ३६.३०९उ०–३११पू०);
(रौरवे क्रिया० सौरपूजाविधौ ७२उ०–७३).

[7] सारोत्थनिम्ब० — क, छ, ज; सारोत्थो निवेश्योऽथ — च.

[8] कार्योक्कः — क; कार्योक्तः — ख, छ, ज; कायोक्तसाध० — ङ.

[9] स्वारोर्गाय — ओ.

[10] महायशाः — च.

[11] 'षड्वक्त्रो बालवेषश्च द्वादशाक्षस्तथाभुजः।
शक्तिखड्गपताकाब्जप्रासकुक्कुटदण्डभृत्॥
वराभयधनुर्बाणमहापरशुमानपि।
चतुर्भुजो द्विबाहुर्वा भवत्यैकाननः श्रियै॥
शक्तिकुक्कुटहस्तस्तु वराभयसमन्वितः।
वायव्यां विद्रुमाभासः पूजनीयः फलार्थिभिः॥'
(कामिकागमे पूर्वभागे ४.४७५–४७७);
(अजिते क्रियापादे ३६.३०४–३०९);
(रौरवे क्रियापादे ३५.१३६–१४०).

[12] पूज्यका० — ङ.

[13] कार्तिकेयोऽथ — च.

[14] वैत्ततः — ङ.

[1]षड्वक्त्रा[2]कृतिमान् [3]बालः कार्यः क्रीडाविलासकृत्[4] ॥२६॥
शक्तिहस्तो महावीर्यो वरदः शिखिवाहनः ।

[ ब्रह्मा[5], [6]विनायकश्च ]

अक्षसूत्रधरः श्रीमान्सोदकेन च [7]शोभिना ॥२७॥
स कमण्डलुना हस्ते चतुर्वक्त्रः पितामहः ।
शुद्धहेममयः[8] कार्यो बृहत्काष्ठोऽथवा[9] तरुः[10] ॥२८॥
[11]कार्यः श्रीपर्णिसंज्ञस्तु;[12] [13]वक्रतुण्डश्च [14]पिप्पलात् ।

[ कुबेरः ]

न्यग्रोधाच्च[15] प्रकर्तव्यः कुबेरो धनदः सदा ॥२९॥
एवमादीनि रूपाणि देवानां [16]साधने मुने ।

---

[1] षड्वक्त्रः कृत्तिमान् — ख, छ, ज; षड्वक्त्रः कान्तिमान् — च.

[2] ०कृतिदान् — ङ.

[3] वीर्यो बालः क्रोडो — ओ, क; वीर्यो बालः क्रीडा० — ङ.

[4] ०विलासयुक् — च.

[5] 'ब्रह्मरूपमथ शृणु ॥
चतुर्मुखं चतुर्बाहुं कमण्डल्वक्षधारिणम् ।
यज्ञसूत्रोत्तरीयं तु जटामकुटसंयुतम् ॥
सव्यहस्तेऽक्षमालां च वामहस्ते कमण्डलुम् ।
स्रुवं दक्षिणहस्ते तु पताकां वामहस्तके ॥
अम्बुजासनकासीनम्'
(कारणे पूर्वभागे ११.२३८उ०–२४१पू०);
(अजिते क्रियापादे ३६.२९४).

[6] गजवक्त्रो गणाधीशो भूतरूपो महोदरः ।
नागयज्ञोपवीतस्तु घनपिण्डोरुजानुकः ॥
नीलनीररुहाभस्तु चतुर्दोर्दण्डमण्डितः ।
अवामवामावर्तेभहस्तः पद्मासनस्थितः ॥
स्वदन्तं परशुं कुर्यात् स्वदक्षिणकरद्वये ।
लड्डुकं चाक्षमालां च वामपाणावथोत्पलम् ॥
रक्तवस्त्रधरं वाथ श्यामाभं कनकप्रभम् ।
पीतकञ्चुकसंछन्नं किरीटमकुटोज्ज्वलम् ॥
शुक्लयज्ञोपवीतं च सर्वाभरणभूषितम् ।
स्वशृङ्गं वाङ्कुशं दक्षे वामे पाशं च लड्डुकम् ।
स्थानकं वासनं वाथ गणेशं कारयेत्ततः ।
त्रिभिर्विराजितैर्नेत्रैर्नेत्राभ्यामथवा द्विजाः ॥
पद्मस्थं वापि पीठस्थं मूषिकस्थमथापि वा ।
इष्टासनस्थितो वापि प्रभादिपरिमण्डितः ॥
एवं स्यात्केवलो विघ्नराजः शक्त्यान्वितोऽथवा ।
(कामिके उत्तरभागे ४५.३६उ०–४३);
(अजिते क्रियापादे. ३६.३०२–३०४पू०).

[7] शोभनम् — ओ; शोभना — क.

[8] ०हेममयं — ङ; ०देहमयः — च.

[9] ०त्काष्ठेऽथवा — ओ, क.

[10] तरोः — ओ, क, ङ, च, छ; करोः — ख, ज.

[11] कार्या — ओ, क, ख, ङ; कार्य० — छ, ज.

[12] ०संज्ञा तु — ओ, क, ख, ङ, छ, ज.

[13] वक्त्र० — ओ, क.

[14] पिप्पला — ओ, ङ.

[15] न्यग्रोधा च — ओ; न्यग्रोधाद्वा — क, च; न्यग्रोधो वा — ख, छ, ज; नैगोधा वा — ङ.

[16] साधनं — ङ.

[ [1]प्रतिमास्थापनं, पूजा च ]

[2]प्राक्पदेन[3] [4]समस्तानां स्वनामाङ्कित[5]मूर्तिना ॥३०॥
[6]साध्यः सम्यग्यथान्यायं संस्थाप्य विधिविस्तरात् ।
विद्याङ्ग[7]पञ्चकं प्रोक्तं सर्वेषामेव सुव्रत ॥३१॥
[8]योज्याः सर्वे[9]विधानेषु यथावद्विधिना पुरा ।
[10]तैरेव सकलीकृत्य गन्धधूपपवित्रकैः ॥३२॥
[11]स्थाप्य [12]पूज्याश्च माङ्गल्यैः पूर्ववत्परिकल्पितैः ।

[ उत्तमादिसिद्ध्यनुसारेण देवताः ]

उत्तमानां तु सिद्धीनां मन्त्राः पीठसमाश्रिताः[13] ॥३३॥
विद्येशा मध्यमानां तु शेषा योज्यास्तु देवताः ।
[14]कन्यसानां तु सिद्धीनां साधकेनाभिलाषिणा[15] ॥३४॥

[ उत्तमादिसिद्धिदानि पदानि ]

सदाशिवान्तविमलाः[16] [17]सिद्धयश्चोत्तमा मताः[18] ।
विद्येश्वर[19]पदामोदसुखभोज्यास्तु[20] मध्यमाः ॥३५॥
कन्यसाश्च ततः प्रान्ताः[21] सिद्धयः साधकात्मनाम् ।

---

[1] एतद्विषयतुलनार्थं अजिते क्रियापादे चत्वारिंशत्तमः पटलो द्रष्टव्यः ।
[2] प्राक्पदेन = प्रणवमन्त्रेण 'प्राक्पदं प्रणवस्तस्याः' मतङ्ग० क्रिया० १.५८.
[3] प्राक्पदे तु — ओ, क, ङ.
[4] समस्नानं — ङ.
[5] ०मूर्तिमत् — ओ, क; ०मूर्तिनाम् — च.
[6] संध्या — ओ, क; साध्या — ङ; सव्यात्–च.
[7] ०पञ्चकप्रोक्तः — च.
[8] योज्या — ओ, क, ङ.
[9] ०विधाने तु — ओ, ख, छ, ज.
[10] तैरेव=पुरा प्रोक्तैर्ब्रह्मभिः शिवेन शिवाङ्गैश्च ।
[11] स्थाप्याः — ख, छ, ज; स्थाप्यः — च.
[12] पूजातिश्च — ङ; पूज्यश्च — च.
[13] ०समाश्रिता — ख.
[14] 'छ, ज' मातृकयोः ३४ उत्तरार्धं ३५ श्लोकश्च न स्तः ।
[15] ०भिवाषिणा — ङ; सिद्धये साधकात्मनाम् — च.
[16] ०विमला — ओ, ङ.
[17] सिद्धं यश्चोत्तमा — ङ; सिद्धयश्चोत्तमोत्तमाः — च.
[18] मता — ओ.
[19] ०वदामोद० — क; ०पदामोदा सुख० — ङ.
[20] ०भाजस्तु — ओ, क, ख, ङ.
[21] कन्यसाः शतरुद्रास्तु — ओ, क, ख, ङ, छ, ज; '३६' तत्रश्लोकप्रथमपादानन्तरं 'ख, छ, ज' मातृकासु क्रियापादपञ्चदशपटलस्थाः २१–२४ श्लोका दृश्यन्ते । एतेषां पाठभेदाः पञ्चदशपटले द्रष्टव्याः । तदनन्तरं विद्यापादीयषष्ठपटले "९९उ०–१००पू०' वृत्तिस्थः 'प्रसिद्धे संनिवेशादेरेककारणता कुतः' इत्यारभ्य 'अत्रापर्वतवर्ती वह्निः धूमवत्वात् ।' इत्यन्तो भागो लिखितः ।

न विद्यते [1]ततस्तस्य दानमात्मबलात्परम्[2] ।
[3]विशिष्टं [4]बहुभिर्धर्मैस्तत्कथं [5]दातुमर्हति ॥६२॥
[6]यदसाध्यं स्वयत्नेन[7] प्राप्यते[8]ऽतिगरीयसः ।
परेभ्यः शक्यते दातुं लोकेऽस्मिन्न [9]प्रतीयते ॥६३॥

परमेश्वर उवाच —

[10]सांसिद्धिक[11]गुणोपेतवीर्येणातिमता[12] प्रभुः[13] ।
साभिलाषेण दिव्येन [14]निरीशेनाविखण्डितः ॥६४॥
[15]द्विधाधिकारसंपन्न[16]प्रभावेनात्मवर्तिना ।
[17]ददाति [18]विविधां [19]सिद्धिं साधकानां महात्मनाम् ॥६५॥
[20]विरक्ताः स्वाधिकारात्तु [21]येऽनुध्याता मुमुक्षवः[22] ।
प्रागेव ध्वस्तविभवास्तेषां दद्यात्परं[23] पदम्[24] ॥
शेषाणामपि देवेशः[25] प्रददातीप्सितं फलम् ॥६६॥

[26]उद्घातानल[27]विप्रुषोर्मित[28]रलव्याघृष्ट[29]पक्षोद्यमा-
[30]त्तत्दिग्गज[31]दुष्टभाव[32]रचित[33]व्यावर्तनाचेतसः[34] ।

---

[1] ततस्तस्या — ओ, ङ.
[2] बलाद्वरम् — ङ.
[3] शिष्टं तद्वहुधर्मैस्तत्कथं — छ; शिष्टं ततु बहुधर्मैस्तत्कथं — ज.
[4] तच्च बहुभिस्तत्कथं — ओ; तच्चवहुभिधर्मैस्तत्कथं — ङ.
[5] दातुमर्हसि — ओ; दानमर्हति — छ, ज.
[6] वदस्वाध्यस्वयत्नेन — ओ; यदासाद्य द्वयं चैव — छ, ज.
[7] स्व . . . न्नैव — ग; स्वयं नैव — च.
[8] न गरीयसम् — ओ, ङ; ०ऽतिगरीयसम् — छ; ऽतिभिरीयसम् — ज.
[9] प्रदीयते — ओ, ङ.
[10] एवं सिद्धिगुणोपेतविध्येणाति० — छ, ज.
[11] ०गुणोपेतं — च.
[12] ०वीर्येणातमतः — ओ; वीर्येणादिमता – ग, च.
[13] प्रभु — ग; प्रभुम् — छ, ज.
[14] निरीशेनापि खण्डिता — ओ, ग; निरेशानापखण्डित — ङ; निरीशेन विखण्डिताः — च; नियेनाविखण्डितः — छ, ज.
[15] द्विधा विकारसंपन्न० — च; विधायिकानि संपन्न० — छ; निधायिकानि संपन्न० — ज.
[16] ०प्रदा वेदात्मवर्तिन — छ, ज.
[17] इदमर्धं 'ओ' मातृकायां न दृश्यते ।; दधाति—ग.
[18] विदितां — छ, ज.
[19] विद्धि — छ.
[20] . . रात्ते — ओ; विरक्ता स्वाधि० — ङ; विरक्तां स्वाधिकारान्तां — च; विरक्तास्यधिकारं तु — छ; विरक्तस्याधिकारं तु — ज.
[21] येऽनुध्यत० — ओ; येऽनुध्यता — ग; येऽनुध्याना — ङ; येन ध्याता — छ; ये तु ध्याता — ज.
[22] मुमुक्षवा — ज.
[23] दद्यात्पदं — च; दण्डात्परं — छ, ज.
[24] परम् — च.
[25] देवेश — ओ, ग, ङ, छ, ज.
[26] उद्घाटानिल० — च; मघातानल० — छ; मत्घातानल० — ज.
[27] ०विप्रषोर्मि — ओ; विप्रेषाषोर्मि० — ङ; ०विप्लुषोर्मि — च; ०विप्रुषोक्ति — छ; विप्रषोक्ति — ज.
[28] तरालप्रघृष्टं — ङ.
[29] ०पक्षोद्यमां — ओ; पक्षीद्यमा — ग, छ, ज; . . क्षो . . मं — ङ. पन्थाद्यमात् — च.

[1]कालाच्चैव जया[2]त्प्रतप्तकिरणप्रोद्दामवेगाद् ध्रुवं[3]
[4]चाशु स्वान्तरकाललब्ध[5]वपुषो [6]व्यज्यत्यभीष्टं पदम् ॥६७॥

[ उक्तार्थोपसंहारो वक्ष्यमाणोपक्रमश्च ]

[7]व्याख्यातो[8] योग[9]पादः [10]खगपति[11]निलयोद्भूतसिद्धिप्रतापः[12]
[13]क्रीडातोयतरङ्गभङ्गकुटिलः[14] कल्लोल[15]दोलायितः ।
नानायुक्तिविचारभेद[16]रचितः सद्वस्तुबोधास्पदो[17]
[18]भर्तुर्वक्त्रशशाङ्क[19]वाक्यरचिता [20]चर्येति ज्योत्स्नायते ॥६८॥

इति श्रीमतङ्ग[21]पारमेश्वरे योगपादे [22]उद्घातपटलः सप्तमः ।

सप्तमः पटलः

योगपादः समाप्तः ॥

---

[30] मत्ता दिग्गज० — ओ; मत्ता . . जं — ग; मत्तदिग्गज — ङ, छ, ज.
[31] ०दत्तभाव — ओ; दुत्तमाभाव . . — ङ.
[32] चरित० — ओ; रचिता — च.
[33] ०व्यावृत्तना० — ओ.
[34] . . चेतस — ग.
[1] कालाश्चैव — ङ.
[2] ०त्प्रतप्तकिरणे — ओ; ०त्प्र . .किरणे—ङ; ०त्प्रतप्तकिरणाः — च; ०त्प्राप्तकिरण — छ, ज.
[3] ०प्रोद्धामवेगो धुव० — ओ; ०प्रोद्दामवेगो ध्रुवं — ग; ०प्रोद्दामवेप्रागोध्रुव० —ङ; ०प्रोद्दामवेदा ध्रुवं — च.
[4] ०माचोत्तरकाल० — ओ; चाशुश्चोत्तरकाल० — ग; ०माशुचोत्तरकाल० — ङ; ०माशु स्वान्तरकाल० — च; ०माशुश्चोत्तरकाल० — छ, ज.
[5] ०पुरुषो — ङ.
[6] व्यत्यञ्जभीष्टं . . — ओ; व्यत्यजभीष्टं — ङ; व्यज्यत्यदुष्टं — च;
[7] मातृकासु प्रथमपादे एकविंशत्यक्षराणि पादान्तरेषु, एकोनविंशत्यक्षराणि च सन्ति ।
[8] विख्यातो — ओ; व्याख्यातोऽतो — ङ.
[9] ०पादा — ज.
[10] खगति० — ओ, ङ; . . गपति० — ग.
[11] ०निलयो भूत० — ङ.
[12] ०सिद्धिः प्रदीपः — ओ; ०सिद्धिप्रताप — ग; ०सिद्धिप्रदाप – ङ; ०सिद्धिः प्रतापः — ज.
[13] क्रीडा तेयतिरङ्ग — ङ; क्रीडतोयतरङ्ग० — छ, ज.
[14] ०पङ्ककुदल० — ओ, ङ; ०भङ्गजटिलं — ग.
[15] ०प्रोल्लालितः — ओ, ङ; ०प्रेखोकम् —ग; प्रेङ्खोलितः — छ; प्रङ्खोलितः — ज.
[16] ०रचित० — ओ; ०रचितं — ग.
[17] ०बोधास्पदं — ओ, ग, ङ; ०बद्धास्पदो – च; ०भेदास्पदां — छ, ज.
[18] भर्तृवक्तृ० — ओ; भोक्तुर्वक्त्र० — छ, ज.
[19] ०वाच्यरचिता — च, छ, ज.
[20] चार्येति — छ, ज.
[21] 'पारमेश्वरे' इत्यस्यानन्तरं 'च' मातृकायां 'महातन्त्रे' इत्यधिकं दृश्यते ।
[22] उपोद्घातसिद्धिपटलः — च; उद्घातसिद्धिपटलः — छ, ज.

# मतङ्गपारमेश्वरम्

## चर्यापादः

## प्रथमः पटलः

### समयानुक्रमः

**अथ चर्याक्रमः प्राप्तो[1] नाना[2]वर्णकृतास्पदः[3] ।**
**परमेश[4]मुखोद्गीतः साधकानां महात्मनाम् ॥१॥**
**[5]स्वनियोगाय विस्पष्टं[6] वचनादृषिपुङ्गव[7] ।**
**[8]प्रवक्ष्यतेऽधुना मत्तो भवताप्युचितात्मना[9] ॥२॥**
**श्रोत्रेन्द्रियेण विधिवद्ग्राह्यः[10] सम्यग्यथास्थिति[11] ।**

[समयाचाराः[12]]

**[13]दीक्षावसानतः श्राव्याः[14] समया देशिकेन तु ॥३॥**

---

[1] ०क्रमप्राप्ते – ओ; ०क्रमप्राप्तो – ङ, च, छ, ज.

[2] ०वस्तुकृता० — च.

[3] ०कृतास्पदम् — ओ, ङ, छ, ज.

[4] ०मुखोद्गीतं — ओ, ङ, छ, ज; मुखाद्गीतं — च.

[5] स्वानियोगाय — ओ; स्वनियागाय — छ; स्वनि यागाय — ज.

[6] ०योगापविष्टस्य — च.

[7] ०दृषिपुङ्गवः — ङ; ०दृष्टिपुङ्गव — छ, ज.

[8] प्रचक्षतेऽधुना — ओ; वक्ष्यते तेऽधुना — च.

[9] ०त्युचिरात्मना — ओ; ०प्यच्युतात्मना — ङ; ०प्यचितात्मना — च.

[10] ०द्ग्राह्य — ओ; ०द्ग्राह्यो — च; द्ग्राह्यं — छ, ज.

[11] ०यथास्थितम् — ओ, ङ; ०यथास्थिते — च.

[12] 'कृत्वात्राभीप्सितां दीक्षां समयश्रावणं भवेत् ।
न निन्देत्कारणं देवं न शास्त्रं तेन भाषितम् ॥
न गुरुं साधकं वापि लिङ्गच्छायां न लङ्घयेत् ।
एवं तत्त्वोपदेशं च कार्यं चेश्वरपूजनम् ॥'
(किरणे क्रिया० १०. ६१–६२);
'निन्दा शिवशिवज्ञानगुर्वग्निशिवयज्वनाम् ।
लङ्घनं दीक्षितच्छायाशिवार्चाङ्गबलिस्रजाम् ॥
तद्दानभक्षणे चेशस्वशब्दाधिकृतस्य च ।
तज्जीवसूतकप्रेतपुष्पवत्यन्नभोजनम् ॥
महासमयगर्ताः स्युरिमाः पतनभीरुणा ।
परिहृत्य विचर्तव्यमितीशः स्वयमब्रवीत् ।'
(मृगेन्द्रे क्रिया० ८.१७०उ०–१७३ पू०);
'शिष्यस्य समयान्सर्वाञ्श्रावयेद्गुरुसत्तमः ।
न निन्देत्कारणं देवं ज्ञाननिन्दां तथैव च ॥
साधकं ज्ञानवृद्धं च ज्येष्ठं भक्तिसमन्वितम् ।
आचार्यस्य तु ज्येष्ठस्य लिङ्गच्छायां न लङ्घयेत् ॥
निर्माल्यं तु न भुञ्जीत शिवभक्तान्न निन्दयेत् ।'
(अचिन्त्यविश्वसादाख्ये ११.४३–४५पू०);
'रजस्वलादिसंस्पृष्टं शिवभक्तो विवर्जयेत् ।
न गोब्राह्मणभस्माग्निलिङ्गच्छायां च लङ्घयेत् ॥
न लङ्घयेत निर्माल्यमप्सु भूमौ निवेशयेत् ।'
(शिवधर्मोत्तरे १२.११–१२पू०).

[13] तृतीयश्लोकस्योत्तरार्धं चतुर्थश्लोकश्च 'च' मातृकायां न दृश्येते ।

[14] ०वसानत श्राव्या — ओ; ०वसाने श्रोतव्या — ङ; वसाने श्रोतव्यो — छ, ज.

शिष्यैश्चैव यथान्यायं [1]प्रपाल्याः प्रयतात्मभिः ।
न [2]निन्देत्कारणं देवं न च वाक्यं तदुद्भवम् ॥४॥
[3]नाचार्यं [4]साधकं चैव [5]तद्भक्तानपि [6]पण्डितः ।
[7]तच्छायां [8]नाक्रमेत्पङ्क्त्यां न कदाचिच्च [9]लङ्घयेत् ॥५॥
[10]ऋतुमद्वनितास्पृष्टं[11] न [12]किंचिदपि संस्पृशेत् ।
निर्माल्यं [13]देवदेवस्य [14]छायां छायावदाचरेत् ॥६॥
[15]निवेदितं [16]वा यत्किंचिद्देवदेवस्य [17]शूलिनः ।
न च [18]तत्स्वोपयोगाय [19]कर्तव्यं मनसाप्यथ ॥७॥
न चान्येभ्यः प्रदातव्यं [20]नोपेक्ष्यं चाप्यनादरात् ।
शिवाराधनसक्तानां[21] वाङ्मनःकायकर्मभिः ॥८॥
[22]न व्यावृत्तिः प्रकर्तव्या [23]तेऽनुमान्याः प्रयत्नतः ।
विण्मूत्र[24]ष्ठीवनादीनि न कार्याणि शिवालये[25] ॥९॥
[26]गुरुदेवाग्नि[27]कार्येषु कुत्सितान्यपि कारयेत् ।

---

[1] प्रपाल्या — ङ; प्रवक्ष्यां प्र० — छ, ज.
[2] निन्द्यात् — ओ, ङ.
[3] न चार्यं — ओ.
[4] पावकं — ओ, ङ. छ, ज.
[5] तछक्तानपि — ज.
[6] खण्डिनः — छ; खण्डिनम् — ज.
[7] तच्छाया — ओ, ङ, च; न छायां — छ; न जायां — ज.
[8] नाश्रितक्रमे पत्तिभ्यां — ङ.
[9] लयं ययेत् — ङ.
[10] ऋतुमवनिता० — च; ऋतुमध्वनिता — छ; ऋतुमद्वानिता० — ज.
[11] ०स्पष्टं — छ, ज.
[12] चिरादपि — च.
[13] चैव देवस्य — ओ, ङ, छ, ज.
[14] च्छायाच्छायेव चादरात् — ओ; छायाच्छायेय चादरात् — ङ; छाया छायावदाचरेत् च; छाया छायेव चादरात् — छ, ज.
[15] निवेष्टितं — ङ.
[16] द्या य किंचि० — छ; जा य किंचि० — ज.
[17] शूलिनम् — ज.
[18] तत्सोपयोगाय — ओ, च; तस्योपयोगाय — ङ; तत्स्वोपदेशाय — छ.
[19] कर्तव्यमनसा० — ओ.
[20] नोपेक्ष्यमप्यना० — ओ; नापेक्ष्यमप्यना० — ङ; नोपेक्ष्यं वाप्यना० — च; नापेक्ष्यं चाप्यना० — छ.
[21] ०शक्तानां — ङ, च.
[22] नाव्यावृत्तिः — च; न व्यावृतिः — ज.
[23] तेऽनुमेद्याः — ओ; तेन मेद्याः — ङ; ते तु मोघाः — च.
[24] ०ष्ठीव. . . णि च शि० — ओ; ०ष्ठीवनादीनि कार्याणि नव शिलालये — ङ.
[25] 'देवालयसमीपे तु कूपे गोष्ठे न भस्मनि। क्षेत्रे च वृक्षच्छायायां नद्यामन्तःसरःस्वपि॥ चैत्यवृक्षसमीपे तु वेलायां वा महोदधेः। चत्वरे गृहमध्ये च न कुर्यादुभयं नरः॥' (सुप्रभेदे, क्रिया० ३.६उ० – ८पू०); 'देवागारे भूधरे च दृषदादौ च शाद्वले। स्त्रीणां गोविप्रलिङ्गानां संमुखे चन्द्रसूर्ययोः॥ विण्मूत्रं च न कर्तव्यम्' (पूर्वकारणे २९. ११.उ०, १२.)
[26] 'शिवाग्न्यतिथिगुर्वर्थं कुर्यात्कर्माणि सर्वतः। अहिंसकः स विज्ञेयो रुद्रत्वं गच्छति क्षितौ॥' (शिवधर्मोत्तरे ११.११६); 'अनृतं गुरुदेवार्थं न दोषाय प्रकल्पते।' (किरणे, चर्या० ७.४.उ०)
[27] ०कार्याणि — ओ, ङ, छ, ज.

[1]कर्माणि मुनिशार्दूल [2]यदीच्छेदुत्तमं फलम् ॥१०॥
[3]नाफलं चेष्टयेत्प्राज्ञो [4]नानारम्भी कदाचन ।
[5]नार्चयित्वा शिवं देवं [6]नात्तव्यं किंचिदत्र तु[7] ॥११॥

[ [8]शिवभक्ताः शिववद्भावनीयाः ]

शिववच्छिव[9]भक्तास्तु द्रष्टव्याः शिवकाङ्क्षिभिः ।
न च [10]तान्प्रति कर्तव्यो [11]विचारो लौकिको बुधैः ॥१२॥
[12]यतस्ते शिववीर्येण [13]संस्पृष्टाः [14]पुरुषोत्तमाः ।
[15]संस्कृताश्च [16]शिवैर्मन्त्रैर्गुरुणा[17] शिवमूर्तिना ॥१३॥
[18]वागीशीगर्भसंभूताः[19] सर्वे प्राप्तवरा नराः ।
यथोक्तशिवसंस्कारपवित्रीकृतमूर्तयः[20] ॥१४॥
सर्वे [21]समानधर्माणस्तथाप्येष विधिः स्मृतः[22] ।

[ [23]संस्कारक्रमात्परस्परं ज्येष्ठता ]

[24]यथानुक्रम[25]संस्काराज्ज्येष्ठतात्र परस्परम् ॥१५॥

---

[1] 'कर्माणि' इत्यादि 'यदीच्छेदुत्तमं' इत्यन्तं नास्ति — ओ.

[2] यदिच्छक्तुत्तमं — ङ; यदुच्यत्युत्तमं — छ; (कुत्सितान्य)पदिशक्त्युत्तमं — ज.

[3] न चाफलं — ओ.

[4] नानारम्भि — ओ, ङ, छ, ज.

[5] नाराध्य परमं देवं – च; नार्चयत्वा शिवं–छ, ज.

[6] भोक्तव्यं — ङ, छ, ज; कर्तव्यं — च.

[7] किंचिदेव तु — छ, ज;
'वरं प्राणपरित्यागश्छेदनं शिरसोऽपि वा ।
न त्वनभ्यर्च्य भुञ्जीयाद्भगवन्तं त्रिलोचनम् ।
एवं निर्वहते यस्तु यावज्जीवं प्रतिज्ञया ।
मनुष्यचर्मणा बद्धः स रुद्रो नात्र संशयः ॥'
(शिवधर्मोत्तरे ३.४६, ४७)

[8] 'शिववच्छिवभक्तास्तु द्रष्टव्याः शिवमिच्छता'
(ज्ञानरत्नावल्याम् १२.३२);
'पूजया शिवभक्तस्य शिवः प्रीततरो भवेत् ।
शिवस्य शिवभक्तस्य भेदो नास्ति शिवो हि सः ॥'
(शिवमहापु० विद्येश्वरसं० १७.१३१)

[9] ०भक्तांस्तु — च.

[10] तान्प्रविकर्तव्यो — ओ; तत्प्रतिकर्तव्यो — ज.

[11] विभागो — च.

[12] यतस्तेनैव वीर्येण — ओ, ङ; ततस्तेनैव वीर्येण — छ, ज.

[13] संस्पृष्टः — ङ; संस्पृष्टा — ज.

[14] पुरुषोत्तमः — ङ; प . . . षोत्तम — ज.

[15] ०संस्कृतैश्च — ओ.

[16] शिवे मन्त्रे — च.

[17] मरुणा — ङ.

[18] वागीशिगर्भ० — छ, ज.

[19] ०संभूता — ङ.

[20] ०मुक्तयः — छ, ज.

[21] सीमानधर्माण० — ओ; समानकर्माण० — ज.

[22] तथाप्येषोच्यते विधिः — ओ; ०स्तथाप्येषोच्यते विधिः — ङ, छ, ज.

[23] 'दीक्षामुख्येन वा प्रीत्या शुश्रूषां गौरवेण च ।
सतां चैव प्रयच्छेच्च ज्येष्ठत्वं गुरुकल्पनात् ॥
तत्र ज्येष्ठस्तु संपूज्यो गुरुवन्नन्दिकेश्वर ।'
(अचिन्त्यविश्वसादाख्ये ४.९,१०पू०)

[24] यथाक्रम० — छ, ज.

[25] ०संस्कारज्येष्ठानां तु परस्परम् — ओ, छ, ज; ०संस्कारज्येष्ठाज्येष्ठानां तु परस्परम्–ङ; ०संस्कारान् ज्येष्ठतात्र — च.

[1]समयी [2]समयस्थस्य [3]ज्येष्ठो यः प्राक्तु संस्कृतः ।
पुत्रकः [4]पुत्रकस्यापि [5]साधकः [6]साधकात्मनः ॥१६॥
[7]गुरोरपि [8]गुरुः प्रोक्तः[9] समयोक्तिनिदर्शनात् ।
[10]दीक्षितः [11]समयस्थस्य दीक्षितस्यापि साधकः ॥१७॥
[12]साधकस्याप्यथाचार्यो ज्येष्ठः संपरिकीर्तितः[13] ।
[14]विधिरेष समुद्दिष्टः [15]समय्यादिपदक्रमात् ॥१८॥
[16]यथानुरूपं सर्वेषां[17] भ्रातृणां कीर्तितः [18]क्रमः ।
गुरोरप्यग्रतस्तेषां [19]ज्येष्ठानां देयमासनम् ॥१९॥
यथानुक्रमशुश्रूषावन्दनादीनि[20] चात्र[21] तु ।
[22]कार्याण्यन्योन्यसंहृष्टैरचक्षुर्विषये[23] गुरोः[24] ॥२०॥

मतङ्ग उवाच —

[25]पुत्रकः शिवतत्त्वे तु नियुक्तः परमार्थतः ।
ध्वस्ताधिकारविषयो[26] वीतरागश्च सर्वदा ॥२१॥
साधकश्चाभिलाषी[27] स्यान्नि[28]युक्तश्चापरे पदे ।

---

[1] समीपे — छ, ज.
[2] समयज्ञस्य — च, छ, ज.
[3] ज्येष्ठः प्राक् संस्थितो हि सः — च; ज्येष्ठाय प्रतिसंस्कृतः — छ, ज.
[4] पुत्रकन्यापि — च; पुत्रकंस्यापि — ज.
[5] साधक० — ङ.
[6] साधकात्मना — ज.
[7] गुणोरपि — छ, ज.
[8] गुरुप्रोक्तसमयोक्ति० — ङ.
[9] प्रोक्ता — ओ.
[10] दीक्षित० — ङ.
[11] समयस्तस्य — ओ, ङ; समयज्ञस्य–च, छ, ज.
[12] साधकस्यान्ध्यप्यथाचार्यो — ङ; साधकस्याप्यथवार्यो — छ, ज.
[13] ०कीर्तितम् — ज.
[14] विधिरेषः — छ.
[15] समयादि० — ओ, ङ, छ, ज.
[16] यथा रूपान्तरः स. . . कीर्तितः — ओ.
[17] यथानुरूप्यादि सर्वेषां — ङ; यथानुरूपः सर्वेषां — च; यथारूप्यादि सर्वेषां — छ, ज.
[18] क्रमात् — ओ, ङ.
[19] ज्येष्ठया देवमानुषम् — ओ; ज्येष्ठाय देवमानस्यम् — ङ; ज्येष्ठाय देयमानसम्—छ, ज.
[20] ०चन्दनादीनि — छ, ज.
[21] वात्र — छ.
[22] काय . . . न्योन्यसंहृष्टै० — ओ; काराण्यन्योन्यसंहृष्टै० — ङ; कार्याण्य . . . संहृष्टै० — छ, ज.
[23] ०रदक्षिविषये — ङ; ०र्न चक्षुर्विषये — च; ०र . . चक्षुविषये — छ, ज.
[24] गुरौ — च.
[25] 'हुत्वा तु विधिवद्देवि तत्त्वपाशैर्वियोजितः । योजितस्तु परे तत्त्वे पुत्रकः स विधीयते ॥' ( निःश्वासकारिकायां दीक्षोत्तरे ७.११५)
[26] ०विषये — ङ, छ, ज.
[27] साधकस्याभिलाषी — ओ, ङ; साधकः साभिलाषी — च; साधकश्चाभिलाषि — छ, ज.
[28] ०युक्ताः परमे पदे — ओ; ०युक्ताश्च परमे पदे — ङ.

गुरुश्चैवाधिकारे[१] तु स तयोरप्यनिन्दितः[२] ॥२२॥
[३]ज्यायाञ्शिवस[४]मानत्वा[५]द्यवीयांसस्त्रयोऽप्यतः ।

परमेश्वर उवाच—

[६]सर्वे ह्येवंविधा [७]ज्ञेया [८]येऽनुध्याताः शिवेच्छया ॥२३॥
तथापि स्थितये [९]विप्र [१०]प्रपाल्योऽनुक्रमः स्वयम् ।
[११]गुरुत्वे [१२]संस्थितस्यास्य लोकानुग्रहकारणात् ॥२४॥
[१३]गरीयःपद[१४]माहात्म्याल्लोके [१५]पूज्यतमो भवेत् ।
गरीयान्भ्रातृभिः [१६]कार्यः संतत्यै येन [१७]संप्रति ॥२५॥
दृष्ट्वा [१८]पूज्यतमं लोके [१९]प्रपद्यन्ते [२०]मुमुक्षवः ।
[२१]भर्तुराज्ञा सदा [२२]पाल्या [२३]न्यायेनानेन [२४]शासने ॥२६॥
न्यायश्च [२५]तद्वचोमात्रक्रमेण समवस्थितः[२६] ।
[२७]तस्मिन्न्यायवतः सर्वं [२८]युक्तमत्रानुपालनम् ॥२७॥
[२९]प्रीत्या तेनाप्यथो [३०]लोभ्या [३१]भ्रातरस्ते [३२]यवीयसः ।

---

[१] ०श्चैवादिकार्ये — ओ, ङ.
[२] ०प्यनिन्दिताः — ओ, ङ; ०प्यनिर्मितः—च.
[३] ध्यायन् शिव० — ओ; ज्यायांश्छिन्न० — च; ज्यायां छिव — छ.
[४] . . . मोनत्वाद्यवीय. . .थ — ज.
[५] ०द्वचवीयास्तु तथोऽप्यथ — ओ; ०द्यवीयांस्तु ततोऽप्यथ — ङ; ०द्यवीयांस्तु येऽप्यथ — छ.
[६] सर्व एव शिवा ज्ञेया — च; सर्वेभ्येवं विधा ज्ञेयां — ज.
[७] ज्ञेयं — ङ.
[८] धेनुध्याता — ङ; येऽनुध्यानाः — च; ये तु द्वचाता : — छ; ये तु द्वाताः — ज.
[९] विप्रः — च.
[१०] प्रोलोन्यानुक्रुत स्वयम् — ओ; पाल्योऽनुक्रमत स्वयम् — ङ; प्रपाल्योऽनुक्रमस्त्वया — च; प्रमाल्योऽनुक्रम स्वयम् — छ; प्रमाये . . . क्रम स्वयम् — ज.
[११] गु . . . संस्थिस्यास्य — ओ; गुरुत्वसंस्थितस्यास्य — ज.
[१२] संस्कृतस्यास्य — च.
[१३] अरीयसं पद० — ओ; गरीया पद० — ङ.
[१४] ०माहात्म्या लोके — ङ, छ, ज; ०माहात्म्याल्लोकैः — च.
[१५] पूज्यतया — ओ; पूज्यतठो — ङ; 'सः' इत्यध्याहारः कार्यः ।
[१६] कार्या — ओ, ङ, छ, ज.
[१७] तं प्रति — च, छ, ज.
[१८] पूज्यतमो— च.
[१९] प्रवदन्ति — ओ, छ, ज; प्रपद्यन्ति — ङ.
[२०] मुमुक्षुवत् — छ, ज.
[२१] भर्तृराज्ञा — ओ; भक्तुराज्ञा — छ, ज.
[२२] पाल्ये — ओ; पल्या — ज.
[२३] न्यायेनान्येन — ओ, ङ.
[२४] चासने — ङ; सासने — ज.
[२५] तद्वचोपात्तक्रमेण — ओ; तद्वचोपान्तक्रमेण — ङ; तद्वयोपात्तं क्रमेण — छ, ज.
[२६] समवस्थितम् — ओ; समवर्तित्स्थितम् — ङ.
[२७] तस्यान्यायरतः — च.
[२८] युक्तमात्रा तु पालनम् — ङ; युक्तमन्त्रानुपालनम् — छ, ज.
[२९] प्रीत्याश्च तेऽप्यथो — ओ; प्रीत्या तेऽप्यथो–ङ.
[३०] ल्लाप्या — च; लोव्या — छ; लोप्या — ज.
[३१] २८ तमश्लोकस्य द्वितीयपादप्रभृति २९ तमश्लोकस्य तृतीयपादान्तं 'छ, ज' मातृकयोर्लुप्तम् ।
[३२] यवीयसः — ओ, ङ, च; यवीयांसः इति साधु, वृत्तार्थमार्षः प्रयोगः

[1]स्वशिष्या विनये [2]योज्यास्तथा तेन महात्मना ॥२८॥
गुरुणाचार[3]सन्मार्गप्राप्तानुज्ञानुवर्तिना ।
यथाज्येष्ठं तु [4]प्रह्वेया[5] [6]भ्रातरस्ते [7]यतः स्मृताः ॥२९॥
साधकः [8]संयमी शूरः शास्त्रज्ञः [9]सुमहातपाः[10] ।
नित्यं [11]शिवतनुः श्रीमानभिषिक्तश्च[12] शासने[13] ॥३०॥
सिद्धयर्थमुद्यतस्यास्य[14] [15]निःसङ्गस्य [16]तपस्विनः ।
[17]न न्यूनेन भवेद्धानिः पूज्यमानस्य नित्यशः ॥३१॥
तथाप्यनुक्रमो दृष्टो [18]यद्यसौ पूर्वसंस्कृतः ।
[19]लोकसंवृत्तिरक्षार्थं लोकेऽपि तपसो बलात् ॥३२॥
[20]आकृष्टः [21]साधकेन्द्रः स शिवशासनतत्परः ।
[22]भवेत्तेन [23]प्रपूज्यः स्याच्छासनस्यानुपालने ॥३३॥
न च दोषोऽस्ति भक्तानां शासनेऽस्मिन्महामुने ।
भक्तिः कार्या [24]गुणान्दृष्ट्वा गुणाश्च [25]शिवशासने ॥३४॥
[26]सस्फुरत्वं [27]भवेद्यस्तु [28]तस्मात्पूजा न कुत्सिता ।
ज्यायसा [29]क्रियमाणापि साधकं प्रति सुव्रत ॥३५॥

---

[1] स्वशिष्यान्यत ये योज्या न तथा ते म . . —ओ.
[2] वियोज्या न तथा ते महात्मना — ङ.
[3] ०संमार्गप्राप्तानुज्ञानु० — ओ; सन्मार्गप्राप्तुज्ञानु० — ङ.
[4] प्रह्वाम्य — च.
[5] यथा ज्येष्ठा प्रबाधस्य — ओ; यथा ज्येष्ठा प्रबासु — ङ.
[6] भ्रातरास्ते — ओ.
[7] यतस्ततः — ङ.
[8] समयी — ओ, ङ; समयं — छ, ज.
[9] स महातपाः — च.
[10] ३० श्लोकस्य पूर्वार्धानन्तरं द्वितीयपटलस्थः १३ श्लोकस्योत्तरार्धप्रभृति ३१ श्लोकान्तो भागः 'छ, ज' मातृकयोर्दृश्यते। एतत्संबन्धिनः पाठभेदास्तत्र यथावल्लिखिताः ।
[11] शिवतनु० — ङ; संवित्तनुः — च.
[12] श्रीमानभिषिक्तस्य — ओ; श्रीमानिभिषिक्तस्य — ङ; श्रीमानफिषित्कस्तु — छ; श्रीमान्विभषिक्तस्तु — ज.
[13] साधने — ङ.
[14] सिद्ध . . . तस्यास्या — ओ; सिद्धत्वमु . . – ङ.
[15] निःसंगत्य — ओ, ङ; मिःसङ्गस्य — छ, ज.
[16] तपस्थित — छ; तपस्थितः — ज.
[17] न तु नान विभवद्धानि — ओ; न चात्र दीक्षिताद्धानिः — च; न तु नाम भवेद्धानिः — छ; न तु नाम भवे ध्वानिः — ज.
[18] यस्यासौ — छ, ज.
[19] लोकसंप्रतिरक्षार्थं — ओ, ङ; लोके संप्रति रक्षार्थं — छ, ज.
[20] अकृष्टः — ओ; आकृष्ट० — च.
[21] साधकेन्द्रेण शि० — ओ, ङ; छ, ज.
[22] भरतेन — च.
[23] प्रपूज्यस्यच्छाशनस्यनुपालने — ङ; प्रपूज्येत शिवशासनपालने — च; प्रपूज्या स्या छासनस्यानु० — छ; प्रपूज्य स्या छासनस्यानु — ज.
[24] गुणं दृष्ट्वा — ङ; गुणां दृष्ट्वा — छ, ज.
[25] शिवसाने — ओ; शिरसा मुने — च.
[26] संस्पृतस्त्वं — ओ; संस्पृशतस्त्वं — ङ.
[27] भवे . . ै — ओ; भवेत्यस्तु — ङ; भवे द्योस्तु — छ, ज.
[28] तस्मिन्पूजा नु कु० — ओ; तस्मिन्पूजा — ङ.
[29] क्रियमाणोऽपि — ओ, ङ.

[ उक्तार्थोपसंहारो वक्ष्यमाणोपक्रमश्च ]

[१]उक्तोऽखिलोऽनुक्रमयुक्तिमार्गः
[२]शास्त्रेऽनुपाल्यः [३]समयो यथावत् ।
आचारमार्गोऽप्युचितः क्रमेण[४]
[५]वाच्योऽधुना ते मुनिराजमुख्य[६] ॥३६॥

इति श्रीमतङ्ग[७]पारमेश्वरे [८]चर्यापादे [९]समयानुक्रमपटलः प्रथमः ॥

प्रथमः पटलः

---

[१] उक्तोऽखिला . . . मार्ग० — ओ; युक्तोऽखिले नु क्रम० — च.
[२] शास्त्रेऽनुपाल्य — च; शास्त्रोऽनुपाल्यः — छ; शस्त्रोऽनुपाल्यः — ज.
[३] समया यथा० — ओ; समयैर्यथा० — च.
[४] ०मार्गेऽप्युचितक्रमेण — ओ; मार्गोऽप्युचित-क्रमेण — ङ, छ, ज.
[५] वाक्योऽधुना — छ; वाक्यो युना — ज.
[६] ०मुख्यः — छ; मुख्यम् — ज.
[७] 'पारमाश्वरे' इत्यस्यानन्तरं 'च' मातृकायां 'महातन्त्रे' इत्यधिकं दृश्यते ।
[८] क्रियापादे — ओ.
[९] समयानुक्रमणपटलः — ओ.

# द्वितीयः पटलः

## आचारः

अथातः सर्व[1]सामान्यं विधानमिदमुत्तमम् ।
वर्णयिष्यामि संक्षेपाच्छास्त्रेऽस्मिन्कारणात्मके ॥१॥

[ [2]द्विविधोऽप्याचारः पालनीयः ]

[3]आचारो द्विविधः शास्त्रे [4]चरतां भावितात्मनाम् ।
[5]दृष्टादृष्ट[6]फलप्राप्तिरमोघा संप्रवर्तते ॥२॥
[7]लौकिकः [8]सुप्रसिद्धोऽयमविरोधनिदर्शनात्[9] ।
[10]पाल्यो [11]नैःश्रेयसे चैव संवृत्तावप्यनिन्दितैः ॥३॥
[12]शैवोऽन्योऽप्यत्र बोद्धव्यः प्रयत्नात्साधकात्मभिः ।
[13]मुक्तये सिद्धये [14]चैव [15]कारणाज्ञानुवर्तिभिः ॥४॥

---

[1] ०सामान्यविधान० — च, छ, ज.

[2] "व्रतं शास्त्रीयनियमानुष्ठानं सामान्यविशेषशास्त्रसिद्धम् । श्रीमद्भार्गवे —
'इति वर्णाश्रमाचारान्मनसापि न लङ्घयेत् । यो यस्मिन्नाश्रमे तिष्ठन्प्राप्तो दीक्षां शिवात्मिकाम् । स तस्मिन्नेव संतिष्ठेच्छिवधर्मं च पालयेत्' । इति ।
श्रीमत्स्वायंभुवेऽपि (अन्त्येष्टिविधिपटले श्लो० १४) ;
'गृहिणो लोकमार्गस्था लङ्घयेयुर्न लौकिकम् । आचारं दीक्षितास्तद्वत्कुर्वीरन्' इति ॥"
(मृगेन्द्रवृत्तिदीपिकायाम् पृ०११) ;
'आचारो द्विविधः प्रोक्तः शास्त्रीयो लौकिकस्तथा ।
उभावपि प्रकर्तव्यौ न त्याज्यौ शुभमिच्छता ॥
ग्रामधर्मा जातिधर्मा देशधर्माः कुलोद्भवाः ।
परिग्राह्या नृभिः सर्वैर्नैव तांल्लङ्घयेन्मुने ॥'
(देवीभागवते ११.१.१६, १७).

[3] विद्विषाचारमार्गेऽस्मिन्चरता — ओ; विविधाचारमार्गेऽस्मिश्चरतां — ङ, छ, ज.

[4] कारणं भा० — च.

[5] माषादृष्ट० — ङ; मृषादृष्ट० — छ.

[6] ०फल . . . मेधा सं० — ओ; ०फलप्राप्त अमोघा सं० — ङ.

[7] लौकिका — ओ; लौकिकं — ङ; लौकिको —छ, ज.

[8] लु प्रसिद्धोऽयं — ओ; सुप्रसिद्धो यः — छ, ज.

[9] सोऽविरोधनिदर्शनात् — ओ, ङ; सोऽपिरोधनिदर्शनात् — छ; सोऽपराधनिदर्शनात् — ज.

[10] पाल्य नैश्रेयसे नेषां संवृतावप्य० — छ; पाल्य नैश्रेयसे नेष्टं संवृतावप्य० — ज.

[11] नैःश्रेयसो . . .वता वाप्य० — ओ; नैश्रेयसेऽन्येषां संवृतावप्य० — ङ.

[12] शैवान्योऽप्यत्र बोद्धव्यो — ओ, ङ; सैवान्या संप्रबोद्धव्या — च; शैवाऽन्यो पुरु बोद्धव्यं — छ; शैवोऽन्योप . . बोद्धव्यं — ज.

[13] चतुर्थश्लोकस्योत्तरार्धं पञ्चमश्लोकश्च 'छ, ज' मातृकयोर्न दृश्यते ।

[14] चैवा — च.

[15] कारयेज्ज्ञानवर्त्मनि — ओ, ङ.

यस्मिन्यस्मिन्यथोपात्तो[1] [2]देशे स्वाम्नायदर्शनात् ।
तस्मिंस्तस्मिन् प्रकर्तव्यो ह्याचारः[3] प्रयतात्मभिः ॥५॥
न च [4]वैशेषिकाचारे लौकिकोऽङ्गत्वमाप्नुयात्[5] ।
तथापि पालनीयोऽसौ [6]यस्माद्दोषो न [7]पालिते ॥६॥
[8]त्यक्ते वाथ [9]गुणः कश्चित्सामान्यस्तेन चोच्यते[10] ।

[ [11]तपस्विनां नात्यन्तनियमः ]

[12]न चैवात्यन्तनियमो निःसङ्गानां तपस्विनाम् ॥७॥
[13]शिवज्ञानानल[14]ज्वालाप्रध्वस्ताज्ञानचेतसाम् ।

[ [15]आचाराः ]

[16]स्वनिवासाद्बहिर्यायान्नासहायः[17] कदाचन ॥८॥
न रात्रौ पर्यटेद्विद्वान्नान्धकारे[18] बहिर्बुधः[19] ।
[20]नाच्छत्रः कुत्रचिद्यायान्नादण्डो नाप्यपादुकः[21] ॥९॥

---

[1] ०न्यथोत्पत्तौ — च.

[2] देशे स्वात्माय . . । ओ; देशस्वा० — ङ, च.

[3] प्रकर्तव्योऽप्याचारः – ओ; प्रकर्तव्य आचारः–च.

[4] वैशेषिकाचारा लौकिको — ओ, ङ; वैशेषिक . . लौकिको० — च; देशिकारा . . लौकिको — छ; वेशिकारा . . लौकिको – ज.

[5] सात्वमाप्नुयात् — ओ, ङ; सत्त्वमाप्नुयात् — छ, ज.

[6] यस्माद्दोषोऽत्र पालिते — च; यस्या दोषानुपाल्यते — छ; सानु दोषानुपाल्यते — ज.

[7] पा . . — ओ; पाल्यते — ङ.

[8] . . वाथ — ओ; त्यक्तो वाथ — ङ.

[9] गुणाः — ओ.

[10] शोच्यते — ङ.

[11] 'आचारं कथ्यमानं तु सांप्रतं शृणु तं मया ।
न स्नानं न जपः पूजा न होमो नैव साधनम् ॥
अग्निकार्यादिकार्यं च नैतस्यास्ति महेश्वरि ।
नियमोऽपि न तस्यास्ति क्षेत्रपीठे च सेवनम् ॥
नार्चनं पितृकार्याणि तीर्थयात्राव्रतानि च ।
धर्माधर्मफलं नास्ति न तिथिर्लौकिकी क्रिया ॥
संत्यजेत्सर्वकर्माणि लोकाचारं च सर्वशः ।
समयाचारान्निःशेषान्'
(देवीकालोत्तरे ज्ञानाचारबोधकपटले ६२.उ० — ६६.पू०).

[12] न च वैत्यन्त० — छ, ज.

[13] ०शिवज्ञानलवज्वाला० — ङ.

[14] ०ज्वालप्रध्व० — च.

[15] 'न यायादनुपानत्कः क्वचिन्नाप्यसहायवान् ।
नातिप्राङ्नातिवेलायां न रात्रौ न खरातपे ॥
न नीचैः संवसेन्नापि वृथा यायाद्गृहाद्गृहम् ।
तथा नोपहसेत्कंचिन्नानुकुर्यान्न पीडयेत् ॥
नासदाचरितं किंचिदाचरेत्स गुरुर्यतः ।'
(मृगेन्द्रे चर्यापादे १.६३–६५पू०).

[16] स्वनिर्यासा० — ङ.

[17] ०द्बहिर्ध्याना न सहायं — ओ; ०द्बहिर्याया-न्यासहायः — ङ; ०न्नासहायाः — छ, ज.

[18] ०द्विद्वानन्धकारे — ओ, छ, ज.

[19] पठेद्बुधः — च; बलाद्बुधः — छ, ज.

[20] नवमश्लोकस्योत्तरार्धप्रभृति एकादशश्लोकान्तो भागः 'छ, ज' मातृकयोर्न दृश्यते ।; नाच्छत्रं — ओ; नाच्छत्री — ङ.

[21] ०दण्डेनाप्यपादुकम् — ङ.

नातिदैन्यं प्रकर्तव्यं नातिकर्कशया गिरा ।
नातिचण्ड[1]वचोद्गारैर्न च [2]मायापरिष्कृतैः ॥१०॥
[3]नासद्भावेन चाव्यक्तैर्मनःप्रीतिकरैः शुभैः[4] ।
वक्तव्यं सर्वदा [5]शान्त्यै [6]न चैवातिनिरर्थकैः ॥११॥
[7]वस्त्रशय्यासनादीनि नान्योन्यं[8] साधकोत्तमैः[9] ।
संकीर्णानि तु कार्याणि पृथक् [10]प्रीतिकराणि च[11] ॥१२॥
[12]प्रशस्तानि पवित्राणि सेव्यानि सुदृढानि च ।

[ [13]स्नाननिमित्तानि ]

[14]सुप्तोत्थितेन विप्रेन्द्र स्नातव्यमविचारतः[15] ॥१३॥
[16]वान्तेनाशङ्कितेनाथ [17]संत्रासादुपघातजात् ।
[18]विण्मूत्रतोऽथवा [19]भुक्तौ संध्यास्वथ [20]समालभेत् ॥१४॥

---

[1] ०वशो चा . . . ना च — ओ; ०वशोद्गारैः ना च — ङ; ०वचोऽङ्गारै० — च; वचः +उद्गारैः=वच उद्गारैः; ततो गुण-संधिरार्षः ।

[2] मायापरिष्कृतः — ओ, ङ.

[3] नासद्भावैर्नचा० — ओ, ङ.

[4] ०करैर्निभैः — ङ.

[5] शान्तैर्न चैवाति० — च.

[6] न चो वावि निरर्थकैः — ओ; न चैवापि निरर्थकैः — 'ओ' पाठान्तरम्; न चोचाति-निरर्थकैः — ङ.

[7] 'यानशय्यासनान्यस्य कूपोद्यानगृहाणि च ।
अदत्तान्युपयुञ्जान एनसः स्यात्तुरीयभाक् ॥'
(मनुस्मृतौ ४.२०२);
'परशय्यासनोद्यानगृहयानानि वर्जयेत् ।
अदत्तानि' (याज्ञवल्क्यस्मृतौ १.१६०).

[8] न च शय्यासनादीनि अन्योन्यं — छ, ज.

[9] साधकोत्तमः — ओ.

[10] प्रत्यात्मकानि — ओ, च, छ, ज.

[11] तु — च.

[12] प्रसक्तानि — ओ.

[13] 'गृध्रवायससंस्पृष्टे श्वखरोष्ट्रकपोतकैः
ग्रामसूकरसंस्पृष्टे ग्रामकुक्कुटकैस्तथा ॥
वीरहाव्रतिसंस्पृष्टे निर्माल्यस्य तु भोजने ।
रजस्वलान्त्यजप्रेतसूतिकापतितैरपि ॥
अन्यैश्च लिङ्गिभिः स्पृष्टे वारुणं स्नानमाचरेत् ।
विण्मूत्ररेतःसंसर्गे दुर्भुक्तौ वमने तथा ॥
नाभेरूर्ध्वं करौ हित्वा यदङ्गं तु मलादिभिः ।
दुष्येत्तत्र चरेत्स्नानं शेषं प्रक्षाल्य शुध्यति ॥
सुप्त्वा भुक्त्वा जलं पीत्वा कृत्वा चावश्यकं व्रती
शय्यादावकसाने च भस्मस्नानं समाचरेत् ॥'
(अजिते क्रिया० १९.११८–१२२);
'छर्दितेऽभ्युदिते सूर्ये श्मश्रुकर्मणि मैथुने ।
दुःस्वप्ने दुर्जनस्पर्शे स्नानं षट्सु विधीयते ॥'
(कामिके पूर्वभागे ३.१११.)

[14] सुप्तोत्थितानि — च, सुप्तोस्थितेन — छ, ज.

[15] ०मविचारितम् — च.

[16] वान्तो न शङ्कितो नाथ — ओ; वातेन शङ्कितेनाथ — ङ; धत्तेन शङ्कितेनाथ — च; वतेन शङ्कितेनाथ — छ, ज.

[17] समृद्धामुपयातकान् — ओ; समृद्धामुपयात-कात् — ङ; संस्नातादुपघातजात् — च; सम्राडामुपघातवान् — छ, ज;

[18] विण्मूत्रितोऽथवा — ओ; चिन्मूतितोऽथवा — च; विण्मूत्रोऽथवा — छ.

[19] भुक्तसंध्यास्वथ — ओ; भुक्तसंध्यस्वथ — ङ; भुक्ता संध्यास्वथ — च; भुक्तसंध्याश्च स्वस्थमालभेत् — छ, ज.

[20] समारभेत् — च.

[1]भस्मनात्यन्तसंत्रासादम्भसा[2] स्नानमाचरेत् ।

[ पञ्चविधाः शक्तयः ]

[3]नाशक्तः सर्वदा तिष्ठेत्क्षणमेकमपि क्वचित् ॥१५॥
[4]शक्तिः [5]पञ्चप्रकारास्मिन्बोद्धव्या [6]शिवशासने ।
[7]योगाभ्यासो [8]जपः शास्त्रं लिङ्गाराधनमेव च ॥१६॥
आचार्योपासनं[9] [10]सम्यक्पञ्चमं परिकीर्तितम् ।

[ [11]आचार्योपासनं मुख्यम् ]

[12]तच्चैवात्रोत्तमं प्रोक्तं चतुर्णामप्यनिन्दितम् ॥१७॥
[13]तन्मूलानि [14]यतोऽन्यानि तस्माद्यत्नपरैर्नरैः[15] ।
[16]गुरुर्नित्यं [17]समाराध्यो [18]यत्प्रसादात्परं पदम् ॥१८॥
प्राप्यते [19]चापरं [20]चित्रं नानासिद्धिगुणात्मकम्[21] ।

[ [22]विण्मूत्रोत्सर्जनम् ]

[23]विण्मूत्रोच्चारणं कार्यमुदग्वक्त्रेण[24] वासरे[25] ॥१९॥

---

[1] १५ श्लोकः १६ पूर्वार्धं च 'ओ' मातृकायां न दृश्येते ।; भस्मनान्त्यसंत्रासा० — ङ.
[2] ०संत्रीडादम्भसा — च; संम्राडादम्भसा—छ, ज.
[3] ना . . सर्वदा — ङ; न्या सर्वः सर्वदा —छ, ज.
[4] शक्ति० — ङ; सक्तः — छ; सक्तिः — ज.
[5] ०पञ्चत्प्रकारस्याद्बोद्धव्या — ङ; पञ्चप्रकारः स्याद् बोद्धव्या — छ, पञ्चप्रकारः स्याद्बोध्यव्या — ज.
[6] शास्त्रशासने — ङ, छ, ज.
[7] योगाभ्यास्यो — ओ; योग्याभ्यासो — च.
[8] जपशास्त्रं — ओ; जपः शस्त्रं — छ; ०पमः शस्त्रं — ज.
[9] ०पासकं — ओ.
[10] चान्यत्पञ्चमं — ओ, ङ; चैव पञ्चमं—छ, ज.
[11] 'गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः ॥ आहूतश्चा यधीयीत लब्धं चास्मै निवेदयेत् । हितं तस्याचरेन्नित्यं मनोवाक्कायकर्मभिः ॥' (याज्ञवल्क्यस्मृतिः १.२६उ०, २७).
[12] तच्चैवात्रो मम प्रोक्तं — ओ; ततश्चैवात्रोत्तमं प्रोक्तं — ङ.
[13] तन्त्रालानि — छ, ज.
[14] ततोऽन्यानि — ओ, ङ, छ, ज.
[15] ०द्यत्नपरै . . — च; ०द्यत्नापरैन्नरैः — छ; ०द्यत्नापरान्नरैः — ज.
[16] गुरुर्निन्यं — छ.
[17] समाराध्य – ङ; समाराद्धो – छ; समाराधो–ज.
[18] प्रसादात्परमं पदम् — छ.
[19] वापरं — ङ, छ, ज.
[20] चात्र — ङ; वित्तं; चाकु — छ, ज.
[21] ०सिद्धगुणात्मकम् — ज.
[22] 'प्रातरुत्थाय गन्तव्यं विजनं सलिलाशयम् । कुर्यादावश्यकं तत्र कृत्वा बाह्ये पवित्रकम् ॥ शिरोऽवकुण्ठनं कृत्वा दिवा कुर्यादुदङ्मुखः । दक्षिणाभिमुखो रात्रौ न क्षेत्रे न चतुष्पथे ॥ न मार्गे च श्मशाने च न जले गिरिमूर्धनि । विष्ठालोके न कर्तव्या तथाकाशनिरीक्षणम् ॥ सम्यगावश्यकं कृत्वा काष्ठेनोन्मृज्य तद्गुदम् । लोष्टकेनाथवा मृज्यान्नान्येनोपमृजेद्गुदम् ॥ ततः शौचं प्रकर्तव्यम्' (किरणे चर्या० १.२–६पू०); (तथा अजिते क्रिया० १९.८-१५पू० द्रष्टव्यम्)
[23] विण्मूत्रोत्सादनं — च.
[24] मुदग्वक्त्रेव — ङ; ०मुदश्चक्रेण — ज.
[25] पासने — ओ.

निशायां याम्यवक्त्रेण [1]कृत्वा [2]चान्तर्हितां महीम् ।
[3]शिरोऽवकुण्ठ्य वस्त्रेण [4]प्रच्छन्ने [5]जनवर्जिते ॥२०॥
[6]भस्माङ्गार[7]कुशच्छन्न[8]दूर्वास्थितुषजालयम्[9] ।
यत्र [10]दृश्येत विप्रेन्द्र नोत्सृजेत्तत्र पण्डितः ॥२१॥
[11]श्मशानवृक्षवल्मीककीटाकीर्णे च नोत्सृजेत्[12] ।
चन्द्रसूर्याग्नि[13]पवनदेवालयमहाम्भसाम्[14] ॥२२॥
नोत्सृजेत्संमुखो[15] विद्वान्कुमारीणां गवां तथा ।
[16]न क्षेत्रे [17]नोपले नद्यां न गिरौ न च [18]कर्दमे ॥२३॥
न [19]चैवात्यन्तगहने [20]न सरीसृपसंकुले ।

[ [21]शिवभक्तपालनम् ]

सर्वेषां शिवभक्तानां यथाशक्त्या प्रपालनम्[22] ॥२४॥

---

[1] कृता — च.
[2] चान्तर्हिता मही — ओ, च; चान्तहिता मही — ङ; च्युतहिता महिम् — छ, ज.
[3] शिरोऽवकुण्ठ० — ओ; शिरोवगुण्ठ्य — च; शरोऽवकुण्ठ्य — छ, ज.
[4] प्रच्छन्नजन० — छ, ज.
[5] जलवर्जितैः — ओ; जलवर्जिते — ङ.
[6] तस्याङ्गार० — च.
[7] ०कुशच्छिन्नं — ओ; ०कुशछिन्न० — छ, ज.
[8] ०पूर्वा० — च.
[9] ०स्थितुषजायतः — ओ; ०स्थितुषजाय . . — ङ, ०स्थितुप्रजालयम् — च; ०स्थिष जातयः — छ, ज.
[10] द्रत् . . . . नोत्सृ० — ओ; विप्रेन्द्र नोश्यन्ति — ङ; दृश्यन्ति — च, ज; दृह्यन्ति — छ.
[11] स्मशान० — च.
[12] कीर्तिनेष्वपि नेत्सृजेत् — ओ; कीर्तनेष्वपि नोत्सृजेत् — ङ; कीर्तिनेष्वपि नोत्सृजेत् — छ, ज.
[13] ०पवने देवालय० — ओ, ङ; ०वदनदेवालय० — छ, ज.
[14] ०महाम्भसः — ओ.
[15] संमुखं — ओ, ङ, छ, ज.
[16] नक्षत्रे — ओ.
[17] नोषरे — ओ, ङ, छ, ज.
[18] कन्दरे — च; कर्दिमे — छ, ज.
[19] चैवान्यत्र गहने — च; चैवान्यन्तगहने — ज.
[20] नकारो 'छ, ज' मातृकयोर्न दृश्यते ।
[21] 'शिवे भक्तिः सदा कार्या तद्वच्च शिवयोगिषु ॥
स्वदेहान्निर्विशेषेण शिवभक्तांश्च पालयेत् ।
भयदारिद्र्यरोगेभ्यस्तेषां कुर्यात्प्रियाणि च ॥
शिवस्य परिपूर्णस्य किं नाम क्रियते जनैः ।
यत्कृतं शिवभक्तानां तत्कृतं स्याच्छिवे सदा ॥
सुदूरमपि गन्तव्यं यत्र माहेश्वरो जनः ।
प्रयत्नेनापि द्रष्टव्यस्तत्र संनिहितो हरः ॥
माहेश्वरस्य भक्तस्य शिवार्चनरतस्य च ।
अर्चां कृत्वा यथान्यायमश्वमेधफलं लभेत् ॥,
'शिवाश्रमगतं भक्त्या शिवभक्तं प्रपूजयेत् ।
स्वागतासनपाद्यार्घ्यमधुपर्कादिभोजनैः ॥
यः स्वागतं नमस्कारं कुर्यादप्यभिवादनम् ।
दशवर्षसहस्राणि सोऽग्निलोके महीयते ॥
प्राप्ताय शिवभक्ताय यो दद्यात्स्वयमासनम् ।
विंशद्वर्षसहस्राणि पुरन्दरपुरे वसेत् ॥
शिवभक्ताय विप्राय पादौ प्रक्षाल्य यत्नतः ।
घृतेनाभ्यञ्जयेद्भक्त्या विष्णुलोके महीयते ॥
प्रतिश्रयप्रदानेन हैमं स्वर्गे गृहं भवेत् ।
जलं सुशीतलं दत्त्वा सर्वकाममवाप्नुयात् ॥
लभेद्दीपप्रदानेन ज्ञानचक्षुरतीन्द्रियम् ।
मृदुशय्याप्रदानेन सिंहासनपतिर्भवेत् ॥
कृत्वाम्भसा तथा स्नानं सौभाग्यं कान्तिवर्धनम् ।
स्नानं विधिसमायुक्तं वारुणं लोकमा नुयात् ।

कर्तव्यं शिवभक्तैस्तु[1] [2]शासनेन महामुने ।
[3]यथोक्तं देश[4]सामर्थ्याद्विभवस्यानु[5]रूपतः ॥२५॥
[6]भेषजेनाम्बुना वाचा [7]वाससा शयनेन वा ।
[8]पादत्राणेन [9]छत्रेण [10]भोजनेनाप्युदारवान् ॥२६॥
तृणकाष्ठाग्निशुश्रूषा न्यायेनानुक्रमेण च ।
[11]वृद्धातुराणां कर्तव्यो विधिरेषोऽत्र[12] सुव्रत ॥२७॥
अन्येषामपि कारुण्यात्किं पुनर्दीक्षितात्मनाम्[13] ॥
न [14]जह्यात्क्षणमप्येकं [15]स्मरणं परमेष्ठिनः ॥२८॥
नाशुचिः क्षणमप्येकं [16]तिष्ठेद्वै [17]दीक्षितोऽत्र तु ।
केशश्मश्रुनखैर्नीचैः[18] [19]प्रशस्ताः शिवलिङ्गिनः ॥२९॥

---

स्वेदबिन्दुपरीताङ्गमध्वश्रमविराजितम् ।
संवीज्य तालवृन्तेन वायुलोकमवाप्नुयात् ॥
क्षुत्पिपासातुरं शान्तमार्तं मलिनरोगिणम् ।
पालयित्वा यथाशक्त्या सर्वपापैः प्रमुच्यते ॥
रोगार्तस्य शिवं कृत्वा भेषजाद्यैः प्रयत्नतः ।
युगकोटिशतं साग्रं शिवलोके महीयते ॥
शिवभक्तं विशेषेण रोगार्तं यस्तु पालयेत् ।
भैषज्यैर्वृत्तिदानेन शिवलोकं व्रजेद्ध्रुवम् ॥
सर्वयत्नेन महता यं तु कुर्यादरोगिणम् ।
शिवलोककुटुम्बी स्यात्तस्य पुण्यमनन्तकम् ॥
कालात्पुनरिहायातः समस्तज्ञानपारगः ।
ध्वंसनं सर्वदुःखानां रुद्रत्वं समवाप्नुयात् ।'
(शिवधर्मोत्तरे ११.२५उ०–२९; ३१–४३);
'मार्गक्षीणे रिपुग्रस्ते रोगार्ते क्षुत्प्रपीडिते ।
सर्वात्मना समुद्धारः कर्तव्यः शिवयोगिनः ॥'
(मृगेन्द्रे चर्यापादे .१.१७).

[22] ०शक्यप्रपालनम् — ज.

[1] भक्तेन — ओ; भक्तेस्तु — छ, ज.

[2] न शाष्मो न — ङ; न सांख्येन — च; न शाठ्येन — छ, ज.

[3] यथोक्तशेष. — ङ; यथानुदेश० — च; यथोक्तदेश० — छ, ज.

[4] ०सामर्थ्या विभव० — ज.

[5] ०द्विभक्तस्यानु० — ओ.

[6] भेषजे वाम्बुना – ओ, ङ; भेषजा नावुना – च.

[7] न शसास शयनेऽपि वा — ङ; वासना शयने वा — च; शस्ताय शयनेन वा — छ; शक्तेस्तायशनेन वा — ज.

[8] पदत्राणेन — च.

[9] चेत्तेन — छ; चित्रेण — ज.

[10] जनेनाप्युदरेण वा — च.

[11] वृद्धातुराणं — ज.

[12] ०रेषात्र — ङ; ०रेषस्तु — छ, ज.

[13] ०तात्मना — ङ.

[14] जपेत्क्षण० — ओ, ङ, छ, ज.

[15] २८ श्लोकस्य चतुर्थपादः, २९ श्लोकस्य प्रथमपादश्च 'च' मातृकायां न दृश्येते; स्मरणा — ङ.

[16] निष्ठे द्वे — ङ.

[17] दीक्षितेन तु — ओ, ङ.

[18] ०श्मश्रू नखे नीचैः — ङ; ०श्मश्रुनखैनीरैः — च; ०श्मश्रुर्नखे नीचैः — छ, ज.

[19] प्रशस्तः शिव० — ओ, ज; प्रशस्तशिव० — ङ; प्रशस्ताच्छिव० — च; प्रशस्ते शिव० — छ.

[[1]वस्त्रम्]

[2]सुधौते वाससी धार्ये [3]काषाये [4]सुसितेपि वा ।
[5]सान्तर्वासि च [6]विमले नातिजीर्णे [7]नसीवने ॥३०॥

[ [8]आसनम् ]

[9]अन्तर्धानं [10]चासनस्य [11]वैयाघ्रं [12]मार्गमेव वा ।
[13]क्षौमं वापि ततोऽभावात्कार्पासं शुभमेव वा ॥३१॥

[ [14]कर्णभूषणम् ]

शिखायां पद्मरागं [15]वा [16]भद्रं मौक्तिकमेव वा ।
बध्नीयात्तदभावात्तु धार्यं [17]काञ्चनमुज्ज्वलम् ॥३२॥
सुसूक्ष्मं वर्तुलं भद्रं [18]व्यक्तं [19]कण्टकितं शुभम् ।

---

[1] 'कर्तव्यं शुक्लवस्त्रं वा काषायं वा भवेद्दृढम् ॥'
(किरणे० चर्या० १.१५.पू०);
'धौतवस्त्रे सितेऽथवा ।
काषायं परिवर्तेत कौपीनं वा'
(सिद्धान्तशेखरे १.१.६९उ०; ७० पू०)

[2] सुधौतवाससी — छ, ज.

[3] काये — ङ; कषाये — छ, ज.

[4] सुस्मितेऽपि — ओ; सुतेऽपि — ङ; सुस्थितेऽपि — छ, ज.

[5] सान्तर्वासिस्विमले — ओ; शान्तर्वाससी विमले — ङ; अन्तर्वासे च विमले — च;

[6] विमला — छ, ज.

[7] न सेवनी — ओ; न सेविनी — ङ; न सेरिते — च; न सीविना — छ, ज; सीवनं तन्तुवायकर्म। न विद्यते सीवनं ययोस्ते नसीवने नैके इतिवत् ।

[8] 'कूर्मं दर्भं तथा चर्म कम्बलं पीठमेव च ॥
आविकत्वग्जसूत्रोत्थं रुचिरं चासनं तथा।
सर्वकर्मार्हकं प्रोक्तं पवित्रमिदमासनम् ॥'
(पूर्वकारणे ३१.७८.उ०, ७९)

[9] नान्तद्वान न वासस्य — ओ; नान्तद्वानं वासस्य — ङ.

[10] शासनस्य — च; वासनस्य — छ, ज.

[11] वैयर्थ्यं — ओ; वाराग्यं — ङ.

[12] मोछुमेव वा — ओ.

[13] क्षौमो वापि ततो भावा कार्पासं — ओ.

[14] 'त्रिचतुष्पञ्चमात्रं स्यात्पत्रकुण्डलविस्तृतम् ।
यवं वृत्तधनं प्रोक्तं श्वेताभं वात्र चार्तवम् ॥
मकरं कुण्डलं वाथ सिंहकुण्डलमेव वा।
गजादिकुण्डलं वाथ द्विचतुष्पञ्चमात्रकम् ॥
कुर्याद्व्यासं च तुङ्गं च तत्तदाकारभेदतः।
वृत्तकुण्डलविस्तारः अष्टादशयवो भवेत् ॥
वेदाङ्गुलं तु तत्तुङ्गं रम्भाब्जमुकुलोपमम् ।'
(शिल्परत्ने उत्तरभागे १६. १४-१७पू०);
'पिचुमन्दफलाकारैर्मौक्तिकैर्नीलकैः कृतम् ।
माणिक्यैर्गारुडैर्हीरैर्मुकुलं कर्णभूषणम् ॥'
(मानसोल्लासे विंशतिः ३.८. ११०७);
(रौरवे क्रिया० ४३.२२उ० -२४)

[15] वाशब्दः 'छ, ज' मातृकयोर्लुप्तः ।

[16] भद्रमौक्तिक० — ओ, ङ.

[17] कार्यं च मुत्तमम् — छ; कार्यं च न मुत्तमम् — ज.

[18] व्यक्षि — छ, ज.

[19] कण्ठकितं — ङ; प्रकटितं — च; कर्णिकिनं — छ, ज.

[1]चतुर्वक्त्रं [2]समं धार्यं [3]रुद्राक्षं तदभावतः ॥३३॥
वज्रं सुलक्षणं [4]धार्यं कर्णयोर्हेमयोजितम् ।
[5]सुरुक्मनिर्मिते धार्ये [6]कुण्डले वाप्यभावतः[7] ॥३४॥
[8]तेभ्योऽप्यभावात्सुकृते [9]धार्ये दर्भमये शुभे ।

[ [10]दण्डम् ]

[11]सुबद्धमव्रणं धार्यं [12]वैणवं दण्डमादरात् ॥
[13]स्वाङ्गुष्ठपर्वणा [14]तुल्यं चतुर्हस्तमृजुं समम् ॥३५॥

[ उक्तार्थोपसंहारो वक्ष्यमाणोपक्रमश्च ]

सामान्योऽयं [15]मयोक्तः प्रतिदिन[16]विषयः साधकानां [17]यथाव-
दाचारः पालनार्थं शिवपदगमन[18]प्राप्तिवृत्त्युन्मुखानाम् ।
पाल्यो [19]यत्नात्प्रहृष्टचा स्फुटकमलहृदा [20]कारणाज्ञानुवृत्त्या
[21]वाच्यं प्राप्तं प्रसङ्गात्प्रथितगुणगुरोर्वर्तनं[22] पुत्रकाणाम्[23] ॥३६॥

इति श्रीमतङ्गपारमेश्वरे[24] चर्यापादे [25]आचारपटलो द्वितीयः ॥

द्वितीयः पटलः

---

[1] चतुर्वक्त्रसमं — ङ.
[2] समाद्धार्यं — छ, समाधार्यं — ज.
[3] रुद्राक्षतदभावितः — ङ.
[4] धार्यां कर्णयोर्णे मयोचितम् — छ, ज.
[5] सुकुम्मनि० — ओ; सुरुम्मनि० — ङ, छ, ज; सुसूक्ष्मनि० — च.
[6] कुशले — च.
[7] ०भावितः — ङ.
[8] तेभ्यो भावा सु० – ओ; तेभ्योऽभावात्–ङ, च.
[9] धार्या दर्भ० — ओ, ङ.
[10] 'वेणुदण्डविधिं शृणु ।
विप्राणां तु शिरोत्सेधं क्षत्रियाणां ललाटके ॥
वैश्यानां नासिकोत्सेधं शूद्रादीनां तु वर्जयेत् ।
वेणुदण्डमृजुं स्निग्धं वक्रकोटरवर्जितम् ॥
दण्डस्यैवं विधिः प्रोक्तः'
(सुप्रभेदे योग० ३.४८.उ० —५०)
[11] सुबन्धमव्रणं — ओ, ङ; संबन्धमप्रणं—छ, ज.
[12] ०नैव दण्ड० — छ; ०णैव दण्ड० — ज.
[13] साङ्गुष्ठ० — छ, ज.
[14] तुल्या — ङ.
[15] यथोक्तं — च.
[16] ०विषयसाध० — ङ.
[17] यथावत् दारान्मीलनार्थं — ओ; यथावदाचारोन्मीलनार्थं — ङ; यथा पादाचारोन्मीलनार्थं —छ; यथावत् पादाचारोन्मीलनार्थं–ज.
[18] ०प्राप्तिमृत्युर्मुखानां — ओ; ०प्रीतिवृत्त्युन्मुखानां – च; ०प्राप्तिप्रीत्युन्मुखानां — छ, ज.
[19] यत्नात्प्रहृष्टस्फुट० — ओ, ङ, छ, ज.
[20] कारणज्ञानवर्तिः — ओ, ङ; कारणज्ञानवर्ति — छ, ज.
[21] वाच्यः प्राप्तः प्रसङ्गः प्र० — ओ, ङ; वाच्यप्राप्तिप्रसङ्गः प्र ०— छ, ज.
[22] ०गुणगणोर्वर्तिनां — ङ.
[23] पुत्रकानाम् — ओ, ङ.
[24] 'पारमेश्वरे' इत्यनन्तरं 'च' मातृकायां 'महातन्त्रे' इत्यधिकं दृश्यते ।
[25] आच. . .लक्षणपटलः — ओ; विपदाचारपटलः — ङ; आचारपटलं — च.

## तृतीयः पटलः

# [1]गुरौ वर्तनम्

उत्थाय शयना[2]त्तूर्णमप्रबुद्धे गुरौ शिशुः[3] ।
बहिरावश्यकं कृत्वा शौचं चैव [4]यथागमम् ॥१॥
स्नात्वा च प्रयतो भूत्वा [5]तोयमृद्दन्तधावनम् ।
[6]गृहीत्वा हृष्टवदनः [7]प्रतीक्षेद्गुरुमादरात् ॥२॥
यावत्स्वयं [8]प्रबुद्धः सन्विनयेनाग्रतः स्थितम्[9] ।
स्वात्मानं [10]दर्शयेद्धीरः [11]शिष्यस्तं भक्तिमोदितम्[12] ॥३॥
[13]पयोमृद्दन्तकाष्ठादीन्दत्त्वा[14] विज्ञापयेत्ततः ।
पादावभ्यर्च्य [15]विधिवद् भगवन्किं करोम्यहम्[16] ॥४॥
[17]ततः स [18]गुरुणादिष्टः प्रोत्फुल्लवदनः[19] सुधीः ।
[20]कुर्यात्कर्म [21]यदादिष्टं परोक्षे वा गुरोः स्वयम् ॥५॥
कर्तव्यमविशङ्केन[22] यथा भवति शोभनम् ।

---

[1] 'न भुञ्जानं समाधिस्थं चङक्रमन्तं क्रियोद्यतम् ।
स्थितं गुरुसमीपे वा मतिमान्नाभिवादयेत् ॥
गच्छन्तं पृष्ठतो यायाद्विशन्तमनुसंविशेत् ।
तद्वचो नानुयुञ्जीत शयानं न प्रबोधयेत् ॥
अनुज्ञातश्चरेद्भैक्षं प्राप्तमद्यान्निवेदितम् ।
शयीत सुप्त इत्यादि कुर्याद्विध्युदितं च यत् ॥'
(मृगेन्द्रे चर्या० १.७०–७२).

[2] ०त्तूर्णं प्रबुद्धे गिरौ शिशुः — ङ.

[3] शिशुम् — ज.

[4] यथागमात् — ओ, ङ; यथाक्रमम् — च.

[5] तेनायद्दन्तधावनम् — ओ; तोयमृदन्तधावनं — ङ; तोयं मृद्धं तथा वनम् — छ; तोयं मृदं तथा वनम् — ज.

[6] गृह्णीयात्सृष्टवदनः — ओ.

[7] प्रेक्षिपद्गुरुमादरात् — ओ; प्रतिक्षुर्गुरुजादरात् — छ, ज.

[8] प्रबुद्धस्तु — च.

[9] ०ग्रतस्ततः — ओ, ङ; ०ग्रतः स्थितः — च; ०ग्रतः स्वतः — छ, ज.

[10] दर्शयेद्धीरं — ङ, छ, ज; वशयेद्धीर — च.

[11] शिष्यं तद्भक्तियोजितः — ओ; शिष्यस्तद्भक्तियोजितः — ङ, छ; शिष्यस्तद्भक्तियोषितः — ज.

[12] ०मोदितः — च.

[13] 'साधयेद्दन्तकाष्ठादीन् लब्धं चास्मै निवेदयेत् ।'
(कूर्म० उपरिविभागे १४. १० पू०).

[14] ०काष्ठादि दत्त्वा — ओ, ङ; काष्ठाद्दा — छ; काष्टा दा — ज.

[15] विधिवत्किंकरोऽस्मि ततस्ततः — ओ.

[16] किं करोम्यतः — च.

[17] सद्गुरुणा . . दिष्टं प्रो० — ओ.

[18] गुरुणोद्दिष्टः — च.

[19] ०नयनः — ओ, ङ, छ, ज.

[20] कुर्यात्कि यदाविष्टः परोक्षे वा — ओ; त्रयात्कर्म यदादिष्टमपरोक्षो गुरो — ङ.

[21] यथोद्दिष्टं — च.

[22] ०मपिशङ्केन — ओ.

[1]आत्मनः स्थितये [2]चापि शिष्यो भिक्षाटनादिकम्[3] ॥६॥
[4]नानापृच्छन्प्रकुर्वीत [5]गुरोरन्यत्र सर्वदा ।

[ [6]अध्ययनम् ]

[7]पठेद्वा तदनुज्ञातः [8]शुचौ देशे [9]शुचिः सदा ॥७॥
प्रच्छन्ने विजने [10]रम्ये भावितेनान्तरात्मना[11] ।
[12]न समीपे पशूनां तु[13] कुर्यादध्ययनं बुधः[14] ॥८॥

[ [15]अनध्यायाः]

पञ्चदश्यामथाष्टम्यां चतुर्दश्यां [16]च पर्वसु ।

---

[1] 'भिक्षामाहृत्य शिष्टानां गृहेभ्यः प्रयतोऽन्वहम्
निवेद्य गुरवेऽश्नीयाद्वाग्यतस्तदनुज्ञया ॥'
(कूर्म० उपरिविभागे १२.५२);
'श्रुत्वाधीत्याथवा पश्चाद्भोजनार्थं तपस्विनाम् ।
भिक्षाटनं प्रकर्तव्यं तद्गुरोर्यदि संमतम् ॥'
(किरणे चर्या० १.३७उ०, ३८पू०);
आत्मनस्थितये — ङ; आत्मानं स्थि०—छ, ज.

[2] वापि — ओ, ङ, छ, ज.

[3] नादिकाम् — छ.

[4] नानापृच्छां प्रकु० — च; न नापृच्छं प्रकु० — छ; नानाप्रच्छं प्रकु० — ज.

[5] वरोरन्यत्र — ङ.

[6] 'संध्यां कृत्वा पुनर्यायात्पुष्पहस्तो गृहं गुरोः ।
विधिवन्नम्य तं पश्चात्पठेद्वा शृणुयादपि ॥
शिवशास्त्रमथान्यं वा सामान्यं सेश्वरं च यत् ।'
(किरणे चर्या० १.१५उ०, १६);
'पुत्रकः प्रातरुत्थाय समयी च कृताह्निकः ।
कृतप्रणामोऽनुज्ञातो गुरुणा कृत्यमाचरेत् ॥
अधीत्य शृणुयाच्छास्त्रं गुरुतन्त्रो गुरौ वसन् ।
त्यक्त्वाभिमानमात्सर्यडम्भव्यसनसंततिम् ॥'
(मृगेन्द्रे चर्या० १.६६, ६७);
'एवं दण्डादिभिर्युक्तः शौचाचारसमन्वितः ।
आहूतोऽध्ययनं कुर्याद्वीक्षमाणो गुरोर्मुखम् ॥
नित्यमुद्यतपाणिः स्यात्साध्वाचारः सुसंयतः ।'
(कूर्म० उपरिविभागे. १४. १, २. पू०).

[7] वरौत्तदनुज्ञातः — ओ; पठते तदनुज्ञातः — ङ; पते तदनुज्ञातः — छ, अ.

[8] शुचीदेशी — ज.

[9] शचिष्मवान् — ओ; शुष्मिवान् — ङ; शुचिष्ठवान् — छ; शुचिष्मवान् — ज.

[10] देशे — छ

[11] ०रात्मवान् — छ, ज.

[12] 'न समीपे पशूनां तु कुर्यादध्ययनं बुधः ।'
(कामिके उत्तरभागे ६७.८.उ०).

[13] समीपे न पशूनां वा — च.

[14] कार्यमध्ययनं बुधैः — च; कुर्याद्यध्ययनं ततः — छ; कुर्यादध्ययनं ततः — ज.

[15] 'पूर्णा रिक्ताष्टमी भूता चतुर्थी प्रतिपच्च या ।
तिथिष्वेतासु कर्तव्ये श्रवणाध्ययने न हि ॥
व्यतीपाते च संक्रान्तौ तिसृष्वप्यष्टकासु च ।
संध्यास्वशनिनिर्घोषे वह्नेर्दाहे दिशामपि ॥
अकस्मात्तापसे सिद्धे मृते महति राजनि ।
तारकोल्कानिपाते च धूमकेतोः प्रदर्शने ॥
नीहारेऽतिचले वायौ तथाकालप्रवर्षणे ।
कृकलासाखुमण्डूकमार्जारे चान्तरे कृते ॥
अनध्यायो भवेत्सर्वे त्रिरात्रं दानपूजने ।
चन्द्रार्कग्रहणे तद्वत्तथा चैत्रोत्सवे खग ॥'
(किरणे चर्या० ५.२-६);
(मृगेन्द्रे चर्या० १.५२ उ०–६०पू०).

[16] तु — ओ.

महोत्सवेषु सर्वेषु [1]संध्यासु च महामुने ॥९॥
पर्वसंधिषु [2]सर्वेषु [3]नाध्येयं [4]साधकात्मभिः ।
[5]गुरुं [6]विमनसं[7] दृष्ट्वा [8]भ्रातरं [9]वाथ कुत्रचित् ॥१०॥
[10]नाध्येयं भक्तियुक्तेन [11]कारणज्ञानमुत्तमम् ।
पुण्यकालेषु [12]नाध्येयं न [13]चोत्पातेषु [14]सुव्रत ॥११॥
आपत्सु शिवभक्तानां राज्ञां [15]वा सुमहात्मनाम् ।
[16]एषोऽनध्ययने [17]न्यायः साधकस्य मयोदितः ॥१२॥
गन्धपुष्पोपहाराद्यैस्तन्त्रमर्च्यं[18] सदा बुधैः ।

[ [19]गुरुनिन्दा परिहर्तव्या ]

गुरोर्निन्दा न कर्तव्या न [20]श्रोतव्याथ कुत्रचित् ॥१३॥
[21]हन्तव्यः स यथाशक्त्या [22]न निवेद्यं [23]गुरोर्बुधैः ।
स [24]कदाचन बध्नाति [25]गुरुरुद्वेगमात्मनि ॥१४॥
तस्मात्सर्वप्रयत्नेन शिष्येण तु [26]सुमेधसा ।
गुरोः सुखं प्रकर्तव्यं सुविशुद्धेन [27]चेतसा ॥१५॥

---

[1] सर्वासु — ङ.
[2] सर्वासु — ओ, ङ, छ, ज.
[3] नाडेयं — ङ.
[4] साधकादिभिः — च.
[5] शुभं — च.
[6] वैमनसं — ओ, ङ.
[7] गुरोर्वैमनसं — छ, ज.
[8] भ्रातरौ — छ, ज.
[9] नाथ — च; वात्र — छ, ज.
[10] नाख्येयं — च.
[11] कारणं ज्ञान० — ओ.
[12] नाख्येयं — च.
[13] चोत्पत्तेषु — ओ; चोत्पत्तषु — ङ.
[14] सर्वदा — ङ.
[15] वाथ महा० — ओ, ङ, च.
[16] दोषो स्याध्ययने — ओ; दोषा स्याध्यने ङ; एषो स्याध्ययने — छ, ज.
[17] कार्यः — छ, ज.
[18] ०हाराद्यैर्मन्त्रमर्च्यं — ओ; ०हाराद्यैर्मन्त्रमध्यं — ङ; हाराद्यैर्मन्त्रमर्चं — छ; हाराद्यैर्मन्त्रमर्च्यं — ज.
[19] 'गुरोर्यत्र परीवादो निन्दा चापि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥'
'निन्दयेद् वै गुरुं देवं वेदं वा सोपबृंहणम् ।
कल्पकोटिशतं साग्रं रौरवे पच्यते नरः ॥
तूष्णीमासीत निन्दायां न ब्रूयात्किंचिदुत्तरम् ।
कर्णौ पिधाय गन्तव्यं न चैतानवलोकयेत् ॥'
(कूर्म० उपरिविभागे १४.६; १६. ३९,४०);
'गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥
परीवादात्खरो भवति श्वा वै भवति निन्दकः ।'
(मनुस्मृतौ २.२००, २०१ पू०).
[20] श्रोतव्या च कुत्र० — ओ, ङ.
[21] गन्नवः स — ङ; गंधव्यः स — छ, ज.
[22] विबुधैर्गुरुनिन्दकः — च.
[23] गुरो बुधैः — ङ.
[24] कदाचित्प्रबुद्धात्मा — ओ, ङ, छ, ज.
[25] गुरुद्वेग महात्मनि — ओ; गुरुरुद्वेग महात्मनि — ङ; गुरुरुद्वेगमात्मानः — च; कुरेरुद्वेगमात्मनि — छ, ज.
[26] समेधसा — च.
[27] तेजसा — ओ, ङ.

[१]जडवन्मूकवत्तिष्ठेज्जानन्नपि[२] [३]गुरोः पुरः ।
निवेद्यमथवा किंचिदस्ति युक्त्या प्रयोजनम् ॥१६॥
कृताञ्जलिपुटो भूत्वा [४]शनकैस्तं निवेदयेत्[५] ।
आपत्करं येन गुरुर्निशम्य तु[६] यथातथम्[७] ॥१७॥
[८]वञ्चयेत्प्रयतो भूत्वा [९]शक्यं वाथ [१०]प्रकल्पयेत् ।
[११]नातिचण्ड[१२]वचोद्गारैर्वक्तव्यं साधकात्मभिः ॥१८॥
[१३]सुविनीतः[१४] सुशान्तात्मा[१५] नातिदूरे न[१६] संनिधौ ।
[१७]प्रतीक्ष्यमाणः संतिष्ठेद्गुरोः [१८]शिष्यः प्रसन्नधीः ॥१९॥
नित्यं [१९]यथाङ्गशुश्रूषा कर्तव्या प्रविभागशः ।
[२०]शिववत्पूजयेन्नित्यमाचार्यं शिवसंमतम्[२१] ॥२०॥
[२२]नात्युल्बणं गुरोः शिष्यः [२३]समीपस्थः कदाचन ।

---

[१] जळवज्रकवत्तिष्ठे० — ओ; जळवन्मूकवत्तिष्ठे० — ङ. जलवन्मूकवर्तिष्ठे० — छ, जलवन्मूकवत्तिष्ठे० — ज.

[२] ०ज्जनन्नपि — ङ.

[३] तदग्रतः — ओ, ङ; गुरो हृतः — छ, ज.

[४] शनकैस्तन्नि० — ओ, ङ, च, छ, ज.

[५] ०वेशयेत् — छ, ज.

[६] गुरोर्नित्यं शाम्यं — ओ; गुरोर्नित्यशाम्यं — ङ; गुरोर्निश च — च; गुरो निशम्य तु — छ; गुरो निशम्यत — ज.

[७] यथा तथा — ओ, ङ.

[८] पञ्चमप्रयतो — ओ, छ, ज; पञ्चप्रयतो — ङ.

[९] शक्त्यं पाथ — ङ.

[१०] निवारयेत् — च.

[११] 'जितेन्द्रियः स्यात्सततं वश्यात्माऽक्रोधनः शुचिः। प्रयुञ्जीत सदा वाचं मधुरां हितभाषिणीम् ॥'
(कूर्म० उपरिविभागे १४. १५);
'जीवितार्थमपि द्वेषाद्गुरुभिर्नैव भाषणम् ।
(कूर्म० उपरिविभागे. १२.३०पू०).

[१२] वचः + उद्गारैः = वच उद्गारैः; ततो गुणसंधिरार्षः । वचोत्कारैर्वक्तव्यं — ओ; ०वचोकारैर्वक्तव्यं — ङ; ०वचोऽङ्गारैर्वक्तव्यं – च; वतोद्गारैर्वक्तव्यं — छ; ०वतोत्गारैर्वक्तव्यं — ज.

[१३] 'दूरस्थो नार्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः ।
न चैवास्योत्तरं ब्रूयात्स्थितो नासीत संनिधौ।
उदकुम्भं कुशान्पुष्पं समिधोऽस्याहरेत्सदा ।
मार्जनं लेपनं नित्यमङ्गानां वै समाचरेत् ॥'
(कूर्म० उपरिविभागे १४.७, ८);
'अङ्गशुश्रूषया चापि धनाद्यैः स्वार्जितैर्गुरुम् ।
पादादिकेशपर्यन्तं लिङ्गान्यङ्गानि यद्गुरोः ॥
धनरूपैः पादुकाद्यैः पादसंग्रहणादिभिः ।
स्नानाभिषेकनैवेद्यैर्भोजनैश्च प्रपूजयेत् ॥
गुरुपूजैव पूजा स्याच्छिवस्य परमात्मनः ॥'
(शिवमहापु० विद्येश्वरसं० १७. ९३–९५पू०);
'इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम्
गुरुशुश्रूषया त्वेवं ब्रह्मलोकं समश्नुते ॥'
(मनुस्मृतौ २.२३३)

[१४] सुन्धिनीतः — ङ.

[१५] प्रशान्तात्मा — च; सुशान्तानां — छ.

[१६] ०दूरेर्न — ओ; ०दूरेन्न — ङ.

[१७] प्रतीक्षमज्ञानसंतिष्ठे० — ओ; प्रदीक्षमज्ञासंतिष्ठे० — ङ; वृक्षमज्ञानसंतिष्ठे०—छ, ज.

[१८] शिष्यप्रयत्नधीः — ओ, ङ, ज; शिष्यः प्रयत्नधीः — छ.

[१९] यथाङ्गा शुश्रूषा — छ, ज.

[२०] विधिवत् — च.

[२१] ०संमितम् — ओ.

[२२] नात्युद्बणं गुरोः शिष्यं — ओ, ङ; नात्युद्बणतरः शिष्यः — छ, ज.

[२३] समीपस्थं — छ, ज.

क्रीडन्नपि [1]हि [2]मेधावी [3]ब्रूयाद्वा किंचिदत्र तु ॥२१॥
[4]नोपजीव्यं[5] गुरोर्द्रव्यं[6] देयमार्ज्यं[7] यथा तथा।
[8]गच्छतश्चानुगच्छेत[9] तिष्ठेद्वा[10] तिष्ठतः सदा॥
[11]सुप्तेऽपि च [12]सदा [13]स्वप्यान्न च स्वातन्त्र्यतः क्वचित्[14] ॥२२॥

[15]गुर्वर्तनं शिष्यहिताय पुण्यं
प्रोक्तं समासाद्विधिवत्समग्रम्।
[16]व्यस्तं चतुर्णामपि [17]सांप्रतं ते
वक्ष्यामि [18]युक्त्याप्यखिलं विधानम् ॥२३॥

इति श्रीमतङ्गपारमेश्वरे[19] चर्यापादे [20]गुरौ वर्तनपटलस्तृतीयः॥

तृतीयः पटलः

---

[1] च — छ, ज.
[2] मेधापि — छ.
[3] न ब्रूयात् — च.
[4] 'परिभोक्ता कृमिर्भवति'
'परिभोक्ता अनुचितेन गुरुधनेनोपजीवकः कृमिर्भवति।'
(मनुस्मृतिः २.२०१; कुल्लूकभट्टवृत्तिश्च)
[5] नोपन्दिव्यं — ओ; नोपजीव्या — छ; नोपजिव्या — ज.
[6] गुरोर्ह्द्य० — ओ; गुरोर्ह्द्यं — ङ.
[7] ०देवमाद्यं — ओ, ङ; देयं याज्यं — छ; देया याज्यं — ज.
[8] 'आसीनस्य स्थितः कुर्यादभिगच्छंस्तु तिष्ठतः। प्रत्युद्गम्य त्वाव्रजतः पश्चाद्धावंस्तु धावतः॥ पराङ्मुखस्याभिमुखो दूरस्थस्यैत्य चान्तिकम्। प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः॥'
(मनुस्मृतिः २.१९६, १९७);
'धावन्तमनुधावेत गच्छन्तमनुगच्छति।'
(कूर्मपु० उपरिविभागे १४.३.उ०)
[9] गच्छ गच्छ नु गच्छेत — ओ; गच्छतश्चानुगच्छेति — छ, ज.
[10] तिष्ठेच्च — च.
[11] शयीते च — ओ, ङ, शयिताव — छ; शयिता च — ज.
[12] यदा — च.
[13] सुप्त्या न च — ओ; सुप्य न च — ङ; सुप्यान्न च — छ, ज.
[14] स्वातन्त्र्यं क्वचित् — ओ; स्वातन्त्र्य यं क्वचित् — ङ.
[15] 'गुरौ वर्तनम्' इत्यर्थे 'ऋतिर्घृणायाम्' इति धातोर्ण्यन्ताल्ल्युटि 'अर्तनम्'। गुरुर्येन शिष्याय दयां करोति तथा करणं 'गुर्वर्तनम्' इत्यस्य पाठस्य साधुत्वसंपादनेन छन्दोभङ्गः परिहर्तुं शक्यते। गुर्वन्तरं — च; ना गुरौर्तनं — छ; गुरौ च वर्तनं — ज.
[16] व्यस्तचतुर्णामपि — ओ; न्यस्तं चतुर्णामपि — छ, ज.
[17] संप्रतं ते — ओ, ङ; सांप्रपञ्चेत् — छ, ज.
[18] युक्तं ह्यखिलं प्रधानम् — ओ, ङ.
[19] 'पारमेश्वरे' इत्यस्यानन्तरं 'च' मातृकायां 'महातन्त्रे' इत्यधिकं वर्तते।
[20] गुरोर्वर्तनपटलः — ओ, ङ, छ, ज; गुरोर्वर्णनपटलम् — च.

# चतुर्थः पटलः

## समयः

अथेदानीं मुनिव्याघ्र [1]स्वं स्वं [2]वृत्तमथोचितम् ।
चतुर्णामपि संक्षेपात्कथयामि[3] निबोध [4]तत् ॥१॥

[ [5]समयिवृत्तिः ]

समयी [6]सर्वदायत्तो गुरोः सर्वात्मना स्फुटम् ।
यदा [7]तदा स मुक्तात्मा [8]नान्यथा [9]मुच्यते [10]भवात् ॥२॥
दासवन्निवसेन्नित्यं[11] दीक्षामाश्रित्य [12]मोक्षदाम् ।
[13]चर्यैषा मुक्तये तस्य [14]प्रशस्ता [15]शाश्वती क्रिया ॥३॥

मतङ्ग उवाच —

[16]मुक्तिर्विवेकात्तत्त्वानां[17] क्ष्मादीनां [18]प्रविचारतः ।
[19]दीक्षातोऽन्या [20]सुनिर्णीता [21]क्रियापादक्रियास्पदा ॥४॥
[22]योगपादोक्तितः [23]सिद्धा [24]तृतीया सापि [25]शस्यते ।

---

[1] स्वस्वं — छ.
[2] वृत्तिमथो० — च.
[3] ०त्कथ्यमानं — ओ, ङ, ज; ०त्कथमानं – छ.
[4] मे — ओ, ङ, छ, ज.
[5] 'समयी प्राग्गृहस्थश्च यत्नेनोपचरेद्गुरुम् ।' (मृगेन्द्रे चर्या० १.७३उ०).
[6] सर्वदा यत्तत् — ओ; सर्वदा यत्तु — छ.
[7] सदा समुत्थात्मा — ओ; सदा समर्थात्मा — ङ.
[8] नाथाय — छ; नाथाया — ज.
[9] रिच्यते — ओ.
[10] भवान् — ओ, च.
[11] ०न्निचसे नित्यं — छ; ०न्निचसे नित्या — ज.
[12] मोक्षताम् — ङ; मोक्षदम् — छ, ज.
[13] चर्येषा — ओ, ङ; चर्यैषां — छ, ज.
[14] प्रशस्तः — ओ.
[15] शाश्वतिक्रिया — छ, ज.
[16] मुक्तेर्वितत्या मुक्तेर्वोक्षादीनां — ओ.
[17] ०विवेकतत्त्वानां — ङ; ०विवेकसिद्धानां — च.
[18] प्रविचार्यताम् — ओ; विचारतः — छ, ज.
[19] दीक्षातोऽभ्यासनिर्णीता — च; दीक्षातोऽन्या सु० — ङ.
[20] सुनिर्गीता — ओ.
[21] क्रियापादे क्रियास्पदाः — ओ; क्रियापादे क्रियास्पदा — ङ; क्रियापादकृता सदा — च.
[22] योगपादोक्तिसिद्धात्र — ओ; येन पादोक्तितः — च.
[23] सिद्धतृतीया — छ, ज.
[24] नायासा सापि — ओ.
[25] शश्यते — च.

चर्यामात्रेण[1] [2]संसिद्धा [3]चतुर्थी [4]सा कथं विभो ॥५॥
[5]प्रवक्तव्या [6]शिवज्ञानाच्छिन्ध्यज्ञानाङ्कुरं[7] मम ।
[8]एतस्मिन्नन्तरे [9]नाथः [10]प्रसह्योवाच विश्वराट् ॥६॥

परमेश्वर उवाच —

किमत्र कारणं भ्रान्तेरनुध्याननिदर्शनात् ।
सर्वानु[11]ग्राहकत्वं हि [12]संसिद्धं परमेष्ठिनः ॥७॥
प्राप्तकालस्य चिह्नानि यथा [13]दृश्यन्त्यनेकधा ।
[14]विषरुक्शस्त्रपूर्वाणि[15] [16]न च तान्यत्र कारणम् ॥८॥
[17]मृत्योर्भोगक्षयाभावात्तद्वदत्रापि निश्चितम्[18] ।
[19]अनुध्यान[20]बलावेशाच्चर्याद्याः प्रकटीकृताः[21] ॥९॥
[22]मुक्त्यर्थमुपचर्यन्ते बाह्यलिङ्गान्यमूनि तु ।
[23]निपाताद्यत्स्फुटं चिह्नं भक्तिरव्यभिचारिणी ॥१०॥
भक्त्याविष्टः पुमांस्तावद्गुरुमाराधयेन्मुने ।
यावन्न [24]परमेशेन नियुक्तः[25] शाश्वते पदे ॥११॥

---

[1] चर्यामात्रे — ओ.
[2] संसिद्धचतुर्थी — ओ; संसिद्धश्चतुर्थी — ङ.
[3] चातुर्थि — छ, ज.
[4] साधकं विभो — ओ; साधकं विभोः — ङ.
[5] प्रकर्तव्यं — ओ, ङ, छ, ज.
[6] शिवाज्ञाने — ओ; शिवज्ञाने — ङ, च, छ, ज.
[7] ०च्छिद्यज्ञानाङ्कुरं — ओ, ङ; सिद्धिज्ञानं गुरुः — छ, ज.
[8] एकस्मिन्नन्तरे—ओ; एतस्मान्नन्तरे—छ, ज.
[9] नाथ — ओ, ङ, च; नाथं — छ, ज.
[10] प्रहस्ते वाच — छ, ज.
[11] ०ग्राहकत्व हि — ओ; ०ग्रहकत्वं — च; ०ग्राहकेत्वं हि० — ज.
[12] संसिद्धपर० — ङ; संसिद्धः पर० — छ.
[13] दृश्यं तनौ तथा — ओ; दृश्यं तने तथा — ङ; 'दृश्यन्ते' इत्यत्र 'दृश्यन्ति' इति परस्मैपदप्रयोग आर्षः ।
[14] विदुषः शस्त्रपूर्णानि — ओ.
[15] ०छस्त्रपूर्वानि — ङ; ०छस्त्रपूर्वाणि — च; ०शास्त्रपूर्वाणि — छ; .
[16] च तान्यत्र — ओ.
[17] भृतो भोग० — छ; भृत्यो भोग० — ज.
[18] ०त्तद्वत्तत्र विनिश्चितम् — ओ; ०त्तद्वत्तत्रापि नि० — च.
[19] अनुध्या बला० — छ, ज.
[20] ०बलावेशा चर्या० — ङ; ०बलावेषाश्चर्या० — च.
[21] ०कृतः — ङ.
[22] मुक्त्यर्थमुपवर्ण्यन्ते — ओ, ङ; मुक्त्यन्ते तमुपवर्णान्ते — छ; मुक्त्यन्तमुपवर्णाते — ज.
[23] निपाताद्यस्फुटं — च; निपातान्यस्फुटं — छ, ज.
[24] परमेशाननियुक्ताः — ओ; परमेशाननियुक्तः — ङ, च.
[25] नियुक्ता — छ, ज.

[ [1]भक्तिः पञ्चविधा ]

[2]भक्तिः पञ्चविधा प्रोक्ता वाङ्मनःकायकर्मभिः ।
[3]हृदयाध्यवसायेन [4]लक्ष्यते [5]कारणं [6]यदा ॥ १२॥
[7]तयाविष्टस्य [8]सततमनिवारितवीर्यया[9] ।
[10]पुंसः [11]प्रणष्टरागस्य शिवत्वं [12]व्यक्तिमेति हि ॥१३ ॥

[ [13]पुत्रकः ]

सामान्याचारसंपन्नो गुरुदेवाग्नितत्परः ।
[14]तत्र तत्र [15]स्थितः शान्तः [16]स पुत्रक इति [17]स्मृतः ॥१४॥

[ [18]साधकः ]

साध्यमन्त्रैकचित्तात्मा तपस्वी कृतनिश्चयः ।

---

[1] 'वाङ्मनःकायभेदाच्च त्रिधा मद्भजनं विदुः ।
तपः कर्म जपो ध्यानं ज्ञानं वेत्त्यनुपूर्वशः ॥
पञ्चधा कथ्यते सद्भिस्तदेव भजनं पुनः ।'
(शिवमहापु० वायुसं० उत्तरभागे १०.४७ उ०, ४८);
'शिवधर्मस्य सारोऽयं शिवे भक्तिः सुनिश्चला ।
सा चाष्टाङ्गी शिवेनोक्ता कार्या नित्यं प्रयत्नतः॥
मद्भक्तजनवात्सल्यं पूजायाश्चानुमोदनम् ।
स्वयमभ्यर्चनं भक्त्या ममार्थे चाङ्गचेष्टनम् ॥
मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया ।
ममानुस्मरणं नित्यं कीर्तनेनोपजीवति ॥
भक्तिरष्टविधा ह्येषा'
(शिवधर्मे १.२९.–३२पू०).

[2] भक्तिपञ्च० — ओ; भुक्तिपञ्च० — छ, ज.

[3] हृदा चाध्यव० — ओ, ङ, छ, ज.

[4] लक्षते — च.

[5] करणं — ओ.

[6] प्रति — च, छ, ज.

[7] . . . विष्टस्य — ओ; यथाविष्टस्य — ङ; यदाविष्टस्य — छ; ययाविष्टस्य — ज.

[8] सद्मनीटी वीर्य . . –ओ; संमनील वारित०–ङ

[9] ०वीर्यवान् — ङ, छ, ज.

[10] पुंस नष्टरागस्य — छ, ज.

[11] प्रनष्टरागस्य — ओ; प्रणष्टभावस्य — च.

[12] व्यक्तिमेव हि — छ, ज.

[13] 'पुत्रकः प्रातरुत्थाय समयी च कृताह्निकः ।
कृतप्रणामोऽनुज्ञातो गुरुणा कृत्यमाचरेत् ॥'
'कामं चरेदनुज्ञातः पुत्रको धाम्नि वा वसेत्)'
(मृगेन्द्रे चर्या० १.६६; ७३पू०).

[14] यत्र तत्र — ओ, च; यत्र यत्र — ङ.

[15] शिवः शान्तः — ओ.

[16] सुपुष्कर इति — ओ; स पुत्रः कलति — छ; स पुत्रक ळति — ज.

[17] स्मृताः — छ, ज.

[18] 'साधकः सात्त्विको धीरः सहिष्णुर्मन्त्रधीर्वरः ।
अप्रधृष्यो महाप्राज्ञः समलोष्टाश्मकाञ्चनः ॥
उद्युक्तो होमनिष्ठश्च जपध्यानरतः सदा ।
विघ्नप्रोत्सारणे कल्यो व्रतनिष्ठः समः शुचिः ।
ससहायो वनं गत्वा व्रतचर्यां समारभेत् ।
असहायो यदा तस्मिन्सुसहायः कमण्डलुः ।'
(किरणे चर्या० १९.२–४);
'मन्त्रकल्पसुवेत्ता च देशकालविधानवित् ।
जपयोगविधानज्ञस्तत्त्वज्ञश्च विधानवित् ॥'
'सर्वज्ञश्च कृतज्ञश्च शौचाचारसमन्वितः ।
समर्थश्च परित्यागी जपासक्तः सतां मतः ॥
चतुष्पात्संहिताभिज्ञः कलाभिज्ञस्तथैव च ।
उत्साहवान्सदा दक्षः साधकः स विधीयते ॥'
(निश्वासकारिकायां दीक्षोत्तरे ७.११६ उ०, ११७पू०; १२०, १२१);
(मृगेन्द्रे चर्या० १.७४–७७).

साधकः स तु बोद्धव्यः [1]स्वानुष्ठानोद्यतः सदा ॥१५॥

[ [2]आचार्याचाराः ]

जप[3]ध्यानार्चनं नित्यमग्निकार्यं च युक्तितः ।
आचार्येण प्रकर्तव्यं [4]संतत्यै नातिविस्तरात् ॥१६॥
[5]सत्त्वानुकम्पया दीक्षा [6]व्याख्या च गुरुभिः सदा ।
[7]कर्तव्येश[8]बलाविष्ट[9]चेतसां [10]भावितात्मनाम् ॥१७॥

---

[1] सानुष्ठानाद्यतः — ओ; सानुष्ठानोद्यतः — ङ.

[2] 'शैवसिद्धान्ततत्त्वज्ञो देवाग्निगुरुभक्तिमान् ।
सर्वाचारसमायुक्तस्तपस्विजनवत्सलः ॥
सहिष्णुरूर्जितः श्रीमाञ्जितद्वन्द्वो गतस्पृहः ।
हेयोपादेयतत्त्वज्ञस्तत्त्वार्थे तु व्यवस्थितः ॥
सम्यक्क्रियादिनिपुणो वीतरागो विमत्सरः ।
परापवादहीनश्च रन्ध्रान्वेषी न हीनकः ॥
परतत्त्वे समायुक्तः शिवशासनतत्परः ।
सर्वशास्त्रार्थकुशलः समयाचारपालकः ॥
गृहस्थः सरसो वाग्मी सुशीलः प्रियदर्शनः ।
शिखी वा बद्धकेशी वा श्मश्रुरोमादिवर्जितः ॥
नीरोगी दीक्षितश्चैव मन्त्रमुद्राक्रियान्वितः ।
पदवाक्यप्रमाणज्ञः पशुशास्त्रपराङ्मुखः ॥
शिवतन्त्रैकचित्तात्मा सर्वप्राणिहिते रतः ।
वास्तुविद्याकृताभ्यासः शल्योद्धारविशारदः ॥
सर्वावयवसंपूर्णः सर्वलक्षणलक्षितः ।
ईदृग्लक्षणसंपन्नः स्थापकः श्रेष्ठ उच्यते'
(पूर्वकारणे २६. १९–२६);

'कर्तव्योऽनुग्रहो नित्यं चतुराश्रमसंयुतम् ।
व्याख्या चानुग्रहश्चैव गुरोः शिष्यप्रबोधनम् ॥
स्वल्पमह्नि जपः कार्यः स्वल्पमग्नौ तु होमयेत् ।
स्वल्पं वै ध्यानमुद्दिष्टम् ॥'
(निश्वासका० दीक्षोत्तरे ७.१३५उ०–१३७ पू०);
'अनुग्राह्यास्त्वया शिष्याः शास्त्रदृष्टेन कर्मणा ।
श्रोतव्यं च शिवज्ञानं श्रावणीयं तदर्थिनाम् ॥
संवत्सरोषिते शिष्ये दीक्षां निर्वर्तयेद्बुधः ।
स्वल्पमह्नि जपं कुर्यात्स्वल्पमग्नौ च होमयेत् ॥
स्वल्पं वै ध्यानमातिष्ठेन्मन्त्र एष सदा गुरोः ।'
(सोमशम्भु० आचार्याभिषेकविधौ २५–२७ पू०).

[3] ०ध्यानार्चनान्नित्य० — ओ; ०ध्यानानित्य–ङ.

[4] स ते क्ये नाति० — ओ; सांतत्येनाति – च; संतत्येनाति० — छ, ज.

[5] . . नुक्रमपया दीक्षा — ज.

[6] व्याख्यातो मुनिपुङ्गव — ओ, ङ; व्याख्या च मुनिपुङ्गव — च; व्याख्याता मुनिपुङ्गव — छ, ज; अयं श्लोकः मतङ्ग० क्रिया० १. ३उ०, ४ वृत्तावुदाहृतः। तत्रत्यः पाठोऽत्र साधितः।

[7] कर्तव्येऽथ बला० — च.

[8] ०बला . . . चतसा . . . — ओ; बलाश्लिष्ट-चेतसा — ङ.

[9] ०चेतसा — छ, ज.

[10] भाविताद्भिना — ङ; भावितात्मना — छ, ज.

मतङ्ग उवाच —

[1]भगवञ्शिव [2]तन्त्रार्थ [3]कथनेऽनुक्रमोऽत्र तु ।
[4]वक्तव्यः [5]सुविचारोक्त्या देशिकस्याधिकारिणः ॥१८॥

परमेश्वर उवाच —

[ [6]त्रयोदशविधाः शिष्याः ]

[7]आड्वालको निराधारः [8]प्रमादी तामसोऽपरः ।
[9]क्षतदृग् व्यापकश्चैव [10]पालको [11]गालकस्तथा ॥१९॥
[12]धौरेयोऽनुमतश्चैव [13]पावकोऽम्बुश्च कीर्तितः ।
[14]विचारधीश्च [15]विज्ञेयाः शिष्यास्तन्त्रे[16] त्रयोदश ॥२०॥

[ आड्वालकः ]

[17]सर्वतन्त्रार्थमार्गेऽस्मिन्न प्रविश्यावगाहनम् ।
[18]ततश्चेतश्च [19]संबन्धादसंबन्धवदुक्तिषु[20] ॥२१॥
[21]प्रविश्याड्वालयेद्यो हि [22]प्रोक्त [23]आड्वालकः शिशुः ।

---

[1] भगवं छिव० — छ, ज.
[2] ०मन्त्रार्थ० — ङ.
[3] ०कथनेन क्रमो — ङ; कथने तु क्रमे — छ, ज.
[4] वक्तव्यं सुवि० — ओ; वक्तव्यसुवि० — ङ.
[5] सुविचार्योक्त्या — छ, ज.
[6] 'आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः ।
शक्तोऽन्नदोऽर्थी स्वःसाधुरध्याप्या दश धर्मतः ॥
कृतज्ञश्च तथाद्रोही मेधावी शुभकृन्नरः ।
आप्तः प्रियोऽथ विधिवत्षडध्याप्या द्विजातयः॥'
(कूर्म० उपरिविभागे १४.३९–४०).
[7] आज्वालको — ओ, ङ; आद्वालको — च; अध्यालोकौ — छ, ज.
[8] प्रसादी — च; प्रमादि — छ, ज.
[9] क्षतप्रत्यवक . . . — ओ; क्षतवृद्धचवकश्चैव — ङ; क्षतपृग्व्याधकश्चैव — च; क्षतधृग्व्यापकश्चैव — छ; क्षतधृव्यापकश्चैव — ज.
[10] . . . लको — ओ; यालको — च.
[11] गालवस्तथा — ओ; कालवस्तथा — ङ.
[12] पौरेयानुमतिश्चैव — ओ, ङ; धौरेयोऽनुमतिश्चैव — च; पौरेयनुमतिश्चैव — छ, ज.
[13] धारकाम्बुश्च — च.
[14] विचारदीश्च — ङ; विचारयिश्च — छ, ज.
[15] विज्ञेया शि० — ङ.
[16] शिष्याः सन्ति — ओ, ङ, छ, ज.
[17] सर्वतान्द्रार्थ० — ङ.
[18] ततश्चैतश्च — ओ; इतश्चेतश्च — च, छ, ज.
[19] संबद्धादसंबद्धीयचोक्तिषु — छ, ज.
[20] ०दसंबन्धिवचोक्तिषु — ओ, ङ.
[21] प्रविश्याज्योलको यो हि — ओ; प्रविश्याध्वोलको यो हि — ङ; प्रविश्याध्वलको देवी — छ; प्रविश्याध्वलका देवी — ज.
[22] प्रोक्तः — ओ, ङ, च, छ, ज.
[23] सोज्वलकः — ओ, ङ; सोध्वालकः — छ, ज.

[ निराधारः ]

गृहीतस्याप्ययार्थस्य[1] [2]स्थातुं नास्ति समाश्रयः ॥२२॥
[3]प्रोक्तो ह्याधारदौर्बल्यान्निराधारो महामुने ।

[ प्रमादी ]

[4]नोत्सहेत्तन्त्रमालस्या[5]च्छ्रोतुं [6]चैव तु [7]निश्चयात् ॥२३॥
[8]प्रमादी [9]सोच्यते तन्त्रे शिष्यः कारणचोदिते ।

[ तामसः ]

[10]प्रयत्नादवियुक्तो यः श्रोतुं निद्रावशः सदा ॥२४॥
तिष्ठते [11]घूर्णमानोऽपि [12]स शिष्यस्तामसो मतः ।

[ क्षतदृक् ]

[13]आदावन्ते च [14]निपुणं योऽज्ञात्वा शास्त्रमैश्वरम् ॥२५॥
[15]ईषच्छिद्रमनुप्राप्य [16]विधार्य प्रतिवक्ति यः ।
[17]स ज्ञेयः [18]क्षतदृक्शिष्यः पञ्चमः शिष्यसंततौ ॥२६॥

---

[1] ०प्यथार्थ्यस्य — च.
[2] स्थातुर्नास्ति — ओ.
[3] प्रोक्ता ह्याधार० — ओ; प्रोक्तो स्वाधार० — च; प्रोक्ताप्याधार० — छ, ज.
[4] नोत्स . . . लस्या० — ओ; नोत्सन्नहेतत्त्व-मालस्या० — ङ; नोत्सहेत्त्यक्तुमालस्या० — च; नोत्सहत्तन्त्रमालस्या० — छ, ज.
[5] ०च्छोतुर्नैवातिनि० — च.
[6] नैव तु — ओ, ङ.
[7] निश्चयेत् — छ, ज.
[8] प्रसादी — च; प्रमादि — छ, ज.
[9] सेव्यते — ओ; शोते — ङ; सोप्यते — छ, ज.
[10] प्रयत्नादवियुक्तस्य श्रोतुर्निद्रावशः — ओ, ङ; प्रयत्नादपि युक्तो यः श्रोत्रं निद्रावशः — च; प्रयत्नादपि युक्तस्य श्रोतुन्निद्रौ वचः — छ, ज.
[11] घूर्णमानोऽपि — ओ, ङ, छ, ज.
[12] विशिष्य० — ओ, ङ.
[13] आदिरन्ते — ओ.
[14] निपुणो — ओ, ङ, छ, ज.
[15] रक्षिचित्तमनु० — ओ; तरक्षिचित्रमनु० — ङ; ईशच्छिद्रमनु० — च; ईषछत्रमनु० — छ, ज.
[16] विधार्युपरि कुर्दते — ओ; विधार्य उपकुर्वते — ङ; विदार्य परिकुर्वते — छ, ज.
[17] संज्ञेयः — ओ, ङ, छ, ज.
[18] शिष्यकं प्रोक्तं पञ्चमं शिष्य०—ओ; क्षिति-दृक्पञ्चमशिष्य० — ङ; क्षतपृक्छिष्यः पञ्च-मः शिष्य० — च; क्षितिधृक्शिष्यः पञ्चमं शिष्य० — छ, ज.

[ व्यापकः ]

[1]प्रक्रान्तवर्त्मनोऽन्यत्र [2]च्युतमर्थं स्थितौ [3]मतम् ।
[4]पृच्छेद्यो व्यापकः प्रोक्तः [5]शिष्यः श्रावकवर्त्मनि ॥२७॥

[ पालकः ]

[6]तूष्णीं नित्यं [7]विजानत्त्वादजानन्नपि शङ्कया ।
[8]न पृच्छेत्स्वल्प[9]मप्यर्थं पाति वाग्मित्वमात्मनः ॥२८॥
स पालक इति प्रोक्तः [10]स्वधर्मपरिरक्षणात् ।

[ गालकः ]

अवधार्य गुरोः सम्यक् शास्त्रमाम्नायदर्शनात् ॥२९॥
न मया [11]किंचिदप्यस्माच्छ्रुतं [12]स्याद्गालकः शिशुः ।

[ धौरेयः ]

[13]ततश्चेतश्च पुरतो [14]व्याख्याकाले [15]कृतोद्यमी ॥३०॥
उत्कृष्ट[16]वाक्सुसांनिध्यो गुरोर्धौरेयकस्तु[17] सः ।

---

[1] प्रतोऽन्तपद्मनोऽन्यत्र — ओ; व्रतान्तवत्मनोऽन्यत् — ङ; धृतान्तवर्त्मनोत्युक्तं — छ, ज.

[2] पारिप्लुत स्वतोऽन्यतः — ओ, ङ; प्राक् च्युतार्थं स्थितोन्नतः — छ; प्राक्च्युतार्थं . . . न्यतः — ज.

[3] मतः — च.

[4] पृच्छेद्यं व्यापकः — ओ; प्रच्छाद्य श्रावकः ङ; पृच्छेद्यच्चुम्बकः — च; प्रशेद्गुः च्यावकः — छ; प्रशेद्यश्चावकः — ज.

[5] शिष्य श्रावक० — ओ, ङ, छ, ज.

[6] तृष्णान्नित्यं — छ, ज.

[7] विजानोऽसौ न जानन्नपि — ओ, ङ; विजानत्वाद्धजानन्नपि — च; विधायेद्धासौ न जानन्न — छ; विधायेर्था सौ न जानन्न — ज; विजानतो भावः विजानत्त्वम्, तस्मात् विजानत्त्वात् ।

[8] न जल्पेत्स्व० — ङ.

[9] ०मप्यर्थं मन्त्रवाग्मित्व० — ओ; ०मप्यर्थं-मन्त्रवाग्मित्व० — ङ; ०मप्यत्र याति पाण्डित्य० — च; ०मप्यर्थं पाति वाग्निवात्मनः — छ; ०मप्यर्थं पाति वाग्मिवात्मनः — ज.

[10] स्वपद्मपरि० — ओ; स्ववर्त्मपरि० — ङ; स्व र्मपरि० — च.

[11] किंचिद . . घ्रितस्याद्गालवः — ओ; किंचिदप्यस्माच्छ्रतस्याद्गालवः — ङ.

[12] स्यात्कालकः — छ, ज.

[13] यतश्चेतश्च—ओ; इतश्चेतश्च—च, छ, ज.

[14] व्याख्यारम्भे — च.

[15] ततोऽन्यमी — ओ; तथोद्यमी — च.

[16] ०वाकसानैध्यं गुरोः — ओ; ०वाक्सुसंन्नध्यं गुरोः — ङ; ०वान् सुसन्नेध्याद्गुरोः — छ, ज.

[17] पौरकवस्तु — ओ; पौरेयस्तुरी — ङ; पौरेयकस्तु — छ; पारेयकस्तु — ज.

[ अनुमतः ]

[1]पृष्टो वाप्यथवापृष्टः[2] [3]पृच्छकाचार्ययोरपि ॥३१॥
[4]अजानन्नप्यथैवं स्याद् ब्रूयादनुमतः[5] सदा ।

[ पावकः ]

यथोक्तं गुरुणा [6]सर्वमविचार्याग्निवत्सदा ॥३२॥
[7]ग्रसते ऋजुमार्गेण [8]स शिष्यः पावको मतः ।

[ अम्बुः ]

[9]नीयते येन मार्गेण [10]तत्र तत्राविचारतः ॥३३॥
[11]प्रयाति [12]हृष्टवदनः [13]स पुरोऽम्बुवदास्थितः ।

[ विचारधीः ]

प्रविचार्य धिया [14]सम्यग्गृह्णात्यर्थं[15] गुरोः सदा ॥३४॥
[16]विचारधीः समुद्दिष्टः प्रवरः शिष्यसंततौ ।
एते [17]शिष्याः समाख्याता गुरोरत्र [18]महात्मनः ॥३५॥
मुमुक्षवः सर्व [19]एव [20]समास्तन्त्रविदा सदा ।

---

[1] वृष्टो — ङ.
[2] पृष्ठो — ओ; वृष्टौ — ङ; पृष्ठः — च.
[3] प्रकाशश्चकाचार्ययोरपि — ङ.
[4] अजानन्नप्यवैधं — ओ; अजानन्यद्यथैवं — च; अजानन्नप्यथेवं — छ.
[5] ०मतिः — ङ, च; ०मितिः — छ, ज.
[6] सर्वं सुविचार्याग्निवत् — ओ, ङ; सर्वं सुविचार्यानिवत् — छ, ज.
[7] इदमर्धं 'ओ, मातृकायां न दृश्यते।
[8] ३३ तमश्लोकस्य द्वितीयपादप्रभृति ४० तमश्लोकस्य तृतीयपादे 'तेन मार्गेण' इत्यन्तो भागः 'ङ' मातृकायां न दृश्यते।
[9] नियते — ओ, छ, ज.
[10] यत्र यत्र विचारतः — ओ, छ, ज.
[11] प्रयाति ह विवदनः — ओ.
[12] हृष्टवदना — छ, ज.
[13] सोऽम्बरं परिविस्मृतम् — ओ; सो स्फुरन्बुवदास्थितः — च; सोमपुं पुरिवत्स्मृतः — छ; साम पुं पुरिवत्स्मृत — ज.
[14] सर्वा . . . गुरोः — ज.
[15] गृह्लाद्यर्थं — ओ.
[16] विचारधीसमुद्दिष्टप्रवरः — ओ.
[17] शिष्ये — ओ.
[18] महात्मना — ज.
[19] एते — ओ, छ, ज.
[20] शास्त्रतन्त्रविशारदाः — ओ; साम्यास्तन्त्र० — च; शिवशास्त्रविशारदः — छ; शिवशास्त्रविशारद — ज.

[ [1]व्याख्यानविधिः, तत्र तिस्रः प्रक्रियाः ]

**येन येन प्रकारेण [2]योऽवधारयितुं क्षमः ॥३६॥**
**तस्य तस्य तथा [3]व्याख्या कर्तव्या गुरुणा सदा ।**
**योऽवधारयितुं [4]शक्तः [5]पदोक्तिविधिदर्शनात्[6] ॥३७॥**
**तस्य कृत्वा [7]पदच्छेदं समासं चाप्यनन्तरम् ।**
**[8]निष्कृष्यार्थो [9]यथान्यायं [10]वक्तव्यः सुविचारतः ॥३८॥**
**पूर्वोत्तर[11]पदार्थानां [12]विरोधोक्तिनिदर्शनात् ।**
**[13]वैषम्यं वस्तुनो [14]यस्य कोटिद्वयपदक्रमात् ॥३९॥**
**दृश्यते [15]तत्र [16]येनार्थो वस्तुनः [17]साम्यतां व्रजेत् ।**
**तेन मार्गेण [18]तन्नेयं [19]पदं सूत्रमथापि वा ॥४०॥**
**[20]वाक्योक्तिदर्शनात्सिद्धो वस्तुनो यत्र [21]निर्णयः ।**
**न दृश्यते [22]समीपस्थवाक्येन [23]मुनिपुङ्गव ॥४१॥**
**[24]तत्रोत्थितेन [25]कर्तव्यो [26]ह्येषणायाः सुनिश्चयः ।**
**[27]तिसृभिः [28]प्रक्रियाभिश्च"**

---

[1] 'श्रुतेनानुमितेनैव तथाध्याहारतः सदा ।
व्याख्या कार्या प्रयत्नेन पदे वाक्ये समाहिता ॥'
(शैवपरिभाषामञ्जरी ३.२५६.उ०, २५७पू०)

[2] समर्थश्चावधारितुम् — ओ; समर्थश्चावधारितम् — छ, ज.

[3] व्याख्यां — च.

[4] शक्तो यदोक्ति विधि० — च.

[5] पादोक्ति० — छ, ज.

[6] ३७ श्लोकानन्तरं 'च' मातृकायां 'तस्य कृत्वा तस्य व्याख्या कर्तव्या गुरुणा सदा ।' इत्येकमर्धमधिकतया दृश्यते ।

[7] पदच्छेदसमासाश्चाप्यनन्तरम् — ओ.

[8] निकृष्याधं — छ; निकृष्याथा — ज.

[9] यथान्यायो — ओ.

[10] कर्तव्यः — च.

[11] ०पदार्थानामविरोधोक्तिदर्श० — च.

[12] विरोधोक्तिदर्श० — ज.

[13] विशेषवस्तुनो — ओ; वैरस्यं वस्तुनो — च; वैषम्यवस्तुनो — छ, ज.

[14] यत्र — ओ, छ, ज.

[15] यत्र — ओ, छ, ज.

[16] तेनाथो — छ; तोनाथो — ज.

[17] समतां — च.

[18] तं तेयं — ओ; तं . . . थं — ङ.

[19] पदसूत्र० — छ, ज.

[20] वाक्योक्तदर्शनात्सिद्धेर्वस्तुनो – ओ, ङ; वाक्योकदर्शनं सिद्धो वस्तुनो — छ, ज.

[21] निर्णयम् — ज.

[22] समीपश्च व्याख्ये न —ओ; समीपस्थो वाक्येन — ङ, च; समीपस्थो नान्येन — छ, ज.

[23] मुनिपुङ्गवः — च.

[24] तत्रातीतेन — च; तत्रार्थितेन — छ, ज.

[25] कर्तव्यं — च.

[26] ह्येषेणा सु० — ओ; ह्येषणाथ सु० — ङ; यद्यन्नाम्ना सु० — च; द्येषणाथ स नि० — छ; 'ज' मातृकायां ४२ द्वितीयपादप्रभृति ४३ तृतीयपादे 'तत्त्वानां' इत्यन्तो भागो लुप्तः ।

[27] बिन्दुभिः — ओ, ङ, छ; तिसृभ्यः — च.

[28] प्रक्रियान्तस्त्वा स्वनाम्ना पद० — ओ; प्रक्रियान्तस्त्वा स्वानात्मपद० — ङ; प्रक्रियाश्च स्वनामपद० — च; प्रतीयान्यस्य स्वभावात्पद० — छ.

[ तत्त्वभुवनक्रमस्य नामतो निर्दशनम् ]

"स्वनामपदचिह्नितम्[1] ॥४२॥
[2]आनुलोम्यात्तु शिष्याणां दर्शयेन्मन्दमेधसाम् ।
तत्त्वानां भुवनानां च क्रम [3]एष प्रकीर्तितः ॥४३॥
दीक्षायामपि तेनात्र [4]विस्तरो नोपवर्ण्यते ।
एवं तावत्प्रकर्तव्यः [5]पठेद्वालिख्य यत्नतः ॥४४॥
यावच्छिष्येण [6]निखिलः सम्यगर्थोऽवधारितः ।

[ [7]स्वाम्नायमार्गेण व्याख्या कार्या ]

[8]सुमेधसां [9]विचारोक्त्या [10]यथोक्तं शासने [11]मया ॥४५॥
[12]तत्तथैव प्रकर्तव्यं व्याख्यानं युक्तितः स्फुटम् ।
द्वे [13]कोटी [14]संस्पृशन् गच्छे[15]द्धेयोपादेयनामनी[16] ॥४६॥
[17]विरुद्धवाक्यं संदिग्धमयुक्तं विषमं [18]समम् ।
शास्त्रयुक्त्या प्रकर्तव्यं [19]न स्वाम्नायादृते क्वचित् ॥४७॥
[20]प्रतितन्त्रं विरोधेन [21]योऽर्थः [22]संगृह्यतेऽत्र तु ।
तद्गुरोर्युक्तिदौर्बल्याद्विज्ञेयं [23]वाग्विडम्बनम् ॥४८॥
तस्मात्सर्वप्रयत्नेन गुरुणा [24]तन्त्रवेदिना ।

---

1 ०चिह्निताम् — ओ, ङ; ०चिह्निता — छ.
2 आनुलोम्यानुशि० — ओ; आनुलोमानुशि० — ङ.
3 एवोपयुज्यते — ओ, ङ, छ, ज.
4 विस्तरेणोपवर्ण्यते — ओ, ङ.
5 पाटवो लिख्य — च.
6 निखिलं — ओ, ङ, छ, ज.
7 'यः सिद्धान्ताविरोधेन वेदं वेदाङ्गमेव च।
तथा पाशुपतादीनि गारुडादीन्यनेकधा ॥
निश्चिनोति च शास्त्रार्थं स धर्मं वेत्ति नेतरः।
निश्चिनोति च शास्त्रार्थं शुद्धशैवविरोधतः ॥
बुद्धिः स्यात्तामसी तस्य स च धर्मबहिष्कृतः।'
(कामिके उत्तरभागे ६७.३४उ०–३६).
8 सुमेधसा — ओ, ङ, छ, ज.
9 विचारोक्ता — छ, ज.
10 यथोक्तः — छ, ज.
11 तथा — ङ.
12 तत्तथैवं — ओ, ङ.
13 कोटि — ङ, छ, ज.
14 संस्पृशद्गच्छे० — ओ, ङ; संस्पृशेत्पृच्छे० — छ, ज.
15 ०द्वयोपादेय० — च; ०द्वयोपादेय० — छ; ०धेयोपादेय० — ज.
16 ०नामनि — ङ, छ, ज. ०नामिके इति पाठः सुष्ठु.
17 विरुद्धं वाक्यं सं० — ङ; विरुद्धवाक्सुसं० — च; विरुद्धवाक्यसं० — छ, ज.
18 स्मृतम् — छ, ज.
19 स्वाम्नायाद्दृश्यते — ओ; नः साम्नायादृते — ङ; न स्वाम्नायमृते — च; न स्मनायादृते — छ, ज.
20 प्रतितन्त्र० — ओ, ङ, छ; मुनीनां च वि० — च; पतितन्त्रे वि० — ज.
21 योक्तृसं० — छ, ज.
22 संगम्यते — च.
23 वाग्विसंबनम् — छ, ज.
24 मन्त्रवेदिना — छ, ज.

स्वाम्नायमार्गमाश्रित्य वचसा [1]प्रगुणेन तु ॥४९॥
ऋजुमार्ग[2]गुणोपेता [3]व्याख्या कार्या विपश्चिता ।

[ [4]व्याख्यानक्रमः ]

शिवं पूज्य[5] गुरुं शास्त्रं शक्तिमुच्चार्य [6]पुष्कलाम् ॥५०॥
[7]प्राक्पदं वा [8]मुनिव्याघ्र [9]यतस्तद्वाचपकं मतम् ।
तेन चेष्टेन[10] भगवानिष्टः[11] सकलनिष्कलः[12] ॥५१॥
शिष्यैरपि यथान्यायं [13]पूज्योऽयं [14]प्रणवः सदा ।
[15]गुरुव्यापारसंव्यग्रैः[16] [17]संक्षेपान्नियमो यतः ॥५२॥
नापूज्य परमेशानं [18]ग्रहणं [19]तद्वृथा भवेत् ।
[20]व्याख्येयमखिलं [21]वाच्यं पटलं वाचकेन तु ॥५३॥

---

[1] प्रागुशो न तु — ओ; पागुणेन तु — ङ.

[2] ०गुणो येना व्याख्या — च.

[3] वार्ताख्येया — ओ.

[4] 'योगपीठं यथापूर्वं तत्षडङ्गुलविस्तृतम् ।
तत्रस्थं पूजयेत्पूर्वं देवं शास्त्रार्थदं गुरुम् ॥
स्वगुरुं च नमस्कृत्य व्याख्या कार्या पदादिभिः ।
यथावद्बुध्यते शिष्यस्तथा व्याख्यां समारभेत् ॥
शिष्योऽपि संमुखो भूत्वा पूज्य ज्ञानप्रदं गुरुम् ।
शृणुयादेकचित्तोऽयं समाप्तिर्यावदेव तु ॥
पृष्टेऽपि संशये जाते प्रष्टव्यं चोद्यमेव वा ।'
(किरणे चर्या० १.१९ उ०–२२);
'व्याकुर्याच्छिवभक्तेभ्यस्तन्त्रार्थं गतमत्सरः ।
न्यायतो न्यायवर्तिभ्यः पालयन् गुरुसंततिम् ॥'
'पूते महीतले स्थित्वा पशुश्रवणवर्जिते ।
परिध्यन्तःस्थितं चेष्ट्वा शिवं प्रणवविग्रहम् ॥
गणाध्यक्षं गुरुं चैव कारकं च क्रियाश्रयम् ।
पुस्तकं गुप्तसत्सूत्रं विधायोपरि कस्यचित् ॥
ब्रूयादङ्ग पठस्वेति कृतार्थं प्रागुदङ्मुखः ।
प्रारभेत गुरुर्व्याख्यां संबन्धार्थोक्तिपूर्विकाम् ॥
स्रोतो ब्रूयादनुस्रोतो भेदान्संख्यानमेव च ।
प्रवृत्तये गुरुं स्वं च स्तेयी स्यात्तदकीर्तनात् ॥'
'तदारभ्य चिरं नातिव्याकुर्यात्प्रथमेऽहनि ।
प्रारम्भेऽपि न संप्रश्नप्रतिप्रश्नातिमात्रकम् ॥
त्रीणि मूलानि सूत्राणि द्वे तथैकमथापि वा ।
विधायोपरमेदूर्ध्वं वदन्विघ्नैर्विरुध्यते ॥
यत्र बीज इवारूढो महातन्त्रार्थपादपः ।
आभाति मूलसूत्रं तदथशब्दाद्यलंकृतम् ॥
तस्योद्देशकमन्यत्स्यात्संख्यासंज्ञादिवाचकम् ।
तल्लक्षणं स्वरूपोक्तिस्तदन्यो भाष्यसंग्रहः ॥'
(मृगेन्द्रे चर्या० १.२९; ३१–३४; ४७उ० –५१पू०).

[5] शिवं पूज्यं — ओ; शिवमिष्ट्वा — छ, ज.

[6] पुद्गलम् — ओ, छ; पुद्गलः — ङ; पुद्-गलम् — ज.

[7] प्राक्पदम्=प्रणवः; मतङ्ग० क्रिया० १.६०उ०.

[8] मुनिव्याघ्रो — ङ.

[9] यतद्वाचपकं — च.

[10] तेन यष्टेन — ओ, ङ; हृष्टेन तेन — च.

[11] भगवान्यष्टः — ओ, ङ.

[12] ०निष्कलम् — ओ, ज; ०निष्क्रयः — च.

[13] पूज्येयं — छ, ज.

[14] प्ररणः सदा — ओ.

[15] गुरुव्यापसंव्यग्रैः — च.

[16] ०संव्याग्रे — ओ; सर्वग्रे — ङ.

[17] संक्षेपं नियमो — ङ; संक्षेपे नियमो — च.

[18] गृह्णन्नप्यप्रधा भवेत् — ङ; स्तोकमप्य-विधौ वदेत् — च; गृह्णन्नव्यपृथा भवेत्—छ,ज.

[19] तद्विधा — ओ.

[20] पदे द्वचाख्येयमखिलं — ओ; पद्या वै यम-खिल० — ङ.

[21] वाच्यं पटलकेन तु — ओ; वाच्य पटलं वाम केन तु — ङ.

ततः श्लोकं समुच्चार्य [1]संबन्धोक्तिनिदर्शनात् ।
प्रभोर्वक्त्राम्बुजा[2]यातं [3]वस्तुमात्रं गुरुक्रमात् ॥५४॥
[4]निबद्धं छन्दसा [5]धात्रा [6]विद्येशेनामितात्मना ।
श्रीकण्ठेन ततः पश्चान्मतङ्गाय [7]निवेदितम् ॥५५॥
[8]तेनेदमखिलं ज्ञानं [9]वीर्येणात्मगुणात्मना ।
प्रकाशितं [10]जगत्यस्मिंल्लोकानुग्रहकारणात्[11] ॥५६॥
[12]भगवत्पूज्यपादानां प्रसादादवधारितम्[13] ।
मयेदमपि[14] वक्तव्यं शृणुध्वं [15]विनयान्विताः ॥५७॥
एवं वै [16]श्राविताः शिष्याः शिरसा[17] धरणीतले ।
[18]प्रणम्य भगवन्धन्या वयं युष्मत्प्रसादतः ॥५८॥
[19]प्रध्वस्ताज्ञानकलुषा [20]भवामो हि [21]त्वयि स्थिते ।
[22]प्रसादाभिमुखे नाथे[23] [24]किमन्वेष्यमतः परम् ॥५९॥
[25]ततोऽस्य गुरुणा वाच्यः संबन्धः [26]शक्तिपूर्वकः ।
यतः [27]शक्तिसमावेशात्प्राप्तदीक्षा नरोत्तमाः ॥६०॥
[28]दीक्षितोत्तरकाले तु शिष्याणां भावितात्मनाम् ।
शिवाधिकारसंस्थेन [29]तत्प्रणीतं वचः शनैः ॥६१॥

---

[1] संधौ शक्तिनिदर्शनात् — च.
[2] ०यातां — ओ.
[3] वास्तुमार्गं — ओ, ङ; वस्तुमार्गं — छ, ज.
[4] निबन्धच्छन्दसा — ओ; निबद्धश्छन्दसा — ङ; निबन्धं छन्दसा — च; निबद्धश्च सदा — छ, ज.
[5] मात्रा — च; पात्रा — छ, ज.
[6] विशे . . . मितात्मना — ओ; विदेशोनामिता त्मनाम् — ङ; विद्येशानामिवात्मना — च; विद्येशानां मितात्मनाम् — छ, ज.
[7] निवेदयेत् — च.
[8] तेनेदमपि न ज्ञानं — च; तेनेदममितं ज्ञानं — छ, ज.
[9] वीर्येणात्मगुणात्मनाम् — च; . . . वीर्येणात्मना — छ; . . . र्येणात्मना — ज.
[10] जगत्यस्मांल्लोका० — छ, ज.
[11] ०कारणम् — ओ, ङ.
[12] भगवन्पूज्य० — ओ, ङ.
[13] ०धारितुम् — ओ.
[14] मयेदमिति — ओ, ङ, छ, ज.
[15] विनयान्विता — ओ.
[16] श्राविते — ओ, छ, ज; श्रविते — ङ.
[17] शिरांसि — च.
[18] प्रक्षिप्य — च.
[19] प्रध्वस्तज्ञान० — ओ.
[20] भवामोऽहं — ओ; भावामो हि — ङ; भवामोऽद्य — च.
[21] त्वधीस्थितेः — ङ; त्वदिधिस्थिते — ज.
[22] प्रासादाभि — ङ, छ, ज.
[23] ०मुखेनाथ — ओ, ङ. ०मुखे नाथो — छ, ज.
[24] किमन्वेष्वमतः — ङ.
[25] . . . संबन्धः — ओ; ततः स गुरुणा — ङ. ततस्ते गुरुणा वाच्याः संबन्धं — च.
[26] शक्तिपूर्वकम् — ओ, ङ, च; इदमर्धं मतङ्ग० विद्या० उपोद्घाते वृत्तावुदाहृदम् । तत्र 'शक्ति पूर्वकृत्' इति पाठो दृश्यते । तत्र पाठान्तरानुपलम्भात्स पाठस्तदा स्वीकृतः । इदानीमत्रत्यपाठः सुष्ठु इति भाति ।
[27] शक्तिसमादेशात् — ओ, ङ; शक्तिः समावेशात् — छ.
[28] दीक्षितेतरकाले — ओ.
[29] तत्प्रणीतवचः — ङ.

[1]श्राव्या [2]न्यायवता स्पष्टमार्गेणानेन[3] पूर्ववत्[4] ।
[5]दृष्टादृष्ट[6]फलोपेतमङ्गीकृत्य पदद्वयम् ॥६२॥
[7]संसारात्सुविरक्तस्य [8]प्रवृत्तिर्या मुनीश्वर ।
स संबन्ध इति [9]प्रोक्तस्तत्समाप्तौ फलं यतः ॥६३॥
[10]व्यङ्ग्यं प्रारम्भसामर्थ्यात्संबन्धाख्यात्सुविस्तरात्[11] ।
व्यक्ते यस्मिन्मुनिव्याघ्र निवृत्तिः परमा भवेत् ॥६४॥
तत्प्रयोजनमित्युक्तं तन्त्रेऽस्मिन्पारमेश्वरे ।
षट्पदार्थ[12]विचारोक्तिं वक्तुमभ्युद्यतः स तु[13] ॥६५॥
[14]प्रक्रम्य[15] सूचितन्याया[16]द्वस्तुधर्ममुपाश्रयेत् ।
[17]प्रष्टव्यं व्यक्तये शिष्यैः संदेहस्य पुनः पुनः ॥६६॥
गुरुणापि यथा सम्यक् [18]शिष्यैः समनुगम्यते ।
[19]तथा तथा प्रवक्तव्यं"

[ पञ्चप्रकाराश्चोद्यमार्गाः ]

"श्रोतरि प्रत्यवस्थिते ॥६७॥
पञ्चधा [20]चोद्यमार्गोऽस्मिन्नुचितोऽवसरागतः[21] ।
[22]प्रष्टव्यो वस्तु[23]वैमल्ये न चान्यत्र कदाचन ॥६८॥
सूत्रसिद्धान्तप्रकृत[24]पदाध्यायेष्वसाम्यतः ।

---

[1] श्राव्यं न्यायपथा स्पष्ट० — ओ; श्रावन्या-वतस्पष्टा — ङ.
[2] न्यायवतस्पष्टं — छ, ज.
[3] ०मार्गेनानेन — ओ.
[4] पूर्वशः — ओ.
[5] दृष्टादृष्टा० — ओ; दृष्टदृष्ट० — छ, ज.
[6] ०बलोपेत० — ओ, ङ.
[7] 'संसारात्सु' इत्येतत्प्रभृति ७९ श्लोकान्तो भागः 'छ, ज' मातृकयोर्न दृश्यते ।
[8] प्रवित्तीर्य मु० — ङ.
[9] प्रोक्तं . . समाप्तौ — ओ; प्रोक्तस्तं समाप्तौ — ङ.
[10] व्यत्य्यारम्भ० — ओ, ङ.
[11] 'ओ' मातृकायां ६४ द्वितीयपादो लुप्तः ।; सं-बन्धाख्यं सुपुष्कलम् — ङ.
[12] ०विचारोक्तिः व्यक्तिरभ्यु० — ओ, ङ.
[13] ०द्यतस्य तु — ङ, च.
[14] प्रवक्तुमुचितं न्यायवस्तु वर्तमन्यमाश्रयात् — ओ, ङ.
[15] प्रकाम्य — च.
[16] ०द्वस्त्रधर्ममपा० — च.
[17] प्रष्टव्यस्यक्तये शि० — ङ; प्रष्टव्यो व्युत्-क्रमे शि० — च.
[18] शिष्यस्तमनुगम्यते — ओ, ङ; शिष्यस्तम-नुमन्यते — च.
[19] यथा तथा प्रकर्तव्यं — ओ, ङ.
[20] चोद्यमार्गेऽस्मिन्नुचितेऽव० — ओ, ङ; चोद्य-मार्गेऽस्मिन्रुचितेऽव० — च.
[21] ०वसुरागते — ङ.
[22] प्रस्तव्यं वस्तु० — ओ, प्रष्टव्यवस्तु० — ङ; प्रष्टव्यं वस्तु० — च.
[23] ०वैम . . . —ओ; ०वैमल्ये न वान्यत्र — ङ.
[24] ०पदाद्येषु वसाम्यतः — ओ; पदध्येषु सा-म्यतः — ङ; पदाध्यायेषु मान्यतः — च.

[ प्रथमः ]

[1]प्राक्सूचितं [2]विरोधोक्त्या [3]विवृणोति यदा गुरुः ॥६९॥
तदा [4]प्रष्टुर्न दोषोऽस्ति [5]सूत्रं चोद्यकृतो [6]गुरौ ।

[ द्वितीयः ]

[7]स्वसिद्धान्त[8]समाम्नायाद्गुरुरन्यान्निदर्शयन् ॥७०॥
[9]विरुद्धमानयित्वा तु [10]संयोजयति कुत्रचित् ।
तस्मिन्नपि [11]न दोषोऽस्ति [12]प्रष्टुर्मुनिवरेश्वर[13] ॥७१॥

[ तृतीयः ]

[14]प्रकृताद्वस्तुनश्चान्यद्वस्तु यत्र विचार्यते ।
[15]असंबन्धविचारोक्त्या [16]प्रष्टव्यस्तत्र यत्नतः ॥७२॥

[ चतुर्थः ]

[17]नैवं [18]प्रकरणे पूर्वं [19]कृतोऽर्थो [20]मन्यसेऽन्यथा ।
[21]किमर्थं [22]वेत्सि [23]भगवंस्तत्साम्येन नयेद्गुरुः ॥७३॥

---

[1] प्राक्सूतं — ओ.
[2] विरोधोक्त्यां — ङ.
[3] निर्वाणन्नियदा गुरुः — ओ; निर्वाणं नियता गुरुः — ङ.
[4] प्रगुन्न दोषोऽस्ति — ओ; पृष्टं न दोस्ति — ङ; प्रष्टन्न दोषोऽस्ति — च.
[5] सूत्रचोद्यकृते — ओ, ङ; सूत्रचोद्ये कृते — च; करोतीति कृत् चोद्यस्य कृत् चोद्यकृत्, तस्य चोद्यकृतः ।
[6] गुरो — ओ; गुरोः — ङ.
[7] सुसिद्धान्त — च.
[8] ०स्वमाम्नायात्कुरुरन्यनिदर्शनात् — ओ, ङ; ०समाम्नाया गुरु० — च.
[9] विरुद्धं मान० — ओ.
[10] सुयोजयति — ओ; संयोजयत — ङ; संयति कुत्र० — च.
[11] न्नरेदास्ति — ङ.
[12] प्रष्टुं मुनि० — ओ, ङ.
[13] ०वरेश्वरः — ङ.
[14] प्रकृतावस्तु० — ओ, ङ; प्रकृताद्वस्तुवच्चान्य० — च.
[15] असंबद्धवि० — च.
[16] प्रष्टं तत्र य . . .— ओ; प्रष्टव्यं तत्र — ङ.
[17] नेव प्रकरणं पू . . . यथा — ओ.
[18] प्रमाणकपूर्वं — ङ.
[19] कृतार्थो — ङ; प्रकृतोऽर्थो — च.
[20] ऽधुनोऽन्यथा — च.
[21] . . मर्थं — ओ.
[22] वक्ति — च.
[23] भगवत्तत्सामान्ये न वेद्गुरुः — ओ; भगवन् तत्सामान्येन वेद्गुरुः — ङ.

[1]नान्यथास्य पदस्यार्थो [2]गम्यतेऽथ कदाचन ।
किमर्थं [3]भवता स्पष्टमन्यथैव प्रभाषितम् ॥७४॥
[4]एवं चोद्ये कृते तत्र न दोषोऽस्ति कदाचन ।

[ पञ्चमः ]

[5]अध्यायेऽस्मि[6]न्यदारब्धं वस्तुसंतानमादरात् ॥७५॥
[7]विहाय बलतोऽन्यत्र [8]संबन्धोज्झितवर्त्मना ।
[9]नेतुमुत्सहतेऽयुक्त्या [10]तद्योज्यं पटलात्मकम् ॥७६॥
[11]एभ्यः पञ्चप्रकारेभ्यो योऽन्यथा [12]पृच्छते शिशुः ।
[13]वने नटकवज्ज्ञेयो [14]निर्भर्त्स्यः [15]सर्वदा बुधैः ॥७७॥

[ गुरुणा वक्तव्यः समाधानप्रकारः ]

[16]गुरुणापि [17]प्रवक्तव्यं [18]न दोषो विद्यते यथा ।
क्वचिदाम्नायतः [19]साध्यं वैधर्म्येण क्वचित्क्वचित् ॥७८॥
[20]क्वचिदाकृष्य [21]संबन्धाद्वस्तूदाहरणात्क्वचित् ।
क्वचिद्विहाय [22]स्वस्थानात्प्रकृतं वस्तु[23] युक्तितः ॥७९॥
[24]दूरादपि [25]समायोज्य वक्तव्यं तत्र युक्तितः ।
[26]क्वचिदेष्यं समाकृष्य [27]वाक्यमत्रोच्यते क्वचित् ॥८०॥

---

[1] न्यस्तास्त्रास्या पदस्यार्थो — ओ.
[2] गम्यत्येवं कदा० — ओ, ङ.
[3] भगवता स्पष्ट० — ङ.
[4] पदयोः प्रकृते तत्र — ओ, ङ.
[5] अध्यायेऽन्वदारब्धं — ङ.
[6] ०न्यथारब्धवस्तु० — च.
[7] तद्विहाय बलादत्र — ओ, ङ.
[8] संबन्धोऽन्वितवर्त्मना — ओ; संबन्धोज्जितवर्त्मणा — च.
[9] नेतुः समुत्सहे त्यक्त्वा — ओ, ङ; तनुमुत्सहतेऽयुक्त्या — च.
[10] तच्चाद्यं — ओ, ङ.
[11] येभ्यः — ङ.
[12] पृच्छ्यतेऽपि यः — ओ.
[13] तारे नाटकवज्ज्ञेयो — ओ; तारे नकवज्ज्ञेयो — ङ; वने रटकवज्ज्ञेयो — च.
[14] विनिर्भर्त्स्यं — ओ; निर्जयस्य — ङ.
[15] सदायुधैः — ओ; सदा बुधैः — ङ.
[16] गुरुणा विप्र कर्तव्या — ओ.
[17] प्रकर्तव्यं — ङ.
[18] न च दोषो — ङ.
[19] साध्यो — ओ, ङ.
[20] त्वदाकृष्य — ङ.
[21] संबन्धवक्त्रोदाहरणक्वचित् — ओ; संबन्धा वक्त्रोदाभरणं क्वचित् — ङ; संबद्धाद्वस्तूदाहरणात् — च.
[22] संस्थानात् — च.
[23] ०त्प्रकृतां वस्तु — ओ, ङ; प्रकृताद्वस्तु — च.
[24] भूयादपि — ङ; कुरादापि — छ, ज.
[25] समायोज्यं — च.
[26] क्वचिदत्येष्यं — ओ; क्वचिदेष्टचं — ज.
[27] वाक्यमात्रोच्यते — ङ.

निर्णीतमप्यथैवं स्यात्क्वचिदुक्तिबलेन[1] वा।
यत्र यत्र [2]यथान्यायं येन येन च वर्त्मना ॥८१॥
यद्वस्तु शक्यते [3]नेतुं [4]तत्तथैव विचार्यते।
[5]यथाविरोधतः सर्वं याति तन्त्रं शिवात्मकम् ॥८२॥
तथाचार्येण वक्तव्यं नान्यथा मुनिपुङ्गव[6]।

[ [7]व्याख्यासमाप्तौ शिष्यकरणीयं कर्म ]

[8]समाप्तौ तु [9]गुरोः [10]पादौ प्रणम्य विरमेत्सुधीः ॥८३॥
कृत्वा चैवाङ्ग[11]शुश्रूषां ततः सम्यक् [12]क्षमापयेत्।

[ [13]व्याख्यानफलम् ]

[14]य एवं कुरुते व्याख्यां प्रसन्नवदनः सदा ॥८४॥
स गुरुस्तारये[15]च्छिष्यानस्मात्संसारसागरात्।
[16]यश्चैवं शृणुयाद्भक्त्या [17]शिवार्पितमनाः सदा ॥
[18]स योग्यो गुरु[19]संतानमार्गमत्र [20]प्रपालितुम् ॥८५॥

---

[1] ०त्क्वचिद्युक्तिबलेन — ओ, ङ; क्वचि-युक्तिबलेरणात् — छ, ज.
[2] यदा न्यायं — ङ.
[3] नेदं — ओ, छ, ज; नेतु — ङ.
[4] तथैवं हि वि० — ओ.
[5] तथानुरोधतः — ओ; यथानुरोधतः — ङ; यथानिरोधतः — छ; यथा निरोपतः — ज.
[6] ०पुङ्गवः — ङ.
[7] 'यदाचार्यस्य संमतम्। तत्समाप्तेन विश्रम्य गुरुं नत्वा क्षमापयेत् ॥' (किरणे चर्या० १.२३.)
[8] समाप्ते तु — च, छ, ज.
[9] गुरौ — ओ, ङ.
[10] पादान् — च.
[11] शुश्रूषात्पादौ सम्यक् — ओ; ०शुश्रूषां पादौ सम्यक् —ङ, छ, ज.
[12] क्षमापिते — ओ; समापिते — ङ; समाप्यते — छ, ज.
[13] 'शृणुयादेकचित्तस्तु तदर्थं च विचारयेत्। अन्येभ्यः श्रावयेद्यस्तु तस्य पुण्यफलं महत् ॥' (कामिके उत्तरभागे ६७.२९उ०, ३० पू०); 'ब्रूते य एवं योऽधीते तावुभौ हतकल्मषौ। लोके प्राप्य यशो दीप्तं विशेतां धाम शांकरम्।' (मृगेन्द्रे चर्या० १.५१उ०, ५२पू०).
[14] एवं यः कुरुते — ङ, छ, ज.
[15] ०च्छिष्यमस्वात्संसार० — छ; ०च्छिष्य-मस्मात्संसार० — ज.
[16] य चैवं — छ; यथैवं — ज.
[17] शिवाव्रतमनाः — ओ, ङ.
[18] संयोग्यो — छ, ज.
[19] ०संतानमार्गमात्रं प्रपालितम् — ङ; ०संताने मार्गमत्र प्रपालितुम् — च; ०संतानमार्गमात्र प्रपालितुम्—छ; ०संतानमार्गमाणप्रपालितुम् — ज.
[20] 'प्रपालयितुम्' इत्यत्र 'प्रपालितुम्' इत्यार्षप्रयोगो वृत्तार्थम्।

[ उक्तार्थोपसंहारो वक्ष्यमाणोपक्रमश्च ]

स्वं स्वं [1]वृत्तमुदारमत्र चरितं [2]पाल्यं प्रभोः शासने
[3]तद्वक्त्रानलरश्मि[4]बिन्दुनिकरैः [5]प्रख्यापितं[6] भूतले।
[7]यस्याशेषकषायराशिविषय[8]प्रध्वस्तसङ्गं मनः
[9]शक्तः पालयितुं [10]त्वसौ क्षितितले प्रागेव [11]शक्त्युद्धृतः ॥८६॥

उक्तं यथावत्क्रमशो विभज्य
[12]वृत्तं चतुर्णामपि [13]लेशयैव।
भूयोऽपि सम्यक्प्रविभागयुक्त्या[14]
[15]निष्कृष्य [16]चर्याविषयं विधास्ये ॥८७॥

इति श्रीमतङ्गपारमेश्वरे[17] चर्यापादे समयपटलश्चतुर्थः ॥

चतुर्थः पटलः

---

[1] वृत्तमुपात्तमन्त्ररुचितं — ओ, ङ; वृतमुपात्तत्र रचितं — छ, ज.
[2] पाल्यं प्रभोत्सवे — छ, ज.
[3] तद्वक्त्रान्वयरश्मि० — ओ, ङ.
[4] ०बृन्दविवरप्रख्या० — ओ, ङ; ०बृन्दनिकरे प्रख्या० — च.
[5] प्रख्यापितुं — ओ, ङ.
[6] यद्वक्त्रामलबृन्दारमिनिकरं प्रख्यापितं भूतं–छ; यद्वक्त्रामरबृन्दरामिनिकरं प्रख्यापितं — ज.
[7] यस्याशेषराशिविषयः प्रध्वस्तसङ्गमं मनः — छ; यस्याशेषराशिविषयप्रध्वस्तसङ्गं मननः — ज.
[8] ०प्रध्यस्तसङ्गं — ओ; ०प्रध्वंसगं — ङ; 'विषयेषु प्रध्वस्तः सङ्गो यस्य तत्' इति व्यधिकरणबहुव्रीहिः।
[9] कः शक्नोति सुपालितुं क्षिति० — ओ, ङ.
[10] न्यसौ क्षिति० — छ.
[11] शक्त्युद्धृता — ओ, ङ; शक्योन्धतः — छ; शक्ते . . — ज.
[12] वृतश्चतुर्णामपि — छ.
[13] लेश एव — ओ; लेशशब्दस्य स्त्रीलिङ्गे प्रयोग आर्षः।
[14] ०प्रविभाति भक्त्या — ज.
[15] निकृत्त चर्या० — छ; निकृ . . विषयं —ज.
[16] चर्याविधयं — ओ.
[17] 'पारमेश्वरे' इत्यस्यानन्तरं 'च, छ, ज' मातृकासु 'महातन्त्रे' इत्यधिकं दृश्यते।

## पञ्चमः पटलः

# त्रितयविधानम्

[ त्रिविधश्चर्याभेदः ]

[1]अथाचार्यादयो [2]धीराः [3]समय्यन्ताः प्रकीर्तिताः ।
[4]विभागशः पुनस्तेषां चर्याभेदस्त्रिधा [5]स्मृतः ॥१॥
[6]स्वाचाराभिरताः सर्वे शास्त्रोन्मीलितबुद्धयः ।
[7]वासनातो विभिद्यन्ते तेषां वक्ष्यामि लक्षणम् ॥२॥

[ कर्मी, योगी, ज्ञानी ]

बाह्याभ्यन्तरतः कर्मी[8] [9]स्नानपूजाग्निकर्मसु ।
[10]लक्षाभ्यासजये [11]सक्तो योगीति [12]परिभाष्यते ॥३॥
ज्ञानोद्रेकरतो[13] [14]ज्ञानी लुप्तसंदेहकिल्बिषः[15] ।

[ [16]त्रिविधं कर्म ]

[17]सितं [18]चाप्यसितं कर्म लोके तावत्प्रतिष्ठितम् ॥४॥

---

[1] अथ चर्यादरो — ङ; अथ चर्यादयो — ज.
[2] धीरा — ङ.
[3] समयं ताः — ओ; समन्ताः — ङ; समयन्ताः — छ; समयान्ताः — ज.
[4] विभागजः — ङ; विभागशं — छ, ज.
[5] स्थिता — ङ, छ, ज; स्थितः — च.
[6] स्वाचारनिरताः — च; स्वाचारभिस्थिताः — छ, ज.
[7] वसानते विभज्यन्ते — छ; वसानते विभाज्यन्ते — ज.
[8] बाह्याध्वररतः कर्मी — च; बाल्याप्तेरकृतं कर्म० — छ; बाल्यप्तेरकृतं कर्म० — ज.
[9] ०स्नानपूजादिकर्मसु — छ, ज.
[10] लक्षाभ्यासजपे — च.
[11] शक्तो — ङ, च; सक्त्यो — छ.
[12] परिभाषिते — ओ.
[13] ०रते — छ, ज.
[14] ज्ञानि — छ, ज.
[15] किल्बिषम् — छ, ज.
[16] 'जनकं धारकं भोग्यमध्यात्मादित्रिसाधनम् ।
तत्सत्यानृतयोनित्वाद्धर्माधर्मस्वरूपकम् ॥'
'अध्यात्मादित्रिसाधनं अध्यात्मादित्रयं साधनं यस्य तत्तथा । तत्राध्यात्मशब्देनान्तःकरणतया संनिकर्षेणात्मानमधिकृत्य यद्वर्तते तन्मन उच्यते । आदिग्रहणाद्वाक्कायौ गृह्येते । एवं च मनोवाक्कायाः साधनं यस्य तद् यथाक्रमं इष्टदेवतानुध्याननमस्कारस्तोत्रपाठयजनादिरूपं धर्मात्मकं कर्म, परस्वजिहीर्षातत्प्रवादतदुपघातादयो यथासंख्यं मनोवाक्काय-

हिंसाचौर्यादिकं [1]सर्वमसितं कर्म [2]कर्मिणाम् ।
वापीकूप[3]तडागाद्यं सितमेतत्प्रकीर्तितम् ॥५॥
एतत्कोटि[4]द्वयोपेतं सूचितं[5] सर्वजन्तुषु ।
भोगोपोद्वलकं[6] भोक्तुरसितं सर्वमेव तत् ॥६॥
[7]अपेक्ष्य [8]वेदविध्युक्तमग्निष्टोमात्मके पथि[9] ।
[10]कर्माकर्म[11]विधानेऽस्मिन् [12]प्रोक्तं [13]तद्धि सितासितम् ॥७॥
[14]सितमाध्यात्मिकं [15]चान्यल्लोकशास्त्र[16]विधौ स्मृतम् ।
[17]एतावत्त्रिविधं कर्म नेष्टं शास्त्रे [18]शिवोदिते ॥८॥
[19]यद्यदुक्तं मया कर्म [20]शुक्लं [21]सिद्ध्यै महामुने ।
दीक्षाज्ञान[22]समेतत्वादितरेषां[23] विशिष्यते ॥९॥
[24]भुक्त्वा भोगा[25]न्सुखोद्दाममदेन परिविस्तरात्[26] ।
प्रयात्यु[27]त्कृष्टवपुषां स्थानं [28]स्थानवतां [29]वरम् ॥१०॥

---

कृताः साधनं यस्य तद् अधर्मात्मकम्। यद्वा आत्मभूतदैवानि हेतुतयाधिकृत्य अध्यात्ममधिभूतमधिदैवतं च यत् सुखदुःखमुत्पद्यते, तस्य त्रिविधस्यापि साधनम्। कर्मवशाद्धि चेतःप्रसादादि उद्वेगादि वा आध्यात्मिकं सुखदुःखमुदेति। आधिभौतिकं च अङ्गनासंभोगगजसिंहाद्यभिभवरूपम्। आधिदैविकं च अभिमतानभिमतवातवर्षातपादिकृतम्। **तत् सत्यानृतेति**, तच्च कर्म धर्माधर्मस्वरूपम्; सत्यानृतप्रकृतित्वात्; सत्यप्रकृति कर्म धर्मरूपम्। अनृतप्रकृति कर्म अधर्मरूपम्॥'

(मृगेन्द्रे विद्या० ८.४; तदीया वृत्तिश्च)

[17] एतदेवासितं—च; सितं वै वासितं—छ, ज.

[18] चैवासितं — ओ.

[1] कर्म ससितं — च; सर्वमण्डितं — ज.

[2] कर्मणाम् — ङ, छ, ज.

[3] तटाकाद्यं — ओ; तटाकाद्याः — ङ, छ, ज.

[4] ०द्वयोपेतमुचितं — ओ, छ, ज; ०चयोपेतमुज्झितं — ङ.

[5] मतङ्ग० विद्या. २६.१,२.

[6] ०द्वलिकं — ङ; ०द्वलितं — छ, ज.

[7] अपेक्षं — छ, ज.

[8] वेदवित्ततः अग्नि० — ओ; वेदवाद्युक्तमग्नि० — च; मेदविध्युक्त० — छ, ज.

[9] ०त्मकोत्पथि — ओ; ०त्मकोपरि — च.

[10] कार्मकर्म० — च; कर्मकर्म० — छ, ज.

[11] ०विशेषेऽस्मिन् — ओ, ङ, छ, ज.

[12] प्रोक्ताद्धि — ङ.

[13] तद्वत्सिता० — च.

[14] सितमध्यात्मिकं — छ; सिदमध्यात्मिकं—ज.

[15] चान्यलोके शास्त्र० — ओ, ङ; चिन्त्य लोके शास्त्र० — छ, ज.

[16] ०विधौ स्मृतः — ओ, छ; ०धिये स्मृतः—ज.

[17] एतच्च त्रिविधं — ओ

[18] शिवोदये — ङ, च, छ, ज.

[19] यद्यप्युक्तं — ओ, च; यद्यप्युक्ति — ङ; मतङ्ग० क्रिया० ११, १२, १५ पटलेषूक्तम्।

[20] शुक्लसिद्धेर्महा० — ङ.

[21] सिद्धेर्महा० — ओ, छ, ज.

[22] ०सतेतत्वा० — छ, ज.

[23] ०दितराणां — ओ, ङ, छ, ज.

[24] त्यक्त्वा — ओ.

[25] ०न्सितोद्दाम० — छ, ज.

[26] ०विस्तरान् — च.

[27] ०त्कृष्टवपुषं स्थानं — ओ, ङ; ०त्कृष्टं वपुषस्थानं — छ; ०त्कृष्टवपुषस्थानं — ज.

[28] स्थानं . . । . . — ओ; स्थानं वतां — छ.

[29] वर — च.

मतङ्ग उवाच —

[1]वेदाद्यन्तर्गतं कर्म [2]भवतोक्तं सितासितम् ।
[3]मन्त्रैर्निर्वर्त्यते तच्च [4]मन्त्राश्चाप्यविनश्वराः[5] ॥११॥
क्रिया च फलदा प्रोक्ता सा चात्र द्विजसत्तमैः[6] ।
[7]वेदवाक्यबलोपेता[8] क्रियते [9]युक्तिवादिभिः ॥१२॥
क्रियातश्च[10] [11]फलं [12]दृष्टमुभयोरपि निश्चितम् ।

परमेश्वर उवाच —

[13]सत्यमेतन्मुने किं तु [14]कारणाज्ञागतं मतम् ॥१३॥
[15]कुतोऽवसीयते यस्मादस्वतन्त्रमिदं जगत् ।
[16]निरिन्द्रिया ह्यस्व[17]तन्त्राश्चैतन्य[18]बलवर्जिताः ॥१४॥
निर्दया[19] निरपेक्षाश्च निरालम्बा [20]निरीश्वराः ।
[21]नेष्टा [22]नैःश्रेयसे विप्र [23]तन्मन्त्राश्च [24]विनश्वराः ॥१५॥
[25]वाच्यवाचकभेदोक्तिन्यायेन च [26]बहिष्कृताः ।
शब्दमात्र[27]गुणोपेताश्चिद्वीर्यपरिवर्जिताः[28] ॥१६॥

---

[1] वेद्यामन्त० — ओ, ङ, छ, ज; अत्राक्षेपसमाधानविषये मतङ्ग० विद्या० ७,४२उ–५४ श्लोकाः, तद्वृत्तिश्च द्रष्टव्याः ।
[2] भवनोक्तं — ङ; भवधौतां — छ, ज.
[3] मन्त्रे निवर्त्यते — च; मन्त्रैर्निवर्तते — छ, ज.
[4] मन्त्रश्चा० — छ, ज.
[5] ०नश्वरा — च; ०नश्वरम् — छ, ज.
[6] ०सत्तम — छ, ज.
[7] देववाक्य० — ओ, छ, ज.
[8] ०बलोपात्ता — ओ; ०विलोपात्ता — ङ.
[9] मुक्तिवादिभिः — च; यत्र वादिभिः — छ, ज.
[10] क्रिया तच्च — ओ, ङ.
[11] फला दृष्ट० — ओ.
[12] दृष्टमुभयोरिह — ओ; दृष्ट उभयोरिह — ङ.
[13] सत्यमेम मुने — छ, ज.
[14] कारणज्ञगतो मतम् — ओ; कारणज्ञगुतो मतम् — ङ; कारणं जगतो मतम् — च; कारणं जगतो हितम् — छ, ज.
[15] कुतोऽवसीकृते — ओ; कृतो वसीकृते — ङ; कुतेऽवसीयतो — छ; कुतेवसियतो — ज.
[16] निरिन्द्रियाण्यस्व० — ओ, ङ; इन्द्रियाप्यस्व० — छ; . . प्यस्व० — ज.
[17] ०तन्त्रान्नैश्चतन्य० — ङ; ०तन्त्रा च चैतन्य० — छ; ०तन्त्रा च चैतस्य — ज.
[18] ०फलवर्ज्यया — छ, ज.
[19] निरपेक्षा च — छ, ज.
[20] निरेश्वरा — छ; . . श्वर — ज.
[21] नैष्टा — ओ; नेषां — छ; नेष — ज.
[22] नैश्रेयसे — ओ, ङ, च, ज; वै श्रेयसे — छ.
[23] तन्मात्राश्च — ओ, ङ, छ, ज.
[24] मुनीश्वरा — ओ; मुनीश्वराः — ङ; निरीश्वराः — छ, ज.
[25] बाध्यबाधक० — ओ, ङ, छ, ज.
[26] बहिः कृताः — च; बहिष्कृतः — छ; बहिस्कृतः — ज.
[27] ०गुणोपेतस्ववीर्यपरि० — ङ; गुणोपेता विपर्या परि० — छ; गुणोपेतविपर्या परि० — ज.
[28] ०वर्जिता — छ, ज.

[1]कर्मसामर्थ्यतः [2]सिद्धाः [3]फलदा याः क्रिया मुने ।
न च [4]शक्रपदादूर्ध्वं क्रियातोऽस्ति फलं क्वचित् ॥१७॥
यत्परं ब्रह्म [5]तदपि [6]प्राप्यते ब्रह्मविद्यया ।
[7]वेदान्तदर्शनात्सिद्धाः [8]सर्वेऽप्यस्मिंश्च लिङ्गिनः ॥१८॥
ऋषिभिश्चैव [9]तत्रोक्ता [10]देवतानां तु मूर्तयः ।
[11]प्रलयोत्पत्ति[12]साधर्म्यान्मूर्तित्वं[13] सुप्रतीयते ॥१९॥
[14]न च [15]स्वातन्त्र्यतः [16]कश्चित्स्वल्पमप्यसुखं मुने ।
[17]भोक्तुमुत्सहते विप्र किं पुनः प्रलयात्मकम् ॥२०॥
तस्माद्विचित्रता सिद्धा जगतः [18]परमेश्वरात् ।
एक एव समस्तस्य जगतः परमेश्वरः ॥२१॥
स्वतन्त्रः सर्वविन्नित्यः कर्ता कारणमिष्यते ।
यद्यप्यात्मा समस्तस्य कर्मणः परिकीर्तितः ॥२२॥
सितासितादेः कर्तेति तथापीश्वरचोदनात् ।
प्रवर्ततेऽस्वतन्त्रत्वात्पशुरस्मिन्महाध्वनि ॥२३॥

मतङ्ग उवाच —

द्विजन्मवर्णवैशेष्यात्क्रिया[19] मन्त्रमयी विभो ।
विहितान्यत्र वर्णानां त्रयाणामप्यनुक्रमात् ॥२४॥
स्वस्ववृत्तमथोपात्तं शूद्रस्यापि पृथक् पृथक् ।
मन्त्रसंस्काररहितं ज[घ]न्यत्वाच्च जातितः ॥२५॥
तेषामत्र विभागोऽस्ति न स्याद्वा वर्णसंततौ ।

परमेश्वर उवाच —

मन्त्रसंस्कारसामान्याद्दीक्षेयं पारमेश्वरी ॥२६॥
चतुर्णामपि वर्णानां निरपेक्षा महामुने ।

---

[1] कर्मसामान्यतः — ओ, ङ, छ, ज,
[2] सिद्धां — च; सिद्धा — छ, ज.
[3] फलभेदक्रिया — ओ, ङ, छ, ज; फलदेय-क्रिया — च.
[4] शक्तपदा० — च; शुक्लपदा० — छ, ज.
[5] तत्रापि — ओ, ङ, छ, ज.
[6] प्राप्यं तद्ब्रह्म० — ओ.
[7] वेदाङ्गदर्श० — ओ, ङ, छ, ज.
[8] सर्वे स्युः सिद्धिलिङ्गिनः — ओ, ङ, सर्वे स्युः सिद्धलिङ्गिनः — छ, ज.
[9] तन्त्रोक्त० — ओ; तन्त्रोक्तं — ङ; त्रि-त्रोक्तं — छ; तत्रोक्तं — ज.
[10] ०देवतान्ता तु — ओ; देवता न तु — ङ.
[11] प्रलयोद्भूत० — ओ, ङ.
[12] ०सा . . तित्वात् सु० — ओ; ०साधर्म्यमूर्तित्वात् सं० — छ, ज.
[13] ०न्मूर्तित्वात् — ङ.
[14] न स्वातन्त्र्य यतः — ओ.
[15] स्वतन्त्र्यतः — ङ.
[16] किंचित् — ओ, ङ.
[17] २० उत्तरार्धात्प्रभृति २७ पूर्वार्धान्तो भागः 'च' मातृकायामेव दृश्यते ।
[18] पारमेश्वरात् — च.
[19] वैशिष्या क्रिया — च.

म्लेच्छानामपि [1]भक्तानां [2]सतिरश्चां प्रचोदनात् ॥२७॥
[3]भर्तुर्निर्वर्त्यते विप्र किंतु [4]नात्यन्तकुत्सिताः ।
[5]तेऽनाचारपथानीताः [6]संवृत्तेर्न समानता ॥२८॥
[7]शय्यासनान्न[8]पानाद्यैस्तेषामत्र पृथक्स्थितिः ।

मतङ्ग उवाच —
[9]ब्राह्मणः शूद्रजातेस्तु मन्त्रदर्भ[10]घृतादिभिः ॥२९॥
[11]यो हि [12]निर्वर्तयेत्कर्म [13]स तस्मादपि [14]कुत्सितः ।

परमेश्वर उवाच —
[15]नियोगोऽस्त्यत्र वर्णानां वचनात्परमेष्ठिनः ॥३०॥
[16]समयी [17]दीक्षितश्चैव [18]साधकोऽन्यो गुरुस्तथा[19] ।
[20]चतुर्धा [21]संस्थिता [22]वर्णाः स्वनियोगवशानुगाः[23] ॥३१॥
[24]नियोगश्च [25]विभोराज्ञा [26]पाल्या [27]चास्मिन्प्रयत्नतः ।
यथा [28]लोकस्थितोऽन्यत्र[29] [30]स्वाचारोऽभि[31]मतः सदा ॥३२॥

---

[1] वित्तानां — ओ.
[2] सितवश्चाप्रयोजनात् — छ; सितश्चा प्रयोजनात् — ज.
[3] भुक्ति तून्निद्रते — ओ; भक्तुनिवर्तते — ङ; भर्तुनिवर्तते — च; भर्तुनिर्वर्तते — छ; भक्तु निर्वत्यते — ज.
[4] नेत्यन्तकुत्सिता — ओ; नेत्यं च कुत्सिता — ङ; तेऽत्यन्तकुत्सितम् — च; तेत्रंतकुत्सिताः — छ; तेत्रंतकुत्सिता — ज.
[5] ते नाचारापथातीताः — ओ; तेन चारपथातीताः — ङ; ते नाचारपथातीताः—च; तेन धारपथानीताः — छ; तेन घारपथानीताः — ज.
[6] संप्र . . नतः — ओ; संवृत्तेन्न समासतः — ङ. संवृतेन समानता — च; संवृत्तेन समासतः — छ, ज.
[7] शर्यासनान्न० — छ.
[8] ०पानादे तेषां मन्त्र० — ओ, ङ; ०पानादे तेषामत्र — च; चानाद्यैस्तेषामत्र — ज.
[9] ब्राह्मणशूद्र० — ओ.
[10] ०कृतादिभिः — ओ, ङ.
[11] योगिभि निद्धृते कर्म — ओ.
[12] ०र्नन्निर्वृते कर्म — ङ; निवर्तयेत्कर्म — च; निर्वृत्तते कर्म — छ, ज.
[13] तस्मादपि न कुत्सितम् — ङ; तस्मादपि न कुत्सिताः — छ; तस्मादपि न कुत्सिता—ज.
[14] कुत्सितम् — ओ.
[15] नियोगोऽस्म्यत्र—ओ; नियोगो सत्र—छ, ज.
[16] समया — छ, ज.
[17] 'दीक्षितः पुत्रकः प्रोक्तः' (कामिके उत्तरभागे २४. ५३ पू०.)
[18] साधनकान्यो — ङ; शोधकोऽन्यो — च.
[19] ०स्तदा — छ, ज.
[20] चतुर्थः — ओ.
[21] संस्थितान् — ओ.
[22] वर्णा — ओ, ङ, छ, ज.
[23] ०वशानुगः — ज.
[24] नियोगाश्च — छ, ज.
[25] विभो राज्ञो — छ, ज.
[26] पाल्यतेऽस्मिन् — ङ.
[27] तस्मिन् — ओ.
[28] लोकस्थिते न्यस्या चारोऽभि० — छ, ज.
[29] ०स्थितान्यत्र — ओ, ङ.
[30] स्वाचाराभि० — ओ.
[31] ०मदः सदा — ङ; ०रतः सदा — च.

तथात्रापि मुनिव्याघ्र स्वाचारः परिकीर्तितः ।
[1]जातिभेदव्यवस्थेयं [2]लौकिकी [3]परिकीर्तिता ॥३३॥
[4]स्थितयेऽत्रापि संस्थानं [5]व्यक्तमुक्तमनुक्रमात् ।
प्राक् शक्तिकिरणा[6]घाताः [7]पश्चान्मन्त्रैः शिवात्मकैः[8] ॥३४॥
[9]वागीश्वर्या विनिक्षिप्य योनौ संस्कारवर्त्मना ।
निखिलेन [10]शिवोत्थेन [11]संस्कृताः शिवमूर्तिना ॥३५॥
[12]आचार्येण [13]किमद्याविशेषमत्र [14]जुगुप्ससे ।

मतङ्ग उवाच —

[15]सामान्यमृतुमज्जन्म[16] [17]पित्रोद्भूतविपाकजम् ॥३६॥
तेनैव [18]वृद्धिमायाति मातुः कोष्ठे सुदुःसहे ।
[19]क्लेदविण्मूत्र[20]संपूर्णे [21]दुर्गन्धोष्मसमाकुले ॥३७॥
गौणावयव[22]संनद्धमाश्रयं सुखदुःखयोः ।
भोक्तृत्वमल[23]सामान्याच्चिद्धर्मि विषयास्पदम् ॥३८॥
जन्मव्याधिजरा[24]मृत्युभयेन समतां [25]गतम् ।
सामान्येन्द्रियधर्मित्वाद्विशेषोऽत्र [26]किमात्मकः ॥३९॥

---

[1] जातिभेदाप्यवस्थेया — ओ; जातिभेदाव्यवस्थेयं — ङ; जातिभेदाद्व्यवस्थेयं — च.
[2] लौकिके — ओ.
[3] परिकीर्तिताः — छ.
[4] स्थितयोऽत्रापि — ओ, ङ.
[5] व्यस्तमुक्त० — ओ, ङ.
[6] ०घात. — च; घ्राता — छ, ज.
[7] पश्चान्मन्त्रे शिवात्मिकाः — ओ.
[8] 'ङ' मातृकायां ३४ श्लोकानन्तरं ३६ श्लोकस्योत्तरार्धात्प्रभृति ३८ श्लोकान्तो भागो लिखितः ।
[9] वागीश्वर्यां — ओ, छ.
[10] शिवोर्थेन — ज.
[11] संस्कृता — ओ, ङ; संस्तुताः — छ; संस्तुता — ज.
[12] आचार्येणापि किमपि शेषमत्र — च.
[13] किमद्यापि शेषमत्र — ओ, ज; किमद्यापि शेषमन्त्र — ङ, छ.
[14] जुगुप्सते — च.
[15] 'ओ' मातृकायां ३६ उत्तरार्धात्प्रभृति ३८ श्लोकान्तस्थाने 'सामान्यविधिवद्विषयं. . . स्फुटम्' इत्येतावन्मात्रं दृश्यते ।
[16] सामान्यं धातुमज्जन्म — च; सामान्यमृत्मज्जन्म — छ; सामन्य . . मज्जन्म — ज.
[17] . . . त्रोद्भूतविपाकजाः–ङ; पित्रोद्भुतविपाकजः — छ; पित्रोद्भुतविपाकजा — ज.
[18] वृद्धिमापन्नो मातुः — ङ; प्रद्धिमापन्न मातुः — छ; वृद्धिमापन्न मातुः — ज.
[19] क्लेशवि० — छ, ज.
[20] ०संपन्न० — ङ; संपन्ने — छ, ज.
[21] दुर्गन्धौर्वसमा० — ङ; दुर्गन्धोर्वसमा० — छ, ज.
[22] संबन्धमाश्रयं — ङ, छ, ज.
[23] ०सामान्या विधिम्यद्विषयं स्पदम् — ङ; ०सामान्यं चिद्धर्माविद्धसंस्फुटम् — च; ०सामान्यविधर्मि विषयं स्फुटम् — छ, ज.
[24] ०मृत्युर्भयेन — ओ.
[25] गतिम् — ङ.
[26] किमात्मनः — ङ; किमात्मकम् — छ, ज.

परमेश्वर उवाच —

संकेत[1]मात्रः स्थितये स्वाचारात्संप्रतीयते ।
[2]विशिष्टः सर्ववर्णानां [3]योऽनुध्याता [4]महामुने ॥४०॥
[5]तस्मादयं न नियमो [6]ह्येकशय्यासनादिकः[7] ।
[8]एकान्नभोजना[9]च्छादा यतीनां [10]हि पृथक् पृथक् ॥४१॥
शौचाय [11]कल्पिता [12]धात्रा नैकपात्रं हि भोजनम् ।
अन्यत्रापि मुनिव्याघ्र [13]विहितं [14]नियमात्मकम् ॥४२॥
न च दोषोऽस्ति [15]सामान्यात्स्ववर्णविषयात्मकात्[16] ।
[17]सवर्णाः शर्वभावाः स्युर्ये शिवार्पितबुद्धयः ॥४३॥
[18]समानधर्मिणो[19] यस्मा[20]न्नैकपात्रबलात्क्वचित् ।
प्राप्यते [21]हीयते वाथ [22]फलमिष्टमुदारवत् ॥४४॥
यत्प्राप्तं शक्ति[23]सामर्थ्यान्न तत्केनापि वार्यते ।
तथापि स्थितये [24]चार्यो विधिः शौचाय सुव्रत ॥४५॥
[25]कर्मिणा [26]च विशेषेण; ज्ञानवान्स्वेच्छया स्थितः ।
योगी च योगयुक्तात्मा निःसङ्गः परिकीर्तितः ॥४६॥
तस्मादयं विधिः [27]सर्वः [28]प्रशस्तः कर्मिणोऽत्र तु ।

---

[1] ०मात्रस्थितये — ओ, च; ०मात्रसितये — ङ; ०मात्रविधये — छ, ज.
[2] विशिष्टाः — ङ; विशिष्टा — छ, ज.
[3] येऽनुध्याये — ओ; धेनुध्याये — ङ; येऽनुध्याता — छ, ज.
[4] महात्मना — च.
[5] तस्मादयत्ननियमो — ओ; तस्मातयत्तनियमो — ङ.
[6] ह्येकार्या० — ङ; ०ऽप्येकशय्या० — छ, ज.
[7] ०सनादितः — ओ; ०सनादिकम् — ङ; ०सनादिका — छ; ०सनादि. . — ज.
[8] एकान्तभोजना० — ङ; एकानुभोजना० —च; एकान्ताभोजना० — छ, ज.
[9] ०च्छादयतीनां — ओ; ०न्यायो जातीनां — च; छेदा यतिनां — छ, ज.
[10] च — छ, ज.
[11] कल्पितं — ओ, च, छ, ज; कल्पितां — ङ.
[12] धातृनेकपात्रं — ङ.
[13] निहितं — च.
[14] नियतात्मकः — ओ; नियतात्मकम् — ङ.
[15] न मृडात् — ओ, ङ; सम्राडात् — च; संम्रासाय — छ, ज.
[16] स्ववर्णान्विषयात्मकान् — ओ; स्वर्णान्विषयात्मकान् — ङ; स्वर्णविषयात्मिका — छ; स्वर्णविषयात्मका — ज.
[17] सवर्णा सर्वभावासु ये — ओ; सपर्णा सर्वभावा स्युर्ये — ङ; स्ववर्णात्सर्वमेवास्या ये — च; सवर्णः सर्वभावा स्युर्ये — छ, ज.
[18] समानि धर्मिणो — छ, ज.
[19] ०धर्मणो — ओ; धर्मिणा — ङ.
[20] ०न्नैकपात्रं बलात् — ओ, ङ; ०न्नैकपात्रं बलाच्चवत्—छ; ०न्नैकपात्रं बलाजवत्—ज.
[21] हि यथे वाथ — छ, ज.
[22] बलमिष्ट ० — ओ.
[23] ०सामर्थ्यान्मत्केनापि निवार्यते — ओ; ०सामर्थ्यात्तत्केनापि निवार्यते — ङ, छ, ज.
[24] वार्यो — ङ, छ, ज; वाल्पो — च; चरितुं योग्यः 'चार्यः'; कार्य इत्यर्थः ।
[25] कर्मिणां — ओ; कर्मणां — ङ, छ, ज.
[26] न — च.
[27] सर्वं — ओ, छ, ज.
[28] सुसस्त धर्मोऽत्र तु — च; प्रशस्तं कर्मणोऽत्र तु — छ, ज.

[ कर्मिचर्या ]

[1]कर्मी च [2]भक्तियुक्तात्मा [3]चतुष्कालोद्यमी सदा ॥४७॥
देवार्चनाग्निकार्येषु यथाशक्त्या महामुने ।
मुक्तये तेन [4]तत्कर्म [5]समयज्ञस्य [6]कीर्तितम् ॥४८॥
[7]चतुर्थमसिताद्यं [8]यद् भेदैश्च समवस्थितम् ।
[9]देवाग्निगुरुकार्येषु [10]चरतोऽपि यतस्ततः ॥४९॥
न कर्मणा भवेद्बन्धो यतो [11]मुक्त्यै [12]प्रकीर्तितम् ।
[13]गुरोरपि [14]नियोगित्वात्कर्म प्रोक्तं सनातनम् ॥५०॥
[15]निर्वर्त्यं विधिवत्सर्वं [16]यावत्तत्कारणेरणात्[17] ।
[18]नार्पितं स्वाधिकाराद्यं शिष्यस्य [19]सुमहात्मना ॥५१॥

[ [20]योगिचर्या ]

[21]स्वल्पाम्बुभोजनो नित्यं वाग्यतश्चापि [22]संयमी ।
[23]समदर्शी जितद्वन्द्वो दयावान्सर्वजन्तुषु[24] ॥५२॥

---

[1] कर्मि च — छ, ज.
[2] भुक्ति० — ओ.
[3] चतुष्कालोऽन्यमी — ओ; चतुःकालो०—च; चतुष्कलोद्यमि — छ, ज.
[4] तरत. . — छ; तरतं कर्म० — ज.
[5] समन्त्रज्ञस्य — ङ; ०संज्ञस्य — ज.
[6] मतङ्ग० चर्या० ४.२,३; कीर्तितः – ओ.
[7] मतङ्ग० चर्या.० १.१० श्लोके प्रोक्तम् ।; ४९ श्लोकः, ५० पूर्वार्धं च 'च' मातृकायां न दृश्येते ।
[8] यद्भेदैः सम० — छ, ज.
[9] देवज्ञकुरुकार्येषु — ओ.
[10] चतरतोपयत० — छ, ज.
[11] युक्त्यै — ओ.
[12] मतङ्ग० चर्या० ४.२,३.
[13] 'अद्य संक्रामितो योऽयमधिकारो मया त्वयि । कर्तव्यं हि त्वया यावन्नैव संक्रामितोऽन्यतः ॥' (स्वायंभुवे २४.२१)
[14] नियोगत्वा० — ओ, ङ, छ, ज.
[15] निवर्तविधि० — ओ; निर्वर्त्य विधि० — ङ, छ, ज.
[16] यावतः कार० — ओ, ङ, छ, ज.
[17] ०कारणानरात् — च.
[18] नार्पितां — छ; नार्पिता — ज.
[19] स महात्मना — ङ; स्वमहात्मनः — च.
[20] 'ब्रह्मचारी मिताहारी ग्रामादन्नं समाहरेत् । अध्यात्ममतिरासीत निरपेक्षो निरामिषः ॥ आत्मनैव सहायेन सुखार्थं विचरेदिह । नाभिनन्देत मरणं नाभिनन्देत जीवितम् ॥ कालमेव प्रतीक्षेत निदेशं भृतको यथा । नाध्येतव्यं न वक्तव्यं श्रोतव्यं न कदाचन ॥ एवं ज्ञात्वा परो योगी ब्रह्मभूयाय कल्पते । . . .' 'ग्रामान्ते वृक्षमूले वा वसेद्देवालयेऽपि वा । समः शत्रौ च मित्रे च तथा मानापमानयोः॥' 'रागद्वेषविमुक्तात्मा समलोष्टाश्मकाञ्चनः । प्राणिहिंसानिवृत्तश्च मौनी स्यात्सर्वनिस्पृहः॥' (कूर्म० उपरिविभागे २८.११–१३; १५, १७)
[21] स्वल्पामभोजनो — ओ; स्वकाम्बुभोजनो — — छ, ज.
[22] संयमि — छ, ज.
[23] समदर्शितेन निर्द्वन्दो — ओ; समदर्शितेन निर्द्वन्द्वौ — ङ; समदर्शि नेद्वन्द्वो — छ, ज.
[24] ०न्सर्वत्र जन्तुषु — ओ.

[1]मित्रारिपक्षयोर्नित्यं लाभालाभे जयाजये ।
[2]समता योगिनो दृष्टा शास्त्रेऽस्मिन्सुविनिश्चयात्[3] ॥५३॥

[ [4]ज्ञानिचर्या ]

ज्ञानी [5]च नित्ययुक्तात्मा [6]भावनान्तःप्रतिष्ठितः ।
[7]बहिर्मयात्मकं सर्वं जगदेतच्चराचरम् ॥५४॥
[8]असंस्पृशंश्चरेद्विद्वान्स्वेच्छया[9] धरणीतले ।
[10]नानुध्यानाच्छिवेनोत्थं [11]कश्चिद्वारयितुं क्षमः ॥५५॥
[12]निरुणद्धि [13]प्रभुः सर्वं जगच्छक्त्यात्मसंस्थया ।
[14]स निरुद्ध[15]जगत्क्षिप्रमुद्धृतात्मा स्वतेजसा ॥५६॥
लीलयैव स [16]मुक्तात्मा [17]विचरन् केन वार्यते ।
[18]तस्मान्मायात्मकाद्बन्धा[19]द्विश्लिष्टः [20]शुद्धतेजसि ॥५७॥

---

[1] मित्राधिपक्षयो० — ङ.

[2] सदा योगिन्यतो दृष्ट्वा — ओ; सर्वदो योगी दृष्ट्वा — ङ; संगता योगिनो दृष्टाः — च; सर्वतो याभिने दृष्टा — छ, ज.

[3] निश्चितान् — ओ, ङ.

[4] 'किं तु कारणवक्त्राब्जसमुद्भूतेषु सुव्रत ।
ज्ञानचक्षुःप्रदीपेन सम्यगालोक्य सादरम् ॥
अयं पुमनियं चैषा कला दोषालयाशुभा ।
अनयोरन्तरं ज्ञात्वा स्वस्थो निर्वात्यसंशयम् ॥'
'कदाचित्तु मायागर्भाधिकारीश्वरप्रणिधानात्, सांख्ययोगिनां बुद्धिपुरुषभेदोपलम्भतः प्रकृतिपुरुषविवेकविषयज्ञानवत्, **अयं पुमान्** "**इयं च एषा कला**' इति कलापुरुषभेदोपलम्भतो मायापुरुषविवेकविषयं ज्ञानमुत्पद्यत एव । तदा च 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते' इति न्यायेनासौ परिक्षीणसर्वकर्मत्वाद् **निर्वाति** विज्ञानकेवलित्वं **असंशयं** प्राप्नोति ।';
'ध्वस्तमायाशयस्येह पुंसः स परमेश्वरः ।
शक्त्यात्मवीर्यवर्तिन्या तमः प्रोद्घाट्य निर्मलम् ।
करोति विद्यया युक्तं यथा जानात्यणुः शिवम् ।'
'परमेश्वरो ह्याचार्याधिकरणो दीक्षालक्षणया स्वशक्त्या प्रथमं मायां सकार्यामाशयरूपं च सकलं कर्म ध्वंसयति । . . **तमः प्रोद्घाट्य निर्मलं** कृत्वा, **विद्यया युक्तं करोति** विद्यातत्त्वे संयोजयतीत्यर्थः । ततश्च अशुद्धवर्त्मनो मायादेर्ध्वस्तत्वात् सकलोऽप्ययं दीक्षितः शुद्धविद्यया शिवं पश्यतीति शुद्धवर्त्मस्थ इत्युच्यते ।'
(मतङ्ग० विद्या०९.३४, ३५; १०.२४, २५पू० तदीयवृत्तिश्च).

[5] न — च.

[6] भावनातः प्रति०—ओ; भावनान्तप्रति०—ङ.

[7] बहिर्मयात्मकं — ओ.

[8] असंस्पृष्टश्चरे० — ओ, ङ; असंस्पृषुश्चरे० — छ, ज.

[9] स्वाच्छया — ज.

[10] नानुध्यानं शिवेनोत्थं — ओ, छ, ज; न तु ध्यानं शिवेनोत्थं — ङ; नानुध्यातः शिवेनेत्थं — च.

[11] कश्चिच्छक्तो निवारितुम् — ओ, ङ; कश्चिच्छक्तो निवारितुम् — छ, ज.

[12] रुणद्धि — ओ; रुद्धि रुद्धि — ङ.

[13] जगः सर्वं — ज.

[14] संनिरुद्ध० — ओ; संनिरुध्य — छ, ज.

[15] जगत्सर्वमुद्धृ० — ङ, छ, ज; जगत्क्षिप्रमुद्वृत्तं चात्मतेजसा — च.

[16] युक्तात्मा — च.

[17] विचरेत्केन — च; विचरं तेन — छ, ज.

[18] यस्मा० — च.

[19] ०द्विशिष्टः—ओ, ङ, छ, ज; ०द्विक्लिष्टः—च.

[20] शुद्धचेतसि — ओ; शुद्धतेजसः — ज.

[१]संस्थितः [२]स्वोचिते [३]तस्माद्युक्ता [४]स्वच्छन्दता स्थितौ ।

मतङ्ग उवाच —

[५]मायातो व्यतिरिक्तानां रुद्राणां [६]विद्यते मलः ॥५८॥
[७]येनायता[:] प्रभोर्नित्यं कार्यत्वेन [८]व्यवस्थिताः ।

परमेश्वर उवाच —

[९]शुद्धाध्वसमये [१०]पुंसां [११]गच्छतां भोगभुक्तये ॥५९॥
क्रीडतः परमेशस्य [१२]तत्तेजोद्भूतशक्तयः ।
[१३]नियुक्ताः पशुमोक्षाय [१४]न च ते पशुमूर्तयः ॥६०॥
[१५]सर्गश्च द्विविधः प्रोक्तः [१६]स चेशवशगः सदा ।
नित्या [१७]रुद्राणवो ह्येते सेश्वराः शुद्धवर्त्मनि ॥६१॥
[१८]नात्यन्तनिष्कलाः प्रोक्ताः [१९]क्रीडामात्रनिबन्धनात् ।
[२०]तदात्मकेन भावेन [२१]तेऽणुत्वेन व्यवस्थिताः ॥६२॥
[२२]सृष्टिर्माया[२३]त्मिका स्थूला [२४]क्षेत्रज्ञनिलयात्मिका[२५] ।
[२६]शुद्धाणु[२७]निलया [२८]सूक्ष्मा प्रभोः [२९]सा क्रीडनात्मिका ॥६३॥

---

१ संस्थितस्योचिते — ङ; संस्थितस्योविते — छ; संस्थितस्योचितते — ज.
२ शोचिते — च.
३ तस्माद्वचक्त० — ओ, ङ; तस्माद्वाक्त० — छ, ज.
४ ०स्वच्छन्दसंज्ञितौ — ओ, ङ; ०सुछन्दसंस्थितौ — छ; ०सुछटसंस्थितौ — ज.
५ माया ते व्यक्ति ना . . रुद्राणां — ओ.
६ किंकृतो मलः — च.
७ येन यत्नात्प्रभो० — ओ, ङ; येनायत्नात् प्रभो नित्यं — छ, ज.
८ व्यवस्थितः — ओ, ङ, छ, ज.
९ शुद्धात्मसमये — ओ, ङ; शुद्धयात्मसमये — छ; मध्यात्मसमये — ज.
१० पुंसा — ओ.
११ गच्छदाम भोग० — ङ.
१२ तत्तेजोऽद्भुत० — ओ; तत्तेजोभूत० — छ, ज; तेजः+उद्भूत=तेज उद्भूत; ततः संधिरार्षः ।
१३ न शक्तःपशु० — ओ; न युक्ताः पशु० — ङ.
१४ न पते — ओ; नि च ते — छ.
१५ स्वर्गं च — ओ; स्वर्गश्च — छ, ज.
१६ स चैशपशवः सदा — ओ, ङ; सचेवशगतः सदा — छ, ज.
१७ रुद्राणतो ह्येते — ओ.
१८ नान्यत्र निष्फलाः — च.
१९ क्रीडामात्रा नि० — छ, ज.
२० तदा केन भवेन० — छ, ज.
२१ तेऽण्डत्वेन — च.
२२ सृष्टि माया ० — ङ, छ, ज.
२३ ०त्मकात्स्थूलान्क्षेत्रज्ञ० — ओ; ०त्मकास्थूलक्षेत्रज्ञ० — ङ.
२४ क्षेत्रज्ञा नि० — च.
२५ ०निलयात्मकान् — ओ; ०नियमात्मिका — ङ.
२६ शुद्धाः सुनिलयाः — छ, ज.
२७ ०निलयात्सूक्ष्मात्प्रभोः — ओ.
२८ सूक्ष्माः — छ, ज.
२९ संक्रीड० — ङ.

[1]न तत्र स्वल्पमप्यस्ति [2]दुःखं मुनिवरेश्वर।
सुख[3]मत्यन्तनियतं [4]किं तु तत्सेश्वरं [5]मतम् ॥६४॥
[6]शक्तयः परमेशस्य [7]पूर्वमेवोदिता मया।
[8]सामान्येन स्मृता [9]संख्या [10]परमार्थोऽन्यथा मुने ॥६५॥
[11]भर्तुर्वीर्यमनन्तं स्यात्कारणाख्यमनिन्दितम्।
सृष्टि[12]द्वयं विभोः [13]कार्यं [14]तच्चोक्तं मुनिपुङ्गव॥
[15]व्यासोक्त्या तेन [16]नात्यन्तं संविभज्य प्रभाष्यते ॥६६॥

[ उक्तार्थोपसंहारो वक्ष्यमाणोपक्रमश्च ]

[17]उक्तं [18]त्रयाणामुचितं विधानं
[19]विस्तीर्य [20]युक्त्या भुवि [21]दीक्षितानाम्।
[22]निर्वर्ण्यते [23]शौचविधेर्विभागो
[24]मत्तो मुने [25]लेशतया [26]गृहाण ॥६७॥

इति श्रीमतङ्गपारमेश्वरे[27] चर्यापादे [28]त्रितयविधानपटलः पञ्चमः॥

**पञ्चमः पटलः**

---

[1] 'सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्।'; 'मन्त्रमन्त्रेशपदे ईश्वरपारतन्त्र्यमेव दुःखम्। परमेश्वरपदप्राप्तौ तु तस्येश्वरस्येव स्वात्मवशमिति, शक्तत्ववृद्धया सर्वदुःखनिवृत्तेः परा परिपूर्णता। तस्यान्यदेव सुखं प्राकृतात्सुखादभिव्यज्यते यत्पशूनामगोचरमित्येवं दुःखित्वप्रसङ्गोऽपि परिहृत एवेति।'
(मतङ्ग० विद्या० ११.२०उ०; तदीयवृत्तिश्च).

[2] ...म मुनि० — ङ.

[3] ०मत्यन्तविमलं — च, छ, ज.

[4] कि.. विनश्वरं — ओ; किं त्वनन्तेश्वरं–ङ; किं च नंतेश्वरं — छ, ज.

[5] महत् — ओ; जगत् — च.

[6] व्यक्तयः — ओ.

[7] मतङ्ग० विद्या० ४.५उ०–१६पू०.

[8] प्राधान्येन—ओ; सामान्ये त स्मृता—छ, ज.

[9] संख्योमारमार्थोऽन्यथा — छ; संख्योमारमार्थोन्यथा — ज.

[10] परमोऽर्थोऽन्यथा — ओ, ङ.

[11] भर्तुर्वीर्यमनस्तस्य का०—ङ; भर्तुवीर्यमनस्तस्य का० — छ; भर्तुर्वीर्यमनन्तस्य का० — ज.

[12] ०द्वयविभोः — ओ.

[13] कार्यां — ज.

[14] विद्यापादे प्रोक्तम्।

[15] व्यासोक्त्यानेन — ओ, ङ, च.

[16] नात्यन्तमविभज्य — ओ.

[17] उक्तत्रयाणामुचितं — ओ; मुक्तं त्रयाणामुचिरं — ङ;

[18] त्रयाणुमुचितं — च.

[19] विस्तार्य — च.

[20] युक्ता भुवि — ओ, ङ, छ, ज.

[21] दिक्षुतानां — छ, ज.

[22] निवर्तने — ओ; निर्वर्तते — ङ; निर्वर्त्यते — छ, ज.

[23] शौचविधे विभागो — ओ; शौचविधौ विभागौ — च; शौचिविधेर्विभागो — छ, ज.

[24] युक्तो — च; सक्तो — छ, ज.

[25] लेश तथा — ङ; लेशिवता — छ, ज.

[26] ग्रणाण — छ, ज.

[27] 'पारमेश्वरे' इत्यस्यानन्तरं 'च' मातृकायां 'महातन्त्रे' इत्यधिकं दृश्यते।

[28] तृतीय० — ओ, त्रिधय० —ङ; त्रितय०–च; तृतय० — छ, ज.

## षष्ठः पटलः

## शौचविधिः

[1]अथ शौचविधिः सम्यक् [3]प्राप्तः सोऽप्युच्यतेऽधुना ।
[4]बाह्यावयव[5]संशुद्धिरद्भिः [6]शस्ता [7]मृदा सह ॥१॥
[8]सत्येन मनसः शुद्धिरिन्द्रियाणां यमादिभिः ।
[9]गर्वस्य शमता दृष्टा [10]शुद्धचर्थमविचारतः[11] ॥२॥
बुद्धेरपि मुनिव्याघ्र सङ्गत्यागात्प्रकीर्तिता[12] ।
प्राणाः [13]शुध्यन्ति विधिवत्प्राणायामबलात्सदा ॥३॥
[14]ध्यानाच्छुद्धिः समुद्दिष्टा[15] [16]प्रधानस्य [17]गुणात्मनः ।
[18]विवेकाच्छुध्यते ह्यात्मा यथोक्तं [19]परमेष्ठिना ॥४॥

मतङ्ग उवाच —

बाह्यावयवसंशुद्धिर्भवता सूचिता [20]पुरा ।
तामप्यत्र यथान्यायं श्रोतुमिच्छामि शंकर ॥५॥

---

[1] 'ज्ञानं तपोऽग्निराहारो मृन्मनो वार्युपाञ्जनम् ।
वायुः कर्मार्ककालौ च शुद्धेः कर्तृणि देहिनाम् ॥;'
'मृत्तोयैः शुध्यते शोध्यम्';
'अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति ।
विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति ॥'
(मनुस्मृतौ ५.१०५; १०८पू०; १०९);

'सत्येन मनसः शुद्धिरिन्द्रियाणां यमादिभिः ।
गर्वस्य शमता दृष्टा शुद्धचर्थमविचारतः ॥
बुद्धेरपि मुनिव्याघ्राः सङ्गत्यागात्प्रकीर्तिता ।
प्राणाः शुध्यन्ति विधिवत्प्राणायामबलात्सदा ॥
ध्यानाच्छुद्धिः समुद्दिष्टा प्रधानस्य गुणात्मनः ।
विवेकाच्छुध्यते ह्यात्मा नात्र कार्या विचारणा॥'
(कामिके उत्तरभागे ३०.६८४उ०–६८७पू०).

[2] अथाशौच० — च.

[3] प्राच्यते सोच्यतेऽधुना — ओ; प्राप्यते चोच्यतेऽधुना — ङ; प्राप्य तत्प्रोच्यतेऽधुना — छ; प्राप्यते तु प्रोच्यतेऽधुना — ज.

[4] ब . . . द्विरभिग्रस्ता मृदा — ओ.

[5] ०संसिद्धिरद्भिः — च.

[6] शस्त० — ङ; शप्ता — च; शास्ता — ज.

[7] मुदा — ङ, छ, ज.

[8] सद्येन — च.

[9] पूर्वस्य समता द्रष्टा — ओ; सर्वस्य समता दृष्टा — ङ, च, छ, ज; अत्र पाठः कामिकागमानुसारेण शोधितः ।

[10] शुद्धर्थिमवि० — छ.

[11] ०मविचारिता — च.

[12] ०कीर्तितः — ङ.

[13] सिद्धचन्ति — च; शुध्यन्त — छ, ज.

[14] ध्यानाः शुद्धिः — छ, ज.

[15] ०च्छुद्धिसमुद्घ्रष्टा — ओ.

[16] प्रधानस्वगुणा० — ओ, ङ.

[17] महात्मनः — च.

[18] विवेकाः शुध्यते — छ, ज.

[19] परमेष्ठिना — ओ; परमेष्टिनः — ज.

[20] मतङ्ग० चर्या० २.१९उ०–२४पू०; परा—ज.

परमेश्वर उवाच --

[ [1]बाह्यावयवशौचविधिः ]

गन्धलेपाप[2]नोदार्थमुचितं[3] शौचमादरात् ।
कर्तव्यं साधकेन्द्रेण यथावत्कथयामि ते ॥६॥
वस्त्रपूतेन तोयेन निर्मले[4]नाविकारिणा ।
मृदः ससिकताः शस्ताः[5] कृमिकेशादिवर्जिताः[6] ॥७॥
प्रशस्तदेश[7]संभूताः [8]सुगन्धा वितृणाः [9]शुभाः ।
लिङ्गमादौ [10]तु संग्राह्य [11]तिसृभिर्वामपाणिना ॥८॥
[12]मृद्भिः प्रक्षालयेत्प्राज्ञः[13] [14]पाणावप्यन्तरान्तरम् ।
[15]तावत्य एव [16]दातव्याः [17]पञ्च पाणिद्वयोरपि ॥९॥
[18]पुरीषस्याप्यथोत्सर्गे कृते शौचं विधीयते ।
[19]पायौ [20]सप्त [21]मृदो देयास्त्वक्षमात्रा[22] विपश्चिता ॥१०॥

---

[1] 'ततः शौचं प्रकर्तव्यं मृदामलकमात्रया ।
एका लिङ्गे गुदे पञ्च पञ्चैकान्तरमृत्तिका ॥
केवलास्तत्त्रयो योज्यास्तथैव करयोर्द्वयोः ।
पञ्च पञ्च पुनश्चैका दातव्या लेपशुद्धये ॥
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं तु वनस्थानां यतिनां च चतुर्गुणम् ॥
शौचं कृत्वा ततो मृद्भिस्त्रिभिर्जङ्घां विशोधयेत्'
(किरणे चर्या० १. ६–९पू०);
'गृहीतशिश्नश्चोत्थाय समायुक्तकमण्डलुः ।
शौचं कुर्यान्मृदम्भोभिर्गन्धलेपविमुक्तये ॥
तिस्रो लिङ्गे मृदो योज्यास्त्वेकैकान्तरमृत्तिकाः ।
आमलीफलमात्रं तु [मृत्पिण्डे योजयेत्सकृत्] ॥
मृदस्तिस्रः कराभ्यां तु मूत्रोत्सर्गे भवेच्छुचिः ।
पञ्चापाने मृदो योज्यास्तिस्रश्चान्तरमृत्तिकाः ॥
दश वामकरे योज्याः पाण्योः सप्त तथोभयोः ।
(शिवधर्मोत्तरे ११.९–१२पू०);
तथा अजिते क्रियापादे १९.१५उ०–२२पू० श्लोका द्रष्टव्याः ।

[2] ०नुत्त्यर्थ० — छ, ज.

[3] ०मुचिते — च.

[4] ०नावकारिणा — छ, ज.

[5] मृदुः सुसिक्तास्तां — ओ; मृतः ससिताः सस्ताः — ङ; मृदः . . . सिक्ताः — च.

[6] ०केशादिवर्जिते — ओ; ०केशविवर्जिताः — छ, ज.

[7] ०संभूता — ओ.

[8] सुगन्धापितृणां — ओ; सुगन्धापितृणाः — छ, ज.

[9] शुभाम् — ओ.

[10] तु. . . ति० — च; मृगं ग्राह्य — छ; मृदं ग्राह्य — ओ, ङ.

[11] वामहस्तेन तिसृभिः — ओ, ङ, छ, ज.

[12] प्रक्षालयेद्गुरुः प्राज्ञः — ओ.

[13] ०त्प्राज्ञं — छ, ज.

[14] प्रणाव० — ओ; प्राणाव० —ङ.

[15] तावन्त एव — ओ.

[16] दातव्या — ओ, ङ; दा . . — ज.

[17] पञ्चाणोपाययोरपि — ओ; पञ्च पाण्योर्द्वयोरपि — च.

[18] १० श्लोकः, ११ पूर्वार्धं च 'ङ' मातृकायां न स्तः।; प्र. . .स्यात्प्यथोत्सर्गे कृतशौचं — ओ.

[19] वायोः — ओ; पायोः — छ, ज.

[20] सर्वमृदा देया पक्षमात्रा — ओ.

[21] भृदो — छ, ज.

[22] ०स्त्वक्षामात्रा — छ, ज.

[1]तिस्रस्तिस्रोऽन्तरे पाणौ [2]पश्चाच्चैवोभयोरपि ।
सप्त [3]दत्त्वा मुनिव्याघ्र क्षालयेद्विमलाम्भसा ॥११॥
[4]ततोत्थाय [5]कटिं चोरू जङ्घे च [6]चरणे शनैः ।
[7]धारयेन्मृद[8]मादाय वामहस्तेन पञ्चधा ॥१२॥
पूर्ववत्क्षालयेत्पश्चात्करावप्युक्तमादरात्[9] ॥
[10]शोषयित्वा [11]करौ [12]भस्म [13]पूर्ववच्च समालभेत् ॥१३॥

[ [14]श्वादिलेहनादौ ]

[15]श्वमार्जारखरादीनां [16]विलेहे स्नानमाचरेत् ।
नाभेरूर्ध्वमधस्ताद्वा मृद्भिः [17]शुध्यति सप्तभिः ॥१४॥
[18]उत्तमाङ्गोपघाते च स्नात्वा विद्याङ्गपञ्चकम् ।
[19]जप्तव्यं शतमेकं स्याद् [20]द्विगुणं मन्त्रवेदिना ॥१५॥

---

[1] तिस्रस्तिस्रान्तरे — ओ; तिस्रस्तिस्रोत्तरे — छ; तिसृतिस्रोत्तरे — ज.

[2] पञ्चाच्चैवो० — ओ; पश्चादेवो० — छ, ज.

[3] सता मुनि० — ओ.

[4] ततः + उत्थाय = तत उत्थाय; ततो गुणसंधिरार्षः ।; ततोज्ञाय — छ, ज.

[5] कटिश्चोरु० — ओ; कटिश्चोरू — ङ; कटिं वोरु — च.

[6] चरणौ — च.

[7] धावये० — ओ, ङ, छ, ज.

[8] ०माधाय — च.

[9] ०त्करादाकन्दमादरात् — च.

[10] शेषयित्वा — ङ, छ.

[11] ररौ — ङ; करे — ज.

[12] कर्म पूर्वं० — ओ, ङ; सम्यक् कर्म पूर्वं स० — छ; सौम्यत् कर्म पूर्वाच्च स० — ज.

[13] मतङ्ग० चर्या० २. १४ उ०, १५ पू० श्लोकोक्तवत् ।

[14] 'श्वमार्जारखरादीनां विलेहे स्नानमाचरेत् ।
नाभेरूर्ध्वमधस्ताद्वा मृद्भिः शुध्यति सप्तभिः ॥
उत्तमाङ्गविघाते च स्नात्वा विद्याङ्गपञ्चकम् ।
जप्तव्यं शतमेकं स्याद्द्विगुणं मन्त्रवादिना ॥'
(कामिके उत्तरभागे ३०.६८७उ०–६८९ पू०);
'श्वश्रृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च ।
नराश्वोष्ट्रवराहैश्च प्राणायामेन शुध्यति ॥'
(मनुस्मृतौ ११.११९).

[15] स्वमार्जार० — ङ.

[16] विट्लेपात्स्ना० — च.

[17] शुद्धाति० — छ, ज.

[18] उत्तमाङ्गोऽवधातिश्च — ओ; उत्तमाङ्गो ववाते च — ङ.

[19] जप्तव्यः स तमेकस्याद् — ओ; जप्तशय्यतमेकस्याद् — ङ.

[20] द्विगुणं मन्त्रवारिणा — ओ; द्विगुन्मन्त्रवारिणा — ङ, द्विगुणं मन्त्रवादिना – च,छ,ज.

[ [1]अदीक्षितादिस्पर्शे ]

अदीक्षितेन [2]संस्पृष्टः स्नान[3]माग्नेयमाचरेत् ।
बाह्यवर्णस्य संस्पर्शाद् [4]वारुणं स्नानमाचरेत् ॥१६॥

[ [5]रेतोत्सर्गे ]

[6]रेतोत्सर्गे[7] कृते[8] स्नात्वा [9]जप्तव्यं ब्रह्मपञ्चकम् ।

[ [10]निर्माल्यसंकरे, [11]तद्भक्षणे च ]

निर्माल्य[12]संकरात्कामात् [13]संपूज्यश्चण्डनायकः[14] ॥१७॥
[15]जपस्तदुत्तरं कार्यो [16]जपः [17]साङ्गस्य [18]वै शतम् ।
[19]अकामतो वा [20]संपर्कात्केवलस्य शतं जपेत् ॥१८॥

---

[1] 'अदीक्षितेन संस्पृष्टे स्नानमाग्नेयमाचरेत् ।'
(कामिके उत्तरभागे ३०.६८९.उ०);
'आचम्यादीक्षितस्पृष्टः स्वजातीशं शतं जपेत् ।';
'पुरुषाघोरवामाजा जातीशा ब्राह्मणादितः ।
तत्तन्मन्त्रं जपेत्स्पर्शात्सहस्राणि दशैव तु ॥
पञ्चमस्य तु मन्त्रस्य जपेत्तस्याविचारतः ।
कृच्छ्राद्घोरजपः कार्योऽयुतश्चण्डालसंगमात् ।
ज्ञात्वा ज्ञात्वा यथास्पर्शं प्रायश्चित्तं तु तस्य तु ॥'
(किरणे चर्या० १६. २उ०, ६उ०–८).

[2] संस्पृष्टा — ओ, ङ, छ, ज.

[3] ०मागेयमाचरेत् — ओ; ०माशेषमाचरेत्–ङ.

[4] स्नानं वारुणमाचरेत् — छ, ज.

[5] 'अमानुषीषु पुरुषः प्रतिलोमिष्वयोनिषु ।
रेतः सिक्त्वा जले वापि व्रतमब्दं समाचरेत् ॥'
(कामिके उत्तरभागे ३०.६२९);
व्रतम् —
'मौनं त्रिषवणस्नानं शिवाग्निगुरुपूजनम् ।
अघोरायुतजापश्च गोमयालिप्तमण्डले ॥
पञ्चगव्यं चरुं दन्तधावनं च क्रमाद्भजेत् ।
प्रतिरात्रं चरेदेतद् व्रतं पापविशुद्धये ॥'
(कामिके० उत्तरभागे० ३०.५६८, ५६९).

[6] रेतोत्सर्गकृतौ — छ, ज.

[7] रेतोत्सर्वे — ओ.

[8] कृतो — ङ.

[9] जप्तव्यो — ओ.

[10] 'निर्माल्यसंकरे कामात्संपूज्यश्चण्डनायकः ।
तस्यैव देवदेवस्य जपः साङ्गस्य वै शतम् ॥
अकामतो वा संपर्कात्केवलस्य शतं जपेत् ।'
(कामिके उत्तरभागे ३०.६९०, ६९१पू०);
'जपेन्निर्माल्यसंपर्के सर्वब्रह्माणि लक्षशः ।'
(मृगेन्द्रे चर्या० १.१११पू०)

[11] 'निर्माल्यभक्षणे घोरं प्रमादादयुतं जपेत् ।'
(कामिके उत्तरभागे ३०.५४८उ०);
'समग्रसंहितालक्षं जपेन्निर्माल्यभोजने ।'
(मृगेन्द्रे चर्या० १.१११उ०).

[12] ०शंकरात् — च.

[13] संपूज्य चण्डनायकम् — ङ.

[14] ०नायक — च.

[15] जपं तदुत्तरं कार्यं — ओ; जप्त्वा तदुत्तरं कार्यं — ङ, च, छ, ज.

[16] जपं — ओ, ङ, छ, ज.

[17] साङ्गं वै — ङ.

[18] वेष्टनम् — च.

[19] अकामतोऽपि — च; आक्तामतो वा — छ; अर्क्रामतो वा — ज.

[20] समृद्धात् — ओ, ङ; संम्राडाः — च; संम्राडात् — छ, ज.

[1]यजनं केवलं [2]जग्ध्वा प्रमादान्मुनि[3]सत्तम ।

[ [4]मृद्दारुलोहपात्रेषु शुद्धिः ]

मृत्पात्रमग्निना [5]दग्धं [6]शङ्कातः [7]शुध्यतेऽत्र हि ॥१९॥
[8]तक्षणाद्दारवं पात्रं [9]लौहं [10]क्षाल्याश्मताडनात् ।

[ [11]वस्त्रे ]

क्षारोदका[12]द्वस्त्र[13]शुद्धिः [14]स्वल्पेन मललेपतः ॥२०॥

---

[1] यजनः — छ, ज.
[2] बुद्ध्वा — ओ, ङ; जप्त्वा — च.
[3] ०पुङ्गव — च.
[4] 'पुनः पाकेन मृन्मयम् ।'
'मृन्मयभाण्डमुच्छिष्टादिस्पर्शदूषितं पुनः पाकेन शुध्यति ।'
(मनुस्मृतिः ५.१२२ उ०; कुल्लूकभट्टवृत्तिः);
'दारवाणां च तक्षणम् ।'
(मनुस्मृतिः. ५.११५उ०);
'दारवं लोहजोत्कृष्टं वारिणा तद्विशुध्यति ।'
(कामिके उत्तरभागे ३०.६७९उ०);
'दारुजे लोहसृष्टानां वारिणा शुद्धिरिष्यते ।'
(किरणे चर्या० १६.१२उ०);
'तथायसानां तोयेन ग्राव्णः संघर्षणेन च ।'
(मार्कण्डेयपुराणे ३५.७उ०).
[5] दग्धः — ओ, ङ.
[6] शङ्का० — ङ.
[7] ०शुद्धितेति० हि — ङ; शुद्धिमेति हि —च; शुध्यतीवहि — छ, ज.
[8] तत्क्षणा० — ओ, ङ, च, छ, ज.
[9] लोहं — ओ, ङ, छ, ज.
[10] क्षाल्याश्च ताडनात् — ओ, ङ; क्षाल्याश्मतासनात् — छ, ज.
[11] 'चर्मणां रज्जुवस्त्राणां शुद्धिः स्यात्क्षारवारिणा ।
(कामिके उत्तरभागे ३०. ६८०पू०);
(किरणे चर्या० १६.१३पू०);
'कौशेयाविकयोरूषैः कुतपानामरिष्टकैः ।
श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः ॥';
'ऊषैः क्षारमृत्तिकाभिः कुतपानां नेपालकम्बलानाम्' ।
(मनुस्मृतिः ५.१२०; कुल्लूकभट्टवृत्तिः)
[12] ०दस्त्रशुद्धि — च
[13] ०शुद्धिस्वलेपनामलेपतः — ङ.
[14] स्वल्पेनामतलेरतम् — ओ; मृल्लेपानामलेपतः — च; स्वलानामनुलेपतः — छ, ज.

[ [1]ताम्रादिपात्रेषु [2]धातुवर्गे च ]

[3]आम्लेन ताम्रपात्रस्य [4]कांस्यपात्रस्य [5]भस्मना ।
[6]वारिणा रौप्यहेमादे[7]र्धातुवर्गस्य [8]कीर्तिता ॥२१॥
तथा [9]वै वाश्मजातानां[10] मथितेनाथ[11] भस्मना[12] ।
[13]जलजानां च [14]सर्वेषां वैणवानां तथाम्भसा ॥२२॥
[15]गोवालैः फलपात्राणां वारिणा सह [16]घर्षणात् ।
स्निग्धानां [17]रूक्षणाच्छुद्धिः [18]पात्राणां परिकीर्तिता ॥२३॥

[ [19]त्याज्यानि ]

विण्मूत्र[20]मद्यनिर्माल्य[21]ऋतुमत्स्त्रीविजातिभिः ।
मृत्पात्राणि समस्तानि संत्याज्यानि तु [22]संकरात् ॥२४॥

---

[1] 'पात्रशुद्धिं शृणुष्वैतां स्पर्शाच्च विहितां खग ।
हेमरौप्यादिपात्राणां वारिणा शुद्धिरिष्यते ॥
शङ्खशुक्त्यादिशुद्धिः स्यात्तुषैर्वा मथितेन वा ।
भस्मना कांस्यशुद्धिः स्यात्ताम्रमम्लेन शुध्यति ॥
भौमादिवेणुपात्राणां गोमयैस्तोयघर्षणात् ।'
(किरणे चर्या० १६.९, १०; १२पू०);
'हेमरूप्यादिपात्राणां वारिणा शुद्धिरिष्यते ।
शङ्खादीनां भवेच्छुद्धिस्तुषैर्वा मथितेन वा ॥
भस्मना कांस्यशुद्धिः स्यात्ताम्रमाम्लेन शुध्यति ।
उच्छिष्टलिप्तपात्राणां शुद्धिरेषा प्रकीर्तिता ॥
प्रोक्ष्य शुध्यत्यसंदेहादुच्छिष्टस्पृष्टभाजनम् ।
तुम्ब्यादिवेणुपात्राणां गोवालैस्तोयघर्षणात् ॥
वारिणा त्वश्मजातानां मथितेनाथ मस्तुना ।
जलजानां च सर्वेषां वैणवानां तथाम्भसा ॥
स्निग्धानां रूक्षणाच्छुद्धिः पात्राणां परिकीर्तिता
शुद्धिः स्यादप्यशुद्धानां प्रोक्षणादेव केवलात् ॥'
(कामिके उत्तरभागे ३०.६७६उ०–६७९पू०; ६९१उ०–७९३पू०).

[2] 'स्वर्णं तारं च ताम्रं च वङ्गो नागस्तु पञ्चमः ।
रीतिका च तथा घोषो लोहं चेत्यष्ट धातवः ।
तैले तक्रे गवां मूत्रे काञ्जिके च कुलुत्थके ।
सप्तधा तप्तनिर्वापात्सर्वलोहं विशुध्यति ॥'
(योगरत्नाकरे पृ० ९३).

[3] अनलेन — ओ; अम्लेन — च; आमेन — छ, ज.

[4] कंसपात्रस्य — ङ, छ, ज.

[5] द्रस्मना — ङ.

[6] धारणाद्रौप्य० — च.

[7] ०र्धातूनाम की० — च.

[8] कीर्तितः — ओ; कीर्तिताः — ङ.

[9] चैवाश्मजातीनां — ङ, च.

[10] वात्मजतीनां — ओ; वाश्मजातीनां — छ, ज.

[11] मधितेनाथ — छ, ज.

[12] वस्तुना — ओ, ङ, छ, ज.

[13] जलस्नानं च — ओ; जलस्थानां च — ङ.

[14] जातीनां वै० — छ, ज.

[15] गोवालफल० — च; गोपालैः — छ, ज.

[16] वर्षयेत् — ओ, ङ, छ, ज.

[17] रूक्षणः शुद्धिः — छ; रूक्षणः शुद्ध ०— ज.

[18] पात्राणामपि कीर्तितः — ओ, ङ.

[19] 'विष्ठाद्युपहतं भाण्डं त्याज्यं स्याद्वेणुमृण्मयम् ।
तद्वन्निर्माल्यसंस्पृष्टम्'
(कामिके उत्तरभागे ३०.६८२)

[20] ०ममृदंमाल्य० — ज.

[21] ०जतुमत्स्त्रीद्विजा० — ङ; ०ऋतुमस्त्रद्विजा० — छ; ०ऋतुमत्स्रद्विजा० — ज.

[22] शंकरात् — च.

[ [1]समयप्रमादे ]

[2]समयानां [3]प्रमादात्तु [4]शक्तिजापः प्रशस्यते ।
[5]शतमुक्तः परा [6]निष्ठा [7]वाग्दोषाद्द्विगुणं भवेत् ॥२५॥

[ [8]अभक्ष्यभक्षणे ]

अभक्ष्य[9]भक्षणे साङ्गं [10]देवं जप्त्वा विशुध्यति ।
शतमेकं सहस्रं वा [11]लक्षं वा [12]सुविचार्य तु ॥२६॥

[ [13]अगम्यागमने ]

[14]अगम्यागमने चैव [15]विधिरेष प्रकीर्तितः ।

---

[1] 'समयानां प्रमादे तु शक्तिजापः प्रशस्यते ।'
(कामिके उत्तरभागे ३०.६९६ उ०)

[2] समायानां — च; समश्वानां — ज.

[3] प्रसादात्तु — च.

[4] शक्तिशापः — ओ.

[5] शतमुक्तिवरा — ओ; शतमुक्तं परा — ङ; शक्तियुक्तं परा — च;

[6] निष्ठां द्विदोषा० — छ; निष्ट गेदाषा द्वि० — ज.

[7] वार्गोषा० — ओ; द्वाद्देषा द्वि० — ङ.

[8] 'अभक्ष्यभक्षणे जाते गुह्यकस्य शतं जपेत् ।
अकामात्त्रिशतं कामाज्जपेन्मद्यादिवर्जितात् ।
उदक्यान्नाशने मोहाज्जपेद् गुह्यायुतं बुधः ।'
(कामिके उत्तरभागे ३०.६६५, ६६६पू०).

[9] ०भक्षणादेवं साङ्गं जप्त्वा वशुध्यति — छ, ज.

[10] देव जप्त्वा — ङ.

[11] सलक्षं सुविचार्यते — छ, ज.

[12] सुविचार्यते — ओ, ङ.

[13] 'अनुपातकशुद्ध्यर्थमनुव्रतमुदाहृतम् ।
मातृष्वसा च भगिनी स्वसुता च पितृष्वसा ॥
आसां च गमनं विप्रास्त्वनुपातकमीरितम् ।'
'उपपातकशुद्ध्यर्थमुपव्रतमुदाहृतम् ।
पितृव्यसखिशिष्यस्त्रीस्नुषाश्च शरणागताः ॥
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ।
सगोत्रा मातुलानी च समानप्रवरा च या ॥
तासां संगमनं चोपपातकं समुदाहृतम् ।'
(कामिके उत्तरभागे ३०.५८८उ०, ५८९; ५९५–५९७ पू०);
अनुव्रतम्, उपव्रतम् —
'मौनं त्रिषवणस्नानं शिवाग्निगुरुपूजनम् ।
अधोरायुतजापश्च गोमयालिप्तमण्डले ॥
पञ्चगव्यं चरुं दन्तधावनं च क्रमाद्भजेत् ।
प्रतिरात्रं चरेदेतद् व्रतं पापविशुद्धये ॥
अग्निकार्यं विना वापि जपमात्रं विधीयताम् ।
एतद्व्रतं समाख्यातं दशवृद्धमनुव्रतम् ॥
उपव्रतं तथा'
(कामिके उत्तरभागे ३०.५६८–५७१पू०);
'अगम्यागमनं कृत्वा अभक्ष्यस्य च भक्षणम् ।
शुद्धिश्चान्द्रायणं कृत्वा अथर्वोक्तं तथैव च ॥'
(आपस्तम्बस्मृतिः १०.१४).

[14] अगम्यगमने — च.

[15] विधिरेषः— ओ; विधिशेषः — ङ.

[ ग्राह्यविषये ]

[1]न्यायोपार्जित[2]सद्वृत्तात्सतो [3]ग्राह्यं [4]विजानता ॥२७॥
स्थित्यर्थ[5]मुचितं वस्तु [6]न लोभेनाधिकं क्वचित् ।
[7]वस्त्रशय्यासनादीनां [8]गायत्र्याः शतमभ्यसेत् ॥२८॥
देवाग्निगुरुकार्येषु गृहीतं [9]तन्निवेदनात् ।
[10]शुध्यते [11]नियतैर्नित्यमन्यायान्मुनिपुङ्गव ॥२९॥
ग्लानेभ्यो [12]व्याधितेभ्यो वा [13]यतिभ्यः किंचिदौषधम् ।
सर्वेभ्यः सर्वदा ग्राह्यं [14]न दोषोऽस्त्यत्र शासने ॥३०॥

[ विविधविषयेषु ]

[15]खरोष्ट्रकाकमार्जारश्व[16]सृगालादिभिश्च यत् ।
संस्पृष्टं [17]लीढमाघातं ज्ञात्वा वस्तुबलाबलम्[18] ॥३१॥
प्रोक्षणात्क्षालना[19]द्दाह्यत्यागाद्वा [20]शुद्धिमेति हि ।

---

[1] न्यायोपार्जन० — छ.

[2] ०सद्वृत्तं सद्यो ग्राह्य — ओ; ०सद्रक्तं सद्यो ग्राह्य — ङ; ०संवृत्तं सद्यो ग्रा० — छ; ०सावृत्तं सद्यो ग्रा० — ज; 'सद्वित्तात्' इति पाठः सुष्ठु.

[3] ग्राह्य — च.

[4] ०द्विजानता — ओ.

[5] ०मुचिता — ओ.

[6] न खादेर्नाधिकं — ओ; न खादेनाधिकं — ङ; न खादेर्नायिकं — छ; न खादेनाविकं — ज.

[7] 'वस्त्रशय्यासनादीनां स्तेये गायत्रिकाशतम् ।
गुरुदेवाग्निकार्येषु गर्हितस्य निवेदनात् ॥
शुध्यते नीयमानस्य त्वन्यायान्मुनिपुङ्गवाः ।
ग्लानेभ्यो व्याधितेभ्यो वा यतिभ्यः किंचिदौषधम् ।
सर्वेभ्यः सर्वदा ग्राह्यं न दोषो ह्यत्र शासने ।
(कामिके उत्तरभागे ३०. ६९७–६९९ पू०); वस्त्रं शम्या० — ङ.

[8] गायत्र्या — ओ, ङ, च, छ; गायत्र्यं — ज.

[9] तं निवेशयेत् — च; तन्निवेदयेत् — छ, ज.

[10] ध्याते च नियते नित्य० — ओ.

[11] नियतैर्नित्य० –ङ; न्यायतो नित्य०–च, छ, ज.

[12] व्यधितेभ्यो — ओ; व्यथितेभ्यो — छ, ज.

[13] यतिभ्यं — छ, ज.

[14] तद्दोषो० — ङ.

[15] 'गजाश्वनरनार्युष्ट्रमहिषाणां खरोक्षयोः ।
उपव्रतं वधे कुर्यात्तदर्धं हरणे भवेत् ॥
तन्मांसभक्षणेऽर्धं स्यात्तद्विष्ठास्पृष्टिभक्षणे ।
तत्पादं स्यात्तदालीढस्पर्शादौ स्नानमाचरेत् ॥'
(कामिके उत्तरभागे ३०.६०१,६०२); करोष्ट्र० — ओ.

[16] ०शृगाला० — च.

[17] लीडमाघातं — ङ; लीलमाघातं — छ, ज.

[18] ०बलाबलाम् — छ; बलं ०बलाम् — ज.

[19] ०द्वान्या त्यागा० — ओ; ०द्द्वाभ्यां त्यागा० — ङ; ०द्दोहात्त्यागा० — च.

[20] शुद्धिमेत्र हि — ओ.

[1]सुतप्तस्य [2]शृतस्याथ [3]शुद्धिराज्यस्य कीर्तिता ॥३२॥
[4]पुनः पाकेन संशुद्धिर्लवणस्य [5]सहाम्भसा[6] ।
[7]गुडस्यापि विशिष्टानां प्रोक्षणादेव केवलात् ॥३३॥
[8]मधुनः [9]पाकतः शुद्धिस्तथैवेक्षुरसस्य च[10] ।
फलानां क्षालनाच्छुद्धिर्दध्नश्चैव निरीक्षणात् ॥३४॥
[11]क्वथितं शुध्यते क्षीरं [12]शिष्टं स्यात्पानकं हि [13]तत् ।
[14]शुध्यते प्रोक्षणात्सर्वं [15]पर्यग्निकरणेन [16]च ॥३५॥
[17]पक्वान्नं [18]प्रोक्षणात्सर्वं पर्यग्नि[19]करणात्तथा ।
[20]अपवादाद्गुरोर्वाचः शुद्धिरब्दैर्नियम्य[21] तु ॥३६॥
परेभ्यो दुःखमुत्पाद्य वाङमनःकायकर्मभिः ।
[22]प्रमादतः [23]परिज्ञाय शुद्धिः [24]शक्तिजपात्सदा ॥३७॥

---

[1] सुसप्तस्याथ तप्तस्य — ओ; सुतप्तस्याथ तप्तस्य — ङ, छ; सुतप्तस्याथ तप्तं स्या — ज.

[2] शुतस्याथ — च.

[3] 'द्रवाणां चैव सर्वेषां शुद्धिरुत्प्लवनं स्मृतम् ॥' 'द्रवाणां घृततैलानां प्रादेशप्रमाणकुशपत्रद्वयाभ्यामुत्पवनेन शुद्धिः ।'
(मनुस्मृतिः ५.११५; कुल्लूकभट्टवृत्तिश्च); शुद्धिराध्यस्य — ओ; शुद्धिनाज्यस्य —ङ.

[4] 'पुनःपाकेन संशुद्धिर्लवणस्य सहाम्भसा ।'
(कामिके उत्तरभागे ३०.६९१उ०); 'निर्यासानां गुडानां च लवणानां तथैव च । कुसुम्भकुङकुमानां च ऊर्णाकार्पासयोस्तथा ॥ प्रोक्षणात्कथिता शुद्धिरित्याह भगवान्यमः ।'
(शङखस्मृतिः १६. ११, १२पू०).

[5] महाम्भसा — च.

[6] 'छ' मातृकायां ३३ श्लोकस्य द्वितीयपादप्रभृति ३४ श्लोकस्य तृतीयपादान्तो भागो लुप्तः ।

[7] शुद्धस्यापि विष्टां प्रोक्ष० — ङ; शुद्धस्यापि विशुद्धानां प्रोक्ष० — ज.

[8] 'मधुनः पाकतः शुद्धिस्तथैवेक्षुरसस्य च । फलानां क्षालनाच्छुद्धिर्दध्नश्चैव निरीक्षणात् । क्वथितं शुध्यते क्षीरम्'
(कामिके उत्तरभागे ३०.६९३. उ०, ६९४).

[9] पकः शुद्धि० — ज.

[10] तु — च.

[11] कथितं — ओ; क्वथित्वा — छ, ज.

[12] शेषं — ओ, ङ, च, ज; शेषः — छ.

[13] यत् — ख, च, छ, ज.

[14] 'शुद्धिः स्यादप्यशुद्धानां प्रोक्षणादेव केवलात् ।'
(कामिके उत्तरभागे ३०. ६९३ पू०); शतेश्च प्रोक्षणाच्छुद्धिः . . णं तथा — ओ.

[15] विपर्यकरणं तथा — च.

[16] तु — ङ.

[17] 'पक्वानां प्रोक्षणादपि'
(कामिके उत्तरभागे ३०.६९४उ०); इदमर्धं 'ख, छ, ज' मातृकासु न दृश्यते । ; पक्वानां — ओ, ङ.

[18] प्रोक्षणं सर्वं — ओ, ङ.

[19] ०करणं तथा — ओ; ०करणादपि — ङ.

[20] 'अथ शैवगुरोरस्य शुद्धिर्वाचां विधीयते । परेभ्यो दुःखमापाद्य वाङमनःकायकर्मभिः ॥ प्रमादतः परिज्ञाय शुद्धिः शक्तिजपात्सदा ।'
(कामिके उत्तरभागे ३०.६९५, ६९६ पू०);

[21] अथवा पाद . . शद्धिरब्दनियम्य — ओ; अथ पादाद्गुरोर्वचनश्शाक्याच्छुद्धिरब्दनियम्य — ख; अथवा पादा गुरो वचः शद्धिरब्धनियम्य — ङ; अथ पादा गुणोर्व . . शुद्धिरब्दन्नियम्य — छ; अथ पादात् गुणोर्व . . शुद्धिरब्दन्नियम्य — ज.

[22] प्रमादतोऽपरिज्ञाय — च.

[23] परज्ञायाः — ङ.

[24] शक्तिजपत्सदा — ख; शक्तिजजात्सदा —ङ.

[1]शताच्छतद्वया[2]द्वाथ सहस्राच्च [3]क्रमोदितात् ।
गुरोर्निवेद्य[4] [5]कर्तव्यं गुरोर्वा रोचते यथा ॥३८॥

[ उक्तार्थोपसंहारो वक्ष्यमाणोपक्रमश्च ]

समुचित[6]मविशेषाद्भावितं[7] ते विधानं
गुरुलघुविनियोगात्साधकानां त्रिसंख्यम् ।
कथितमिह [8]समग्रं [9]सांप्रतं वर्तनार्थं
शिववदनसमुत्थं [10]कथ्यते [11]ते यथावत् ॥३९॥

इति श्रीमतङ्गपारमेश्वरे[12] चर्यापादे शौचपटलः षष्ठः ॥
षष्ठः पटलः

---

[1] शताच्च तद्वचा चाथ — ङ; शता छतद्वय द्वाय— छ; शता छतद्वयद्वाथ — ज.
[2] ०द्याथ — ओ, ख.
[3] क्रमोदिता — ओ, ख, ङ, छ, ज.
[4] ०र्निवेद्यं — ओ; ०र्निवेद्यते क० — छ.
[5] कर्तव्यगुरो० — ङ.
[6] ०मपि शेषा० — ओ, ङ.
[7] ०द्भावितं — ओ.
[8] समर्थं — ख, छ, ज; समस्तं — ङ.
[9] संप्रतं — ओ; साप्रतं — ख, ङ.
[10] कल्प्यते — ख, छ, ज.
[11] यद्यथावत् — च.
[12] 'पारमेश्वरे' इत्यस्यानन्तरं 'च' मातृकायां 'महातन्त्रे' इत्यधिकं दृश्यते ।

## सप्मतः पटलः

# भिक्षाटनम्

अथ भिक्षाटनं [1]संम्यङ्ङनिर्वत्यं यतिभिर्यथा[2] ।
तथा ते संप्रवक्ष्यामि शृणु विप्रेश्वरेश्वर ॥१॥

[ [3]भिक्षाटनविधिः ]

कर्तव्यमखिलं कृत्वा प्रत्यक्स्थे तु दिवाकरे ।
[4]मध्याह्लाद्वा तु विद्याङ्गैः [5]कृतरक्षः प्रयत्नवान् ॥२॥
दिशो [6]विरेच्य विधिवच्छिवास्त्रेण महौजसा[7] ।
[8]ज्योतीरूपपदं ध्यात्वा [9]क्षालयेत्पात्रमादरात्[10] ॥३॥
प्रणम्य कारणं नाथं गुरुं च प्रविशेत्पुरम्[11] ।
[12]सर्वभूतसुखं देवं [13]जपन्गच्छेच्छनैः शनैः ॥४॥

---

[1] वक्ष्ये नि० — ओ, ख, ङ, छ, ज.

[2] ०र्यदा — छ.

[3] 'हृदा प्रक्षाल्य तोयेन दण्डं गृह्यात्मसंमितम् ।
स्थौल्यादङ्गुष्ठवद्वेत्रं दशद्वादशपर्वकम् ॥
दण्डेऽस्त्रं हृदयं पात्रे न्यस्य यायाच्छिवं गृणन् ।
महास्त्रं वा गणं गौरीं वागीशीं वामृतां जपेत् ॥
चातुर्वर्ण्यमटेद्भिक्षां त्यक्त्वा वर्णान्तरान् गृहान्'
(किरणे चर्या० ३.३–५पू०);
'माधूकरीं चरेद्भिक्षां दिनार्धे सवने गते ।
सर्वमन्त्रमुखे पुण्ये परमेशाधिदैवते ॥
तदनिर्वर्त्य योऽश्नाति सवनं सुरपूजितम् ।
मन्त्रास्तं नाधितिष्ठन्ति योगपीठव्यवस्थिताः॥
कृतरक्षः स्मरन्नस्त्रं पर्यटेन्मौनमास्थितः ।'
(मृगेन्द्रे चर्या० १.७९, ८०; ८३ पू०);
'बुभुक्षुः शुक्लवस्त्रकम् ।
कौपीनमुत्तरीयं च परिवृत्य समाचरेत् ॥
शिवं गुह्यं च भक्त्या च ध्यायेन्मौनी दृढव्रतः ।
आज्ञां तत्र समादाय दण्डमस्त्राभिमन्त्रितम् ॥
आतपत्रकरो यायाद्भिक्षार्थं च गृहान्प्रति ।'
(अचिन्त्यविश्वसादाख्ये ४७. ६४उ०–६६);
'भैक्षेण वर्तनं प्रोक्तं फलमूलैरथापि वा ।
एककालं चरेद्भैक्षं न प्रसज्येत विस्तरे ।'
(कूर्म० उपरिविभागे २९. १उ०, २ पू०).

[4] मध्याह्लाद्या तु — ओ; मध्याह्ला . . तु — छ, ज; मध्याह्ले वर्तविद्या० — च.

[5] कृतरक्षप्रयत्नवान् — छ; कृतरश्मिप्रयत्नवान् — ज.

[6] विरोच्य — ओ; विवेच्य — च.

[7] ०वच्छिव . . जसा — ओ.

[8] व्योमव्यापिपदमन्त्रे सप्तविंशं पदम् ।; ज्योतिरूप० — ख, ङ; ज्योतिरुपदं — छ, ज.

[9] प्रोक्षयेत् — च.

[10] ०त्पुत्रमादरात् — ङ.

[11] ०त्पुरः — ओ; ०त्पु . . रम् — ख.

[12] 'सर्वभूतसुखप्रद' इति व्योमव्यापिपदमन्त्रे ६२ तमं पदम् ।; सर्वव्रतसुखं देहं — ओ; सर्वभूतसुखादेव — छ, ज.

[13] जपं गच्छे० — ओ; जपेद्गच्छे० — छ, ज.

[1]चातुर्वर्ण्यमटेद्भिक्षां [2]भिक्षार्थी साधकोत्तमः[3] ।

[ [4]भिक्षाटने त्याज्यानि गृहाणि ]

[5]वैद्यनापितगोपाल[6]मल्लशौण्डिककारुकान् ॥५॥
[7]संत्यजेद् [8]भैक्षभुङ [9]नित्यं गृहं ग्रामणिकस्य तु[10] ।

---

[1] चातुर्वर्ण्यम . . भिक्षार्थं सा० — ओ; चातुर्वर्णमठे भिक्षां — ख; चातुर्वर्णमटेद्भिक्षां — ङ; चातु . . र्ण्यमठे भिक्षां — छ; चातुवर्ण्यमठें भिक्षां — ज.

[2] भिक्षार्थिसाध० — छ, ज.

[3] साधकोत्तम — ओ, ङ.

[4] 'नापितात्कारुमारभ्य तदधोजातिगेहके ।
पतितानां गृहे वापि गुरुद्रोहिगृहेऽपि वा ॥
शिवनिन्दागृहे वापि ज्ञानिनिन्दागृहेऽपि वा ।
मद्यपानां गृहे वापि भिक्षां नैवात्र कारयेत्'
(अचिन्त्यविश्वसादाख्ये ४७.५६, ५७);
'पतितान्नापितात्कारोरभिशस्तात्तथा त्यजेत् ।'
(सोमशम्भुपद्धतिः १.९.२६पू०);
'भिक्षां तु चरतो भिक्षां नादद्यान्न विगर्हितात् ।
शैवात्स्वायंभुवादेश्च कुतश्चिल्लिङ्गिनोऽपि वा ॥
मिष्टान्नप्रचुरां भिक्षां नादद्यान्नातिसंस्कृताम् ।
परिहासादिचतुरा यत्र नार्यस्ततोऽपि वा ॥'
'भिक्षां [भिक्षां चरतः] भिक्षाचाराद् [नादद्यात्] न गृह्णीयात् । न च शैवात् विगर्हितात् क्षुद्राचारात् । न च [स्वायंभुवादेः] स्वयंभूपासनोपजीविनः । आदिग्रहणान्नान्यस्मादपि लिङ्गोपजीविनः पूजकादेश्च । न च [लिङ्गिनः] महाव्रतशाक्यादिचिह्नभृतः सकाशाद् भिक्षामाददीत । [मिष्टान्नप्रचुरां] स्वाद्वन्नभूयिष्ठाम् । [अतिसंस्कृताम्] अतिसंस्कारपुरःसराम् । [परिहासादिचतुराः] परिहासक्रीडालापप्रणयकुशलाश्च यत्र [नार्यः] योषितः ततो गृहाद् भिक्षां [नादद्यात्] नाददीतेति पूर्वेण संबन्धः ।'
(मृगेन्द्रे चर्या० १.८१, ८२; तदीयवृत्तिश्च);
'मत्तक्रुद्धातुराणां च न भुञ्जीत कदाचन ।
केशकीटावपन्नं च पदा स्पृष्टं च कामतः ॥
भ्रूणघ्नावेक्षितं चैव संस्पृष्टं चाप्युदक्यया ।
पतत्रिणावलीढं च शुना संस्पृष्टमेव च ॥
गवा चान्नमुपाघ्रातं घुष्टान्नं च विशेषतः ।
गणान्नं गणिकान्नं च विदुषा च जुगुप्सितम् ॥
स्तेनगायनयोश्चान्नं तक्ष्णो वार्धुषिकस्य च ।
दीक्षितस्य कदर्यस्य बद्धस्य निगडस्य च ॥
अभिशस्तस्य षण्डस्य पुंश्चल्या दाम्भिकस्य च ।
शुक्तं पर्युषितं चैव शूद्रस्योच्छिष्टमेव च ॥
चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः ।
उग्रान्नं सूतिकान्नं च पर्याचान्तमनिर्दशम् ॥
अनर्चितं वृथामांसमवीरायाश्च योषितः ।
द्विषदन्नं नगर्यन्नं पतितान्नमवक्षुतम् ॥
पिशुनानृतिनोश्चान्नं क्रतुविक्रयिणस्तथा ।
शैलूषतुन्नवायान्नं कृतघ्नस्यान्नमेव च ॥
कर्मारस्य निषादस्य रङ्गावतरकस्य च ।
सुवर्णकर्तुर्वेणस्य शस्त्रविक्रयिणस्तथा ॥
श्ववतां शौण्डिकानां च चैलनिर्णेजकस्य च ।
रञ्जकस्य नृशंसस्य यस्य चोपपतिर्गृहे ॥
मृष्यन्ति ये चोपपतिं स्त्रीजितानां च सर्वशः ।
अनिर्दशं च प्रेतान्नमतुष्टिकरमेव च ॥'
(मनुस्मृतिः ४.२०७–२१७).

[5] वैद्यानामपि गोपाल० — ओ.

[6] ०मण्डशोण्डिकका . . — ओ; ०मण्डशौण्डिकरागरात् — ख; ०माण्डशोण्डिकका० — ङ; ०मण्डशोचण्डिकरागात् — छ; ०मण्डशौचण्डिकरागात् — ज.

[7] भिक्षा . . . ग्रामणिकस्य तु — ख.

[8] भैक्ष्यभुङ — ओ; भिक्षुभुङ — छ, ज.

[9] नित्यग्रहं — ओ.

[10] च — च.

[1]कुसीद[2]वार्धुषी कुण्डगोलकांश्च परित्यजेत्[3] ॥६॥
[4]वृषलीपतयः षण्डाः कुशीला[5] ग्राम[6]याचकाः ।
तथा देवलकाश्चान्ये [7]भ्रष्टशौचाश्च ये नराः ॥७॥
अन्यायवृत्तयः सर्वे त्याज्या भिक्षा[8]भुजा सदा ।
[9]मद्यामिष[10]प्रमोदाढ्यं त्याज्यं तद्वेश्म यत्नतः ॥८॥
[11]कुक्कुटश्वखरोष्ट्राणां गृहे [12]यत्र परिग्रहः ।
तद्गृहं न प्रवेष्टव्यं [13]यच्च [14]स्त्रीकश्मलं मुने ॥९॥

[ भिक्षाटने ग्राह्याणि, अग्राह्याणि च ]

[15]दुष्टसङ्गो न यत्रास्ति न च [16]स्वाम्नायवर्जनम् ।
[17]देवाग्न्यतिथिपूजाद्यं [18]पात्रशुद्धिश्च दृश्यते ॥१०॥
[19]तस्मिन्ग्राह्या [20]मुने भिक्षा [21]सुविचार्य सुमेधसा ।
[22]तैलाभ्यक्ता [23]च या नारी [24]गुर्विणी वाथ कुत्सिता ॥११॥
तस्या [25]भिक्षा सदा [26]वर्ज्या [27]न चादेया तु पाणिना ।

---

[1] आसीत — ङ; कुशीद० — च.

[2] ०वाध्रकारुण्यकोलकांश्च — ओ; ०वाडुषिदिक्कुण्डकोलकांश्च — ख; वार्धुषीकुण्ड० — ङ; ०वावुस्त्रीकुण्ड० — च; ०वाध्युषिककुण्डकोलकांश्च — छ, ज.

[3] ०त्यज्येत् — ज.

[4] व्रकली . . . वक्रळीलग्रामयाचका — ओ.

[5] ०पतयश्चैव कुशली० — ख; ०पतयश्चैव कुशील० — ङ; ०पतयः शण्ढाः कुशीला — च; ०पतयश्चैव कुशल० — छ, ज.

[6] ०याजकाः — ख, च.

[7] भ्रष्टा . . . — ख.

[8] ०भुजां — ख; ०भुजं — छ, ज.

[9] मद्यमीष० — ख, मद्यमिष्ट० — छ, ज.

[10] ०प्रमोदाढयां — ओ, ङ; प्रमोदाख्यं — ज.

[11] क्र . . खरोष्ट्राणां — ओ; कुकुटाश्वखरोष्ट्राणां — ख; कुक्कुटश्वाखराष्ट्राणां — ङ; कुक्कुटः शूकरोष्द्रणां — च; कुक्कुटाश्च खरोष्ट्राणां — छ, ज.

[12] यस्य — ख, छ, ज.

[13] यत्र — च.

[14] स्त्रीकल्मषं — ओ, ङ; स्त्रिकश्मलं — ख.

[15] द्रष्टसङ्गो — ओ.

[16] स्वाम्नाथवर्जनम् — ओ; स्वामनवर्जनम् — छ, ज.

[17] देवाग्न्यशिवपूजाद्यं — ओ.

[18] पाशशुद्धिश्च—ख, छ, ज; पात्रशुद्धि च—च

[19] तस्माद्ग्राह्यं — च.

[20] मुने अविचार्य सु० — ओ; मुने भिक्ष . . सा — ख; मुनेर्भिक्षा अवि० — ङ, छ, ज; मुने भैक्ष्यं सु० — च.

[21] अविचार्य सु० — ङ, छ, ज.

[22] न दर्व्या न च हस्तेन न कांस्येनाददीत ताम् । वृषलीगुर्विणीम्लानवस्त्राणां च करेण वा ॥' (सोमशम्भुपद्धतिः १.९.४०).

[23] तु — च.

[24] निर्गुणी — ओ, ख, ङ, छ, ज.

[25] भिक्षा च नादेया . . तु पाणिना — ख; भिक्षा . . न चादेयां तु पाणिना — छ, ज.

[26] त्याज्या — च.

[27] न च देयं तु — ओ; न चोदेयं तु — ङ.

[1]सूक्ष्मामृतपदं स्मृत्वा [2]ग्राह्यमन्नं सदा [3]बुधैः ॥१२॥
[4]ज्वलदस्त्रेण [5]तत्पात्रं [6]ज्वलत्संपरिचिन्तयेत् ।
[7]वाग्यतः [8]पर्यटेद्विद्वा[9]नतीतो न [10]निवर्तते ॥१३॥
[11]न च दत्तं [12]परित्याज्यं [13]लशुनं मांसमेव वा ।
[14]अन्यद्वा [15]यदभक्ष्यं [16]स्यात्पलाण्ड्वादिकमुद्यतम् ॥१४॥
[17]वर्ज्यं [18]दृष्ट्वा यथाग्राह्यं [19]पात्रवह्निबलेक्षणात् ।
निर्दोषं मुनिशार्दूल [20]तद्भक्ष्यमविशङ्कया ॥१५॥

---

[1] व्योमव्यापिपदमन्त्रे 'सूक्ष्मामृतम्' इति पदं न दृश्यते। 'सूक्ष्म सूक्ष्म' इत्येव वर्तते। एतच्च ७४ तमं पदम्। 'अमृतम्' इति पदमन्त्रादन्यन्मन्त्रमिति भाति। अथवा अमृतात्मकं 'सूक्ष्मसूक्ष्म' इति पदमन्त्रमिति व्याख्येयम्।; सूक्ष्मामृतं परं स्मृत्वा — च.

[2] गृह्यमन्तं सदा — च; ग्राह्यमान सदा — छ.

[3] बुधः — ख.

[4] १३ श्लोकस्य प्रथमपादः 'ख' मातृकायां न दृश्यते।; ज्वलद . . र्भेण — ओ.

[5] तं पात्रं — च.

[6] ज्वलन्तं परि० — ओ, ख, ङ, च, छ, ज.

[7] 'भिक्षां देहीति संकल्प्य पादाङ्गुष्ठाग्रनेत्रकः ।
तावत्कालं प्रतीक्षेत यावद्गौर्वत्सयोगतः ॥
प्रस्नवं च समाप्नोति ततोऽन्यत्र व्रजेन्मुनिः ।
गच्छन्पुनर्निवर्तेत समाहूतो न तत्र वै ॥
यजमानादिभिर्नीतामाददीत पुनर्मुनिः ।'
(अचिन्त्यविश्वसादाख्ये ४७.६८–७०पू०);
'चतुर्णां शुद्धवर्णानां समासाद्य गृहाङ्गणम् ।
भिक्षां देहीति संजल्प्य पादाङ्गुष्ठाग्रलोचनः ॥
तावत्कालं प्रतीक्षेत यावद्गौर्वत्सयोगतः ।
प्रस्नवं समवाप्नोति ततोऽन्यत्र व्रजेन्मुनिः ।
व्रजन्नपि समाहूतो नागच्छेत्तत्प्रसादतः ।
यजमानजनानीतां भिक्षां तत्रैव चाहरेत् ॥'
(सोमशम्भुपद्धतिः १.९.३७–३९).

[8] पर्यटे द्वारं नातीतं न — ओ.

[9] ०नतीतं न — ख, ङ; ०नतितन्न — छ, ज.

[10] निवर्त्यते — ख.

[11] न चं तमपरित्यज्य ल० — छ, ज.

[12] परित्यज्य ल० — ख.

[13] लवणं मांस० — च; लशुमं गमेव वा–छ, ज.

[14] अन्यद्यदभक्ष्यं—ओ; अन्यद्वा थदभक्ष्यं—छ, ज.

[15] यदभक्षं — ख.

[16] स्यात्फलाण्ड्वादिक० — ओ; स्यात्फल . . मुद्यतः—ख; स्यात्फलं पादिकमुद्यमम् — ङ; स्यात्पलाड्वादिक० — च; स्यात् फलं ज्योतिकमुद्यतः — छ, ज.

[17] त्याज्यं — ख; वर्जं — ङ; त्याज्यां–छ, ज;
'कतकं मधुशिग्रू च पलाण्डुं लाशुनामिषे ।
व्यञ्जनं हस्तदत्तं च लवणं परिवर्जयेत् ।'
(सोमशम्भुपद्धतिः १.९.१८);
'मद्यं मांसं च लशुनं पलाण्डुं शिग्रुमेव च ।
श्लेष्मातकं विड्वराहमभक्ष्यं वर्जयेन्नरः ॥'
(रुद्राक्षजाबालोपनिषत् ४३);
'त्यक्त्वाग्रं च न शाकाद्यं लशुनालाबुकादिकम् ।
मत्स्यमांसादिकं चैव भक्ष्यं यच्च विरोधकृत् ॥
पात्रे प्रपतितं भोज्यं स्वयं हृत्वा न भक्षयेत् ।'
(किरणे चर्या० १५. २२, २३पू०)

[18] दृष्ट्वान्यथा ग्राह्यं — ओ, ङ; दृष्ट्वान्यथा ग्राह्य — च.

[19] प . . . ति बलेक्षणात् — ओ; पात्रं वह्नि० — ख; वस्त्रवह्निबलात् क्षणात् — च.

[20] तद्भक्षमवि० — ङ.

[ [1]भिक्षाटनानन्तरकरणीयविधिः ]

[2]सम्यगेवमटित्वा तु प्रसन्नवदनः सुधीः ।
[3]यायादसंस्पृशं[4]ल्लोकान्नातिपर्याप्तमेव हि ॥१६॥
[5]प्राप्यायतनमानीय [6]स्थापयेत्तां पिधाय च[7] ।
[8]पूर्ववत्क्षालयित्वा तु कट्यादिकमथाम्भसा[9] ॥१७॥
[10]स्नायाद्वा भस्मना मन्त्री [11]शिवमन्त्रमनुस्मरन् ।
[12]आचामेद्विधिवत्पश्चा[13]त्स्वतन्त्रमनुपालयेत् ॥१८॥
[14]तत्पात्रं [15]प्रोक्षयित्वा तु शिवीकरणमारभेत् ।
पूर्ववत्सकलीकृत्य[16] [17]पृथगन्नं विभज्य च ॥१९॥
[18]निर्दहेद्ध्यानमास्थाय निर्दग्धममृतेन [19]तत् ।

---

[1] 'गुर्वग्निशिवविद्याभ्यः क्षेत्रपालाय चांशकम् ।
समुद्धृत्य सहायेन विभज्याद्यात्क्षितौ शुचिः ॥'
(मृगेन्द्रे चर्या० १.८४. उ०, ८५ पू०);
'भिक्षित्वा पात्रपूर्णान्तिमथवा तृप्तिमात्रकम् ।
जगतां शोभनं ध्यात्वा स्वाश्रमं च व्रजेत्तथा ॥
भिक्षापात्रं शुचिस्थाने स्थापयित्वाथ भिक्षुकः ।
पादप्रक्षालनं कृत्वा चोद्धूल्य सकलां तनुम् ॥
आचम्य विधिवत्पात्रं प्रपूज्यास्त्रेण दीपयेत् ।
चन्द्रामृतेन संप्रोक्ष्य मुद्रया धेनुमुद्रया ॥
त्रिभागं कुर्यात्पश्चाद्वै देवाय गुरवे तथा ।
तृतीयं भागमादाय स्वात्मनो भोजनाय वै ॥'
(अचिन्त्यविश्वसादाख्ये ४७. ७२–७५);
'ततो भिक्षामटित्वेत्थं पात्रपूर्त्यवसानिकम् ।
लोकानां शुभमाशंसन्व्रजेदाश्रममात्मनः ॥
भिक्षापात्रं शुचिस्थाने धृत्वाचम्य यथा पुरा ।
उद्धूल्य सकलीकृत्य तां प्रोक्ष्यास्त्रेण दीपयेत् ॥
त्र्यक्षरेणामृतीकृत्य कुर्याद्भागत्रयं व्रती ।
भागं निवेद्य देवाय गुरवे च द्वितीयकम् ॥
तृतीयं प्राणरक्षार्थमुपभुञ्जीत पूर्ववत् ।'
(सोमशम्भुपद्धतिः १.९.४१–४४पू०);
'भिक्षामानीय तामेव स्थाप्य स्थाने सिते समे ।
प्रक्षाल्य हस्तपादादि पूर्ववच्चाचमेत्पुनः ॥
हृदा संप्रोक्ष्य तां दद्याच्छिवाय गुरवे पुनः ।
भोजनं तु ततः कार्यम्'
(किरणे चर्या० ३.९,१०).

[2] संम्यगेवमुदित्वा — ओ; सम्यगेवं विदित्वा — ख, छ, ज; सम्यगेव विदित्वा — ङ.

[3] यो यां न संस्पृशेल्लोकान्ननि पर्याप्त० — ओ; . . दं स्पृशेल्लोन . . तिपर्याप्त० — ख; यो यं न संस्पृशे लोका ननिपर्याप्त० — ङ; यावदं स्पृशल्लो न त्रिपर्याप्त० — छ, ज.

[4] ०ल्लोकानिति पर्याप्त० — च.

[5] प्राप्यायवनमानीय — ओ; प्राप्यावसथमेवं हि— च.

[6] तद्विधाय तु पूर्ववत् — ओ; स्थापयेत्तं पि०–च

[7] ०त्तद्विधाय तु — ख, ङ, छ, ज.

[8] क्षालयित्वा तु कट्यादि चाम्भसाथ वासन — ओ.

[9] ०दिमथवाम्भसा — ख, ङ, छ, ज.

[10] यद्वा च — ओ; स्नायाच्चा — ख; स्नायीत — च.

[11] शिवतत्त्वमनु० — ओ, ख, ङ, छ, ज.

[12] आचमेद्विविधः प० — ख; आचमेद्विधि० — ङ, च, छ, ज.

[13] ०त्स्ववृत्तमनु — ओ, ख, ङ, छ; ०त्स्व . . — ज.

[14] पात्रं संप्रोक्ष० — ओ.

[15] प्रोक्षयित्वाथ — ख; क्षालयित्वा तु — ज.

[16] ०कृत्वा — ओ, च.

[17] पृथगन्यं — ज.

[18] इदमर्धं 'ज' मातृकायां लुप्तम् ।; निर्दहन्ध्यान — ख; निर्दहस्यानमस्ताय — छ.

[19] तु — ओ, ङ, च.

[1]प्लावयेद्यत्नतो मन्त्री [2]लिङ्गाचार्यानलात्मसु[3] ॥२०॥
[4]तत्पर्यग्निकृतं सम्यक्प्रोक्षयेत्तु[5] शिवाम्भसा ।
[6]बल्यर्थं[7]मुचितं शेष[8]मतिथिभ्यः प्रदापयेत् ॥२१॥

[ [9]भोजनपात्रम् तत्र शस्तमशस्तं च ]

[10]ग्राह्यमन्नं ततस्तूष्णीं [11]मृत्पात्रेषूपलेषु वा[12] ।
[13]पर्णेषु वा [14]विचित्रेषु [15]भुञ्जीतान्नमकुत्सितम्[16] ॥२२॥
कुर्याद्विभवतो [17]वाथ मनः[18]प्रह्लादकं विधिम् ।
एरण्डार्क[19]वटाश्वत्थ[20]प्लक्षकेतकपर्णिषु[21] ॥२३॥

---

[1] प्नावये० — ङ; प्लावयेद्यतो म० — च; प्लावयेद्यत्नयो म० — ज.

[2] लिग . . . . त्मसु — ज.

[3] ०चार्यमलात्मसु — ओ; ०चार्यान्नलात्मसु — छ.

[4] तत्पर्यग्नीकृतं — ख.

[5] ०प्रोक्षयेत — ख, छ, ज; ०प्रोक्षयेच्च — च.

[6] बल्यर्धमुचितं — च.

[7] ०मुचितशेष० — ङ.

[8] ०मतिथेश्च प्र० — ओ, ख, ङ, घ, ज.

[9] 'भाजनं यद्गुरोर्हैमं रौप्यं स्यात्साधकस्य तु। ताम्रकं पुत्रकस्योक्तं लोहजं समयार्थिनः ॥ अभावात्ताम्रमेकं वा कांस्येऽन्नं न हि दापयेत् । अभावात्कांस्यजं प्रोक्तं घोरजप्तं तु तत्समम् ॥ शरावं पद्मिनीपत्रं शाकजं ब्रह्मवृक्षजम् । राजीवोत्पलरम्भोत्थं मधूकं पीतवृक्षजम् ॥ पत्रं संगृह्य भोक्तव्यमेकं तेषां यथेच्छया । पत्रेषु भिन्नरूपाणि भोजने वर्जयेत्सदा ॥ एरण्डाश्वत्थकं चार्कपैशाचतरुजं त्यजेत् ।' (किरणे० चर्या १५.१५–१९ पू०); 'हैमराजतताम्रे च लोहपात्रे सुशोधिते । गुरुः स साधकश्चैव पुत्रश्च समयी क्रमात् ॥ सरोजपत्रपालाशं कदलीपनसं तथा । आम्रपत्रं नालिकेरं मधूकं च तथैव च ॥ अन्यच्च पावनं पत्रमनिन्दितममत्रकम् । कांस्ये तु भस्मना शुद्धे सप्तधा पत्रकेऽथवा ॥ बहुरूपाभिजप्ते च पात्रशुद्धिर्भवेत्तदा । पादादिसर्जभल्लातप्लक्षाश्वत्थार्कसंभवैः ॥ एरण्डालाबुजैः पत्रैरर्कपत्रैश्च शोभनैः । दुर्गन्धयुक्तैरन्यैश्च निषिद्धैर्भोजनं तु वा [ न च] भौतिकस्य विशेषेण पालाशं पद्मिनीदलम् । अयोग्यं भोजने तत्र भुक्तिश्चेद्दोष एव च ॥ नैष्ठिकस्यापि तत्पात्रे भोजनं पापनाशनम् ।' (अचिन्त्यविश्वसादाख्ये ४७. २९–३५पू०); 'न्यग्रोधाश्वत्थपत्रेषु वातघ्नाक्षदलेषु च । कांस्ये वाभोजनं भैक्षं चातुर्वर्ण्यमकुत्सितम् ॥' (मृगेन्द्रे चर्या० १.१३).

[10] ग्राह्यामन्नं ततस्त्रीणि — ङ; ०प्रगृह्यानलस्तूष्णीं — च.

[11] तत्पात्रेषु पलेषु वा — ङ.

[12] ०षूपलपेषु वा — ओ; ०षु पलेषु वा — छ, ज.

[13] वर्णेषु — ओ, ख, छ.

[14] विचित्रासु — ज.

[15] भुञ्जीतान्नं सकुत्सितम् — च.

[16] ०मकुत्सितः — ओ.

[17] नाथ — ख, छ, ज.

[18] ०प्रह्लादकरं विधिः — ओ, ङ; ० प्रासादकं विधिम् — ख; ०प्रह्लादनं विधिम् — च.

[19] ०वचाश्वत्थ० — च.

[20] ०वृक्षकेतकिपर्णसु — ओ; ०प्लक्षकेतकिपर्णसु — ङ, च.

[21] ०पर्णसु – ख, ज; 'पर्णिषु' इति पाठः शोधितः ।

न [1]भुञ्जीत [2]कदाचित्तु भूमौ [3]शस्तं हि भोजनम् ।

[ [4]भोजनविधिः ]

ध्यात्वाग्नि[5]मात्मनः [6]कोष्ठे [7]ज्वलन्तं च शिखोन्नतम् ॥२४॥
तेजः[8]शब्दादिना कृत्वा पदं [9]यावद्धि पञ्चकम् ।
पञ्च [10]भक्ष्या ह्यधूमान्तै[11]रन्नस्याहुतयः क्रमात् ॥२५॥
[12]प्राणाद्याः [13]प्रथमं [14]वाद्यास्ततो भुञ्जीत लेशया ।
[15]विभवस्यानुरूपेण ज्ञात्वा [16]स्वात्मबलाबलम् ॥२६॥
[17]यावज्जन्तोर्भवेच्छक्तिरविकारेण सुव्रत ।
[18]तावदद्याद्; [19]विधिस्थेन [20]यतिना गृहिणापि वा ॥२७॥

---

[1] भुञ्जीयात्कदाचिच्च — ओ, ङ.

[2] कदाचिच्च — च.

[3] शस्तमभोजनम्—ओ; शस्तं भोजनम् — ङ; 'कृतभूमौ तु भुञ्जीत' आपस्तम्बधर्म० १.१७.८)

[4] 'तदूर्ध्वं भोजनं कार्यमापोशनपुरःसरम् ।
ब्रह्माक्षरेण तं जप्त्वा त्र्यक्षरेणान्नमेव च ॥
सप्राणादिविभागेन हुत्वा पञ्चाहुतीः क्रमात् ।
मौनमास्थाय भोक्तव्यं साधकादित्रयेण तु ॥
भोक्तव्यं प्रभुणा यद्वदाचार्येण यथेच्छया ।'
(किरणे चर्या० १५. १९.उ०–२१);
'स्नानं तु भस्मना चैव रेखया रक्षणं भवेत् ।
जानुमध्यकरो भूत्वा मौनी वीरासनस्थितः ॥
वामहस्तेन संस्पृष्ट्वा पात्रमन्येन च स्पृशेत् ।
पूर्णाभिमन्त्रितं पूतं श्रद्धया जाठराग्निके ॥
अस्त्रमन्त्रेण संदीप्ते जुहुयात्सघृतास्पदम् ।
आपोशनं पुनः कृत्वा प्रणवत्राणसंयुतः ॥
स्वाहान्तैराहुतीः पञ्च जुहुयान्नन्दिकेश्वर ।
नागः कूर्मोऽथ कृकरो देवदत्तधनंजयौ ॥
उपप्राणाय स्वाहा । ओं प्राणाय स्वाहेति प्राणाहुतीर्दत्त्वा, विधिना भुक्त्वा 'ओं अमृतापिधानमसि' मन्त्रेण प्रक्षालितहस्तेन चुलुकं गृह्याचामेदिति ।'
(आचेन्त्यविश्वसादाख्ये ४७.३५उ०–४०)

[5] ०मात्मना — ओ, ङ.

[6] काष्टे — ओ; काष्ठे — ख.

[7] ज्वलत्पञ्चशिखोन्नतः — ओ; ज्वलत्पञ्चशिखोन्नतम् — ख, ङ, छ, ज.

[8] ०शब्दादितः कृत्वा — च.

[9] यो . . द्विपञ्चकम् — ओ; यावद्विचक्रमन् — च; या सिद्धिपञ्चकम् — छ; य या सिद्धपञ्चकम् — ज.

[10] दत्वाप्यधू० — ओ; दप्यान्त धूमान्तै० — ख, छ,ज; दत्वा बुधूमान्तै० — ङ; भैक्ष्या अधूमान्ते — च.

[11] ०रत्तस्याहुतयः — ओ; ०रत्नस्याहुतयः — ङ; ०ऽनन्तस्याहुतयः — च; ०रन्यस्याहुतयः — छ, ज.

[12] प्रणवाद्या—ओ, ङ; प्राणाद्या—ख, च, छ, ज.

[13] प्रथं वाद्यात्ततो भु० — ओ; प्रथमं वाथ ततो भुञ्जत — ङ.

[14] वाद्यात्ततो भु० — ख; त्वद्या तनो भु० — च; वाद्या ततो भु० — छ, ज.

[15] वितवस्या० — छ, ज.

[16] सम्यग्बला० — च.

[17] यावज्जन्तो भवे . . रेण — ओ; यावज्जाग्रद्भवे० — च; यावर्जतो भवे छक्यरविकारेण — छ, ज.

[18] तावद्वा विधिवत्स्वेनं — ख; तद्वच्च विधिवत्स्वेन — ङ; तावदर्घ्यविधिस्थेन — च; तावद्वा विधिवत्स्वेन — छ, ज.

[19] विधिस्वेन — ओ.

[20] ग्रहिणा यतिनापि वा — ओ, ङ; गृहिणा यतिनापि वा — ख; गृहाणा यतिनापि वा — छ; गृहाण्या यतिनापि वा — ज.

[1]नान्यतः पतितानां वा गृहाद्भैक्ष्यं [2]कथंचन ।
[3]किंचित्कदाचिदप्येकं [4]ग्राह्यमुक्त्वा गुरोर्वचः ॥२८॥
[5]स्वगृहेऽप्याचितं भक्त्या [6]यदानीतं परेण तु ।
पूर्वोक्तमखिलं कृत्वा भोक्तव्यं नान्यथा क्वचित् ॥२९॥
दीक्षितेष्वथ [7]वर्णेषु [8]गृहिणा तु न कुत्सितम् ।
भोक्तव्यं [9]भक्तियुक्तेषु [10]त्यक्त्वा [11]मृतकसूतके ॥३०॥
[12]गर्भाधानादिचूडान्ताः संस्कारा ये प्रकीर्तिताः ।
[13]संस्कारेष्वेषु विप्रेन्द्र न भोक्तव्यं कदाचन ॥३१॥
[14]यज्ञेष्वपि [15]हि शेषेषु भोक्तव्य[16]मविशङ्कितैः ।
प्रमादतो [17]वाभक्तेषु जपेत्सद्यादिपञ्चकम् ॥३२॥
[18]शतं सहस्रमर्धं वा भुक्त्वा मृतकसूतके ।
[19]येष्वत्र[20] नाधिकारोऽस्ति [21]दानादानविधौ मुने ॥३३॥

---

[1] नान्यत्र यतिना स्यक्यात् ग्रहात् भक्ष्यं — ओ; नान्यत्र यतिना ग्राह्यं गृहाद्भक्ष्यं — ख, छ,ज; नान्यत्र यदिना गृहाद्भक्ष्यं — ङ; नान्यत्र–च.

[2] कदाचन — च.

[3] न किंचिदधिग गदा समभिक्त्यै गुरो० — ओ; . . . ग्रासमुक्त्वा गुरो० — ख; किंचित्कादिदमप्येकं ग्रासमुक्त्वा गुरो वच — ङ; किंचित्कदाचिदप्येवकं ग्रास मु गुरो० — छ, ज.

[4] ग्रासं मुक्त्वा — च.

[5] सह ग्रहया . . .नितः परेण — ओ.

[6] यदानीतः — ख, छ, ज; धरदां नीतः — ङ; 'आनीयायाचमानाय श्रद्धया यत्प्रदीयते । अन्नादिभूमिपर्यन्तं सा भिक्षा स्यादयाचिता ॥' (सोमशम्भुपद्धतिः १.९.२५)

[7] व . . . कुत्सिता — ख; 'वर्णेषु' इत्यत्र 'च' मातृकायां 'वर्णे' इत्येव दृश्यते ।

[8] ग्रहिणे नात्र कुत्सिता — ओ, ख; गृहिणे नात्र कुत्सिता—ङ; गृहिणां तु–च; गृहेणत्र न कुत्सिता — छ; गृहेण नात्र कुत्सिता — ज.

[9] भुक्तियुक्तेभ्यः — ओ, ङ; भक्तियुक्तेभ्यः— ख, च, छ, ज.

[10] सत्यक् वा मृतसूतके–छ; सत्यवा मृतसूतके–ज.

[11] मृतसूतकौ — च.

[12] ३१ श्लोकादारभ्य ३३ श्लोकस्य पूर्वार्धान्तो भागः 'ख, छ, ज'; मातृकासु न दृश्यते ।; 'अष्टकायां पुंसवने भुक्त्वा वामशतं जपेत् । अन्नप्राशननिष्क्रामे भुक्त्वा वक्त्रशतं जपेत् ॥ चूडाव्रतेऽथ गोदाने विवाहे न च दोषभाक् ।' (किरणे चर्या० १२.१३, १४ पू०); 'सीमन्तोन्नयनाद्येषु संस्कारेष्वन्नवर्जनम्' (मृगेन्द्रे चर्या० १.१४ उ०); गर्भाधाना . . .चूडान्ता ये — ओ; गर्भादानादि० — ङ; गर्भाधानादितः कृत्वा चूडाशेषेषु कर्मसु — च.

[13] संस्कास्तेषु — ओ; संस्कारास्तेषु — ङ, च.

[14] 'पाकादिषु ऋतुष्वन्नं भोक्तव्यं पावनं यतः ।' (किरणे चर्या० १२. १५ पू०)

[15] विशेषेण भो० — च.

[16] ०मपिशंकितैः — ओ.

[17] वा भुञ्जेत जपेत् — ङ; वा भुङ्क्तेऽन्नं जपेत् — च.

[18] . . . मथवा भुक्त्वा — ओ; . . . अथवा भूत्वा मृतक० — ङ.

[19] तेष्वत्राधिकारोऽस्ति — ओ; तेष्वत्र नाथकारोऽस्ति — छ, ज.

[20] तेष्वत्र — ख, ङ.

[21] दानदानविध . . ने — ओ.

[1]स्वाचारेणैव [2]ते त्यक्ताः प्रमादादयुतं जपेत्।
विद्याङ्ग[3]पञ्चकस्यात्र ततः [4]शुध्यत्यसंशयः ॥३४॥

[ उक्तार्थोपसंहारः, वक्ष्यमाणोपक्रमश्च ]

[5]येनैतज्जगदोतुकास्यकिरणैः प्रख्यात[6]वीर्योद्वहै-
[7]स्तद्वक्त्रामलबोधवस्तुनिवह[8]प्रस्तारमार्गो मया।
[9]व्याख्यातो [10]भुवि वर्तनाय विधिवद्भिक्षाटनान्तं मुने[11]
[12]स्वाम्नायस्थितिपालनार्थमुचितं देशाटनं वर्ण्यते ॥३५॥

इति श्रीमतङ्गपारमेश्वरे[13] चर्यापादे [14]भिक्षाटनपटलः सप्तमः[15] ॥
सप्तमः पटलः

---

[1] 'स्वाचारेणैव' इत्यस्य स्थाने 'ओ' मातृकायां 'स्वाचारेणैव ते' इति दृश्यते।
[2] ते युक्तामप्रमादा० — ओ; ते व्यक्तं . . पेत् — ख; ते व्यक्ताः प्र० — ङ, छ, ज.
[3] ०पञ्चकार्यस्य ततः — ओ.
[4] शुद्धचर्थसंशयः — ख.
[5] येने तज्जगदातु रंस्वकिरणैः — ओ; येनोक्तं जगदातुरस्य किरणैः — ख; येनोक्तं जगदातुरंगस्वकिरणैः — ङ; येनोक्तं जगदातुरं स्वकिरणैः — च; येनोतं जगदातुरस्वकिरणैः — छ, ज.
[6] ०वीर्योद्भवै० — ओ, ख, छ, ज; ०वीर्योभवै० — ङ.
[7] ०स्तद्विज्ञामल० — ओ.
[8] प्रस्तारमार्गै — ओ, च; ०प्रस्तायमार्गे — ङ.
[9] विख्यातं — ओ, ङ; व्याख्याता — ख, छ, ज; व्याख्यानं — च.
[10] भुव वत्तानाय विधि० — ओ; भुवि च . . .नन्ते मुने — ख; तु विवर्तनाय विधि० — च.
[11] ०वद्भिक्षाटनं ते . . ओ; ०वद्भिक्षाटनं ते मुने — ङ, छ, ज.
[12] ज. . . नार्थमुचितं. . .नं वर्ण्यते—ओ; स्वार्थानामुचितं देशाटनं — ङ; स्वाम्नावस्थिति० — छ, ज.
[13] 'च' मातृकायां 'पारमेश्वरे' इत्यस्यानन्तरं 'महातन्त्रे' इत्यधिकं दृश्यते।
[14] भिक्षापटलः — ओ.
[15] पटलपुष्पिकानन्तरं 'ओ' मातृकायां 'चर्यापादं समाप्तम्" इति वर्तते। अत्र ८, ९, १० पटलत्रयं च न दृश्यते।

# अष्टमः पटलः

## प्रवासनम्

[1]अथ देशान्तरप्राप्त्यै विधानमिदमुत्तमम् ।
[2]संक्षेपाद्वचक्तितः [3]सिद्धं तद्वक्ष्यामि [4]तवाधुना ॥१॥
देवाग्निगुरु[5]कार्येण [6]स्वात्मीयेनाथ संयमी ।
[7]अन्येषामथ वृद्धानां [8]यायान्मन्त्री सहायवान् ॥२॥
[9]एकेन [10]वाथ द्वाभ्यां वा त्रिभिर्वा विनयान्वितैः ।
[11]नासहायो [12]व्रजेद्विद्वान्पदमेकमपि क्वचित् ॥३॥
गन्तव्य[13]मथवावश्यं सहायस्याप्यसंभवे[14] ।

[ [15]कमण्डलु ]

[16]सदात्मशुद्धये[17] कार्यं[18] साधकेन [19]कमण्डलु ॥४॥
[20]कृत्वा श्लक्ष्णत्वचं भद्रं सुपक्वं [21]निर्व्रणं शुभम्[22] ।

---

[1] अ. . .प्त्य वि०—ख; अथ देशान्तरप्राप्तै—ङ.
[2] संक्षेपतोक्तितः — ख, ङ, छ, ज.
[3] सत्त्वं — ख, ङ, छ, ज.
[4] मयाधुना — ज.
[5] ०कार्येषु — ख, ङ, छ, ज.
[6] स्वाम्नायेथ — ख; स्वाम्नायेनाथ — ङ; स्वम्नेयेनाथ — छ, ज.
[7] अन्येऽथ. . मबुद्धा. . सहा० — ख; अन्येषामपि बुद्धानामव्यायाम्म सहा० — ङ; अन्यशेषामथ बुद्धानां व्यायान्मन्त्रि सहा० — छ; अन्यशेषामसंबुद्धानाव्योयान्मन्त्री सहा० — ज.
[8] यायान्मन्त्रः सहा० — च.
[9] एका. . . त्रिभिन्ना विन० — च; सौकना वासा द्वाभ्यां — छ; एक न वासा द्वाभ्यां — ज.
[10] वाक्त्वथ द्वाभ्यां — ङ.
[11] 'ससहायो वनं गत्वा व्रतचर्यां समारभेत् ।
असहायो यदा तस्मिन्सुसहायः कमण्डलुः ॥'
(किरणे चर्या० १९.४); असहायो — ख, छ, ज; ससहायो — ङ.
[12] प्रजेद्विवान् — छ; प्रजेद्विद्वान् — ज.
[13] ०मथवा वर्त्म . . य सासिस. . । —ख.
[14] ०प्यसंभवात् — च; ०प्यसंभवेत् — छ, ज.
[15] 'कमण्डलुविधिं शृणु ।
पूरितं चाढकैः श्रेष्ठं मध्यं त्रिप्रस्थपूरितम् ॥
द्विप्रस्थपूर्णमधमं मानमेवं कमण्डलोः ।
सौवर्णं राजतं वापि ताम्रं वा मृण्मयं तु वा ॥
यदुक्तं शिल्पशास्त्रेषु तत्तदुक्तानुकारयेत् ॥'
(सुप्रभेदे योग० ३.५०उ०–५२)
[16] तदवधार्यं गन्तव्यं साधकेन — च.
[17] तदात्मशुद्धये — ङ.
[18] कार्यः — ख;
[19] कमण्डलुः — ख; तु मण्डलम् — ङ; कमण्डलुम् — च; कमण्डलू — छ.
[20] कृष्णत्वचं यथाभद्रं — ख, ङ, छ, ज.
[21] निर्वृणं — छ, ज.
[22] समम् — ङ, छ, ज.

[1]अकृष्णलाञ्छनं [2]सम्यग्दृढं [3]शोधितया [4]मृदा ॥५॥
[5]कृतं [6]गोशकृता चोर्ध्वं बृहद्ग्रीवं सुवर्तुलम् ।
[7]नातिस्थूलं नातिकृशं [8]बहिस्तल्लेशतो मृदा ॥६॥
[9]लिप्तं श्लक्ष्णीकृतं शुष्कं [10]पाच्यं तच्छिववह्निना ।

[ [11]कमण्डलुशुद्धिः ]

पक्वमीशानदेवेन[12] [13]ग्राह्यं क्षाल्य मुखेन च ॥७॥
[14]अघोरेणाभिजप्तव्यं गुह्यमन्त्रेण [15]पूरितम् ।
[16]परिसृतेन वस्त्रेण [17]विमलेनाम्भसा शनैः ॥८॥
सद्योजातेन मन्त्रेण ततः [18]संधारयेत्सदा ।
[19]आत्मनोऽङ्गसमं नित्यं [20]न स्प्रष्टव्यं परेण तु ॥९॥

---

[1] सकृष्ण० — ङ.
[2] सम्यग्दृढशो. . तया—ख; सम्यग्दृढशोधि०—ङ; सम्यग्दृशि शोधि० — छ, ज.
[3] गलितया — च.
[4] भृदा — छ.
[5] कृतशौचकृता पूर्वं बृ० — ख, ङ, छ, ज.
[6] गोशकृतामूर्ध्वं — च.
[7] नातिस्फुटं — ख, ङ, छ, ज.
[8] बहिष्ठं लेशिनो मृता — ख, ङ; बहिस्तं लेशतो — च; बहिष्ठं लेशिनो मृदा — छ, ज.
[9] लिप्तपाष्णि कृशं शुक्लं — ख, छ; लुप्तपार्ष्णि कृतं शुक्लं — ङ; लिप्तपाणिकृतं शुक्लं — ज.
[10] पाच्च तत्क वह्निना — ख; पाच्चन्तत्कृतवह्निना — ङ; पाचुं तत्कृतवह्निना — छ; पाचं तत्कृतवह्निना — ज.
[11] 'गृहीत्वा सद्यमन्त्रेण स्थापयेद्गुह्यकेन तु ।
धूपयेद्घोरमन्त्रेण वक्त्रेणोद्धारणं भवेत् ॥
प्रक्षाल्य पञ्चमेनेदं वामदेवेन पूरयेत् ।
पूरितं दर्शयेद्भानोर्बहुरूपेण मन्त्रवित् ।
शिवाय गुरवे पश्चात्सनिनादं निवेदयेत् ।
निवेद्याजेन संस्थाप्य व्यक्तितो कटकेऽपि वा ।
पश्चाच्छिवेन संप्रोक्ष्य तदारम्य शुचिर्भवेत् ।
अन्येषामशुचिर्यस्मात्तस्यै तस्य शुचिः स च ।
शौचमेवं प्रकर्तव्यं तथैव ऋषिभिस्त्रिधा ॥
कमण्डलोर्यथाप्रोक्तम्'
(किरणे चर्या० १९.५उ०–१०पू०);
'असहायस्य योगीन्द्र सखा एव कमण्डलुः ।
प्रज्वाल्याग्निमघोरेणाप्यस्त्रेण च विधानवित् ॥
प्रातरुत्थाय तं नित्यं दहेदेव कमण्डलुम् ।
ताम्रमम्लेन संशोध्य तथास्त्रोदकभस्मना ॥
रौप्यहैमौ तु संशोध्य लेपगन्धमलान्वितौ ।
ततस्त्वापूरयेत्पश्चाद्वस्त्रपूतेन वारिणा ॥
पाद्यमाचमनं शौचमाचरेत्सततं क्रमात् ॥'
(सर्वज्ञानोत्तरे चर्या० कमण्डलुप्रकरणे टि. ३३४. पृ० १३९.)
[12] ०देवस्य — ख, ङ, छ, ज.
[13] गृह्य क्षाल्यनुमेव च — च.
[14] अघोरेणापि यत्तव्यं — ख, ङ, छ, ज.
[15] भूरितम् — ख, ङ, छ, ज.
[16] सुपरिसृतवस्तस्य — ख; सुपरिसृतवस्त्रस्य — ङ; परिश्रुतेन शस्त्रेण — च; सुपरिस्तृतवस्त्रस्य — छ, ज.
[17] विमलस्याम्भसजनैः — ख; विमलस्याम्भसः शनैः — ङ, छ, ज; विपलेनाम्भसा — च.
[18] संधानयेत्. .—ख; संधानयेत्सदा—ङ, छ, ज.
[19] . . .नन्नित्यं — ख; आत्मनो गमनं नित्यं ङ, छ; आत्मनाङ्गसमं नित्यं — च; आत्मन्नो गमनं नित्यं — ज.
[20] निकृष्टमपरेण — ख, ङ, छ, ज.

कृत्वा शौचं यथान्यायं करौ तु परिशोधयेत् ।
मार्जयेद्वहुरूपेण पुनः संस्थाप्य मूर्तिना ॥१०॥
[1]तस्माद्ग्राह्यं [2]तदीशेन तदभावान्महामुने ।
सुकृतं [3]वा कुलालेन [4]ग्राह्यं [5]शुद्धचै विपश्चिता ॥११॥

[ [6]मृदाद्याहरणम् ]

पूर्वोक्तेन विधानेन ततोऽसौ पर्यटेन्महीम् ।
मृद्भस्म[7]दन्तकाष्ठानां गोमयस्य च नित्यशः ॥१२॥
[8]यत्नः सदा परः [9]कार्यश्चरता धरणीतले ।

[ महेशाश्रमे वासः ]

दृष्ट्वाश्रमं [10]महेशस्य स्नात्वा संपूज्य [11]कारणम् ॥१३॥
वसेत्तत्रैव हृष्टात्मा [12]तदभावान्महामुने ।

[ शिवभक्तगृहे शैवाचार्यगृहे वा वासः ]

[13]वस्तव्यं शिवभक्तानां [14]गृहेषु नियतात्मनाम् ॥१४॥
[15]शैवेषु [16]वा परिज्ञाय स्वाम्नायाचारसाधुषु ।
यदि तत्र भवेत्कश्चि[17]दाचार्यः शिवसंमतः[18] ॥१५॥
[19]ज्यायांस्तदा प्रकर्तव्यं विधानमिदमत्र तु ।

---

[1] तस्या अ. . . तदभावा० — ख; तस्माद्ग्राम्यं सदीशेन — ङ.
[2] सदेशेन — च; सदिशेन — छ; सदीशेन — ज.
[3] बाहुलालेन — ख; बहुलालेन — ङ; बाहु . . — छ, ज.
[4] ग्राह्या — ख, ङ, छ, ज.
[5] शुद्धा — ख, ङ, छ, ज.
[6] 'ततश्च सवने ब्राह्मे समिदाद्याहरेत्ततः।' (मृगेन्द्रे चर्या० १.८८उ०); 'उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान्। आहरेद्यावदर्थानि' (मनुस्मृतिः २.१८२)
[7] . . ण्डकापर्ा . . स्य—ख; ०दण्डकाष्टानां—ज.
[8] यत्नतः सरा परं — ख; युक्तः सदा — ङ; यत्तः सरा परं — छ, ज.
[9] कार्यं चरता — ङ.
[10] सदेशस्य — ख, ङ; सदेवस्य — छ, ज.
[11] कारणः — छ, ज.
[12] तदभावा . . मुने—ख; तदभावा महा० — ङ.
[13] वस्तव्या — छ.
[14] गृहैर्वा नि० — ङ.
[15] शव्येषु — ख; शिवेषु — छ, ज.
[16] सा परि० — ख; चा परिज्ञा च स्वा० — ङ; सा परिज्ञा च स्वा० — छ, ज.
[17] ०दाचारशिव० — ख; ०दाचारः शिव० — ङ; ०दाचारः जीव० — छ; ०दाचारजीव० — ज.
[18] ०संमतम् — ङ; संमितः — छ, ज.
[19] . . . रा प्रकर्तव्यं — ख; व्यायान्तरा प्र० — ङ, छ, ज.

### [ शैवाचार्यगृहे कर्तव्यं विधानम् ]

संघृष्य गोमयेनादौ [१]स्थानं पात्रं [२]निधापयेत् ॥१६॥
मृदा [३]कटचादि संक्षाल्यमम्बुना [४]चैव पूर्ववत् ।
[५]स्नायाच्च विधिवत्प्राज्ञो [६]भस्मना च[७] सुयन्त्रितः ॥१७॥
कृत्वा [८]स्नानोत्तरं [९]सर्वं यदि [१०]तत्राश्रमं विभोः ।
[११]प्रदक्षिणमथावृत्य त्रिःकृत्वा [१२]प्रणमेत्ततः ॥१८॥
[१३]स्तोत्रमेत[१४]त्पवित्रं [१५]यत्संपठेदग्रतः [१६]प्रभोः ।
[१७]जगदुत्पत्तिसंहार[१८]रक्षाकृत्परमेष्ठिने ॥१९॥
भावाभावविशुद्धाय प्रबुद्धाय शिवात्मने ।
त्रिकालविषयज्ञान[१९]प्रभावनिलयात्मने ॥२०॥
[२०]त्रिगुणाश्रयसामर्थ्य[२१]कलासंस्पृष्टमूर्तये ।
नमो नमः शिवायेति [२२]ततस्तं देशिकोत्तमम्[२३] ॥२१॥
[२४]साङ्गमेकाग्रमनसं[२५] सुखासीनं [२६]सुमेधसम् ।
[२७]दृष्ट्वा [२८]प्रकल्प्य विधिवद्योगपीठं[२९] शिवात्मकम्[३०] ॥२२॥

---

[१] स्थानमात्रं नि० — ख, ङ; स्नानमन्त्रं नि० — छ, ज.
[२] विधापयेत् — च.
[३] कटचादिकं क्षाल्यमधुना — ख, छ, ज; कटचालिकं क्षाल्यमधुना — ङ.
[४] देव पूर्व० — च.
[५] स्नायाद्वा विधि० — च; स्नानाया विधि०— छ; स्नानाय विधि० — ज.
[६] १७ श्लोकस्य चतुर्थपादः 'ज' मातृकायां लुप्तः।; भस्मना यन्त्र च — छ.
[७] वा — ख, ङ.
[८] स्नानान्तरं — ख, ङ, छ, ज.
[९] पूर्वं — च.
[१०] मन्त्राश्रमं — ङ; वात्रश्रयन्निह — च.
[११] इदमर्धं 'ज' मातृकायां न दृश्यते।
[१२] प्रथमं ततः — ख, ङ; मथ मन्त्रतः — छ.
[१३] स्तोकात्रमेतत्पवित्र — ङ; स्तोत्रमे . . त्पठेदत्रे . . — ज.
[१४] ०त्पवित्रे — छ.
[१५] यत्पठेदग्रे . . — ख; यत्पठे अग्रे ततः — ङ; यत्पदे दग्रे ततः — छ.
[१६] प्रभो — ङ, च.
[१७] . . . क्तिसंहार० — ख.
[१८] ०मोक्षकृ० — ख, ङ, छ, ज.
[१९] ०प्रवाहनि० — ख, च, छ, ज.
[२०] . . गुण्याश्रय० — ख; त्रिगुणाश्रम० — ङ; त्रैगुण्यासम० — च. त्रिगुण्याश्रय० — छ, ज.
[२१] ०कलसं० — छ, ज.
[२२] ततः स दे० — ख; तदस्तं — ङ.
[२३] ०त्तमः — ख, ङ, छ, ज.
[२४] स्वातमेकाग्र० — च.
[२५] ०मनसः — ख, ङ, छ, ज.
[२६] सुमेधसाम् — ज.
[२७] हृष्ट्वा — ङ.
[२८] संकल्प्य — ख, ङ, छ, ज.
[२९] 'योगपीठं गुरोः कार्यं दैर्घ्यं षट्त्रिंशदङ्गुलम्।
चतुरङ्गुलविस्तीर्णं पत्रवल्लीविचित्रितम्॥
हस्तमात्रोभयादङ्कं कृत्वा तद्गतकोणयोः।
शङ्खत्रयकृताटोपं बाह्ये पद्मत्रयात्तलम्॥
गुरुणा वा गुरोः कार्यं चत्वारिंशत्तदङ्गुलम्।
योगपीठं यथापूर्वं तत्षडङ्गुलविस्तृतम्॥
तत्रस्थं पूजयेत्पूर्वं देवं शास्त्रार्थदं गुरुम्॥'
(किरणे चर्या० १.१७–२०पू०).
[३०] ०पीठशिवात्मकम् — ङ.

[ सितरक्तपीतवर्णं ] [1]रजोभिर्वाथ संभवात् ।
[2]पद्ममालिख्य पूर्वोक्तं भस्मना वा सितेन तु ॥२३॥
[3]गन्धपुष्पैश्च [4]धूपैश्च [ विधिवत्तत्समर्चयेत् ] ।
ततस्तस्या[5]ग्रतः स्थित्वा [6]व्योमरूपपदं गृणन् ॥२४॥
तेनापि [7]प्रणवोच्चारं [8]गुरुणा तन्त्रवेदिना ।
[9]सव्येन पाणिना [10]सव्यो ग्राह्यस्तस्य शिवं [11]गृणन् ॥२५॥
[12]स्थापयेद्योगपीठे तु [13]शान्तं कृत्वा प्रसन्नधीः ।
शिववत्सकलं कृत्वा पूजयेद्भक्तितस्तु तम्[14] ॥२६॥
दण्डवद्धरणीं [15]गत्वा [16]प्रणमेच्छक्तिमुद्रया ।
[17]शर्वशर्वपदं कृत्वा [18]गुरुस्तमभिनन्दयेत् ॥२७॥
यथाविभवतः सर्वं निवेद्यैवाभि[19]वादयेत् ।
ततः [20]प्रोत्फुल्ल[21]नयनं [22]स्वागतार्घ्यादिभिः शिवैः ॥२८॥
पूजयेच्छिव[23]वन्नित्यमथवागन्तुको [24]गुरुः ।
[25]पूज्यस्तत्स्थानगुरुणा विधिनानेन सुव्रत ॥२९॥
[26]स्वगुरोर्वा प्रकर्तव्यमेतत्पर्वसु पर्वसु ।
विधानं [27]कारणज्ञान[28]न्यायेनात्र [29]समागतम् ॥३०॥

---

[1] र. . भिर्वाथ — ख; रजोभिर्वातसं० — ङ; रजोभिरधिसंभान् — च.
[2] इदमर्धं 'च' मातृकायां परं दृश्यते।
[3] गन्धैः पुष्पैश्च — च.
[4] . . पेश्च — ख.
[5] ०ग्रतस्थित्वा — ख, छ, ज; ०ग्रतः सत्वो–ङ.
[6] व्योमव्यापिपदमन्त्रेषु 'व्योमरूपाय'इति तृतीयं पदम्।; व्योमरूपपदा — ख; व्योमपदं — ङ; योमरूपं पदं — च.
[7] प्रणवोच्चार्यं — ख, ङ, छ, ज; प्रणवस्योच्चारो यस्मिन्कर्मणि तत् प्रणवोच्चारम्। क्रियाविशेषणमिदम्।
[8] गुरुणा तज्ज्ञवेदिना — ख; गुरुणान्तरवेदिना — च; गुरुणा तज्ञवेदना — छ, ज.
[9] सव्येनापाणिना — ख.
[10] सव्यं गृहीतस्य—ख, छ, ज; सर्वगृहीतस्य—ङ.
[11] गृणात् — ङ.
[12] स्वापयेद्योग० — च.
[13] शान्तां वध्वा प्र० — च.
[14] ०द्भक्तिस्कृतम् — ङ.
[15] कृत्वा — 'ख' पाठभेदः, ङ.
[16] प्रणवोछक्ति० — छ; प्रणमोछक्ति — ज.
[17] व्योमव्यापिपदमन्त्रेषु 'शर्व शर्व' इत्येतदेकोनषष्टितमं पदम्।; शर्व शर्व प. . त्वा — ख; सर्व सर्व. . — च.
[18] गुरोस्तमभिवन्दयेत् — ख, ङ, छ, ज.
[19] ०धारयेत् — च.
[20] प्राक् फु० — ङ.
[21] ०नयन० — ख; ०नयनः — च.
[22] ०स्वागस्यादिभिः—ख; स्वागतस्यादिभिः—ङ; स्वागतापादिभिः–च; स्वागतस्यादिभिवैः–छ ज.
[23] ०वन्नित्यं. . को — ख; ०वन्नित्यमथवा शन्तुको — ङ; ०वन्मान्य. . गन्तको — च.
[24] गुरु — ङ; गुरुम् — च; 'शैवानावसथप्राप्तान्परया श्रद्धयार्चयेत्। संपन्नैः कारकैस्तांश्च ज्ञात्वा लिङ्गैर्यथार्हतः ॥' (मृगेन्द्रे चर्या० १.८९).
[25] पूज्यसंस्थान० — ख, ङ, छ; पूजस्तत्स्थान० — च; पूज्यः संस्थान० — ज.
[26] गुरुर्वापि प्र० — च.
[27] कारण. . ान मन्यान्ये. . — ख.
[28] अन्यानोत्र — ङ; ०मन्यानोत्र — छ, ज.
[29] समागमः — ङ; समागमम् —छ, ज.

[ उक्तार्थोपसंहारः, वक्ष्यमाणोपक्रमश्च ]

[1]गुरोर्विधानं निखिलं [2]मयोक्तं
[3]कमण्डलोश्चैव [4]प्रवासयुक्त्या ।
रुद्रव्रतं कारणवक्त्रपद्मा-
द्विनिर्गतं [5]ते कथयामि सम्यक् ॥३१॥

इति श्रीमतङ्गपारमेश्वरे[6] चर्यापादे [7]प्रवासनपटलोऽष्टमः ॥
अष्टमः पटलः

---

[1] गुरोर्विधान० — ङ.
[2] मथोक्तं — ज.
[3] . . . तनोश्चैव — च; करमण्डलोश्चैव — ज.
[4] निवासयुक्त्या — च; प्रवयुक्त्या — छ, ज.
[5] वः — च.
[6] 'पारमेश्वरे' इत्यस्यानन्तरं 'च' मातृकायां 'महातन्त्रे' इत्यधिकं दृश्यते ।
[7] प्रवासपटलम् — च.

## नवमः पटलः

### रुद्रव्रतम्

अथ [1]रुद्रव्रतं [2]पुण्यमिदानीं मुनिसत्तम ।
वर्णयिष्यामि संक्षेपाद्येन [3]लोकाश्चराचराः ॥१॥
[4]वशमायान्त्यसंदेहाच्चरतः साधकात्मनः[5] ।
[6]मुक्तिश्च [7]शाश्वती विप्र [8]शिवशास्त्रक्रमागता[9] ॥२॥
[10]व्यज्यतेऽक्लिष्ट[11]तपसश्चर्यापादविधानतः ।
[12]रागात्पराङ्मुख[13]स्येत्थं [14]द्वेषाच्च कलुषात्मकात् ॥३॥
बुद्धिरुत्पद्यते[15]ऽकस्मा[16]त्कारणेच्छाप्रचोदिता[17] ।
[18]समयी भावितात्मा स्याद्रुद्राराधनतत्परः ॥४॥

---

[1] रुद्रप्रदं — छ, ज.

[2] पुण्यमिदन्नि मुनि० — छ, ज.

[3] योगश्चराचरम् — ख; लोकेश्वराचरः — ङ; लोकश्चराचरम् — छ, ज.

[4] वश्यमायान्त्यसं० — ख, ङ; वश्यमायान्यसं० — छ, ज.

[5] ०देहाच्चरतिः साधकात्मना — ङ.

[6] मुक्तिश्चरांशति विप्र — ङ.

[7] शाश्वति — छ, ज.

[8] शिवास्त्रक्रमागता — ख; शिव . . क्त्रक्रमागता — च.

[9] ०गतः — ङ.

[10] व्यञ्ज्यं व्यक्तितयसश्वर्यापादविधानम् — च.

[11] ०तपसा चर्या० — ङ;
'कर्मनाशान्मलस्यापि विपाके सहकारिणः ।
पतत्युन्मीलिनी शक्तिस्तदानुग्रहरूपिणी ॥
तस्यां पतितमात्रायां मलस्याधो नियामिका ।
शक्तिर्निवर्तते तस्यां निवृत्तायां महात्मनः ॥
वैराग्यं जायते क्षिप्रं संसाराद्दुःखसागरात् ।
दिदृक्षा जायते शम्भोः पादपङ्कजयोरपि ॥
कदा द्रक्ष्यामि देवेशं मोक्ष्येऽहं बन्धतः कदा ।
को वा दर्शयिता शम्भोरिति संजायते मतिः ॥'
(पौष्करे विद्या० ४.२५८–२६१);
'येषां शरीरिणां शक्तिः पतत्यविनिवृत्तये ।
तेषां तल्लिङ्गमौत्सुक्यं मुक्तौ द्वेषो भवस्थितौ ॥
भक्तिश्च शिवभक्तेषु श्रद्धा तच्छासके विधौ ।'
(मृगेन्द्रे विद्या० ५.४, ५पू०);
(मतङ्ग० विद्या० ४.४४–४८).

[12] रारगात्परा० — ङ.

[13] ०स्येत्थद्वेषाच्च — ख; ०स्येत्थद्वेषाश्च — ङ.

[14] द्वेष्टाच्च — छ; द्वेष्टच्च — ज.

[15] यस्मात् — ख, ङ, छ, ज.

[16] ०त्कर्मणेच्छा० — ज.

[17] ०प्रवेदिना — च.

[18] 'च' मातृकायामयं पादो लुप्तः ।; समथ भावि० — छ; स यथा भावि० — ज.

